जैनाचार्य-जैनधर्मदिवाकर-पूज्यश्री-घासीलाल-व्रति-विरचितया
चूर्णिभाष्यावचूरिरूपया व्याख्यया समलङ्कृतम्-

# श्री-निशीथसूत्रम् ।

# SHRĒENishithsŪtram

नियोजकः

संस्कृत-प्राकृतज्ञ-जैनागमनिष्णात-प्रियव्याख्यानि-पण्डित-
मुनि-श्रीकन्हैयालालजी-महाराजः

गढसिवाणानिवासि श्रेष्ठिश्री-कानुगा-धींगडमलजी-मुलतानमलजी-कवाड़-
महोदयप्रदत्तद्रव्यसाहाय्येन

प्रकाशकः—
अ० भा० श्वे० स्था०जैनशास्त्रोद्धारसमितिप्रमुखः श्रेष्ठि-
श्रीशान्तिलाल-मङ्गलदासभाई-महोदयः
मु० राजकोट

| प्रथमा-आवृत्तिः | वीर-संवत् | विक्रम-संवत् | ईसवीसन् |
| --- | --- | --- | --- |
| प्रति १२०० | २४९५ | २०२५ | १९६९ |

मूल्यम्-रु० २०-०

મળવાનું ઠેકાણું :
શ્રી અ. ભા શ્વે સ્થાનકવાસી
જૈન શાસ્ત્રોદ્ધાર સમિતિ,
ઠે૦ ગરેડિયા કૂવા રોડ, ગ્રીન લૉજ
પાસે, રાજકોટ, (સૌરાષ્ટ્ર).

Published by
Shri Akhil Bharat S. S.
Jain Shastroddhara Samiti,
Garedia Kuva Road, RAJKOT,
(Saurashtra), W Ry India



ये नाम केचिदिह नः प्रथयन्त्यवज्ञां,
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा,
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ १ ॥



हरिगीतच्छन्दः



करते अवज्ञा जो हमारी यत्न ना उनके लिये ।
जो जानते हैं तत्त्व कुछ फिर यत्न ना उनके लिये ॥
जनमेगा मुझसा व्यक्ति कोई तत्त्व इससे पायगा ।
है काल निरवधि विपुल पृथ्वी ध्यान में यह लायगा ॥ १ ॥

મૂલ્ય રૂ. ૨૦-૦

પ્રથમ આવૃત્તિ : પ્રતિ ૧૨૦૦
વીર સંવત્ : ૨૪૯૫
વિક્રમ સંવત્ ૨૦૨૫
ઇસવીસન્ ૧૯૬૯

: મુદ્રક :
સ્વામી શ્રીત્રિભુવનદાસજી શાસ્ત્રી
શ્રી રામાનંદ પ્રિન્ટીંગ પ્રેસ
કાંકરિયા રોડ, અમદાવાદ-૨૨

॥ श्री ॥

## लाईफ मेम्बर सा० श्रीमान् शेठ कानुगा धिंगडमलजी सा० का संक्षिप्त

# जीवन—चरित्र

श्रीमान् शेठ कानुगा धिंगडमलजी मुलतानमलमी कुवाड गढसिवाणा के निवासी हैं। आपका जन्म स० १९७९ पौषवदि दशमी के दिन गढसिवाणा में श्रीमान् कानुगा हेमराज जी सा० कुवाड के यहाँ हुआ, आपकी जन्मदात्री मातेश्वरी का नाम कन्नुबाई था। आप बचपन से ही बडे बुद्धिमान् और व्यापारकुशल हैं अत आप को १२ वर्ष की अवस्था में शेठ मुलतानमलजी की पत्नी प्यारीबाई ने आपको गोद रक्खा। आप व्यापार के निमित्त बल्लारी गये, वहाँ गणेशमलजी प्रतापमलजी की दुकान पर रहकर बडी कुशलता के साथ व्यापार किया। आपकी कुशलता और नीतिमत्ता से प्रसन्न होकर सोलापुर के श्रीमान् शेठ भीमराज जी रतनचन्द्रजी ने आपको अपनी भागीदारी में रख लिया। आपने अच्छा व्यवसाय किया और धन उपार्जन किया। उसके बाद स० २००७ में अहमदाबाद में आये और सा० गणेशमलजी वक्तावरमलजी की दुकान पर भागीदारी के साथ काम करने लगे। आपने अपने व्यवसाय में अच्छी प्रतिष्ठा प्राप्त की।

संवत् २०१८ में मृगसिरवदि छठ के शुभदिन में सा० धिंगडमल चन्दनमल के नाम से अपने स्वतन्त्र दुकान की।

आप धर्म ते प्रताप के सम्पत्तिशाली बने और ५०००) पाँच हजार रुपये देकर आप शास्त्रोद्धारसमिति के आजीवन सदस्य बने। आप बड़े उदार हैं। जीवदया आदि धार्मिककार्यों में आप उदारतापूर्वक खर्च करते है। धार्मिक तिथियों में उपवास पौषध आदि हर समय करते रहते है, साथ ही धार्मिक सेवा करते हैं। बेला, तेला, चोला, पचोला, अठाई आदि तपस्या भी करते हैं। जैसे ये धर्मात्मा है वैसे ही इनकी धर्मपत्नी पानकुँवरबाई भी दया पौषध सामायिक आदि धर्म ध्यान खूब करती है। आपने अनेक प्रकार की तपस्या की है और हर समय धर्म ध्यान का लाभ लेती रहती है।

आपकी मातेश्वरीं श्री प्यारी बाइ भी परम धर्मात्मा है उन्हीं के पुण्य प्रताप से ये फले फूले हैं और धर्मध्यान में अग्रेसर बने है। आपकी सुपुत्री भाग्यवती का विवाह सा० ऋषभचन्द्रजी राका के सुपुत्र रूपचन्द्रजी के साथ हुआ है। वे भी धर्मपरायण हैं श्रीमान् धिंगडमल जी का यह धार्मिक परिवार सब परिवार के लिये एक आदर्श रूप बने यही अभिलाषा है।

**स्था. जैनशास्त्रोद्धारसमिति राजकोट**

# ॥ निशीथसूत्रस्य विषयानुक्रमणिका ॥

## ॥ अथ प्रथमोद्देशकः ॥



॥ इति प्रथमोद्देशकः समाप्तः ॥१॥

## ॥ अथ द्वितीयोद्देशकः ॥

॥ इति द्वितीयोद्देशकः समाप्तः ॥२॥

॥ अथ तृतीयोद्देशकः ॥

## ॥ अथ चतुर्थोद्देशकः ॥

॥ इति पञ्चमोद्देशकः समाप्तः ॥५॥

## ॥ अथ षष्ठोद्देशकः ॥

॥ इति दशमोद्देशकः समाप्तः ॥१०॥

॥ अथैकादशोद्देशकः ॥

॥ इत्येकादशोद्देशकः समाप्तः ॥११॥

॥ अथ द्वादशोद्देशकः ॥

॥ इति द्वादशोद्देशकः समाप्तः ॥१२॥

॥ अथ त्रयोदशोद्देशक. ॥

॥ इति त्रयदोशोद्देशकः समाप्तः ॥१३॥

॥ अथ चतुर्दशोद्देशकः ॥

॥ इति चतुर्दशोद्देशकः समाप्तः ॥१४॥

॥ अथ पञ्चदशोद्देशकः ॥

॥ इति पञ्चदशोद्देशकः समाप्तः ॥१५॥

॥अथ षोडशोद्देशकः ॥

॥ इति षोडशोद्देशकः समाप्तः ॥१६॥

॥ अथ सप्तदशोद्देशकः ॥

। कौतूहलप्रतिज्ञाप्रकरणम् ।



। कौतूहलप्रतिज्ञाप्रकरणं समाप्तम् ।

॥ इति सप्तदशोद्देशकः समाप्तः ॥१७॥

॥ अथाष्टादशोद्देशकः ॥

॥ इति अष्टादशोद्देशकः समाप्तः ॥१८॥

॥अथ एकोनविंशतितमोद्देशकः ॥

॥ इति एकोनविंशतितमोद्देशकः समाप्तः ॥१९॥

**॥ इति विंशतितमोद्देशकः समाप्तः ॥२०॥**

**इति निशीथसूत्रस्य विषयानुक्रमणिका समाप्ता ॥**

## આદ્યમુરબ્બીશ્રીઓ



શ્રી શાંતિલાલ મંગળદાસભાઈ
અમદાવાદ



(સ્વ) શેઠશ્રી શામજીભાઈ વેલજીભાઇ
વીરાણી રાજકોટ



સ્વ શે શ્રી છોટાલાલ શામળદાસ
ભાવસાર અમદાવાદ



शाहाजी माडीलालजी गलुन्डिया



શેઠશ્રી રામજીભાઈ શામજીભાઈ
વીરાણી-રાજકોટ.



વચ્ચે બેઠેલા
લાલાજી કિશનચંદજી સા જૈહરી
ઉભેલા સુપુત્ર ચિ મહેતાબચંદજી સા.
નાના – અનિલકુમાર જૈન (પૌત્ર)

# આદ્યમુરબ્બીશ્રીઓ



સ્વ. શેઠશ્રી હરિલાલ અનોપચંદ શાહ
ખંભાત.



स्व. शेठ ताराचंदजी साहेब गेलडा
मद्रास.



श्रीमान शेठ सा चीमनलालजी सा
ऋषभचंदजी सा अजीतवाले (सपरिवार)



૧ અમીચંદભાઈ તથા
૨ ગીરધરભાઈ બાટવિયા



વચ્ચે બેઠેલા મોટાભાઈ શ્રીમાન્ મૂલચંદજી
જવાહીરલાલજી બરડિયા
૨ બાજુમાં બેઠેલા ભાઈ મિશ્રીલાલજી બરડિયા
૩ ઉભેલા સૌથી નાનાભાઈ પૂનમચંદ બરડિયા



श्रीमान् सेठश्री
खीमराजजी सा. चोरडिया

## આદ્યમુરબ્બીશ્રીઓ



શ્રી વ્રજલાલ દુર્લભજી પારેખ
રાજકોટ.



કોઠારી હરગોવિંદ જેચંદભાઈ
રાજકોટ.



પટેલ ડોસાભાઈ ગોપાલદાસ
મુ સાણંદ (જી અમદાવાદ)



શેઠશ્રી મિશ્રીલાલજી લાલચંદજી સા. લુણિયા
તથા શેઠશ્રી જેવતરાજજી લાલચંદજી સા



(સ્વ) શેઠશ્રી ધારશીભાઇ જીવણલાલ
બારસી



સ્વ શ્રીમાન્ શેઠશ્રી મુકનચંદજી સા
બાલિયા પાલી મારવાડ

। श्रीवीतरागाय नमः।

जैनाचार्य–जैनधर्मदिवाकर–पूज्यश्री–घासीलाल–व्रतिविरचित–चूर्णि–भाष्याऽ–
वचूरिसमलङ्कृतम्—

# श्रीनिशीथसूत्रम्

## प्रथमोद्देशः प्रारभ्यते

श्रीमङ्गलाचरणम्—

अर्थप्रदं वीरजिनं प्रणम्य, लब्धेर्धरं गौतममाप्तशक्तिम्।
श्रीघासिलालेन वितन्यते यद्, भाष्यादिकं चात्र निशीथसूत्रे ॥१॥

तत्र क्रमः

मूलं छायाऽथचूर्णी च, तदन्ते भाष्यभाषणम्।
भाष्याऽवचूरिरन्ते स्यादित्थमत्र क्रमो भवेत् ॥

श्रीभगवन्महावीरभाषितागमेषु छेदसूत्राणि चत्वारि सन्ति, तत्र प्रथमं निशीथसूत्रं वर्तते। तत्र पूर्वं छेदसूत्रेति कोऽर्थः ? तत्राह–छेदनं छेदः खण्डनम्, प्रस्तुते दूषितपर्यायस्य न्यूनीकरणं छेदः। यथा शेषशरीररक्षार्थं रोगादिदूषितशरीरैकदेशस्य छेदनमिव शेषपर्यायसंरक्षणार्थं दूषित-पूर्वपर्यायस्य छेदार्हत्वाच्छेदः, तदर्थप्रतिपादिकानि सूत्राणि छेदसूत्राणि प्रोच्यन्ते, तेष्विदं निशीथ-सूत्रं प्रथमं विद्यते।

अथ निशीथेति शब्दस्य कोऽर्थः ? तत्राह—पापं निशाद्यते शात्यते यत्र इति निशीथः 'शद्लृ शातने' इत्यस्मात् पृषोदरादित्वात् सिद्धम् १। निर् निश्चयेन श्रुतं पठनमिति निशीथः २। अथवा एतत्पठनमन्तरेण नितरां शुद्धाचारो नैव पालयितुं शक्यते तस्मादयं निशीथः ३।

अथवा—मोक्षमार्गप्रच्युतान् पुनरपि मोक्षमार्गमानीय पूर्वकृतकर्माणि तपोद्वारा निजीर्य सम्यक् प्रायश्चित्ताऽऽतापे तापयित्वा निश्चयेन शोधयति आत्मानं यः स निशीथः ४।

अथवा—उन्मार्गगतान् निश्चयेन शुद्धिमार्गे स्थापयति इति निशीथः ५। अथवा सम्यग्द-र्शनज्ञानचारित्रतपोलक्षणं सुवर्णं प्रायश्चित्ताग्नौ संताप्य नितरां शोधयति इति निशीथः ६।

वस्तुतस्तु निशि रात्राविव यत्र अप्रकाशे गुप्तरूपेण श्रुतं स्थाप्यते पठ्यते स निशीथ. । पृषोदरादित्वात्सिद्धम्, उपर्युक्ता सर्वा व्युत्पत्तयः पृषोदरादित्वात् सम्पद्यन्ते ७ । अथवा — अपात्रेभ्यो यद् न प्रकाश्यते अनेन इति स निशीथ· ८ । अथवा निशेरते जीवा अस्मिन् मिथ्यात्वाऽविरत्यादिगाढान्धकारे इति निशीथ, 'नि–पूर्वकात्' शीङ् स्वप्ने' इत्यस्मात् धातो 'निशीथगोपीथावगथा' (उणा० पा० २ सू० ९) इति थक् प्रत्यये निशीथशब्दसिद्धि, तत् मिथ्यात्वादिजनितकर्ममलप्रक्षालक सूत्रमपि निशीथपदेन मशकार्थो धूम इतिवद् उच्यते, आलोचनादिप्रायश्चित्तविधायके विधौ खल्वियमागमिकी संज्ञा विज्ञेया ९ ।

यथा — लौकिकानि विद्यामन्त्रयोगचूर्णादिप्रतिपादिकानि सूत्राणि अपरिपक्वबुद्धीनां न प्रकाश्यन्ते, तथैवेदमपि सूत्रम् अपरिपक्वबुद्धीना पुरतो न प्रकाश्यते । के ते अपरिणतबुद्धय· ? इति तान् दर्शयति—अबहुश्रुता, अकृतसूत्रा, रहस्यभेदका, सूत्रप्रत्यनीका·, मिथ्यात्ववासितबुद्धय, जिनवचनरहस्यानभिज्ञा वैराग्यवासनावर्जिता·, दुर्बलचारित्रा अवमन्ना· पार्श्वस्था कुशीला ससक्ता· यथाच्छंदा, इत्यादयोऽपरिणतबुद्धय· कथ्यन्ते ।

एतेभ्य· इद सूत्रं न देयमिति, एतेषा सूत्रदाने प्रवचनस्य लघुता, घात·, उड्डाह·, तथा दुर्लभबोधित्वं च जायते । अत इद निशीथाभिधं सूत्र योग्येभ्यो देयम् । तेषामबहुश्रुतादीनां प्रतिपक्षा बहुश्रुतादयो विज्ञेयास्तेभ्यो देयमिति भाव· । कथमेवम् ? यत 'गच्छतः स्खलन चैव' इति न्यायात् संयममार्गे विचरत कदाचित् प्रमादादतिचारादिसंभव· । तद्विशुद्धि प्रायश्चित्तेन भवतीति प्रायश्चित्तं च वस्तुत्रय सभवति तथाहि —प्रतिसेवक· १ प्रतिसेवना २ प्रतिसेवितव्य चेति ३ । तत्र प्रतिसेवक प्रतिसेवनकर्ता, स द्विविध, गीतार्थाऽगीतार्थभेदात् । प्रतिसेवनाशब्देनाऽत्र भावो गृह्यते, स द्विविध· कुशलाऽकुशलभेदात । प्रतिसेवितव्य सेवनीय वस्तु, तदपि द्विविधं सयमाऽसंयमभेदात् । अत्र मुनेर्या कुशलप्रतिसेवना, तस्या नात्राधिकार· तस्या· कुशलत्वेन प्रायश्चित्ताविषयत्वात्, प्रस्तुतमत्रस्य च दोषशुद्ध्यर्थं प्रायश्चित्तविधायकत्वात्, अतोऽत्राऽकुशलप्रतिसेवनाया अधिकारः। तद्विशुद्धयर्थमिद सूत्र प्रारभ्यते, तस्येदमादिम सूत्रम्—'जे भिक्खू हत्थकम्मं' इत्यादि ।

## सूत्रम्—जे भिक्खू हत्थकम्मं करेइ करंतं वा साइज्जइ ॥ सू० १ ॥

**छाया—यो भिक्षुः हस्तकर्म करोति कुर्वन्त वा स्वदते ॥ सू० १ ॥**

चूर्णी—'जे भिक्खू' इत्यादि । 'जे' य. कश्चित् 'भिक्खू' भिक्षु· निरवद्यभिक्षणशील. । यद्वा भिनत्ति ज्ञानावरणीयाद्यष्टविधं कर्मेति भिक्षु. साधु., अत्र भिक्षुशब्देन साध्वी चापि गृह्यते । तेन-साधुर्वा साध्वी वेत्यर्थ 'हत्थकम्मं' हस्तकर्म हस्तः शरीरैकदेश· तेन कर्म करणं व्यापार, तत् हस्तकर्म, उपस्थविषये हस्तादिनाऽतिक्रमाद्याचरणं करोति स्वय, कारयति परेण, कुर्वन्तं चान्यं

'साइज्जइ' स्वदते अनुमोदते स गुरुमासिकप्रायश्चित्तभाग्भवतीति प्रथमोद्देशके सर्वसूत्रेषु संयोजनीयम् ॥ सू० १ ॥

## सूत्रम्—जे भिक्खू अंगादाणं कट्ठेण वा किलिंचेण वा अंगुलियाए वा सिलागाए वा संचालेइ संचालंतं वा साइज्जइ ॥ सू० २ ॥

**छाया—यो भिक्षुः अङ्गादानं काष्ठेन वा किलिञ्चेन वा अंगुलिकया वा शलाकया वा संचालयति संचालयंतं वा स्वदते ॥ सू० २ ॥**

चूर्णी—'जे भिक्खू अंगादाणं' इति 'जे भिक्खू' यो भिक्षु 'अंगादाणं' अङ्गादानम् तत्राङ्गानि अष्टौ तानि चेमानि शिर. १ उर २ उदरम् ३ पृष्ठम् ४ बाहुद्वयम् ५-६ ऊरुद्वयम् ७-८ चेति । उपलक्षणात् उपाङ्गनामानि ग्राह्याणि, तानि चेमानि-कर्णौ नासिके अक्षिणी जङ्घे हस्तपार्श्वौ नखा कशा श्मश्रु अगुल्य तलोपतला·—हस्ततल—पादतल समीपस्था भागा·, तेषाम् आदानम् उत्पत्तिकारणम् अङ्गादानम् उपस्थचिह्नम् तत् 'कट्ठेण वा' काष्ठेन वा खदिरादिकाष्ठखण्डेन 'किलिंचेण वा' किलिञ्चेन वा वंशादिशलाकया वा । 'अंगुलियाए वा' अङ्गुलिकया— करचरणागुलिना वा 'सिलागाए वा' शलाकया लोहादिनिर्मितशलाकया वा 'संचालेइ' सचालयति प्रेरयति, 'सचालंतं वा' सचालयन्तं प्रेरयन्तम् 'साइज्जइ' स्वदते अनुमोदते स प्रायश्चित्तभाग्भवतीति भाव· । अत्र दृष्टान्तमाह—

यथा कोऽपि पुरुष सुखसुप्त सिंहं काष्ठयष्ट्यादिना सचालयति तदा स सिंह· तं संचालकं विनाशयति । एवमेव पुरुषचिह्नसचालकस्य मुनेश्चारित्रजीवन विनश्यतीति ॥ सू० २ ॥

## सूत्रम्—जे भिक्खू अंगादाणं संवाहेज्ज वा पलिमद्देज्ज वा संवाहंतं वा पलिमद्दंतं वा साइज्जइ ॥ सू० ३ ॥

**छाया—यो भिक्षुः अङ्गादानं संवाहयति वा परिमर्दयति वा संवाहयन्त वा परिमर्दयन्तं वा स्वदते ॥ सू० ३ ॥**

चूर्णी—'जे भिक्खू अंगादाणं संवाहेज्ज वा' इति। 'जे भिक्खू' यो भिक्षु मुनि 'अंगादाण' अङ्गादानम् पूर्वोक्तलक्षणम् 'सवाहेज्ज वा' संवाहयति वा सामान्येन मर्दयति 'पलिमद्देज्ज' वा परिमर्दयति विशेषेण मर्दयति 'संवाहंतं वा' संवाहयन्त वा 'पलिमद्दंतं वा' परिमर्दयन्त वा 'साइज्जइ' स्वदते अनुमोदते स प्रायश्चित्तभाग्भवतीति ।

**अत्र दृष्टान्तमाह**—यथा सुखोपविष्ट सुप्त वा सर्पं कोऽपि मर्दयति हस्तपादादिना तदा स सर्प· स्वमर्दकस्य जीवितं विनाशयति तथैव मर्दितं पुरुषचिह्नं मुनेश्चारित्रं ध्वंसयतीति भाव. ।

**सूत्रम्—जे भिक्खू अंगादाणं तेल्लेण वा घएण वा वसाए वा णवणीएण वा अब्भंगेज्ज वा मक्खेज्ज वा, अब्भंगेंतं वा मक्खेंतं वा साइज्जइ ॥ सू० ४ ॥**

छाया—**यो भिक्षुः अङ्गादानं तैलेन वा घृतेन वा वसया वा नवनीतेन वा अभ्यङ्गयति म्रक्षयति, अभ्यंगयन्तं वा म्रक्षयन्त वा स्वदते ॥ सू० ४ ॥**

चूर्णी—**'जे भिक्खू तेल्लेण वा'** इति । **'जे भिक्खू'** यो भिक्षु. 'अंगादाणं' अङ्गादानं पूर्वोक्तलक्षणम् **'तेल्लेण वा'** तैलेन वा तिलादितैलेन वा **'घएण वा'** घृतेन वा **'वसाए वा'** वसया स्निग्धपदार्थजातेन **'णवणीएण वा'** नवनीतेन 'मक्खन' इति प्रसिद्धेन **'अब्भंगेज्ज वा'** अभ्यङ्गयति मर्दयति **'मक्खेज्ज वा'** म्रक्षयति विशेषेण मर्दयति **'अब्भंगेंतं वा'** अभ्यङ्गयन्तं वा **'मक्खेंतं वा'** म्रक्षयन्तं **'साइज्जइ'** स्वदते अनुमोदते स प्रायश्चित्तभाग् भवतीति ।

**अत्र दृष्टान्तमाह—** यथा प्रज्वलिताग्नौ घृतादिना परिषिञ्चिते सति असौ प्रज्वलितोऽग्निर्गृहादिकं प्रज्वलयति तथैव अङ्गादानं तैलादिना मर्दकस्य चारित्र विध्वंसयतीति भाव ॥ सू० ४ ॥

**सूत्रम्—जे भिक्खू अंगादाणं कक्केण वा लोद्देण वा पउमचुण्णेण वा ण्हाणेण वा सिणाणेण वा चुण्णेहिं वा उव्वट्टेइ परिवट्टेइ उव्वट्टंतं वा परिवट्टंतं वा साइज्जइ ॥ सू० ५ ॥**

छाया—**यो भिक्षुः अङ्गादानं कल्केन वा लोध्रेण वा पद्मचूर्णेन वा स्नानेन वा स्नपनेन वा चूर्णैर्वा वर्णैर्वा उद्वर्तयति, परिवर्त्तयति उद्वर्त्तयन्त वा परिवर्त्तयन्तं वा स्वदते ॥ सू० ५ ॥**

चूर्णी—**'जे भिक्खू अंगादाणं कक्केण वा'** इति । **'जे भिक्खू'** यो भिक्षु **'अंगादाणं'** अङ्गादानम् **'कक्केण वा,** कल्केन वा' कल्कोऽनेकसुगन्धिद्रव्यनिष्पन्न उद्वर्त्तनविशेष', तेन, **'लोद्देण वा'** लोध्रेण वा सुगन्धद्रव्यविशेषेण **'पउमचुण्णेण वा'** पद्मचूर्णेन वा सुगन्धिकमलपुष्पचूर्णेन वा **'ण्हाणेण वा'** स्नानेन वा सामान्यस्नानेन वा **'सिणाणेण वा'** स्नपनेन वा विशेषस्नानेन वा सुगन्धाऽऽमोदभरितजलस्नानेनेत्यर्थ । **'चुण्णेहिं वा'** चूर्णैर्वा यवादिपिष्टै **'वण्णेहिं वा'** वर्णैर्वा अबीरादिचूर्णविशेषै., **'उव्वट्टेइ'** उद्वर्त्तयति सामान्यतो मर्दयति **'परिवट्टइ'** परिवर्त्तयति विशेषतो मर्दयति, **'उव्वट्टंतं वा'** उद्वर्त्तयन्त वा **'परिवट्टंतं वा'** परिवर्त्तयन्त वा **'साइज्जइ'** स्वदते अनुमोदते स प्रायश्चित्तार्हो भवतीति ॥ सू० ५ ॥

अत्र दृष्टान्तमाह–यथा खड्गादिशस्त्रस्य मर्दनेन हस्तादेश्छेदो भवति तथैव गुप्तेन्द्रिय मर्दनेन संयमस्य छेदो भवतीति ॥ सू० ५ ॥

**सूत्रम्–जे भिक्खू अंगादाणं सीओदगवियडेण वा उसिणोदगवियडेण वा उच्छोलेज्ज वा पधोवेज्ज वा उच्छोलंतं वा पधावंतं वा साइज्जइ ॥६॥**

**छाया**—यो भिक्षुः अङ्गादानं शीतोदकविकृतेन वा उष्णोदकविकृतेन वा उत्क्षालयति वा प्रधावति वा, उत्क्षालयन्त वा प्रधावन्तं वा स्वदते ॥ सू० ६ ॥

**चूर्णी**—'जे भिक्खू सीओदगवियडेण वा' इति। 'जे भिक्खू' यो भिक्षु. 'अंगादाणं' अङ्गादानम् 'सीओदगवियडेण वा' शीतोदकविकृतेन वा विकृतम् विकारप्राप्तम् अचित्तं सत् शीतोदकं शीतोदकविकृतम् अचित्तशीतजल तेन, 'उसिणोदगवियडेण वा' उष्णोदकविकृतेन वा विकृतम् अग्निशस्त्रेणाऽचित्तीकृतं यत् उष्णोदकम् उष्णजलम् उष्णोदकविकृत तेन, 'उच्छोलेज्ज वा' उत्क्षालयति वा सामान्येन तस्य क्षालन करोति 'पधोवेज्ज वा' प्रधावति वा प्रकर्षेण धावति क्षालयति 'उच्छोलत वा' उत्क्षालयन्त वा 'पधोवेतं वा' प्रधावन्तं वा प्रकर्षेण तस्य क्षालनं कुर्वन्तं वा 'साइज्जइ' स्वदते अनुमोदते स दोषभाग् भवतीति।

अत्र दृष्टान्तमाह–यथा एकस्य कस्यचित्पुरुषस्य रोगवशात् नेत्र नष्टम् तदा स वैद्येन चिकित्सा कारयति। स वैद्य औषधिमिश्रितजलेन नेत्रं घृष्ट्वा घृष्ट्वा वार वार प्रक्षालयति एवं करणेन नेत्रपीडा दुरधिसह्या समुत्पन्ना, तया स मरणमासादितवान्। एवमेव मुनेरङ्गादानस्य प्रक्षालनेन मोहोदयात् चारित्रजीवितं विनश्यतीति॥ सू० ६॥

**सूत्रम्—जे भिक्खू अंगादाणं णिच्छलेइ णिच्छलंतं वा साइज्जइ ॥७॥**

**छाया**—यो भिक्षुः अङ्गादानं निश्छादयति निश्छादयन्तं वा स्वदते॥सू० ७॥

**चूर्णी**—'जे भिक्खू अंगादाणं णिच्छलेइ' इति। 'जे भिक्खू' यो भिक्षु 'अंगादाणं' अङ्गादानम् 'णिच्छलेइ' निश्छादयति निरावृणोति पुरुषचिह्नत्वचमपाकरोति 'निश्छालेंतं' निश्छादयन्तम् 'साइज्जइ' स्वदते अनुमोदते स दोषभाग्भवति।

अत्र दृष्टान्तमाह–यथा कोऽपि पुरुष सुखसुप्ताजगरसर्पस्य मुख स्फाटयति तमसौ सर्पः गिलति तथा एवं कर्तुर्मुनेश्चारित्र नश्यति ॥ सू० ७॥

**सूत्रम्—जे भिक्खू अंगादाणं जिग्घइ जिग्घंतं वा साइज्जइ ॥सू०८॥**

**छाया**—यो भिक्षुः अङ्गादान जिघ्रति जिघ्रन्तं वा स्वदते ॥ सू० ८ ॥

चूर्णी—'जे भिक्खू अङ्गादाणं जिग्घइ' इति । 'जे भिक्खू' यो भिक्षुः 'अंगादाणं' अङ्गादानम् जिग्घइ जिघ्रति नासिकया तद्गन्धं गृह्णाति, यद्वा हस्तेन मर्दयित्वा हस्ताऽऽगतं गन्धं जिघ्रति 'जिग्घंतं' जिघ्रन्तं वा 'साइज्जइ' स्वदते तनुमोदते स चारित्रदोषभाग्भवति ।
अत्र दृष्टान्तमाह–

यथा कोऽपि घातकगन्धपदार्थं नासिकया जिघ्रति तस्य तद्गन्धेन प्राणवियोजन भवति । यद्वा यथा कश्चित् राजकुमार वैद्येन प्रतिषिद्धोऽपि आम्रं जिघ्रति आम्रं जिघ्रतस्तस्य 'आम्र' नामको व्याधिः समुत्पन्नः गन्धप्रियेण कुमारेण गन्धं जिघ्रता स्वात्मा जीविताद् भ्रंशित । तथैवाऽङ्गादानं जिघ्रन्मुनिर्मोहोदयेन स्वात्मान सयमजीविताद् भ्रंशयति ॥ सू० ८॥

सूत्रम्—जे भिक्खू अंगादाणं अण्णयरंसि अचित्तंसि सोयंसि अणुप्पवेसित्ता सुक्कपोग्गले णिग्घाएइ णिग्घायंतं वा साइज्जइ ॥ सू० ९ ॥

छाया – यो भिक्षुः अङ्गादानम् अन्यतरस्मिन् अचित्ते स्रोतसि अनुप्रवेश्य शुक्रपुद्गलान् निर्घातयति निर्घातयन्तं वा स्वदते ॥ सू० ९ ॥

चूर्णी —'जे भिक्खू अंगादाणं अण्णयरंसि' इति । 'जे भिक्खू' यो भिक्षु 'अंगादाणं' अङ्गादानम् 'अण्णयरंसि' अन्यतरस्मिन् बहूना मध्ये एकस्मिन् कस्मिश्चित् 'अचित्तंसि' अचित्ते 'सोयंसि' स्रोतसि–वलयादिच्छिद्रे 'अणुप्पवेसित्ता' अनुप्रवेश्य 'सुक्कपोग्गले' शुक्रपुद्गलान् 'णिग्घाएइ' निर्घातयति–विनाशयति साधुर्निःसारयति, साध्वी च स्वयोनौ कदलीफलादि प्रवेश्य रजःपुद्गलान् निस्सारयति 'णिग्घायंतं वा' निर्घायन्तं वा 'साइज्जइ' स्वदते स सा च दोषभाग् भवति आत्मविराधनावान् भवति साध्वी दोषभागिनी आत्मविराधनावती च भवति शुक्ररजःक्षयेण म्रियते इत्यर्थ एवं सर्वत्र साध्वीविषयेऽपि संयोज्यम् ॥ सू० ९ ॥

सूत्रम्—जे भिक्खू सचित्तं गंधं जिग्घइ, जिग्घंतं वा साइज्जइ ॥१०॥

सूत्रम्—जे भिक्खू सचित्तपइट्ठियं गंधं जिग्घइ जिग्घंतं वा साइज्जइ ॥ सू० ११ ॥

छाया—यो भिक्षुः सचित्त गन्ध जिघ्रति जिघ्रन्तं वा स्वदते ॥ सू० १० ॥
यो भिक्षुः सचित्तप्रतिष्ठित गन्धं जिघ्रति जिघ्रन्तं वा स्वदते ॥ सू० ११ ॥

चूर्णी—'जे भिक्खू सचित्तं गंधं' इति । स्पष्टम् । नवरम्–सचित्तं गन्धं पुष्पफलाद्याश्रितम् । उपलक्षणादचित्तं गन्धं चन्दनादिकमपि जिघ्रति, सचित्तप्रतिष्ठितमिति सचित्तजलघटाद्युपरि स्थापितं सचित्तमचित्तं वा गन्धं जिघ्रति, स प्रायश्चित्तभाग् भवति ॥ सू० १०–११ ॥

**सूत्रम्—जे भिक्खू पदमग्गं वा संकमं वा अवलंबणं वा अण्णउत्थिएण वा गारत्थिएण वा कारेइ कारंतं वा साइज्जइ ॥ सू० १२ ॥**

छाया—यो भिक्षुः पदमार्गं वा संक्रमं वा अवलम्बनं वा अन्यतीर्थिकेन वा गृहस्थेन वा कारयति कारयन्तं वा स्वदते ॥ सू० १२ ॥

चूर्णी—'जे भिक्खू' इति । 'जे भिक्खू' यो भिक्षुः 'पदमग्गं वा' पदमार्गं वा पदस्थानमार्गं वा 'संकमं वा' संक्रमं वा—जलपङ्काद्युल्लङ्घनार्थं पाषाणादिस्थापनम् 'अवलम्बनं वा'—यदवलम्ब्य ऊर्ध्वमारुह्यते, तद्वस्तु सोपानादिकम् 'अण्णउत्थिएण वा' अन्यतीर्थिकेन वा शाक्यादिना 'गारत्थिएण वा' गृहस्थेन वा 'कारेइ' कारयति 'कारंतं वा' कारयन्तं वा 'साइज्जइ' स्वदते अनुमोदते स दोषभाग्भवतीति ॥ सू०१२ ॥

**सूत्रम्—जे भिक्खू दगवीणियं वा अण्णउत्थिएहिं वा गारत्थिएहिं वा कारेइ करेंतं वा साइज्जइ॥ सू० १३ ॥**

छाया—यो भिक्षुः उदकवीणिकाम्-अन्यतीर्थिकैर्वा गृहस्थैर्वा कारयति कारयन्तं वा स्वदते ॥ सू० १३ ॥

चूर्णी—'जे भिक्खू दगवीणियं इत्यादि । 'जे भिक्खू' यः कश्चित् भिक्षुः निरवद्य भिक्षणशील श्रमण । 'दगवीणियं' उदकवीणिकाम् , तत्र-उदकस्य-जलस्य वीणिका वाहः प्रणाली, जलनालिकेति लोकप्रसिद्धा वर्षादिजलनिर्गमनाय तामुदकवीणिकाम् । 'अन्न उत्थिएहिं वा' अन्ययूथिकै वा अथवा 'गारत्थिएहिं वा' गृहस्थै श्रावकैर्वा 'कारेइ' कारयति । अथवा 'कारेंतं वा साइज्जइ' कारयन्त जनप्रवाहं स्वदते-अनुमोदते । अर्थात्-य. साधुः जल प्रणालीं स्वयमेव करोति अथवा श्रावकादिद्वारा कारयति अथवा-जलस्य नि सारणार्थं मार्गं कुर्वन्तं अन्यमनुमोदते यथा सम्यक्कृतं भवतेत्यादि स साधु' प्रायश्चित्तभाग् भवति, जलप्रवाह-करणे एकेन्द्रियादि षड्जीवानामुपमर्दस्याऽवश्यं संभवात् इति ॥ सू० १३ ॥

भाष्यम्—नालिया दुविहा वुत्ता, संबद्धा च तहेयरा ।
संबद्धा तिविहा णेज्जा, वक्खमाणपभेयओ ॥१॥

छाया —नालिकाद्विविधा प्रोक्ता संबद्धा च तथेतरा ।
संबद्धा त्रिविधा ज्ञेया वक्ष्यमाणप्रभेदतः ॥१॥

अवचूरी—'जलनालिया' इति । 'नालिया' नालिका जलनालिका, यस्य जलप्रवाहस्य करणेऽन्यद्वारा वा करणे, तदनुमोदने साधूनां प्रायश्चित्त कथितम् । जलप्रवाहो द्विविधः

द्विप्रकारको भवति, एको वसति संबद्धो द्वितीयस्तदितरः, वसत्यसबद्धः । पुनश्च वसति संबद्धो जलप्रवाहो वक्ष्यमाणप्रभेदतस्त्रिविधः त्रिप्रकारको भवति । अर्थात्—वर्षासमये वा—उदकवीणिका क्रियते सा द्विविधा वसतिसबद्धा तदितरा च । तत्र वसतिसंबद्धा त्रिविधा भवति, उपरि संबद्धा—वसतिमध्यसंबद्धा नीचैः संबद्धा च, तत्र याऽसौ वसतिसंबद्धा—वाह्या सा नियमतः परिगलन-रूपा । याऽसावन्त संबद्धाः—सा भूमौ निपतति, याऽसौ वसतिसंबद्धा—उपरिसम्बद्धा सा हर्म्यतके छिद्रादिद्वारा वर्षासंबन्धिजलमुपाश्रये प्रविशति ॥ सू० १३ ॥

**सूत्रम्—जे भिक्खू सिक्कगं वा सिक्कणंतगं वा अण्ण उत्थिकेण वा गारत्थिएण वा कारेइ करेंतं वा साइज्जइ ॥ सू० १४ ॥**

**छाया—यो भिक्षुः शिक्कं वा शिक्कांतकं वा अन्ययूथिकेन वा गृहस्थेन वा कारयति कुर्वन्तं वा स्वदते ॥ सू० १४ ॥**

**चूर्णी—'जे भिक्खू सिक्कगं वा'** इति । **'जे भिक्खू'** यो भिक्षु. निरवद्यभिक्षणशील, **'सिक्कगं वा सिक्कणंतगं वा'** शिक्क वा शिक्कांतक वा, तत्र शिक्कं "सीक" इति लोक-प्रसिद्धम् । अथवा—यादृशो हि परिव्राजकस्य भवति भिक्षान्नस्थापनाय मूषक—मार्जारादिभ्यो भिक्षान्नस्य रक्षणाय सकेतितपात्रविशेष । तथा—शिक्कान्तरं शिक्कस्य पिधानं तदाच्छादकं वा, **'अन्न उत्थिएण वा गारत्थिएण वा'** अन्ययूथिकेनाऽन्यतीर्थिकेन शाक्यभिक्षुकादिना गृहस्थेन केनचित् श्रावकादिना वा **'करेइ'** कारयति—स्वय करोति, अथवा—अन्यद्वारा कारयति, **'करेंतं वा साइज्जइ'** कुर्वन्तं वा स्वदते—अनुमोदन करोति, स साधुः प्रायश्चित्तस्य भागी भवतीति ॥ सू० १४ ॥

अत्राह भाष्यकार—

**भाष्यम्**—सिक्कगं दुविहं वुत्तं तसथावरनिम्मियं ।
पढमं अंडजाजायं वीयं य विविहं मयं ॥ ॥

**छाया—शिक्ककं द्विविधं प्रोक्तं त्रसस्थावरनिर्मितम् ।
प्रथममण्डजाज्जातं द्वितीयं च विविधं मतम् ॥ ॥**

**अवचूरिः—'सिक्कगं दुविहं'** इत्यादि । साधुभिरनिष्पाद्यं शिक्ककं द्विविधं द्विप्रकारकं भवति । त्रसस्थावरनिर्मितम्—त्रसकायजीवदेहेन सपादितम्, तथा—स्थावरकायजीवदेहेन निर्मितं संपादितम् । तत्र द्विविधशिक्ककमध्ये प्रथमम्—अंडजात्—अंडज—मयूर—हंसादिजीवपक्षात्संपा-दितम् । अंडजदेहात् वालयदेहात् पट्टकोशिकादिजीवविशेषात् स्नायुतो वा जायमानम् । द्वितीयं स्थावरजीवदेहनिर्मितन्तु विविधम् अनेकप्रकारकं भवति । तथाहि—कार्पास-नारिकेल—मुञ्ज—दर्भ

स्थूलवंशादिविविधवनस्पतिनिर्मितम् । एतेषामन्यतमेन यो भिक्षुः स्वयं शिक्ककं करोति, अथवा-शाक्यभिक्षुकादिभिरन्यतीर्थिकेन गृहस्थश्रावकादिना वा कारयति, अथवा-कुर्वन्तं तमनुमोदते स आज्ञाभङ्गादिकान् दोषान् प्राप्नुवन् प्रायश्चित्तभागी भवति ॥ सू० १४ ॥

## सूत्रम्—जे भिक्खू सोत्तियं वा रज्जुयं वा चिलमिलिं वा अण्णउत्थिएण वा गारत्थिएण वा कारेइ करेंतं वा साइज्जइ ॥ सू० १५ ॥

छाया—यो भिक्षुः सौत्रिकां वा रज्जुकां वा चिलमिलिं वा अन्ययूथिकेन वा गृहस्थेन वा कारयति कुर्वन्तं वा स्वदते ॥ सू० १५ ॥

चूर्णी—'जे भिक्खू' इति । 'जे भिक्खू' यो भिक्षु श्रमणः **सोत्तियं वा'** सौत्रिकां वा-सूत्रभवा वा **'रज्जुयं वा'** रज्जुकीं वा रज्जु 'डोरी' लोकप्रसिद्धा तया शणकादिरज्जुभिर्वा निर्मिता ताम् **'चिलिमिलिं वा'** चिलिमिलिकां वा तत्र चिलमिलिका-आहारकरणाय-शयनाय वा कल्पिता वस्त्रादिमयीजवनिका 'पडदा' इति लोकप्रसिद्धा ताम् **'अन्न उत्थिएण वा'** अन्ययूथिकेन अन्यतीर्थिकेन वा **'गारत्थिएण वा'** गृहस्थेन कलत्रादिपरिवारपरिवृतश्रावकेण वा **'कारेइ'** कारयति-स्वयं निर्माति अन्यद्वारेण वा निर्मापयति । **'करेतं वा साइज्जइ'** कुर्वन्तं वा स्वदते-अनुमोदते, कुर्वतोऽनुमोदनां करोति स श्रमणो लभते प्रायश्चित्तम् ।

भाष्यम्—सुत्त रज्जुवक्केहिं च दंडकडगेहिं तहा ।
चिलिमिली खु पंचहा भिक्खुहिं करणिज्जा नो ॥ ॥

छाया—सूत्ररज्जुवल्कलैश्च दण्डः कटकैस्तथा ।
चिलमिली खलु पंचधा भिक्षुभिः क्रियमाणा नो ॥ ॥

**अवचूरिः—'सुत्तरज्जु'** इत्यादि । चिलमिली शयनाहारादिकरणाय निर्मिता गृहप्रतिरूपिका जवनिका, एतादृशी चिलमिली पंचधा-पचभिर्भेदैर्विभिन्ना । सा साधुभिर्न करणीया तत्र पंच-प्रकारान् भेदान् दर्शयति-'सुत्ते' इत्यादि । सूत्रमयी चिलमिली प्रथमा १, तत्र सूत्रेण-कार्पासिकेन-तदन्येन वा मेषादिकेशनिर्मितेन सूत्रेण वा या कृता सा सूत्रमयी चिलमिली १ । **रज्जुमयी**-रज्जुनिर्मिता "दोरी" ति प्रसिद्धा द्वितीया २ । **'वक्के'** ति--वल्कलमयी, वल्कलं वृक्षत्वक् तया निर्मिता तृतीया ३, वशो दंडादि. कटकमयीजवनिका ताभ्यां वंशकटकादिभ्यां चतुर्थी पंचमी च, एषा पञ्चप्रकारा चिलमिली साधुभिर्न कार्या ॥ सू० १५ ॥

सूत्रम्—जे भिक्खू सूचीए उत्तरकरणं वा अन्नउत्थिएण वा गारत्थिएण वा करेइ करेंतं वा साइज्जइ ॥ सू० १६ ॥

छाया—यो भिक्षुः सूच्या उत्तरकरणम् अन्ययूथिकेन वा गृहस्थेन वा करोति कुर्वन्तं वा स्वदते ॥ सू० १६ ॥

चूर्णी--'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः 'सूचीए उत्तरकरणं' सूच्या उत्तरकरणम्, तत्र 'सूची सूई' इति प्रसिद्धा, तस्या उत्तरकरण तीक्ष्णतादिसंपादनम्। 'अन्नउत्थिएण वा' अन्ययूथिकेन तीर्थान्तरिकेण 'गारत्थिएण वा' गृहस्थेन श्रावकादिना वा करोति 'करेतं वा साइज्जइ' कुर्वन्त वा स्वदते अनुमोदते। यो हि भिक्षुः सूच्योत्तरकरणमन्यतीर्थिकेन करोति अथवा कुर्वन्तमनुमोदते, स साधुः आज्ञाभंगादिकान् दोषान् प्राप्नोति ॥ सू० १६ ॥

अत्राह भाष्यकारः--

भाष्यम्—बिलवड्ढकरणं लण्हस्स करणं तहा।
पज्जलणं उजुकरणं उत्तरकरणं बुहा ॥

छाया—बिलवर्धनकरणं श्लक्ष्णस्य करणं तथा।
प्रज्वलनम् ऋजुकरणमुत्तरकरणं बुधाः ॥

अवचूरिः--'बिलवड्ढकरणं' इत्यादि। सूच्या-उत्तरकरणम् तत्र किमिदमुत्तरकरण तत्राह भाष्यकारः बिलवर्धनकरणमित्यादि। बिलवर्धनकरणं सूच्या यत्—बिलं छिद्र तस्य वर्द्धनं वृद्धि तस्य करणं संपादनम्, तथा—श्लक्ष्णस्य-मूर्च्छितस्य कार्ये मन्दतामुपगतस्य तीक्ष्णीकरणम्—शिला घर्षणादि। तथा पज्जलणं प्रज्वलनम्—मन्दलौहस्याऽग्नौ संताप्य सन्ताड्य जले प्रक्षिप्योज्वलीकरणम्। तथा—ऋजुकरणम्-वक्रस्य-कुटिलस्य सरलता सपादनम्। एतत्सर्वमुत्तरकरणशब्देन प्रतिपादितम्। सूच्या उत्तरकरणे यस्मादग्निकायविराधनद्वारा षट्कायविराधना आज्ञाभंगादिका दोषा भवन्ति। तस्मात्सूच्या उत्तरकरण न कुर्यान्नवा-कुर्वन्तमनुमोदयेत्, अन्यथा प्रायश्चित्तभाग् भवतीति ॥ १६ ॥

सूत्रम्—जे भिक्खू पिप्पलगस्स उत्तरकरणं अन्नउत्थिएण वा गारत्थिएण वा करेइ करेंतं वा साइज्जइ ॥ सू० १७ ॥

छाया—यो भिक्षुः पिप्पलकस्य उत्तरकरणमन्ययूथिकेन वा गृहस्थेन वा करोति कुर्वन्तं वा स्वदते ॥ सू० १७ ॥

चूर्णी—'जे भिक्खू' इति। 'जे भिक्खू' यो भिक्षुः साधुः 'पिप्पलगस्स' पिप्पलकस्य-कर्त्तरिकायाः 'कैंची' तिलोकप्रसिद्धस्य। 'उत्तरकरणं' उत्तरकरणम् पिप्पलकस्य तीक्ष्णादिसंपादनम् अपरभागस्य लोहकारगृहं गत्वा ऋजुतादिसंपादनम्। तथा--षोडशसूत्रोक्तं सर्वमिहोत्तरकरणशब्देन ज्ञातव्यमिति संक्षेपः॥ सू० १७॥

सूत्रम्—जे भिक्खू नहच्छेयगस्स उत्तरकरणं अन्नउत्थिएण वा-गारत्थिएण वा करेइ करेंतं वा साइज्जइ॥ सू० १८॥

छाया—यो भिक्षुः नखच्छेदकस्य उत्तरकरणम् अन्ययूथिकेन वा गृहस्थेन वा करोति, कुर्वन्तं वा स्वदते॥ सू० १८॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'नहच्छेयगस्स' नखच्छेदकस्य, नखं पादजं, हस्तजं वा छिनत्ति येन स नखच्छेदकः 'नहरनी' ति लोकप्रसिद्धः तस्य नखच्छेदकस्य-उद्धरकरणं करोति कुर्वन्तं वा स्वदते, पूर्वसूत्रवत् दोषभाग्भवतीति ज्ञातव्यम्॥ सू० १८॥

सूत्रम्—जे भिक्खू कण्णसोहणगस्स उत्तरकरणं अन्न उत्थिएण वा गारत्थिएण वा करेइ, करेंतं वा साइज्जइ॥ १९॥

छाया—यो भिक्षुः कर्णशोधनकस्य उत्तरकरणमन्ययूथिकेन वा गृहस्थेन वा करोति कुर्वन्तं वा स्वदते॥ सू० १९॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'कण्णसोहणगस्स' कर्णशोधनकस्य, येन साधनविशेषेण कर्णयोरन्तर्वर्तिमलमपनीयते—तत्कर्णशोधनकम्, एतादृशस्य कर्णशोधनकस्य। उत्तरकरणं नाम--केनचित् शस्त्रविशेषेण तीक्ष्णीकरणं, त्रुटितस्य लोहकारगृहे संधापनादिकरणम्। एतादृशमुत्तरकरणं पूर्ववत् ज्ञेयम्॥ सू० १९॥

सूत्रम्—जे भिक्खू अण्णट्ठयाए सूई जायइ जायंतं वा साइज्जइ॥२०॥

छाया—यो भिक्षुरनर्थतया सूचीं याचते याचमानं वा स्वदते॥ सू० २०॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'अण्णट्ठयाए' अनर्थतया प्रयोजनं विना, अन्यतीर्थिकेभ्यः श्रावकेभ्यो वा 'सूई जायइ' सूचीं याचते कारणमन्तरेणैव सूचीयाचनां कुरुते। अथवा-'जायंतं वा साइज्जइ' याचमानमन्यं स्वदते अनुमोदते। यो भिक्षुः कारणमन्तरेणैव श्रावकादिभ्यः सूचीं स्वयं याचते—प्रार्थयति, स दोषभाग् भवतीति॥सू०२०॥

अन्यसंयतार्थं याचकं याचमान वाऽनुमोदयतो भिक्षुकस्य के दोषा भवन्ति तत्राह भाष्यकारः–'अकारणं' इत्यादि ।

भाष्यम्—अकारणं जायमाणे भिक्खू सूई च पोसगो ।
आणाणवट्ठामिच्छत्तं तहेव य विराहणं ॥

छाया—अकारणं याचमानो भिक्षु सूचीं च पोषकः ।
आज्ञानवस्थामिथ्यात्वं तथैव च विराधनम् ॥

अवचूरी—'अकारणं' इति । भिक्षुर्निरवद्यभिक्षवृत्तिमान् श्रमण सूच्याः याचनां कुर्वन् सूचीं याचमानस्य पोषकोऽनुमोदको वा साधु आज्ञाभंगदोषान् प्राप्नोति । न खल्वेतादृशी तीर्थंकरस्याज्ञा, यत् -साधुभिः अन्यार्थं सूच्या याचना करोतु । ततश्च तथाकुर्वन् श्रमणस्तीर्थ-कराज्ञाभंगं प्राप्नोति, तथाऽनवस्थादोषोऽपि प्रसज्जते तथा कर्तुं एवं मिथ्यात्वदोषं चापि प्राप्नोति तथैव विराधनम् आत्मविराधनां–सयमविराधनां–भाषासमितिविराधनां च प्राप्नोति ॥ सू० २० ॥

सूत्रम्—जे भिक्खू अणट्ठयाए पिप्पलगं जायइ, जायंतं वा साइज्जइ ॥ सू० २१ ॥

छाया—यो भिक्षुः अनर्थतया पिप्पलक याचते याचमानं वा स्वदते ॥ सू० २१ ॥

चूर्णी—'जे भिक्खू' इति । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'अणट्ठयाए' अनर्थतया-निष्प्रयोजनम्, कारणं विनेत्यर्थः । 'पिप्पलगं' पिप्पलकम्-'कैची' ति लोकप्रसिद्धम् 'जायइ' याचते-अन्यतीर्थिकादिभ्यः । 'जायंतं वा साइज्जइ' याचमानं वा स्वदते-अनुमोदते स प्रायश्चित्तभाग् भवतीति ॥ सू० २१ ॥

सूत्रम्—जे भिक्खू अणट्ठयाए कण्हसोहणं जायइ, जायंतं वा साइ-ज्जइ ॥ सू० २२ ॥

छाया—यो भिक्षुरनर्थतया कर्णशोधनकं याचते, याचमान वा स्वदते ॥ सू० २२ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः 'अणट्ठयाए' अनर्थतया, तत्रार्थः प्रयोजनम्-न-अर्थः इत्यनर्थः प्रयोजनाभावः । तमुद्दिश्य–'कण्णसोहणं' कर्णशोधनकम्, कर्णमलमपहर्तुं, साधनविशेषलक्षणम् । 'जायइ' याचते, अन्यतीर्थिकेभ्यो गृहस्थेभ्यो वा । 'जायंतं वा साइज्जइ' याचमान वा स्वदते -अनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० २२ ॥

सूत्रम्—जे भिक्खू अणट्ठयाए णहच्छेयणं जायइ जायंतं वा साइज्जइ ॥ सू० २३ ॥

छाया—यो भिक्षु अनर्थतया नखच्छेदनकं याचते, याचमानं वा स्वदते ॥ सू० २३ ॥

चूर्णी—'जे भिक्खू' इति। 'जे भिक्खू यो भिक्षुः--श्रमणः अणट्ठयाए' अनर्थतया प्रयोजनं विनैव 'णहच्छेयणगं' नखच्छेदनकम् नखच्छेदनिकाम्—"नहरनी" ति लोकप्रसिद्धाम् 'जायइ' याचते अन्यतीर्थिकेभ्यः श्रावकेभ्यो वा 'जायंतं वा साइज्जइ' याचमानमन्यं स्वदते-अनुमोदते स आज्ञाभंगानवस्थात्मविराधनासंयमविराधनादिदोषैः प्रायश्चित्तभाग् भवति ॥ सू० २३ ॥

सूत्रम्—जे भिक्खू अविहीए सूई जायइ, जायंतं वा साइज्जइ ॥२४॥

छाया—यो भिक्षुः अविधिना सूचीं याचते याचमानं वा स्वदते ॥ सू० २४ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'अविहिए' अविधिना 'सूई' जायइ' सूचीं याचते, तत्र विधिः--स्वसमयप्रसिद्धो नियमः तं विना। अर्थात् महां कार्यमुपस्थित सीवनस्याऽतः सूचीं मे देहि, कार्यं कृत्वा पुनरावर्त्तयिष्यामि—इति कथनमन्तरेणैव सूच्यायाचनम् अविधिना याचितं भवति। 'जायंतं वा साइज्जइ' याचमानं वा स्वदते। अर्थात्-यः श्रमणः विधिमन्तरेणैव याचनां करोति-यश्च याचमान तमनुमोदते, सोऽपि प्रायश्चित्तभाग् भवतीति ॥ २४ ॥

भाष्यम्—काहं वत्थस्स संहाणं तिकिच्चा जे उ जायइ।
करेइ अन्न संहाणं एसोऽविही उदाहिओ ॥

छाया—करिष्ये वस्त्रस्य संधानमिति कृत्वा यस्तु याचते।
करोत्यन्यस्य संधानमेषोऽविधिरुदाहृतः ॥

अवचूरिः—'काहं' इत्यादि। कोऽपि साधुः कस्यचित् श्रावकादेर्गृहं गतवान् तत्र गत्वा सूचीं याचमानो वदति-भो देवानुप्रिय! श्रावकः! अहं वस्त्रस्य प्रावरणस्य संधान करिष्ये इति कृत्वा-कथयित्वा सूचीं याचते। किंतु तया प्रावरणार्थं याच्यमानया सूच्या चोलपट्टादिकस्य संधानं करोति। एष अविधिरुदाहृतः कथितः। अनेन विधिना यो याचते याचमानं वा स्वदते अनुमोदते, स भिक्षुर्दोषभागिति। एवं पिप्पलकादिसूत्रेष्वपि बोद्धव्यम् ॥ सू० २४ ॥

सूत्रम्—जे भिक्खू अविहीए पिप्पलगं जायइ, जायंतं वा साइज्जइ ॥ सू० २५ ॥

छाया—यो भिक्षुः अविधिना पिप्पलकं याचते, याचमानं वा स्वदते ॥ सू० २५ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः साधुः अविधिना पिप्पलकं-पिप्पलको नाम पात्रमुखादिकरणप्रयोजनक किञ्चिद्वक्रो ह्रस्वक्षुरविशेषस्तम् याचते, याचमानं वा स्वदते अनुमोदयतीति पूर्ववत् ॥ सू० २५ ॥

**सूत्रम्—जे भिक्खू अविहीए नहच्छेयणगं जायइ, जायंतं वा साइज्जइ ॥ सू० २६ ॥**

छाया—यो भिक्षुरविधिना नखच्छेदनकं याचते याचमानं वा स्वदते ॥ सू० २६ ॥

चूर्णी—'जे भिक्खू इत्यादि । 'जे भिक्खू' यो भिक्षुः श्रमणः 'अविहीए' अविधिना, 'नहच्छेयणगं' नखच्छेदनकम् 'जायइ' याचते, अन्येन याचयति, 'जायंतं वा साइज्जइ' याचमानं वा स्वदतेऽनुमोदते स प्राग्वत् ॥ सू० २६ ॥

**सूत्रम्—जे भिक्खू अविहीए कण्णसोहणगं जायइ, जायंतं वा साइज्जइ ॥ २७ ॥**

छाया—यो भिक्षुरविधिना कर्णशोधनकं याचते, याचमानं वा स्वदते सू० ॥२७॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'अविहीए' अविधिना 'कण्ह-सोहणगं' कर्णशोधनकम् 'जायइ' याचते 'जायंतं वा साइज्जइ' याचमानं वा स्वदतेऽनुमोदते--इति पूर्ववत् ॥ सू० २७ ॥

**सूत्रम्—जे भिक्खू अप्पणा एगस्स अट्ठाए सूई जाइत्ता अण्णमण्णस्स अणुप्पएइ, अणुप्पयंतं वा साइज्जइ ॥ सू० २८ ॥**

छाया—यो भिक्षुरात्मनः एकस्यार्थाय सूचीं याचित्वा अन्योन्यस्याऽनुप्रददाति, अनुप्रददतं वा स्वदते ॥ सू० २८ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चित्--श्रमणः 'अप्पणो एगस्स अट्ठाए' आत्मन एकस्यार्थाय, तत्रात्मन स्वस्याऽर्थाय-प्रयोजनाय । 'सूई जाइत्तए' सूचीं याचित्वा, कश्चित् श्रमणः गृहस्थकुलं गतो भवेत् तत्र गत्वा मम वस्त्रसंधानाय सूच्याः आवश्यकतेति कथयित्वा सूचीं याचमानः सूचीं प्राप्नोति प्राप्य च स्ववसतिमागत्य । 'अण्णमण्णस्स' अन्योऽन्यस्य--अन्यस्मै साधवे 'अणुप्पएइ' अनुप्रददाति, अनुप्रदापयति । 'अणुप्पयंतं व, साइज्जइ' अनुप्रददत वा स्वदतेऽनुमोदते, स प्रायश्चित्तभागिति संक्षेपः ॥ सू० २८॥

सूत्रम्—जे भिक्खू अप्पणो एगस्स अट्ठाए पिप्पलगं जाइत्ता अण्णमण्णस्स अनुप्पएइ अनुप्पयंतं वा साइज्जइ ॥ सू० २९ ॥

छाया—यो भिक्षुः आत्मन एकस्यार्थाय पिप्पलकं याचित्वा अन्योऽन्यस्यानुप्रददाति प्रददतं वा स्वदते ॥ सू० २९ ॥

चूर्णी--'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः श्रमणः 'अप्पणो एगस्स अट्ठाए' आत्मनः स्वस्यैकस्यार्थाय-प्रयोजनाय। 'पिप्पलगं जाइत्ता' पिप्पलक-कर्त्तरिकां याचित्वा 'अण्णमण्णस्स' अन्योन्यस्य 'अणुप्पएइ' अनुप्रददाति, 'अनुप्पयंतं वा साइज्जइ' अनुप्रददतं वा स्वदतेऽनुमोदते इति पूर्ववत् ॥ सू० २९ ॥

सूत्रम्—जे भिक्खू एगस्स अट्ठाए नहच्छेयणगं जाइत्ता अण्णमण्णस्स अणुप्पएइ अणुप्पयंतं वा साइज्जइ ॥ सू० ३० ॥

छाया—यो भिक्षुरात्मन एकस्यार्थाय नखच्छेदनकं याचित्वा अन्योऽन्यस्याऽनुप्रददाति अनुप्रददतं वा स्वदते ॥ सू० ३० ॥

चूर्णी--'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः 'अप्पणो एगस्स अट्ठाय' आत्मनः स्वस्यैकस्याऽर्थाय, 'नहच्छेयणगं' नखच्छेदनकम् नखकर्त्तनसाधनम्, 'जाइत्ता' याचित्वा 'अण्णमण्णस्स' अन्योन्यस्य-अन्यस्मै, 'अणुप्पएइ' अनुप्रददाति 'अणुप्पयंतं वा साइज्जइ' अनुप्रददतं वा स्वदतेऽनुमोदते इति, स प्रायश्चित्तभागिति पूर्ववत् ॥ सू० ३० ॥

सूत्रम्—जे भिक्खू अप्पणा एगस्स अट्ठाए कण्णसोहणगं जाइत्ता अण्णमण्णस्स अणुप्पएइ अणुप्पयंतं वा साइज्जइ ॥ सू० ३१ ॥

छाया—यो भिक्षुरात्मन एकस्यार्थाय कर्णशोधनकं याचित्वा अन्योऽन्यस्याऽनुप्रददाति, अनुप्रददतं वा स्वदते ॥ सू० ३१ ॥

चूर्णी--'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः। 'अप्पणो एगस्स अट्ठाए' आत्मनः स्वस्य केवलमर्थाय-प्रयोजनसिद्धये। 'कण्णसोहणगं जाइत्ता' कर्णशोधनकं याचित्वा समानीय तत् 'अण्णमण्णस्स' अन्योन्यस्य-परस्परम् 'अणुप्पएइ' अनुप्रददाति, 'अणुप्पयंतं वा साइज्जइ' अनुप्रददतं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाक् इति पूर्ववत् ॥ सू० ३१ ॥

सूत्रम्—जे भिक्खू पाडिहारियं सूई जाइत्ता वत्थं सीविस्सामित्ति पायं सिव्वइ सिव्वंतं वा साइज्जइ ॥ सू० ३२ ॥

छाया--यो भिक्षुः प्रातिहारिकीं सूचीं याचित्वा वस्त्रं सीविष्यामि इति पात्रं सीव्यति सीव्यन्तं वा स्वदते ॥ ३२ ॥

चूर्णी—'जे भिक्खू' इत्यादि 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः 'पाडिहारियं' प्रातिहारिकीम्, 'सूई' सूचीं–कार्यं कृत्वा पुनः परावर्तयिष्यामीति कथयित्वा नयति–तादृशसूचीग्रहणं प्रातिहारिकसूचीग्रहणम् । तादृशीं सूचीं 'जाइत्ता' याचित्वा 'वत्थं सीविस्सामित्ति' वस्त्रं सीविष्यामीति अनया नीयमानया सूच्याऽहं वस्त्रस्य सधानं करिष्यामीति कथयित्वा आनीतया तया 'पायं सिव्वइ' पात्रं सीव्यति, यदि कथितादृवस्तुनोऽन्यद्वस्तु सीव्यति, 'सिव्वंतं वा साइज्जइ' सीव्यन्तं वा संदधन्तं वा स्वदतेऽनुमोदते स भाषासमित्यास्खलितः प्रायश्चित्तभागिति ॥ सू० ३२ ॥

सूत्रम्—जे भिक्खू पाडिहारियं पिप्पलगं जाइत्ता वत्थं छिंदिस्सामि त्ति पायं छिंदइ, छिंदंतं वा साइज्जइ ॥ सू० ३३ ॥

छाया—यो भिक्षुः प्रातिहारिकं पिप्पलकं याचित्वा वस्त्रं छेत्स्यामीति पात्रं छिनत्ति छिन्दन्तं वा स्वदते ॥ सू० ३३ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः श्रमणः 'पाडिहारियं' प्रातिहारिकं–कार्यानन्तरं परावर्तनीयम् 'पिप्पलगं' पिप्पलकम्–लोहमयशस्त्रविशेष कर्तरिकादिकं 'जाइत्ता' याचित्वा, 'वत्थं छिंदिस्सामि' वस्त्रं छेत्स्यामि इति कृत्वा, 'पायं छिंदइ' पात्रं छिनत्ति, छेदयति वा, 'छिंदंतं वा साइज्जइ' छिन्दन्तं वा स्वदतेऽनुमोदते इति पूर्ववत् ॥ सू० ३३ ॥

सूत्रम्—जे भिक्खू पाडिहारियं नहच्छेयणगं जाइत्ता नहं छिंदिस्सामिति सल्लुद्धरणं करेइ, करेंतं वा साइज्जइ ॥ सू० ३४ ॥

छाया—यो भिक्षुः प्रातिहारिकं नखच्छेदनकं याचित्वा नखं छेत्स्यामि इति शल्योद्धरणं करोति कुर्वन्तं वा स्वदते ॥ सू० ३४ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः श्रमणः 'पाडिहारियं' प्रातिहारिकं पुनः परावर्त्तयिष्यामीति कथयित्वा 'नहच्छेयणगं' नखच्छेदनकं–नखकर्त्तनसाधनम् । 'जाइत्ता' याचित्वा 'नहं छिंदिस्यामिति' नखं छेत्स्यामि इति कृत्वा आनीतवान् । किन्तु तेन 'सल्लुद्धरणं करेइ' शल्योद्धरणं करोति, कारयति 'करेंतं वा साइज्जइ' कुर्वन्तं वा स्वदते–अनुमोदते इति पूर्ववत्प्रायश्चित्तभाक् सः ॥ सू० ३४ ॥

सूत्रम्—जे भिक्खू पाडिहारियं कण्णसोहणगं जाइत्ता कण्णमलं णीहरिस्सामिति दंतमलं वा नखमलं वा णीहरेइ णीहरंतं वा साइज्जइ ॥सू० ३५॥

छाया—यो भिक्षुः प्रातिहारिकं कर्णशोधनकं याचित्वा, कर्णमलं निर्हरिष्यामीति दन्तमलं वा नखमलं वा निर्हरति, निर्हरन्तं वा स्वदते ॥ सू० ३५ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः श्रमणः 'पाडिहारियं' प्रातिहारिकम् 'कण्णसोहणगं' कर्णशोधनकम् 'जाइत्ता' याचित्वा 'कण्णमलं णीहरिस्सामित्ति' कर्णमलं निर्हरिष्यामीति कथयित्वाऽऽनीतेन तेन दन्तमलं वा स्वेच्छया नखमलं वा 'णीहरेइ' निर्हरति, निर्हारयति, 'णीहरंतं वा साइज्जइ' निर्हरन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवतीति ॥ सू० ३५ ॥

अत्राह भाष्यकारः—

भाष्यम्—सीविस्सं वत्थमेएणं, वत्थं पायं च सिव्वइ ।
सिविस्सामि च पायं वा, वत्थगं खलु सिव्वइ ॥
गिही सयं वा दट्ठूणं, सुणित्ता विमणो हवे ।
खिंसणं वा परस्सग्गे, कुज्जा अणायरं तहा ॥

छाया—सीविष्यामि वस्त्रमेतेन वस्त्रं पात्रं च सीव्यति ।
सिविष्यामि च पात्रं वा वस्त्रकं खलु सीव्यति ॥
गृही स्वयं वा दृष्ट्वा श्रुत्वा विमना भवेत् ।
निन्दनं वा परस्याग्रे कुर्यादनादरं तथा ॥

अवचूरिः—'सीविस्सं' इत्यादि । अहं भवत्प्रदत्तेन—एतेन सूच्यादिना वस्त्रं सीविष्यामि, इत्युक्त्वाऽऽनीतेन साधनेन सूचीसाधनेन वस्त्रं ततोऽन्यत् पात्रं च सीव्यति । एवमेव—पात्रं वा सीविष्यामीति कथयित्वाऽऽनीतेन तेन खलु वस्त्रकं सीव्यति । गृही एवं सूचीद्वारा पात्रादिकं सीव्यन्तमेनं साधुं कदाचित्स्वयं दृष्ट्वा परमुखाद्वा श्रुत्वा 'विमणो' विमनाः मनोवक्रतिमान् भवेत् वा—अथवा परस्य—साधोर्गृहस्थस्य वा अग्रे—समक्षं तस्य साधोर्निन्दनं तथा—अनादरं यदि कुर्यात् तदा मृषाभाषणेन द्वितीयमहाव्रतस्य भङ्गकरणात् संयमात्परिभ्रष्टः सन् शासनलघुतां कारयेत्साधुः, अतः साधुभिरेवं न कर्तव्यम् ॥ सू० ३५ ॥

## सूत्रम्—जे भिक्खू अविहीए सूइं पच्चप्पिणइ पच्चप्पिणंतं वा साइज्जइ ॥ सू० ३६ ॥

छाया—यो भिक्षुरविधिना सूचीं प्रत्यर्पयति, प्रत्यर्पयन्तं वा स्वदते ॥ सू० ३६ ॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः श्रमणः 'सूई' सूचीम् **'अविहीए पच्चप्पिणइ'** अविधिना—विधिमतिक्रम्य प्रत्यर्पयति दायकं प्रति ददाति **'पच्चप्पिणंतं वा साइज्जइ'** प्रत्यर्पयन्तं वा स्वदतेऽनुमोदते । अविधिना ददाति, ददतं वा प्रत्यनुमोदते स प्रायश्चित्तभाग्भवति ॥ ३६ ॥

अत्राह भाष्यकारः—

**भाष्यम्**—अविहिणा देमाणो य, दायगं पडि जो मुणी ।
धम्मस्स लहुया होज्जा, होज्जा जीवविराहणा ॥

**छाया**—अविधिना ददानश्च-दायकं प्रति यो मुनिः ।
धर्मस्य लघुता भवेत् भवेज्जीवविराधना ॥

**अवचूरिः**—'अविहिणा' इत्यादि । यो मुनिः सूच्यादिना स्वकार्यं कृत्वा, तां सूचीं प्रत्यर्पयितुं दायकं—दातारं प्रति गत्वा—'नीयतामियं सूची' इत्युक्त्वा अविधिना जानुदेशादूर्ध्वस्थितादेव स्वहस्तात्—ददत्—प्रत्यर्पयन् सन् वसतिं प्रतिनिवर्तते । तत्रैव करणे धर्मस्य लघुता भवति, तथा—वायुकायादिजीवानां विराधना च भवति। एषोऽविधिः । अयं भावः—शोभनोऽयं विधिः यथा स्वप्रयोजनार्थमेव याचेत, यद्वस्त्रादिकं सदधीत तदर्थमेव याचेत, यस्य साधोः कार्यं तन्नाम्नैव याचेत, आत्मनोऽर्थाय-परस्यार्थाय तदुभयाय वा याचेत, यथाकर्तुकामस्तथैव यत्नो विधेय इति परमार्थः । विनीतः सन् पुरो भूमौ संस्थाप्य तमेवं वदेत्—भ्रातः ! 'तवेयं—सूचि'रिति ॥ सू० ३६ ॥

एवमेव-'**पिप्पलगं**' पिप्पलकं०, ३७, '**नहच्छेयणगं**'-नखच्छेदनकं० ३८ । **कण्णसोहणग** कर्णशोधनकं० ३९ । एषु त्रिष्वपि सूत्रेषु पूर्वोक्त एव विधिरविधिश्च ज्ञातव्यः ॥ सू० ३७–३९ ॥

**सूत्रम्**—जे भिक्खू लाउपायं वा दारुपायं वा मट्टियापायं वा अण्णउत्थिएण वा गारत्थिएण वा परिघट्टावेइ वा संठवेइ वा जमावेइ वा अलमप्पणा करणयाए सुहुममवि नो कप्पइ जाणमाणे सरमाणे अण्णमण्णस्स वियरइ वियरंतं वा साइज्जइ ॥ सू० ४० ॥

**छाया**—यो भिक्षुः अलाबूपात्रं वा दारुपात्रं वा मृत्तिकापात्रं वा, अन्ययूथिकेन वा गृहस्थेन वा परिघट्टयति वा संस्थापयति वा यमयति वा अलमात्मनः करणतया सूक्ष्ममपि नो कल्पते जानानः स्मरन् अन्याऽन्यस्य वितरति वितरन्तं वा स्वदते ॥सू०४०॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः श्रमण· 'लाउपायं वा' अलाबूपात्रं वा–तुंबीपात्रं वा, 'दारुपायं वा' दारुपात्र वा, तत्र-दारु-काष्ठं तत्संबन्धि पात्र वा, 'मट्टियापायं वा' मृत्तिकापात्रं वा, एतानि त्रीणि अलाबूप्रभृतिपात्राणि 'अण्णउत्थिएण वा' अन्ययूथिकेन अन्यतीर्थिकेन वा, 'गारत्थिएण वा' गृहस्थेन वा 'परिघट्टावेइ वा' परिघट्टयति–निर्मापयति वा 'संठवेइ' सस्थापयति वा -पात्रमुखादीनां निर्माणं कारयति 'जमावेइ वा' यमयति वा–संयमयति वा पात्रैकदेशोच्चनीचप्रदेशं समीकारयति । अलं=पर्याप्तम् 'अप्पणो करणयाए' आत्मना करणतया स्वयं कर्तुं न शक्यते । 'सुहुममवि' सूक्ष्ममल्पमपि· 'नो कप्पइ' नो कल्पते । एवं स्वशक्ति 'जाणमाणे' जानान 'सरमाणे' स्वसामर्थ्यं स्मरन् सन् वा 'अण्णमण्णस्स' अन्यान्यस्मै अन्यस्मै अन्यस्मै इत्यर्थ, तत्र–अन्यतीर्थिकाय गृहस्थाय वा 'वियरइ' वितरति समीकरणाद्यर्थाय पुनरग्रहणाय वा ददाति । 'वियरंतं वा साइज्जइ' वितरन्तं ददतमन्यं वा स्वदतेऽनुमोदते इति । यदि कश्चित् श्रमण· तुम्बादिपात्र स्फुटितं गृहस्थादिद्वारा संधापयति नवीन वा निर्मापयति किंचिदपि विषमं समीकारयति सूक्ष्ममपि कार्यं करोति–कारयति–कुर्वन्त वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग्भवति । एतेषां करणेऽन्यद्वारा सपादने वा दाने वा षड्विधजीवनिकायानामुपमर्दसभवेन साधुभिस्तत्त्याज्यम् ॥ सू० ४० ॥

**सूत्रम्—जे भिक्खू दंडयं वा लट्ठियं वा अवलेहणियं वा वेणुसूइयं वा अन्नउत्थिएण वा गारत्थिएण वा परिघट्टावेइ संठवेइ जमावेइ वा अलमप्पणो करणयाए सुहुममवि नो कप्पइ जाणमाणे सरमाणे अण्णमण्णस्स वियरइ वियरंतं वा साइज्जइ ॥ सू० ४१ ॥**

छाया—यो भिक्षुः दण्डक वा यष्टिकां वा अवलेहनिकां वा-वेणुसूचिकां वा अन्ययूथिकेन वा गृहस्थेन वा परिघट्टयति संस्थापयति यमयति वा अलमात्मनः करणतया सूक्ष्ममपि नो कल्पते जानानः स्मरन् अन्याऽन्यस्मै वितरति वितरन्तं वा स्वदते । सू० ४१ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खु' यो भिक्षु श्रमण· 'दंडयं वा' दण्डक वा, तत्र–दण्डो गमनसहायको लोकप्रसिद्धः, 'लट्ठियं वा' यष्टिकां वा, तत्र–यष्टिर्वंशादिनिर्मितो लघुदण्डविशेषः, तां वा । 'अवलेहणियं वा' अवलेहनिकां वा वर्षासमये चरणसंलग्नकर्दमप्रोञ्छनशलाकाविशेषः । 'वेणुसूइयं वा' वेणुसूचिकां वा, तत्र–वेणुर्वंशस्तन्मयीं सूचीं वंशशलाकामित्यर्थ· । एतत्पूर्वोक्तं सर्वं वस्तु 'अन्नउत्थिएण वा गारत्थिएण वा' अन्ययूथिकेनाऽन्यतीर्थिकेन वा गृहस्थेन वा 'परिघट्टावेइ' परिघट्टयति परिघट्टनं निर्मापणम् ततश्चाऽन्यद्वारा दण्डादि निर्मापयतीत्यर्थ । 'संठवेइ'

संस्थापयति, तत्र-संस्थापन—दण्डस्य मुखादीनां संपादनम् 'जमावेइ वा' यमयति वा संयमयति दण्डादिकं समीकारयति । 'अलमप्पणो करणयाए' अलमात्मनः करणतया पर्याप्तमात्मना स्वयं करणायालम् न स्वस्य कर्तुं सामर्थ्यमित्यर्थः । 'सुहुममवि नो कप्पइ' सूक्ष्मं—स्वल्पमप्यात्मनः कार्यमन्यद्वारा कारयितु न कथमपि कल्पते । 'जाणमाणे सरमाणे अण्णमण्णस्स वियरइ' स्वात्मान जानानः स्मरन् वा स्वसामर्थ्यं अन्याऽन्यस्य अन्यस्मै अन्यस्मै इत्यर्थः वितरति-ददाति । 'वियरंतं वा साइज्जइ' वितरन्त वा-ददतं वाऽन्यं स्वदतेऽनुमोदते दण्डादीनां घर्षण--संस्थापन-संयमनादिकं कर्तुं परतीर्थिकेभ्यो ददाति ददत वाऽन्यमनुमोदते स प्रायश्चित्तभाग्भवति । केवलं बाल-ग्लान-रोगि-वृद्धानां सचलनार्थं यष्ट्यादिर्गृहीतो भवति न तु सशक्तानां सर्वसाधूनामिति विवेकः ॥ सू० ४१ ॥

## सूत्रम्—जे भिक्खू पायस्स एगं तुडियं तुडेइ तुडंतं वा साइ-ज्जइ ॥ सू० ४२ ॥

छाया—यो भिक्षु पात्रस्यैकं त्रुटित स्थगयति-स्थगयन्त वा स्वदते ॥सू०४२॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु श्रमण 'पायस्स' पात्रस्य-तुम्बीपात्रस्य, दारुपात्रस्य, मृत्तिकापात्रस्य वा । 'एगं तुडियं' एकं त्रुटितम् थिगलं छिद्रमित्यर्थः उपलक्षणात् अखण्डपात्रस्योपरि शोभार्थं पात्रस्य शोभा वर्द्धतामिति बुद्ध्या पात्रस्योपरि दीयमान चिह्नविशेषम् । 'तुडेइ' स्थगयति आवृणुते त्रुटित संयोजयतीत्यर्थः । 'तुडंतं वा साइज्जइ' स्थगयन्त वा स्वदते । यश्च भिक्षुस्तुम्बिकादित्रिविधपात्रेषु छिद्रमेकं निरुणद्धि, यद्वा-पात्रस्योपरि शोभातिशयसंपादनार्थं यत्र तत्र वा स्वस्तिकादिक निर्माति-निर्मापयति वा, निर्मापयन्तं वाऽनु-मोदते स प्रायश्चित्तभाग्भवति ॥ सू० ४२ ॥

## सूत्रम्—जे भिक्खू पायस्स परं तिण्हं तुडियाणं तुडेइ तुडंतं वा साइ-ज्जइ ॥ सू० ४३ ॥

छाया—यो भिक्षुः पात्रस्य पर त्रयाणा त्रुटितानां स्थगयति स्थगयन्तं वा स्वदते ॥ सू० ४३ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः श्रमणः 'पायस्स' पात्रस्य तुम्बिकादेः । 'परं तिण्हं तुडियाणं' पर त्रयाणां त्रुटितानाम् त्रिथिगलात् परं चतुर्थादिकम् 'तुडेइ' स्थगयति-आवृतं करोति-कारयति वा 'तुडंतं वा साइज्जइ' —स्थगयन्तं वा स्वदतेऽनुमोदते, त्रिथिगला-

दधिकं संयोजयति स प्रायश्चित्ती भवति । य. साधुस्तुम्बिकादिपात्रेषु--एकं–द्विकं वा कदाचित्–त्रिकं थिग्गलं योजयितुं प्राप्ताधिकार· स यदि चतुर्थादिकं थिग्गलं स्वस्वजातीय खण्डं योजयति करोति, कारयति, कुर्वन्तं वा स्वदतेऽनुमोदते तदा प्रायश्चित्तभाग्भवति ॥ सू० ४३ ॥

अत्राह भाष्यकारः—

भाष्यम्—उड्ढं तुडियतिया य, जोजेज्ज पायगं जई ।
आणाणवत्थामिच्छत्तं, पावेई य विराहणं ॥

छाया—उर्ध्वं त्रुटितत्रिकाच्च, योजयेत्पात्रकं यतिः ।
आज्ञानवस्थामिथ्यात्वं प्राप्नोति च विराधनम् ॥

अवचूरिः—'उड्ढं तुडिय' इत्यादि । यो यति· श्रमणः स्फुटितपात्रादिकस्य थिग्गलत्रयात् उर्ध्वमधिक थिग्गलेन पात्रकं तुम्ब्यादिपात्रं योजयेत्, चतुर्थादिकं थिग्गलं पात्रे स्थगयति -करोति, स श्रमणः आज्ञाभङ्गदोषम्--अनवस्थादोषम् -मिथ्यात्वदोषम् -विराधनं च प्राप्नोति, अतः स्फुटितस्य पात्रादिकस्य थिग्गलत्रयादधिकं न योजयेत्, इति ॥ सू० ४३ ॥

## सूत्रम्—जे भिक्खू पायं अविहीए तुडइ तुडंतं वा साइज्जइ॥ सू०४४॥

छाया—यो भिक्षुः पात्रमविधिना स्थगयति स्थगयन्तं वा स्वदते ॥ सू० ४४ ॥

चूर्णी—'जे भिक्खु' इत्यादि । 'जे भिक्खु' यो भिक्षु 'पायं' पात्रम् 'अविहीए' अविधिना विध्यतिक्रमेण, 'तुडइ' स्थगयति -युनक्ति 'तुडंतं वा साइज्जइ' स्थगयन्त वा स्वदते, युनक्ति-योजयति -अनुमोदते वा स प्रायश्चित्तभागिति ॥ सू० ४४ ॥

## सूत्रम्—जे भिक्खू पायं अविहीए बंधइ बंधंतं वा साइज्जइ॥ सू०४५॥

छाया—यो भिक्षुः पात्रमविधिना बध्नाति-बध्नन्तं वा स्वदते ॥ सू० ४५॥

चूर्णी—'जे भिक्खु' इत्यादि। 'जेभिक्खु' यो भिक्षुः श्रमणः 'पायं' पात्रं तुम्बिकादिकम् 'अविहीए' अविधिना विध्यतिक्रमेण 'बंधइ' बध्नाति अविधिना बन्धनं करोति कारयति । 'बंधंतं वा साइज्जइ' बध्नन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्ती भवति । त्रिप्रकारके ऽलाबूपात्रादौ द्विप्रकारको बंधो भवति । तत्रैकोऽविधिबन्धो द्वितीयो विधिबन्धः । तत्राऽविधिबंधोऽयम्–"तत्र स्वस्तिकबन्धो द्विप्रकारको भवति व्यतिकलितः । इतरौ वा व्यतिकलितौ समच-

तुरश्चौ च कोणेषु ॥१॥ [ ╳ ] व्यतिकलित एकतो द्विधातश्च, एकतोऽयम् [ ┼ ] द्विधातोऽम्

[ ╳ ] प्रतीतस्तेनबन्ध., स चाऽयम् [ ] एते सर्वेऽप्यविधिबन्धा. । विधिबन्धस्तु मुद्रिकासस्थित ५ नौबन्धसस्थितश्च ६ । एतेषु बन्धेषु—अविधिमध्यादेकतरेणापि बन्धेन त्रयाणां पात्राणां मध्यात् एकमपि पात्र बन्धयेत् स आज्ञाभङ्गादिकं दोषं प्राप्नोतीति ॥ सू० ४५ ॥

## सूत्रम्–जे भिक्खू पायं एगेण बंधेण बंधइ, बंधंतं वा साइज्जइ ॥

छाया—यो भिक्षुः पात्रमेकेन बंधेन बध्नाति बध्नन्त वा स्वदते ॥ सू० ४६ ॥

चूर्णी–'जे भिक्खू' इत्यादि । 'जे भिक्खू' य' कश्चिद्भिक्षुः श्रमण', 'पायं' पात्रं तुम्बिकादिपात्रम् 'एगेण बंधेण बंधइ' एकेन बन्धेन बध्नाति । सामान्यतस्तावत्कथितम् यत् "अबन्धनं पात्रं तुम्बिकादिकं ग्रहीतव्यम्" पात्रस्यैकबन्धनमपि कुर्वतस्त एवाज्ञाभङ्गादिका दोषा भवन्तीति कथयितुमिदं सूत्रं प्रवृत्तम् । तच्चैवं प्रतिपादयति यत् कश्चिदेकबन्धनं पात्रे करोति स आज्ञाभङ्गादिकान् दोषान् प्राप्नोति, तथा 'बंधंतं वा साइज्जइ' बध्नन्त वा एकेन बन्धेन पात्रादिकं बध्नन्तं स्वदतेऽनुमोदते य' सोऽपि प्रायश्चित्तभाग्भवतीति ॥ सू० ४६ ॥

अत्राह भाष्यकार –

भाष्यम्—पायमेगेण बंधेण, बंधेज्जा भिक्खुओ जइ ।
विहिणाऽविहिणा वा से, आणाभंगाइ पावइ ॥

छाया—पात्रमेकेन बंधेन, बध्नीयाद्भिक्षुको यदि ।
विधिनाऽविधिना वा स आज्ञाभङ्गादि प्राप्नोति ।

अवचूरिः— 'पायमेगेण' इत्यादि । य कश्चित् श्रमणः एकेन एकावृतेन बन्धेन विधिना मुद्रिकासंस्थानेन नौबन्धनसंस्थानेन वा, अविधिना स्वस्तिकादिबंधनेन वा, पात्रमलाबूप्रमृतिकं बन्धयेत् पात्रस्य बन्धन कुर्यात् यदि, एवं कुर्वाण स आज्ञाभङ्गादिकान् दोषान् प्राप्नोति तस्माद्विधिना वा अविधिना वा पात्रस्यैकावृतेन बन्धनेन बन्धन न कुर्यादिति ॥ सू० ४६ ॥

## सूत्रम्–जे भिक्खू पायं परं तिण्हं बंधाणं बंधइ, बंधंतं वा साइज्जइ ॥

छाया—यो भिक्षुः पात्रं परं त्रयाणां बंधानां बध्नाति बध्नन्तं वा स्वदते । सू० ४७॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुर्निर्ग्रन्थः 'पायं' पात्रं तुम्बिकाप्रभृतिकम् । 'परं तिण्हं बंधाणं बंधइ' पर त्रयाणां बन्धानां बध्नाति त्रिरावृतबन्धनात्परं चतु-

र्थादिबन्धेन बध्नाति–बन्धनं करोति कारयति 'बंधंतं वा साइज्जइ' बध्नन्तं- बन्धनं कुर्वाणं स्वदते-ऽनुमोदते स प्रायश्चित्तभाग्भवति ॥ सू० ४७ ॥

अत्राह भाष्यकारः–

भाष्यम्–बंधत्तिगाइरित्तेण, पायं बंधइ जो जई ।
विहिणाऽविहिणा वावि, से पावइ य दूसणं ॥

छाया—बन्धत्रिकातिरिक्तेन, पात्रं बध्नाति यो यतिः ।
विधिनाऽविधिना वाऽपि, स प्राप्नोति च दूषणम् ॥

अवचूरिः–'बंधत्तिगा' इत्यादि । यः कैवल्यप्रापकज्ञानदर्शनचारित्रार्थं यतमानो यतिः बन्धत्रयातिरिक्तेन बन्धनत्रयादधिकेन चतुर्थबन्धनादिना पात्रमलाबूप्रभृतिकम् विधिना मुद्रिकादि-संस्थानेन, अविधिना स्वस्तिकादिसंस्थानेन बन्धनेन बध्नाति बन्धन करोति कारयति, स दूषण-माज्ञाभङ्गादिदोषजात प्राप्नोति तस्मात् कथमपि विधिनाऽविधिना वा चतुर्थेन बन्धनेन यतिः पात्रस्य बन्धन न कुर्यादिति ॥ सू० ४७ ॥

सूत्रम्–जे भिक्खू अइरेगबंधणं पायं दिवड्ढाओ मासाओ परेण धरइ धरंतं वा साइज्जइ ॥ सू० ४८ ॥

छाया—यो भिक्षुरतिरेकबन्धनं पात्रं द्व्यर्धात् मासात्परं धरति, धरन्तं वा स्वदते ॥ सू० ४८ ॥

चूर्णी–'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'अइरेगबंधण पायं' अतिरेकं त्रिबन्धनादधिकं बन्धनम्, तेन बद्धं पात्रम् 'दिवड्ढाओ मासाओ' द्व्यर्धात् मासात् एकं मासं परिपूर्णं द्वितीयमासस्यार्धो भागः पंचदशदिनानि, तस्मात् द्व्यर्धमासात् 'परेण' परेण परत. यदि द्व्यर्धमासादधिककालपर्यन्तं 'धरेइ' धरति धारयति । 'धरंतं वा साइज्जइ' धरन्त वा स्वद-तेऽनुमोदते स प्रायश्चित्ती भवति ॥ सू० ४८ ॥

अत्राह भाष्यकारः–

भाष्यम्–अवलक्खणबधणओ, होइ पमाओ असंजमो तत्तो ।
तेण य आणाभंगो, पडई तत्तो य संसारे ॥

छाया—अपलक्षणबन्धनतो भवति प्रमादः असंयमस्तस्मात् ।
तेन च आज्ञाभङ्गः, पतति तस्माच्च संसारे ॥

**अवचूरिः**–'**अवलक्खण०**' इत्यादि। अपलक्षणं यद्बन्धनं तस्मात् प्रमादो भवति, तस्मात् प्रमादात् असंयम', तेन च असंयमेन आज्ञाभङ्गः जिनाज्ञाविराधना, तस्माच्च आज्ञाभङ्गात् साधुः संसारे पतति तस्य पुन' पुन ससारपातो भवति। तस्मादविधिबन्धनस्य सार्धमासात्परतो धर्त्ता–धारयिता, धारयतोऽनुमोदयिता च प्रायश्चित्तभाग् भवतीति विमर्शः ॥ सू० ४८ ॥

एकबन्धनबद्धपात्रधारणे भिक्षुः क कं दोषं प्राप्नोतीत्याह भाष्यकार.–

**भाष्यम्**–**आणाभंगाइयं दोसं, मिच्छत्तं च विराहणं।**
**पावइ जम्हा य तम्हा, भिक्खू णेव धरेज्ज तं॥**

**छाया**—**आज्ञाभङ्गादिकं दोषं, मिथ्यात्वं च विराधनम्।**
**प्राप्नोति यस्माच्च तस्माद्, भिक्षुर्नैव धरेत् तम्॥**

**अवचूरिः**—'**आणाभंगाइयं**' इत्यादि। यस्मात्कारणात् एक–द्विक–त्रिकातिरेकबन्धन-विशिष्टपात्रं धारयतस्तीर्थकाराणामाज्ञाभङ्गादिका दोषा भवन्ति, तथा अनवस्था, एकेन यदि धारितं तदाऽन्योऽपि तद्धारयिष्यति, तदन्योऽपि धारयिष्यति, एवं तदन्योऽपि, इत्थ क्रमेणाऽनवस्था-दोष समापतति। तेन मिथ्यात्वमपि प्राप्नोति, तीर्थकराणामाज्ञाभङ्गे मिथ्यात्वप्राप्तेः। तथा विरा-धनम् आत्मविराधन संयमविराधन च प्राप्नोति। तस्मात्कारणात् साधुरेकबन्धनाविधिबन्धनाति-रेकबन्धनविशिष्टं पात्र न धारयेदिति सिद्धान्त ॥ सू० ४८ ॥

अथ भाष्यकारोऽलक्षणपात्राणि प्रदर्शयति–'**हुंडं**' इत्यादि।

**भाष्यम्**–**हुंडं १ सबल २ वायाइद्धं ३ दुपुयं ४ च खीलसंठाणं ५।**
**पउमुप्पलं ६ च सवण्णं ७ अलक्खणं दड्ढ ८ दुव्वण्णं ९॥**

**छाया**—**हुंडं १ शबल २ वाताविद्ध ३ दुष्पुत ४ च कीलसंस्थानम् ५।**
**पद्मोत्पलं ६ च सवर्णं ७, अलक्षण दग्ध ८ दुर्वर्णम् ९।**

**अवचूरिः**— **हुंडं**' यत् पात्रं समचतुरस्रं न भवति तत् हुण्डम् अलक्षणम् १, शबलं तत् यस्य कृष्णादिरूपाणि, विचित्ररूपोपपन्नम् इत्यर्थ' २ वाताविद्धं नाम-वातेन आविद्धं क्षिप्तम् उपचारात् स्फुटितमित्यर्थ ३, दुष्पुतं नाम–दुष्टाधोभागं यत् स्थापितमूर्ध्वमेव तिष्ठति–चालितं सत् पुन प्रत्यावर्त्तते तत् तादृशं दुष्पुतम ४ इति। कीलसंस्थानम्–यत् स्थापयत् सन्न तिष्ठति तत्कीलसंस्थानम् ५, पद्मोत्पलम्–यस्य पात्रस्याऽधोनाभि' पद्माकृतिः, उत्पलाकृतिः नालाभा वा तत्पद्मोत्पलम् ६, सवर्णम् कण्टकादिक्षतक्षतं यत्पात्रं तत् ७, तथा–दग्धम्–अग्निना प्रज्वलितम् ८, दुर्वर्णम्–पञ्चवर्णोपेतमनिष्टवर्णं वा ९। अथवा–प्रवालाङ्कुरसदृशं–

सुवर्णम् अन्यद्दुर्वर्णम्—अनिष्टमित्यर्थः । एतल्लक्षणयुक्तं पात्रमलक्षणं कथ्यते इति । तत्र कस्मिन् अलक्षणे सति तद्धारयितुः किमाकारको दोष आपद्येत ? तत्रोच्यते—हुंडनामकेऽलक्षणे चारित्र-भेदः १, शबलनामकेऽलक्षणे चित्तविभ्रमः २, वाताविद्धनामकेऽलक्षणे साधोरुन्मादो भवति ३, दुष्पुत—कीलसंस्थाननामकेऽलक्षणके गणे—चारित्रे च स्थानं न लभते ४।५। पद्मोत्पलनामकाल-क्षणे—अकुशलं शरीरपीडा भवति ६, सवर्णापलक्षणे उपकरणस्य ज्ञान—दर्शन—चारित्रस्य च विरा-धना भवति ७, दग्धे अन्तर्बहिर्वा मरणं भवति ८ । दुर्वर्णनामकाऽलक्षणविशिष्टपात्रधारणे ज्ञानस्यागमो न भवति ९, तस्मात्—अलक्षणयुक्तं पात्रं न धारयेत् । कीदृशं पात्रं केन वा क्रमेण कियन्तं वा कालं मार्गयितव्यम् ? तत्रोच्यते—प्रथम तावत् चतुरो मासान् पर्यन्तं यथाकृतं नाम पात्रं केवलकाष्ठनिर्मितं, पूर्वकृतमुखं वाऽलाबूपात्रं मार्गयितव्य किन्तु न परिकर्मितमिति । यदि चतुर्मासं यावदन्वेषणे कृतेऽपि तादृशं यथाकृतं पात्रं न लब्धं भवति, तदा—तदनन्तर मासद्वयं यावत् अल्पपरिकर्मितमेव पात्रं मार्गयितव्यम् । यद्येतावता कालेनाऽपि तादृशमल्पपरिकर्मितं पात्रं लब्धं न भवेत्, तदा—द्व्यर्धमासं यावत् बहुपरिकर्मितमपि पात्र मार्गयेत्, यस्मात्—तदनन्तर वर्षाकालः प्राप्तो भवति, वर्षाकाले च परिकर्म न भवति । यदि यादृशमागमे कथितं सलक्षणं पात्रम् तादृशं पात्रं न लभेत, तदा तावद् यदेव प्राप्तं तदेव पात्रमनुकर्षयितव्यमिति संक्षेपः ॥ सू०४८॥

इतः पूर्वसूत्रेषु—एक-द्विकादिथिग्गलं बन्धन वा दर्शितम्, अधुना—प्रकृतसूत्रे वस्त्रे थिग्गलयोजनाप्रकारमाह—'जे भिक्खू' इत्यादि ।

## सूत्रम्—जे भिक्खू वत्थस्स एगं पडियाणियं देइ, देयंतं वा साइ-ज्जइ ॥ सू० ४९॥

छाया—यो भिक्षुर्वस्त्रस्य एकं प्रत्यनीकं ददाति ददतं वा स्वदते ॥ सू० ४९॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'वत्थस्स' वस्त्रस्य, तत्र—वासयति—आच्छादयति रक्षति शीतोष्णादिभ्यः शरीरमिति वस्त्रम्—प्रावरणक-चोलपट्टादिकम्, तस्य वस्त्रस्य, 'एगं पडियाणियं' एकं प्रत्यनीकम् अन्यजातीयवस्त्रसंभवं थिग्गलकम् कारणं विना तज्जातीयमेकं थिग्गलम्—अन्यजातीयवस्त्रस्य वा थिग्गल ददाति, दापयति 'देयंतं वा साइज्जइ' ददतं वा स्वदतेऽनुमोदते, स आज्ञाभङ्गादिकमात्मविराधन संयमविराधनं च प्राप्नोति, अतः प्रायश्चित्तभाग् भवति ॥ सू० ४९॥

संप्रति सूत्रप्रतिपादिते वस्त्रे कतिप्रकारकं भवतीति जिज्ञासायामाह भाष्यकारः—'वत्थं पंचविहं' इत्यादि ।

भाष्यम्—वत्थं पंचविहं वुत्तं, जंगमाइपभेयगं ।
जहासत्थं च तब्भेओ, णायव्वो हियबुद्धिहिं ॥

छाया—वस्त्रं पञ्चविधमुक्तं जंगमादिप्रभेदकम् ।
यथाशास्त्रं च तद्भेदो ज्ञातव्यो हितबुद्धिभिः ॥

अवचूरिः—वस्त्रं पञ्चविधं पञ्चप्रकारकं भवति, जंगमादिभेदात्, पंच प्रकाराः वस्त्रस्य भवन्ति—जंगिए, भंगिए, साणए, पत्तिए, तिरीडपट्टए" जङ्गमम् १, भङ्गिकम् २ शाणकम् ३ पत्रकम् ४ तिरीडपट्टकम् ५, तत्र—जङ्गमम्—अजमेषलोमनिर्मितं कम्बलादि, उपलक्षणात्कार्पासिकम् १, भङ्गिकम्—अतसीनिर्मितं कृमिजं वा २, शाणकम्—शणसूत्रमयम् ३, पत्रकम्—तालपत्रनिर्मितम् ४, तिरीडपट्टकम्—तिरीडवृक्षत्वग्भिर्निर्मितम् ५ । एतेषु पञ्चविधेषु वस्त्रेषु—उत्सर्गमार्गेण वस्त्रद्वयं कल्पते, ऊर्णामयं, कार्पासिकं च, तत्र एकमूर्णामयं, प्रावरणद्वय कार्पासिकं च । अपवादमार्गेण द्विविधवस्त्रयोरलाभेऽन्यदपि वस्त्रं कल्पते । इत्थं सुबुद्धिभिर्यथाशास्त्र भेदो ज्ञातव्यः ॥ सू० ४९॥

अथापवादमाह—'जे भिक्खू' इत्यादि ।

## सूत्रम्—जे भिक्खू वत्थस्स परं तिण्हं पडियाणियं देइ देयंतं वा साइज्जइ ॥ सू० ५०॥

छाया—यो भिक्षुर्वस्त्रस्य परं त्रयाणां प्रत्यनीकं ददाति ददतं वा स्वदते ॥सू०५०॥

चूर्णी—'जे भिक्खू' यो भिक्षुः 'वत्थस्स' वस्त्रस्य प्रावरणचोलपट्टकादिरूपस्य 'परं तिण्हं' पर त्रयाणाम्, त्रयाणां थिग्गलाना परतश्चतुर्थादिकम्, प्रत्यनीकं अन्यजातीयवस्त्रथिग्गलम्, 'देइ' ददाति दापयति, 'देयंतं वा साइज्जइ' ददतं वा स्वदतेऽनुमोदतेस प्रायश्चित्तभाग् भवतीति ॥ सू० ५०॥

अत्राह भाष्यकार—'कारणे' इत्यादि ।

भाष्यम्—कारणे थिग्गलं सत्थे, तियमेयमुदाहियं ।
तओ य परतो देइ, आणाभंगाइया मया ॥

छाया—कारणे थिग्गलं शास्त्रे त्रयमेतदुदाहृतम् ।
ततश्च परतो ददाति आज्ञाभंगादिका मताः ॥

अवचूरिः—कारणे—कारणविशेषे सति, यावत्—एकं—द्विकं त्रयं वा थिग्गलं वस्त्रोपरि देयम्, एतत् शास्त्रे एवोदाहृतम्—कथितम् । कारणे सति यावत् थिग्गलत्रयं तावदेयम्, ततश्च परतो ददत ततः परं त्रिथिग्गलात्परं चतुर्थादि थिग्गलं वस्त्रोपरि ददतः श्रमणस्य-आज्ञाभगादिका दोषा मता भवेयुरित्यर्थः ॥ सू० ५०॥

अथास्य प्रकृतसूत्रस्य पञ्चाशता सूत्रेण सह कः संबन्धः ? इति चेत् अत्रोच्यते—पूर्वपूर्वतरसूत्रेषु थिग्गलसंयोजनं कथितम् । तत् थिग्गलं सीवनमन्तरेण न संभवति इति थिग्गलसीवनं स्मारयति, तत्सीवनं केन विधिना भवतीति सीवनविधिप्रदर्शनार्थमेतत्सूत्रमाह—'जे भिक्खू' इत्यादि ।

## सूत्रम्—जे भिक्खू अविहीए वत्थं सिव्वइ सिव्वंतं वा साइज्जइ ।५१।

**छाया—यो भिक्षुरविधिना वस्त्रं सीव्यति सीव्यन्त वा स्वदते ।।सू० ५१।।**

**चूर्णी—'जे भिक्खू'** यो भिक्षुः, **'अविहीए'** अविधिना-विधिमुल्लङ्घ्य, **'वत्थंसिव्वइ'** वस्त्रं प्रावरणचोलपट्टादिकं सीव्यति सीवनं करोति, कारयति **'सिव्वंतं वा साइज्जइ'** सीव्यन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति । अयं भावः—यथा गृहस्थः शोभार्थं वस्त्रादौ जालिकां करोति तथा यदि साधुः कुर्यात्, यद्वा कुर्वन्तमनुमोदयेत् तदा तादृशवस्त्रस्य प्रतिलेखनादिकं कर्त्तुं न शक्यति, अतोऽविधिपूर्वकं तत् सीवनम्—इति, तथाकरणे कर्त्तुः कारयितुः कुर्वन्तमनुमोदयितुर्भवत्येव प्रायश्चित्तम् ।

अयं भावः—सीवनं पञ्चप्रकारकम्—गगगरकसीवनम् १ दण्डिसीवनम् २ जालिकासीवनम् ३ एकसरासीवनम् ४ दुष्कीलकसीवनम् च ५ भवति । तत्र—गगगरसीवनं दण्डिसीवनं च यथा गृहस्थानां 'कुर्त्ता-कोट, कोथल-कोथला-कोथली' इत्यादिभाषाप्रसिद्धानां सीवनम् १–२, जालिकासीवनं प्रसिद्धं वस्त्रेषु जालिकादिकरणेन विच्छित्तिसम्पादनम् ३ । एकसरासीवनं लोकप्रसिद्धं 'कसीदा' 'भरत' इत्यादिनाम्ना ४ । दुष्कीलकसीवन यथा तथा सीव्यते, यथा-उभयतो वस्त्रस्य कीलकमिव डोरकं भवति ५ । एतत्सर्वं सीवनमविधिरूपम्, यत एतेषु प्रत्युपेक्षणादिकं सम्यक् न सभवति अतो नैतत्कर्त्तव्यम् । विधिसीवनं गोमूत्रिकाकारसीवनं स्वसमयप्रसिद्धमिति दिक् ।। सू० ५० ।।

## सूत्रम्—जे भिक्खू वत्थस्स एगं फलियं गंठियं करेइ करेंतं वा साइज्जइ ।। सू० ५२ ।।

**छाया—यो भिक्षुर्वस्त्रस्यैकां फलिकां ग्रथितां करोति कुर्वन्तं वा स्वदते ।।सू० ५२।।**

**चूर्णी—'जे भिक्खू'** इत्यादि । **'जे भिक्खू'** यो भिक्षुः **'वत्थस्स'** वस्त्रस्य, **'एगं फलियं गंठियं करेइ'** एकां फलिकां—वस्त्रान्तस्थिततन्तुजालरूपां ग्रथितां करोति वस्त्रान्तस्थिततन्तुजालं फलिकारूपेण ग्रथ्नातीत्यर्थः, **'करेंतं वा साइज्जइ'** कुर्वन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति । शेषं प्राग्वत् ।। सू० ५२ ।।

सूत्रम्—जे भिक्खू वत्थस्स परं तिण्हं फलियगंठियाणं करेइ करेंतं वा साइज्जइ ॥ सू० ५३ ॥

छाया—यो भिक्षुर्वस्त्रस्य परं त्रयाणां फलिकाग्रन्थिकानां करोति कुर्वन्तं वा स्वदते ॥ सू० ५३॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'वत्थस्स' वस्त्रस्य-प्रावरणवस्त्रादेः, 'परं तिण्हं' पर त्रयाणाम् 'फलियगंठियाणं' फलिकाग्रन्थिकानां 'करेइ' करोति स्वयं संपादयति, कारयति 'करेंतं वा साइज्जइ' कुर्वन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागिति प्राग्वत् । अतः फलिकात्रयादधिक फलिकाग्रन्थनं न विधेयम् ॥ सू० ५३ ॥

सूत्रम्—जे भिक्खू वत्थस्स एगं विफलियं गंठियं देइ देयंतं वा साइज्जइ ॥ सू० ५४ ॥

छाया—यो भिक्षु वस्त्रस्यैकां विफलिकां ग्रन्थिकां ददाति ददतं वा स्वदते ॥सू०५४॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'वत्थस्स' वस्त्रस्य 'एगं विफलियं गंठियं' एका विफलिकाम्-फलिकारहितां ग्रन्थिका 'देइ' ददाति-वस्त्रान्तभागेन सह ग्रन्थिकां युनक्ति दापयति, योजयति अन्यद्वारा, 'देयंत वा साइज्जइ' ददतं वा स्वदतेऽनुमोदते तस्याज्ञाभङ्गाऽनवस्थामिथ्यात्वसयमविराधनादयो दोषा भवन्तीति सुगमम् ॥ सू० ५४ ॥

सूत्रम्—जे भिक्खू वत्थस्स परं तिण्हं विफलियगंठियाणं देइ देयंतं वा साइज्जइ ॥ सू० ५५ ॥

छाया—यो भिक्षुर्वस्त्रस्य परं त्रयाणां विफलिकग्रन्थिकानां ददाति ददतं वा स्वदते ॥ सू० ५५ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'वत्थस्स' वस्त्रस्य 'परं तिण्हं' परं त्रयाणाम्-त्रयाणा परमधिकम् 'विफालियगंठियाणं देइ' विफलिकग्रन्थिकानां ददाति दापयति, 'देयंतं वा साइज्जइ' ददतं वा स्वदतेऽनुमोदते स आज्ञाभङ्गदोषात्प्रायश्चित्तभागिति सूत्रार्थः ॥ सू० ५५ ॥

सूत्रम्—जे भिक्खू वत्थं अविहीए गंठइ गंठंतं वा साइज्जइ ॥ ५६ ॥

छाया—यो भिक्षुर्वस्त्रमविधिना ग्रथ्नाति ग्रथ्नन्तं वा स्वदते ॥ सू० ५६ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'वत्थं' वस्त्रं-चोलपट्टादिकम् 'अविहीए' अविधिना-विधिमुल्लङ्घ्य 'गंठइ' ग्रथ्नाति अविधिपूर्वकं ग्रन्थिं ददाति-दापयति,

'गंठेंतं वा साइज्जइ' ग्रथ्नन्तं वा स्वदतेऽनुमोदते स आज्ञाभङ्गादिदोषान्प्राप्नुवन् प्रायश्चित्त-भाग्भवति ॥ सू० ५६॥

**सूत्रम्—जे भिक्खू वत्थं अतज्जाएणं गंठेइ गंठेंतं वा साइज्जइ ॥ ५७ ॥**

छाया—यो भिक्षुर्वस्त्रमतज्जातेन ग्रथ्नाति ग्रथ्नन्तं वा स्वदते ॥ सू० ५७ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'वत्थं' वस्त्रं चोलपट्टादिकम्, स्फाटितं संघातुम् 'अतज्जाएणं' अतज्जातेन, जातिमतिक्रम्य यद् भवति तद् अतज्जातम् अन्य-जातीयम् तेन विभिन्नजातिकेन दवरकेण 'गंठेइ' ग्रथ्नाति–सीवनादिकं करोति, कारयति 'गंठेंतं वा साइज्जइ' ग्रथ्नन्तं वा स्वदतेऽनुमोदते स आज्ञाभङ्गादिदोषान् प्राप्नुवन् प्रायश्चित्त-भागिति पूर्ववत् ॥ सू० ५७ ॥

**सूत्रम्—जे भिक्खू अइरेगगहियं वत्थं परं दिवड्ढाओ मासाओ धरेइ धरेंतं वा साइज्जइ ॥ सू० ५८ ॥**

छाया—यो भिक्षुः अतिरेकगृहीतं वस्त्रं परं द्व्यर्धात् मासात् धरति धरन्तं वा स्वदते ॥ सू० ५८ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'अइरेगगहियं वत्थं' अतिरेकगृहीतं वस्त्रम् श्रमणाना यादृशी वस्त्रग्रहणव्यवस्था, यादृशी वा संख्या, ततोऽधिकवस्त्रस्य कोऽपि ग्रहण करोति । प्रमाणव्यवस्थातोऽधिकं यद् गृहीतं वस्त्र तत् यदि 'परं दिवड्ढाओ मासाओ धरेइ' परमधिकं द्व्यर्धमासात्–अर्धाधिकैकमासात्, सार्धैकमासात् परमधिकं कालमपि धरति, स्वसमीपे स्थापयति 'धरेंतं वा साइज्जइ' धरन्तं वा स्वदतेऽनुमोदते स आज्ञाभङ्गादिदोष-धारी प्रायश्चित्तभाग्भवति ॥ सू० ५८ ॥

अत्राह भाष्यकारः—'अवलक्खणाइ०' इत्यादि ।

भाष्यम्—अवलक्खणाइजुत्तं–दुग–तिग–अइरेग–गंठियं वत्थं, ।
धरइ य दिवड्ढमासा, अहियं जो दोसभाई सो ॥

छाया—अपलक्षणादियुक्तं–द्विक–त्रिकाऽतिरेकग्रथितं वस्त्रम् ।
धरति च द्व्यर्धमासाद् अधिकं स दोषभागी सः ॥

अवचूरिः—यो भिक्षुः अपलक्षणादियुक्तम्–त्रिकोणाद्यलक्षणयुक्तम् । आदिशब्दात्तथाविधा-न्यापलक्षणयुक्तं वा यथा एकग्रन्थियुक्तं, ग्रन्थिद्वययुक्तं, ग्रन्थित्रययुक्तं तदधिकग्रन्थियुक्तं वा, यत्समा-

नाऽसमानजातीयकं चोलपट्टादिकं वस्त्रं सार्धमासादधिकं सार्धैकमासादधिककालपर्यन्तं धरति-धारयति, यद्वा-धरन्तमनुमोदते स श्रमणः तीर्थकृतामाज्ञाभङ्गादिदोषभागी भवतीति । तथा-अनवस्थादोषम्-आत्मसंयमविराधनादोषं च प्राप्नोति, अतः सलक्षणादिवस्त्रस्य मार्गणं कर्त्तव्यम् ।

तत्राऽपलक्षणोपधेर्धारणे-यस्मात्-ज्ञानदर्शनचारित्राणां विनाशो भवति, तस्मात्-अलक्षणयुतं वस्त्रं न धारयितव्यम्, किन्तु-सविधिवस्त्रस्य मार्गणा कर्त्तव्या । तत्र यथाकृतवस्त्रग्रहणे मासचतुष्टयं यावत्-अन्वेषणं कर्त्तव्यम् १, अन्यपरिकर्मितग्रहणे मासद्वयं यावत् मार्गणं कर्त्तव्यम्-२, ततः परं सार्धमासपर्यन्तं सपरिकर्मितं वस्त्रं मार्गयेत् ३, एवंप्रकारेण कृतेऽपि मार्गणे सलक्षणादिकमन्यदोषरहितं वस्त्र यदि न मिलेत्, तदा तावत्पर्यन्त मार्गणं कर्त्तव्यम् यावत्पर्यन्तमन्यत्सलक्षणं सर्वदोषरहित वस्त्र न मिलेत् ॥ सू० ५८॥

**सूत्रम्—जे भिक्खू गिहधूमं अण्णउत्थिएण वा गारत्थिएण वा परिसाडावेइ परिसाडावेंतं वा साइज्जइ ॥ सू० ५९ ॥**

छाया—यो भिक्षुः गृहधूमं अन्ययूथिकेन वा, गृहस्थेन वा परिशाटयति परिशाटयन्तं वा स्वदते ॥ सू० ५९॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः 'गिहधूमं' गृहधूमम् गृह वसतिर्यत्र साधवस्तिष्ठन्ति, तस्मिन् गृहे वसतौ धूमं रोगाद्युपशामकगुग्गुलादिज्वालना-ज्जायमानम् 'अण्णउत्थिएण वा' अन्ययूथिकेन वा परतीर्थिकेन वा, 'गारत्थिएण वा' गृहस्थेन वा-येन केनचित् वा परिसाडावेइ' परिशाटयति-गृहादिकं पिधाय तदन्तर्धूमं निरुध्य प्रसारयति, सर्वतो विस्तारयति 'परिसाडावेंतं वा साइज्जइ' परिशाटयन्तं-इतस्ततो धूपयन्तं वा स्वदतेऽनुमोदते स प्राग्वत् प्रायश्चित्तभाग्भवति ॥ सू० ५९॥

**सूत्रम्-जे भिक्खू पूइकम्मं भुंजइ भुंजंतं वा साइज्जइ, तं सेवमाणे आवज्जइ मासियं परिहारट्ठाणं अणुग्घाइयं ॥ सू० ६० ॥**

॥ णिसीहज्झयणे पढमो उद्देसो समत्तो ॥१॥

छाया—यो भिक्षुः पूतिकर्म भुङ्क्ते भुञ्जन्तं वा स्वदते, तं सेवमान आपद्यते मासिकं परिहारस्थानमनुद्घातिकम् ॥सू० ६० ॥

॥ निशीथाध्ययने प्रथम उद्देशः समाप्तः ॥१॥

**चूर्णी**—**'जे भिक्खू'** इत्यादि । **'जे भिक्खू'** यो भिक्षुः **'पूइकम्मं भुंजइ'** पूतिकर्म भुङ्क्ते, तत्र–विवर्णं विनष्टं कुथितमन्नजातं पूतिकं कथ्यते, स्वसमये पुनर्विशुद्धमप्याहारादिक-माधाकर्मिकादिकणमात्रेण मिश्रितं तत्पूतिकमिति कथ्यते, एतादृशमाहारं भुङ्क्ते **'भुंजंतं वा साइज्जइ'** भुञ्जन्तं पूतिकाद्याहारस्योपभोगं कुर्वन्तं स्वदतेऽनुमोदते । **'तं सेवमाणे आवज्जइ'** तत्–हस्तकर्माद्यारभ्य पूतिकर्मान्तमविधिमार्गं सेवमान आपद्यते–प्राप्नोति **'मासियं परिहार-ट्ठाणं अणुग्घाइयं'** मासिकं परिहारस्थानमनुद्घातिकम् । अनुद्घातिकं मासिकं प्रायश्चित्तं भवतीति सर्वत्र विज्ञेयम् ॥ सू० ६०॥

हस्तकर्मादारभ्य पूतिकर्मान्ताऽविधिमार्गस्य परिसेवनं कुर्वतः श्रमणादेः प्रायश्चित्तम् , तत्र किमिदं पूतिकर्म ? कतिविधं च ? तत्राह भाष्यकारः—**'पूइकम्मं'** इत्यादि ।

**भाष्यम्**—पूइकम्मं दुहा वुत्तं, दव्वे भावे य धीमया ।
दव्वे सुन्दरदिट्ठंतो, भावे सुहुमं च बायरं ॥

छाया—पूतिकर्म द्विधा प्रोक्तं द्रव्ये भावे च धीमता ।
द्रव्ये सुन्दरदृष्टान्तो भावे सूक्ष्मं च बादरम् ॥

**अवचूरिः**—तत्र–**'पूति'** इति कुथितमिति कथ्यते, कर्म–इत्याधाकर्मिकमिति । तच्चा-ऽऽधाकर्मिकं–साध्वर्थं षट्कायोपमर्दनपूर्वकं निर्मितमाहारादिकम् । आधाकर्मिकस्य निषिद्धत्वात् यद्यपि शुद्ध आहार तत्राऽऽधाकर्मादिदोषयुक्ताहारस्य सिक्थमपि–कणमपि यदि मिलति तदाऽसौ पूतिकर्माहार इत्युच्यते, तदाहारकरणे प्रायश्चित्तम् । तद् द्विप्रकारकं भवति, तदेव दर्शयति भाष्यकारः–**'पूइकम्मं'** इयादिना ।

विदितशास्त्रहृदयैः पूर्वाचार्यैः पूतिकर्म द्विधा–द्विप्रकारक कथितम् , तद्यथा–द्रव्ये भावे च, तत्र द्रव्ये सुन्दरदृष्टान्तो निदर्शनम् । तथाहि—

अस्ति कश्चिद्गाथापतिः, तेन गृहकार्यकरणाय सुन्दरो नामकः सेवकः स्वगृहे स्थापितः । एकदा कदाचित्काचित् पुण्यतिथिः प्राप्ता । तदवसरे गाथापतिना प्राङ्गणोपलेपनाय सुन्दरः सेवको नियोजितः । स च सुन्दरो गोमयमानीतवान् परन्तु गोमयेन साकं पुरीषमपि–आनीय प्राङ्गणस्योपलेपनादिकं कृतवान् । यदा तु गाथापतिः समागतः तदा दुरभिगन्धयुक्तद्रव्येण लिप्तं प्राङ्गणमिति मत्वा भृत्यं भर्त्सितवान् । तथा च–यथा दृष्टान्तेऽपवित्रदुर्गन्धिमनुष्यपुरीषेण संसृष्टं गोमयमपि दुर्गन्धकारणम् । एवमेव–दार्ष्टान्तिकेऽशुद्धाहारसंसृष्टः शुद्धाहारोऽपि दोषाय एवेति ।

भावपूतिकं च द्विप्रकारकं भवति सूक्ष्मं–बादरं च। तत्र–इन्धनं दारुकम्, तस्य धूमः–इन्धनधूमः, स चाऽऽधाकर्मिके भोजने रध्यमाने लोकानां घ्राणप्रदेशं स्पृशति तेन छिक्का जायते, ततः सर्वं पूतिकं भवति। गन्धपुद्गलैर्वा छिक्का भवति ततः सर्वं पूतिकं भवति। अथवा–धूमगन्धवर्जितैः सूक्ष्मावयवैश्छिक्का, ततः सर्वं पूतिकं भवतीत्येतत् सूक्ष्मं पूतिकम्।

बादरं त्रिप्रकारं भवति आहारे, उपधौ, शय्यायां च। तत्राहारपूतिकं चतुर्विधम् अशनादिभेदात्। आधाकर्मिकाद्याहारकणेनापि संसृष्टमाहारजातमाहारपूतिकम् १। उपधिपूतिकं द्विप्रकारकम्–वस्त्रे पात्रे च। तत्र–वस्त्रं जांगिकादिपञ्चप्रकारकभेदात् पञ्चविधम्। पात्रम्–अलाबू-दारु-मृत्तिकाभेदात् त्रिविधं ग्राह्यम्। धातुनिर्मितं सम्प्रतिकालप्रसिद्धं सेलोलाइटादिनिर्मितं सर्वमग्राह्यम्। ततश्च पात्रपूतिकमपि त्रिविधम्। तत्र वस्त्रे–आधाकर्मकृतेन सूत्रेण सीव्यति, थिग्गलं वा ददाति। पात्रेऽपि–आधाकर्मकृतेन सूत्रेण सीव्यति–संयोजयति थिग्गलं वा ददाति। वसतिपूतिकम्–शुद्धवसतौ आधाकर्मिकवंशकाष्ठप्रस्तरादिसंमेलनम्। यथा–वसतिनिर्माणे षट् काष्ठादीनि प्राशुकानि सप्तमं किमपि वास्तुद्रव्यं चाऽऽधाकर्मिकं संयोजितं भवेत्तद् वसतिपूतिकं कथ्यते। विशेषतो यथाशास्त्रं ज्ञातव्यम् ॥ सू० ६०॥

इति श्री–विश्वविख्यात–जगद्वल्लभ–प्रसिद्धवाचक–पञ्चदशभाषाकलितललितकलापालापक–
प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक–वादिमानमर्दक-श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-
"जैनशास्त्राचार्य"–पदभूषित–कोल्हापुरराजगुरु–बालब्रह्मचारि–जैनाचार्य–जैन-
धर्म-दिवाकर-पूज्यश्री–घासीलालव्रति–विरचितायां "निशीथसूत्रस्य"
चूर्णिभाष्यावचूरिरूपायां व्याख्यायां प्रथम उद्देशकः समाप्तः ॥१॥



## ॥ द्वितीयोद्देशकः ॥

कथितः प्रथमोद्देशकः, इदानीमवसरप्राप्तो द्वितीयोद्देशकः प्रारभ्यते, अस्य प्रथमोद्देशकेन सह कः सम्बन्धः ? इत्यत्राह भाष्यकारः—

**भाष्य—पढमे गुरुमासं च, पायच्छित्तं पकित्तियं ।**
**बीए उ लहुमासं च, पायच्छित्तं कहिस्सए ॥**

**छाया—गुरुमासिकं च प्रथमे, प्रायश्चित्तं प्रकीर्तितम् ।**
**द्वितीये तु लघुमासं च प्रायश्चित्तं कथयिष्यते ॥**

**अवचूरिः**—'**पढमे**' इत्यादि । तत्र प्रथमे–प्रथमोद्देशके हस्तकर्मादारभ्य पूतिकर्माहार-पर्यन्तेषु दोषेषु '**गुरुमासं**' गुरुमासिक प्रायश्चित्तं कथितम् । द्वितीये–द्वितीयोद्देशके तु '**लहु-मासं**' लघुमासिकं प्रायश्चित्तं कथयिष्यते । यद्वा–गुरु- इति पदं सापेक्षम् तच्च–लघुकम-पेक्षतेऽतोऽत्रोद्देशके लघुप्रायश्चित्तं कथयिष्यते । अयमेव संबंधः पूर्वापरोद्देशकीयसूत्राणाम् । अथवा–प्रथमोद्देशकचरमसूत्रस्थभाष्ये उपकरणपूतिकं कथितम्, इह च द्वितीयोद्देशकस्य प्रथमसूत्रे तदेवोपकरणं किम् ? इति कथयिष्यते, अयमेव संबन्धः पूर्वापरसूत्रयोः । अथवा–प्रथमोद्देशक-स्यादिसूत्रे हस्तकर्मादिव्यवहारो निषिद्ध, अत्रापि दारुदण्डक–पादप्रोञ्छनकरणं हस्तव्यवहार एवेति तन्निषेधः कथयिष्यते, अयमेव संबधः पूर्वापरसूत्रयोर्भवति । अनेन संबन्धेनायातस्य द्वितीयोद्देशकीयप्रथमसूत्रस्य व्याख्यानं प्रस्तूयते—'**जे भिक्खू**' इत्यादि ।

## सूत्रम्–जे भिक्खू दारुदंडयं पायपुंछणयं करेइ करेंतं वा साइज्जइ १

**छाया—यो भिक्षुर्दारुदण्डकं पादप्रोञ्छनकं करोति कुर्वन्तं वा स्वदते ॥ सू० १॥**

**चूर्णी**—'**जे भिक्खु**' इत्यादि । 'जे भिक्खू' यः कश्चित् निरवद्यभिक्षणशीलो भिक्षु, अष्टविधकर्मणां क्षपणाय सर्वदा यतनावान् वा भिक्षु '**दारुदंडयं पायपुंछणयं करेइ**' दारुदण्डकं पादप्रोञ्छनकं करोति, तत्र दारु–काष्ठम्, तन्मयो दडो यस्य तद्दारुदण्डकम्-तादृश काष्ठदण्डमात्रयुक्तं निषद्याभिधवस्त्रवर्जितम्, एवंभूतं पादप्रोञ्छनकम्, अत्र 'पादप्रोञ्छन'–शब्देन रजोहरणं गृह्यते, एवंरूपं निषद्यावस्त्रविवर्जितं रजोहरण करोति कारयति '**करेंतं वा साइज्जइ**' कुर्वन्तं वा स्वदते–अनुमोदते तस्य मासलघुकं प्रायश्चित्तं भवति, अतो रजोहरणदण्ड वस्त्रविवर्जितं स्वयं न कुर्यान्न वा कारयेत् तथा–कुर्वन्तमन्यं वा नाऽनुमोदेत, इति ॥ सू० १ ॥

**भाष्यम्—दुविहं रयहरणं, उण्णियं च तहेयरं ।**
**उस्सग्गे पढमं गेज्झं, अपवाए य अण्णयं ॥**

छाया—द्विविधं रजोहरणं, औणिकं च तदितरत् ।
उत्सर्गे प्रथमं ग्राह्यं, अपवादे च अन्यत् ॥

अवचूरिः—'दुविहं' इत्यादि । रजोहरणं द्विविधम्—औणिकं तथा इतरत्—तद्भिन्नं च । तत्रोत्सर्गमार्गे औणिकं ग्रहीतव्यम् । अपवादे-ऊर्णामयस्याऽलाभे तु-अन्यत् भाङ्गिकादिकमपि रजोहरणं ग्रहीतव्यम् । रजोहरणं पञ्चविधं भवति—जाङ्गमिकं १, भाङ्गिकं २, शाणक ३, पोतकं ४, तिरीटपट्टकम् ५ । तत्र जाङ्गमिक—जङ्गमप्राणिकेशविनिर्मितं, यथा औणिकम् औष्ट्रिकमित्यादि १ । भाङ्गिकं 'पाट' इति लोकप्रसिद्धं यस्य तन्तुभिः कोत्थलकं निर्मीयते तन्निर्मितम् २ । शाणकं शणसूत्रनिर्मितम् ३ । पोतकम्—पोतो वस्त्रं, तन्निर्मितं कार्पाससूत्रनिर्मितमित्यर्थः ४, तिरीटपट्टकम्—तिरीट इति वृक्षविशेषः, तस्य त्वचाविनिर्मिततन्तुसम्पादितम् ५ । पुनरपि रजोहरणं त्रिविधम्—औत्सर्गिकम् १, आपवादिकम् २, तदुभयात्मकम् ३ । तत्र औत्सर्गिकं सर्वात्मना औणिकम्, आपवादिकम्—भाङ्गिकादिकं चतुर्भेदकम् । तदुभयात्मकम्—ऊर्णादिमिश्रितम् । एषां मध्यात्पूर्वपूर्वाभावे परात्परं रजोहरणं ग्राह्यम् । प्रतिमाधारी श्रावकस्तु निषद्या—रजोहरणोपरिवेष्टनको वस्त्रविशेषः, तद्रहितदण्डिकायुक्तं रजोहरणं धारयति । साधुसाध्वीनां तु निषद्यारहितदण्डिकायुक्त रजोहरणं कथमपि न कल्पते इति ।

तत्र—रजोहरणप्रमाणमाह—रजोहरणफलिकाया हस्तिनः पदन्यासस्य यावत् प्रमाणं भवेत् तावत्प्रमाणकं रजोहरणं कर्तव्यम् । दण्डिकाप्रमाणमाह—गमनसमये सुखपूर्वकं यया प्रमार्जयितुं शक्यते तादृशप्रमाणा लम्बायमाना रजोहरणदण्डिका ग्राह्या । लघुदण्डिकया सम्यक् प्रमार्जनं न संभवति अत एव रजोहरणे लघुदण्डिका न धार्या । तथा—रजोहरणं परित्यज्य युगकाष्ठप्रमाणभूमितो दूरं न गन्तव्यम् । अप्रमार्जितभूमौ गमने चासमाधिस्थानदोषो भवतीति दशाश्रुतस्कन्धे भगवता प्रतिपादितमिति ॥ सू० १ ॥

## सूत्रम्—जे भिक्खू दारुदंडयं पायपुंछणं गेण्हइ गेण्हंतं वा साइज्जइ २

छाया—यो भिक्षुर्दारुदण्डकं पादप्रोञ्छनं गृह्णाति गृह्णन्त वा स्वदते ॥ सू० २॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः 'दारुदंडयं पायपुंछणं' दारुदण्डकं पादप्रोञ्छनम् निषद्यापरिवेष्टनरहितदारुदण्डयुक्तं रजोहरणम् 'गेण्हइ' स्वयं गृह्णाति 'गेण्हंतं वा साइज्जइ' गृह्णन्तं वा स्वदते, गृह्णाति ग्राहयति गृह्णन्तं वा अनुमोदते स प्रायश्चित्तभाग्भवतीति ॥ सू० २ ॥

## सूत्रम्—जे भिक्खू दारुदंडयं पायपुंछणं धरेइ धरेंतं वा साइज्जइ ।३।

छाया—यो भिक्षुर्दारुदण्डकं पादप्रोञ्छनं धरति धरन्तं वा स्वदते ॥ सू० ३ ॥

चूर्णी—'धरेइ' धरति धारण करोति धरन्तं वाऽनुमोदते। अन्यत्सुगमम् ॥ सू० ३ ॥

**सूत्रम्-जे भिक्खू दारुदंडयं पायपुंछणं वियरइ वियरंतं वा साइज्जइ ४**

छाया—यो भिक्षुर्दारुदण्डकं पादप्रोञ्छनं वितरति वितरन्तं वा स्वदते ॥ सू० ४ ॥

चूर्णी—'वियरइ' वितरति तत्र–वितरणं अन्यस्मै दानम् । अन्यत्सुगमम् ॥ सू० ४ ॥

**सूत्रम्-जे भिक्खू दारुदंडयं पायपुंछणं परिभाएइ परिभाएंतं वा साइज्जइ ॥ सू० ५ ॥**

छाया—यो भिक्षुर्दारुदण्डकं पादप्रोञ्छनं परिभाजयति परिभाजयन्तं वा स्वदते ।५।

चूर्णी—यो भिक्षुर्दारुदण्डक पादप्रोञ्छनं 'परिभाएइ' परिभाजयति–स्वार्थे णिच् विभजति, विभजनं–विभागकरणम् 'परिभाएंतं वा' परिभाजयन्तं वा विभजन्त वाऽनुमोदते स प्रायश्चित्त-भाग् भवति ॥ सू० ५ ॥

**सूत्रम्-जे भिक्खू दारुदंडयं पायपुंछणं परिभुंजइ परिभुंजंतं वा साइ-ज्जइ ॥ सू० ६ ॥**

छाया—यो भिक्षुर्दारुदण्डकं पादप्रोञ्छनं परिभुङ्क्ते परिभुञ्जन्तं वा स्वदते ॥ ६ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुर्दारुदण्डक पादप्रोञ्छनं रजो-हरणम् 'परिभुंजइ' परिभुङ्क्ते, तत्र–परिभोगः परिभुञ्जनम् तादृशरजोहरणेन प्रमार्जनादिकार्य-सपादनम् । तथा–'परिभुंजंतं वा साइज्जइ' परिभुञ्जन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवतीति ॥ सू० ६ ॥

**सूत्रम्-जे भिक्खू दारुदंडयं पायपुंछणं परं दिवड्ढाओ मासाओ धरेइ-धरेंतं वा साइज्जइ ॥ सू० ७ ॥**

छाया—यो भिक्षुर्दारुदण्डकं पादप्रोञ्छनं परं द्व्यर्धात् मासात् धरति धरन्तं वा स्वदते ॥ सू० ७ ॥

चूर्णी—'जे भिक्खू इत्यादि । 'जे भिक्खू' यो भिक्षुः 'दारुदंडयं' दारुदण्डकम् 'पाय पुंछणं' पादप्रोञ्छनम्–वस्त्रवेष्टनरहितदारुदण्डयुक्तरजोहरणम् कदाचित्–वस्त्राऽभावात् आगा-ढभयात्, अग्निदाहात्, राजप्रद्वेषाद्, अशिवादिकारणात्, तादृशोन्मादादिदोषग्रस्तशिष्योप-सर्गाद्वा, इत्यादिकारणवशाद् यदि धारयेत् तदापि तत् सार्द्धमासपर्यन्तं धारयेत् । ततः 'परं दिव-

'इहाओ मासाओ' द्व्यर्धान्मासात् परमधिकं यदि धारणं करोति धरन्तं वा स्वदते स प्रायश्चित्तभाग् भवति। उत्सर्गतो व्याघातितं रजोहरणं यः सार्द्धमासादधिककालपर्यन्तं धारयति, यद्वा-धरन्तमनुमोदते स आज्ञाभङ्गदोष-मनवस्थादोषं मिथ्यात्वदोषमात्मविराधनं संयमविराधनं च प्राप्नोति ॥ सू० ७ ॥

सूत्रम्-जे भिक्खू दारुदंडयं पायपुंछणं विसुयावेइ विसुयावेंतं वा साइज्जइ ॥ सू० ८ ॥

छाया—यो भिक्षुर्दारुदण्डकं पादप्रोञ्छनं विशुष्कयति विशुष्कयन्तं वा स्वदते ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः दारुदंडयं पायपुंछणं दारुदंडकं निषद्यारहितं पादप्रोञ्छनं-रजोहरणम् 'विसुयावेइ' विशुष्कयति आतपे ददाति 'विसुयावेंतं वा साइज्जइ' विशुष्कयन्तं वा स्वदते-आतपे ददतं वाऽनुमोदते, तस्याज्ञाभङ्गादिका दोषा भवन्ति।८।

सूत्रम्—जे भिक्खू अचित्तपइट्ठियं गंधं जिग्घइ जिग्घंतं वा साइज्जइ ॥ सू० ९ ॥

छाया—यो भिक्षुरचित्तप्रतिष्ठितं गंधं जिघ्रति जिघ्रन्तं वा स्वदते ॥ सू० ९॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः 'अचित्तपइट्ठियं' अचित्तप्रतिष्ठितम्, अचित्ते वस्तुनि चन्दनकाष्ठादौ यत्र तत्र वा प्रतिष्ठितं विद्यमानम् 'गंधं' गन्धम् सुगन्धम् 'जिग्घइ' जिघ्रति, गन्धो द्विविधः-संबद्धः असंबद्धो वा, संबद्धो गन्धः सः यो नासिकासंबन्धेन आघ्रायते, असंबद्धो गन्धः स यो दूरतः समीपतो वा वायुद्वारा समागत आघ्रायते, अथवा संबद्धो गन्धः स यश्चन्दनकाष्ठादौ स्थितः, असंबद्धः सः यः गन्धद्रव्यात्पृथक्कृतश्चन्दनादीनां तैलरूपो निर्यास(अतर)रूपो वा, तं द्विविधमपि गन्धं रागेण द्वेषेण वा जिघ्रति, 'जिग्घंतं वा साइज्जइ' जिघ्रन्तं वा स्वदतेऽनुमोदते तस्याज्ञाभङ्गादिका दोषा भवन्ति ॥ सू० ९ ॥

भाष्यम्—अचित्ते दव्वजाए जं, गंधजायं पवत्तए ।
अग्घाणं दुविहं तस्स, संबद्धं च तहेयरं ॥
दुविहंपि गंधजायं, जिग्घई रागओ जई ।
आणाभंगाइ पावेइ, मिच्छत्तं पडिवज्जइ ॥

छाया—अचित्ते द्रव्यजाते यत्, गन्धजातं प्रवर्त्तते ।
आघ्राणं द्विविधं तस्य, संबद्धं च तथेतरत् ।
द्विविधमपि गन्धजातं, जिघ्रति रागतो यतिः ।
आज्ञाभङ्गादि प्राप्नोति, मिथ्यात्वं प्रतिपद्यते ॥

**अवचूरिः**—'**अचित्ते**' इत्यादि । अचित्ते द्रव्यजाते शुष्कचन्दनकाष्ठादौ यत्र तत्र वाऽन्यत्र गन्धजातं यत्किञ्चित्प्रकारकं सुगन्धजातं प्रवर्त्तते, तस्य गन्धजातस्याऽऽघ्राणं द्विविधम्-द्विप्रकारकं भवति-संबद्धम्, तथा तदितरत् तद्भिन्नम् असम्बद्धम् ।

अयं भावः—अचित्ते द्रव्ये यो गन्धस्तिष्ठति सोऽचित्तद्रव्यप्रतिष्ठितो गंधो यथा शुष्कचन्दनकाष्ठादौ, अन्यत्र वा तैलादौ वर्त्तमान., तस्य गन्धस्याऽऽघ्राण द्विप्रकारकम् यथा–नासाग्रसंबद्धस्य नासाग्राऽसबद्धस्य च, अथवा चन्दनकाष्ठादिस्थितस्य, तत. पृथक्कृतस्य तैलनिर्यासादिरूपस्य वा आघ्राणम् । तद् यथा–कश्चिन्नासापुटसंलग्नं कृत्वा जिघ्रति, कश्चिन्नासातो दूरेऽवस्थितं वायुद्वारा समागतं वा, अथवा संबद्ध चन्दनकाष्ठादिस्थितम्, असबद्धं तत्पृथक्कृत तैलनिर्यासादिरूपं वा यो यति·–मुनि जिघ्रति तस्याज्ञाभङ्गादिका दोषा भवन्ति । तथाहि–तीर्थकराज्ञां समुल्लङ्घयति, मिथ्यात्वं च प्राप्नोति तत्र संयमात्मविराधनासद्भावात् । तत्र संयमविराधनाइत्थम्–नासिकानि सृतसुगन्धनि श्वासेन वायुकायगतजीवानां विराधनं भवति । आत्मविराधनं यथा–तस्मिन् गन्धे यदि विषं भवेत्, तदा तदाघ्राणे आत्मविराधनमपि संभवति । यथा–सुगन्धितद्रव्यलोलुपाः समागताः सर्पादयो दंशनं कुर्युः । सचित्तप्रतिष्ठितगन्धाऽऽघ्राण तु प्रथमोद्देशे एकादशे सूत्रे निषिद्धमेव, इति ॥ सू० ९ ॥

## सूत्रम्—जे भिक्खू पदमग्गं वा संकमं वा आलंबणं वा सयमेव करेइ करेंतं वा साइज्जइ ॥ सू० १० ॥

**छाया**—यो भिक्षुः पदमार्गं वा संक्रमं वा आलम्बनं वा स्वयमेव करोति कुर्वन्तं वा स्वदते ॥ सू० १० ॥

**चूर्णी**—'जे भिक्खू' इत्यादि । '**जे भिक्खू**' यो भिक्षु· '**पदमग्गं वा**' पदमार्ग–पदमार्गः–पादस्थापनार्थं मृत्तिकादि प्रक्षिप्य गमनागमनार्थं मार्ग. क्रियते तम्, स सोपानमिति कथ्यते। पदमार्गादित्रयाणामपि पदाना विस्तरतोऽर्थं करिष्यति भाष्यकार. । '**संकमं वा**' संक्रमं वा, संक्रमः कर्दमाद्युल्लङ्घनार्थं काष्ठेष्टिकादिस्थापनरूपस्तम् । '**आलंबणं वा**' आलम्बनं वा, आलम्बनम्- यदालम्ब्य कर्दमगर्त्तादिकमुल्लङ्घ्यते तत् मुञ्जशणादिनिर्मितरज्जुरूप, तत् '**सयमेव करेइ**' स्वयमेव करोति । अन्यतीर्थिकगृहस्थैः कारितपदमार्गादीना निषेधः प्रथमोद्देशे गत·, अतोऽत्र 'स्वयमेव' इति प्रोक्तम्, एवमग्रेऽपि बोध्यम् । '**करेंतं वा साइज्जइ**' कुर्वन्तं वा स्वदते तस्याज्ञाभङ्गादिका दोषा भवन्ति ॥ सू० १० ॥

**भाष्यम्** - पदमग्गो संकमो य, आलंबण तहेव य ।
तिविहंपि करे भिक्खू, आणाभंगाइ पावई ॥

पदमग्गो हि सोवाणं, तं दुहा परिकित्तियं ।
तज्जायं च अतज्जायं, संबद्धं च तहेयरं ॥

छाया—पदमार्गः संक्रमश्च, आलम्बनं तथैव च ।
त्रिविधमपि कुर्याद् भिक्षुः, आज्ञाभङ्गादि प्राप्नोति ॥
पदमार्गो हि सोपानं तद् द्विधा परिकीर्त्तितम् ।
तज्जातं च अतज्जातं संबद्धं च तथेतरत् ॥

**अवचूरिः**—यो भिक्षु पदमार्गं संक्रमम् आलम्बनं चेति त्रिविधमपि कुर्यात् स आज्ञाभङ्गानवस्थादिदोषान् प्राप्नोति ॥१॥ 'पदमग्गो' इत्यादि । 'पदमग्गो' पदमार्गः–पदानां मार्गः पदमार्गः पदस्थापनमार्गः सोपानम्–यद्द्वारा जलार्द्रमार्गमुल्लङ्घ्यावतीर्यते प्रत्यवतीर्यते च स सोपान–मित्युच्यते, तद् द्विप्रकारकं परिकीर्त्तित–कथितम्, तत्र तज्जातं प्रथमम्, अतज्जातं द्वितीयम् । तत्र–तज्जातं सोपानम् पृथिवीमेव खनित्वा संपादितम् । अतज्जातमिष्टकाप्रस्तरादिभिः संपादितम् । पुनरपि तद् द्विप्रकारकम् संबद्धमसंबद्धं च । वसतिसंबद्धं प्रथमम्, द्वितीयमसंबद्धं वसत्या । तत्पुनः सोपानं विषमे कर्दमे वा उदके वा हरितादितृणप्रायेषु स्थानेषु वा क्रियते इति । संक्रम्यते येन स संक्रमः काष्ठेष्टकादिसंपादितसोपानविशेषः । अयं च संक्रमो विषमकर्दमादिषु संपादितो भवति । आलम्बनं च–विषमकर्दमाद्युल्लङ्घनार्थमेव दवरिकादि क्रियते । एतेषु पदमार्गादिषु मध्याद् यत्किमपि पदमार्गादिकं भिक्षुः स्वयं करोति परद्वारा वा कारयति, कुर्वन्तं–कारयन्तं वाऽनुमोदते स आज्ञाभङ्गादिकान् दोषान् प्राप्नोति ।

तत्र सोपाने स्वयमन्यो वा यदि कोद्दालादिना पृथिवीं खनति तदा षड्जीवनिकायानां विराधना भवति । यदि पृथिवी कदाचिदचित्तापि भवति तथापि तस्याः खनने कृते वनस्पतिकायानां तदाश्रयस्थितत्रसकायानां वा विराधनं भवत्येव, हस्तौ पादौ वा लूषितौ भवेताम्, तेन संयमात्मविराधना भवति । संक्रमे–काष्ठेष्टकादिच्छिद्रान्तरे प्रविष्टः सर्पादिर्म्रियते । आलम्बने दवरिकालम्बनेन मार्गोल्लङ्घने पतनादिना भूमिगतजीवविराधना भवति, देहपीडा वा भवति तेन संयमात्मविराधनासंभवः । यस्मादेते दोषा भवन्ति तस्मात् पदमार्गादिकं भिक्षुर्न स्वयं कुर्यात् न वा परद्वारा कारयेत्, कुर्वन्तं कारयन्तं वा नाऽनुमोदेत इति ॥ सू० १० ॥

## सूत्रम्—जे भिक्खू दगवीणियं सयमेव करेइ करेंतं वा साइज्जइ ॥

छाया—यो भिक्षुरुदकवीणिकां स्वयमेव करोति कुर्वन्तं वा स्वदते ॥ सू० ११ ॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'दगवीणियं' उदकवीणिकां जलप्रणालीं वसतितो जलनिःसारणार्थम् 'सयमेव करेइ' स्वयमेव करोति–संपादयति ।

'करेंतं वा साइज्जइ' कुर्वन्तं वा स्वदतेऽनुमोदते कायेन-वाचा-मनसा वा प्रशंसति, स आज्ञाभङ्गादिकान् दोषान् प्राप्नोति । विस्तार' प्रथमोद्देशे ॥ सू० ११ ॥

**सूत्रम्—जे भिक्खू सिक्कगं वा सिक्कगणंतगं वा सयमेव करेइ करेंतं वा साइज्जइ ॥ सू० १२ ॥**

छाया— यो भिक्षुः शिक्यकं वा शिक्यकान्तकं वा स्वयमेव करोति कुर्वन्तं वा स्वदते ॥ सू० १२ ॥

चूर्णी— 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'सिक्कगं वा' शिक्यकं वा आहारपात्रादिस्थापनार्थं विमति कीलकादौ यदवलम्ब्यते तत् शिक्यकं प्रोच्यते 'छींका' इति लोकप्रसिद्धम् । 'सिक्कगणंतगं वा' शिक्यकाच्छादनकं-शिक्यकपिधानकमित्यर्थः । 'सयमेव करेइ' स्वयमेव करोति, मुञ्जकादिमय शिक्यकं सपादयति, 'करेंतं वा साइज्जइ' कुर्वन्तं वाऽन्यं स्वदतेऽनुमोदते स आज्ञाभङ्गादिकान् दोषानाप्नोति ॥ सू० १२ ॥

अत्राह भाष्यकार — 'सिक्कगं' इत्यादि ।

भाष्यम्—सिक्कगं दुविहं वुत्तं, तस-थावर-देहजं ।
अंडजाइतसाज्जायं, थावरे मुंजगाइयं ॥

छाया—शिक्यकं द्विविधम् उक्तं, त्रसस्थावरदेहजम् ।
अण्डजादित्रसाज्जातं स्थावरे मुञ्जकादिकम् ॥

अवचूरिः—शिक्यक द्विविध-द्विप्रकारकं प्रोक्तं कथितम् त्रसस्थावरदेहजम् त्रसदेहाज्जायमानम्, तथा स्थावरजीवस्य देहाज्जायमानम् । प्रथमभेदमाह-तत्राऽण्डजादित्रसाज्जातम्, अर्थात्-अण्डजदेहाज्जातम्, तत्र-अण्डजा हसादयस्तेषां लोमभ्यो जायमानम्, एवमुष्ट्रदेहात्, तथा-कीटदेहात्-'कीटज-रेशम' इतिलोकप्रसिद्धात् जायमानम् एतत्सर्वं सजीवदेहविनिर्मितं शिक्यकं भवति । इति प्रथमो भेद' ।

अथ द्वितीयभेदमाह – स्थावरदेहजं तु-कार्पासजनितम्, शणजनितम्, नारिकेलजनितम्, मुञ्जजनितम्, दर्भजनितम्, वेत्रजनितम्, वेणुजनितं च । ततश्च त्रसस्थावरजीवदेहनिष्पन्नस्य शिक्यकस्य निर्माणेऽवश्यं जीवविराधना स्यात् अतो भिक्षुणा स्वयं शिक्यकं न निर्मातव्यम्, न वा-निर्मातुरनुमोदनं कर्त्तव्यम् । निर्माणेऽनुमोदने वा जीवविराधनासम्भवेन संयमव्याघातात् ॥

**सूत्रम्—जे भिक्खू सात्तियं वा रज्जुयं वा चिलमिलिं सयमेव करेइ-करेंतं वा साइज्जइ ॥ सू० १३ ॥**

छाया--यो भिक्षुः सौत्रिकं वा रज्जुकं वा चिलिमिलिं स्वयमेव करोति कुर्वन्तं वा स्वदते ॥ सू० १३ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षु. श्रमणः श्रमणी वा सौत्रिकीं कार्पासमूत्रोर्णासूत्रसम्पादितां वा, रज्जुका वा कार्पासादिसूत्रनिर्मितदवरिकासंपादितजालिकासम्पन्नां वा चिलिमिलीं आच्छादनपटरूपां स्वयं करोति अन्यद्वारा वा कारयति कुर्वन्तं वाऽन्यं श्रमणमनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १३ ॥

## सूत्रम्—जे भिक्खू सूईए उत्तरकरणं सयमेव करेइ करेंतं वा साइज्जइ ॥

छाया—यो भिक्षुः सूच्या उत्तरकरणं स्वयमेव करोति कुर्वन्तं वा स्वदते ॥ सू० १४ ॥

चूर्णी-'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षु श्रमणः श्रमणी वा 'सूईए' सूच्या. उत्तरकरणं, तत् पञ्चविध भवति, तथाहि—छिद्रवर्धनम् १, श्लक्ष्णकरणम् २, तीक्ष्णकरणम् ३, लोहकारशालाया गत्वा तापनम् ४, ऋजुकरण ५ चेति। एतत् पञ्चविधमप्युत्तरकरण सूच्या स्वयं साधुः साध्वी वा करोति कुर्वन्तं वाऽन्यं श्रमणमनुमोदते स दोषभाग् भवतीति ॥ सू० १४ ॥

## सूत्रम्—एवं पिप्पलगस्स उत्तरकरणम् ॥ सू० १५ ॥ णहच्छेयणगस्स उत्तरकरणम् ॥ सू० १६ ॥ कण्णसोहणगस्स उत्तरकरणम् ॥ सू० १७ ॥

छाया—एव पिप्पलकस्योत्तरकरणम् ॥ सू० १५ ॥ नखच्छेदनकस्योत्तरकरणम् ॥ सू० १६ ॥ कर्णशोधनकस्योत्तरकरणम् ॥ सू० १७ ॥

चूर्णी—चिलिमिलिकामारभ्य कर्णशोधनकपर्यन्त पञ्चसूत्री प्रथमोद्देशे कथिता अत्र पुन. सैव कथ्यते, तत्र को हेतुरिति चेत् अत्रोच्यते—तत्राऽन्यतीर्थिकद्वारा गृहस्थद्वारा वा करणं कारणं कुर्वतोऽनुमोदन च निषिद्धम्, अत्र तु-स्वय करणं कुर्वतोऽनुमोदनं च निषिध्यते। एतावान् भेदोऽतो न पुनरुक्तिः व्याख्या सुगमा ॥ सू० १७ ॥

## सूत्रम्—जे भिक्खू लहुस्सगं फरुसं वयइ वयंतं वा साइज्जइ ॥ १८ ॥

छाया—यो भिक्षुः लघुस्वक परुष वदति वदन्तं वा स्वदते ॥ सू० १८ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः 'लहुस्सगं फरुसं' लघुस्वकं परुषम् ईषदपि कठोर वचनम् 'वयइ' वदति 'वयंतं वा साइज्जइ' वदन्त वा स्वदतेऽनुमोदने स स्नेहवर्जितकठोरवचनवक्ता प्रायश्चित्तभाग् भाषासमितिं विराधयति ॥ सू० १८ ॥

भाष्यम्—फरुसं चउहा णेयं, दव्वे खेत्ते य कालगे।
भावे जहक्कमं वोच्छं, जहासत्थं वियारियं ॥

छाया—परुषं चतुर्धा ज्ञेयं, द्रव्ये क्षेत्रे च कालके।
भावे यथाक्रम वक्ष्ये, यथाशास्त्रं विचारितम् ॥

अवचूरिः---'फरुसं' इत्यादि । परुषं कर्कशं वचनं चतुर्विधम् चतुष्प्रकारकं ज्ञेयं भवतीति ज्ञातव्यम् । द्रव्ये-द्रव्यविषये, क्षेत्रे-क्षेत्रविषये च, तथा-काले-कालविषये, तथा-भावे-भावविषये, परुषवचनस्यैतेषु विषयेषु चातुर्विध्यं यथाशास्त्रम्-शास्त्रप्रकारमनतिक्रम्य विचारितं तीर्थकरगणधरैः कथितं तद् यथाक्रमं वक्ष्ये कथयिष्यामि, इति ॥ सू० १८ ॥

पुनर्भाष्यकारः पूर्वोक्तपरुषस्य द्रव्यादिभेदान् विशदयति--'दव्वे' इत्यादि ।

**भाष्यम्—दव्वे वत्थम्मि पत्तम्मि, खेत्ते संथारयाइसु ।**
**काले तीएऽणागए य, भावे कोहाइ संमयं॥**

**छाया---द्रव्ये वस्त्रे पात्रे क्षेत्रे संस्तारकादिषु ।**
**कालेऽतीतेऽनागते च भावे क्रोधादि संमतम् ॥**

अवचूरिः— द्रव्ये-द्रव्यविषये-वस्त्रपात्रादिषु, यद्वा जीवादिषु द्रव्येषु परुषवचनं भवति। तथथा-वस्त्र-पात्र-सूच्यादिषु-आत्मन एतान्-अपश्यन् एवं भणति ममैव विद्यते-इति कृत्वा ईर्ष्याभावेन वदति-'ममासने को निद्रां लभते ?' पुनश्च ईर्ष्याभावेन 'मम वस्त्रादि तेन हृतम्' इत्येवं द्रव्यतो लघुस्वकं परुषं भाषते १ ।

क्षेत्रे सस्तारकादिषु, क्षेत्रत परुषमेवं भवति यथा-कश्चित्साधुः स्वकीयस्य संस्तारशय्यावसतिषु पुरुषान्तरमुपविष्टं दृष्ट्वा वदति- को मम सस्तारादिषु स्थितः स्वकीयं जानानः ?। अथवा—स्वकीयासने उपविष्टं कमपि साधुं दृष्ट्वा वदति-कथं मम सस्तारके स्थितोऽसीति २ ।

काले यथा-कमपि साधुं बहिर्गन्तुमनसमुत्तिष्ठन्तं ब्रवीति-नेदानीं गमनस्य कालो विद्यते केन मूर्खेण कथितं यत्-इदानीं गमनकालः । यद्वा-गमनकाले उपस्थिते दुर्बोधा एते साधवः इदानीमपि विलम्बन्ते इति । यद्वा-यस्य स्वाध्यायादेर्य. कालस्तस्मिन् कश्चित् स्वाध्यायादिकं कर्तुं व्यवसित', त प्रति वदति-नेदानीं कालो विद्यते स्वाध्यायस्य, तत्र यदि कश्चित्किञ्चिदुत्तरं ददाति तदा भोः अभिमानिन् ! किं निरर्थकं वदसि ?, इति परुष ब्रूते । अथवा-आचार्येण पूर्वमादिष्टे औषधानयने अन्यस्तत्र गन्तुकामं साधु पृच्छति-यत् त्वं गच्छसि औषधमानेतुम् ?, स पृष्टः साधुः परुषाक्षरं ब्रूते-नेदानीमौषधानयनकालो विद्यते धैर्यं धारय, कथमेव त्वरां कुरुषे ? । यद्वा-कश्चित्साधुर्वस्त्रपात्रादिकमानेतुं गुरुणाऽऽज्ञप्तः तेनाऽऽनीत वस्त्रपात्रादिकम् , तद्दृष्ट्वा-ईर्ष्यालुरन्यो वदति-केनैतदानीतम् ? स वदति-मयाऽऽनीतम् । तत् श्रुत्वा-ईर्ष्यालुनाऽनादरं कुर्वतोक्तम्-भोः किमर्थं त्वमानेष्यसि, नायं कालो वस्त्राद्यानयनस्य त्वं तु काष्ठपाषाणवज्जडो लब्धिरहितश्च । एवं प्रकारेण कालविषये परुषं वदति-इति ३ ।

भावे, परुषं क्रोधादिकम् , यतः क्रोधलोभादिमन्तरेण द्रव्यादिष्वपि परुषं न सभवति, क्रोधादिमूलकतयैव सर्वत्र परुषवचनस्य संभवः ।

अत्र शिष्यः प्राह—यद्येवं तदा भावपरुषमेव वक्तव्यम् द्रव्यादिषु परुषत्वं कथं कथ्यते ? आचार्य प्राह—द्रव्यादिषु–उपचारकरणमात्रम् यतस्ते क्रोधादयो द्रव्यादिसमुत्थिता एव भवन्ति, तथा च क्रोधादौ भावे मुख्यं परुषत्वम् , क्रोधादिकारणे तु द्रव्यादौ–उपचारात् परुषत्वं भवति । यः साधुरेतेषामन्यतमं परुषमीषदपि वदति, स आज्ञाभङ्गानवस्थात्मसंयमविराधनं प्राप्नोति, तथा–मिथ्यात्वं च समापद्यते अत. साधुभिरेतादृशं परुषवचनं न वक्तव्यम् ॥ सू० १८ ॥

सूत्रम्—जे भिक्खू लहुस्सगं मुसं वयइ वयंतं वा साइज्जइ ॥ सू० १९॥

छाया—यो भिक्षुर्लघुस्वकं मृषा वदति वदन्तं वा स्वदते ॥ सू० १९ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'लहुस्सगं' लघुस्वकं स्तोकमल्पमपि, 'मुसं' मृषाऽसत्यवचनम् 'वयइ' वदति अल्पमप्यसत्यभाषणं करोतीत्यर्थः, 'वयंतं वा साइज्जइ' वदन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति, तस्याज्ञाभङ्गादिदोषा भवन्ति ॥ सू० १९ ॥

अत्राह भाष्यकारः—'दव्वे' इत्यादि ।

भाष्यम्—दव्वे खेत्ते तहा काले, भावे य त्ति चउव्विहा ।
जहासत्थं मुसाभासा, तीए भेया जहक्कमं ॥

छाया—द्रव्ये क्षेत्रे तथा काले भावे चेति चतुर्विधा ।
यथाशास्त्रं मृषाभाषा तस्या भेदा यथाक्रमम् ॥

अवचूरिः—मृषाभाषा असत्यभाषणं, यथाशास्त्रं शास्त्रोक्तप्रकारेण चतुर्विधा चतुष्प्रकारा भवतीति ज्ञेया । तथा–तस्या मृषाभाषाया भेदा यथाक्रमं आनुपूर्व्या क्रमेणेत्यर्थ., ज्ञातव्या इति । तत्र द्रव्ये–वस्त्रपात्रादिषु, क्षेत्रे–संस्तारकवसतिप्रभृतिषु, काले–अतीतेऽनागते वर्त्तमाने च भावादिषु । तत्र–द्रव्ये यथा–वस्त्रे पात्रे सहसा वदेत् , पुनरेव वदेत्–नेद तव किन्तु ममेदं वस्त्रं पात्रं वेति द्रव्यभूतोऽनुपयुक्त एव वदेत् ।

अथवा–वस्त्रं पात्रं वा परेण समुत्पादितम् परन्तु–अनानीतमपि पृष्टः सन् एतत्सर्वं वस्त्रपात्रादिकं मयाऽऽनीतम् , एवं क्रमेण द्रव्ये मृषा वदति । एवं क्षेत्रे यथा–रजन्यां तमसावृतायां सम्मूढः परस्य संस्तारकादिक ममेदमिति ज्ञात्वा, त्वमितो नि.सरेति मृषा वदति । यद्वा–मासकल्पप्रायोग्यं वा वर्षावासप्रायोग्यं वा वसत्यादिक ऋतुकालप्रायोग्यं वाऽन्येनोत्पादितं मयोत्पादितमित्येव वदति, एषा क्षेत्रविषये मृषाभाषा । काले–मृषावादो यथा–एक. कश्चित् श्रद्धाशील एकेन साधुना उपशामितः, तदनु–अन्येन साधुना पृष्टः–केन श्रमणेनायं श्रावक उपशामितः ? तदा कथयति परः साधुः–अन्यदा कदाचिद् विहरता सता मयैष श्राद्ध उपशामित. । एवं भावेऽपि–कषायवशेन वदतीति ज्ञातव्यमिति । एतेषां द्रव्यक्षेत्रादिभेदभिन्नानां मध्यात्–अन्यतममपि मृषावादं वदति तस्य भिक्षुकस्याऽऽज्ञाभङ्गानवस्थामिथ्यात्वसंयमात्मविराधनादयो दोषा भवन्तीति ॥ सू० १९ ॥

**सूत्रम्—जे भिक्खू लहुस्सगं अदत्तमादियइ आदियंतं वा साइज्जइ ॥ सू० २० ॥**

छाया—यो भिक्षुर्लघुस्वकमदत्तमाददाति आददतं वा स्वदते ॥ सू० २० ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'लहुस्सगं' लघुस्वकम् स्वल्पमपि, अदत्तं तत्स्वामिनाऽप्रदीयमानम् 'आदियइ' आददाति—गृह्णाति, 'आदियंतं वा' आददतं वा स्वदते- स्तोकमपि--अदत्तादानं कुर्वन्तं श्रमणमनुमोदते स प्रायश्चित्तभाग् भवतीति ॥ सू० २० ॥

भाष्यम्—दव्वे खेत्ते तहा काले, भावे चेयं चउव्विहं ।
एएसिं च जहासत्थं, णाणत्तं अवगम्मइ ॥

छाया—द्रव्ये क्षेत्रे तथा काले भावे चैतच्चतुर्विधम् ।
एतेषां च यथाशास्त्रं नानात्वमवगम्यते ॥

अवचूरी—'दव्वे' इत्यादि । अदत्तम् अदत्तादानं चतुर्विधम्—द्रव्यक्षेत्रकालभावैः चतुष्प्रकारकं भवति । तत्र द्रव्ये—वस्त्रपात्रादौ, क्षेत्रे —वसत्यादौ, काले—अतीतादौ, भावे—भावविषये—रागादौ । एतेषां द्रव्यादिविषयकादत्तादानाना नानात्वम्—अवान्तरभेदो यथाशास्त्रं शास्त्रोक्तप्रकारेणाऽवगम्यते—बुध्यते ॥ सू० २० ॥

**सूत्रम्—जे भिक्खू लहुस्सएण सीओदगवियडेण वा उसिणोदगवियडेण वा हत्थाणि वा पायाणि वा कण्णाणि वा अच्छीणि वा दंताणि वा नहाणि वा मुहं वा उच्छोलेज्ज वा पधोवेज्ज वा उच्छोलेंतं वा पधोवेंतं वा साइज्जइ ॥ सू०२१॥**

छाया—यो भिक्षुर्लघुस्वकेन शीतोदकविकटेन वा-उष्णोदकविकटेन वा हस्तौ वा पादौ वा कर्णौ वा अक्षिणी वा दन्तान् वा नखान् वा मुखं वा, उच्छोलयेत् प्रधावेद्वा उच्छोलयन्तं वा प्रधावन्तं वा स्वदते ॥ सू० २१ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'लहुस्सएण' लघुस्वकेन—स्वल्पेन बिन्दुमात्रेणाऽपि 'सीओदगवियडेण वा' शीतोदकविकटेन वा, अत्र विकटशब्दोऽचित्तबोधकः, व्यपगतजीवेन जलेनेत्यर्थः, तण्डुलधावनाद्यचित्तजलेनेति यावत् । 'उसिणोदगवियडेण वा' उष्णोदकविकटेन वा अचित्तेनोष्णजलेनेत्यर्थः । तथा चोपर्युक्तजलेन भिक्षुः 'हत्थाणि वा' हस्तौ वा 'पायाणि वा' पादौ वा 'कण्णाणि वा' कर्णौ वा 'अच्छीणि वा' अक्षिणी वा—नेत्रे वा 'दंताणि वा' दन्तान् वा 'नहाणि वा' नखान् वा 'मुहं वा' मुखं वा 'उच्छोलेज्ज

वा' उच्छोलेत्-प्रक्षालयेत्, हस्तपादाद्यवयवानामेकवारं प्रक्षालनं जलेन कुर्यादित्यर्थः । 'पधोवेज्ज वा' प्रधावेद्वा-वारंवारं हस्तादीनां प्रक्षालनं कुर्यादित्यर्थः

'उच्छोलेंतं वा पधोवेंतं वा साइज्जइ' उछोलन्तं वा प्रधावन्तं वा प्रक्षालयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागिति ॥ सू० २१ ॥

भाष्यम्—उच्छोलणं च दुविहं, देसओ सव्वओ तहा ।
जहासत्थं च णायव्वा, तस्स भेया जहक्कमं ॥

छाया—उच्छोलनं च द्विविधं देशतः सर्वतस्तथा ।
यथाशास्त्रं च ज्ञातव्यास्तस्य भेदा यथाक्रमम् ॥

अवचूरिः—'उच्छोलणं' इत्यादि, । उच्छोलनम्—प्रक्षालनम्, तद् द्विविधं-द्विप्रकारकं भवति । तद्यथा—देशतो—देशविषयकम् । तथा—सर्वतः—सर्वविषयकम् । तस्य देशादिप्रक्षालनस्य भेदप्रभेदाः यथाशास्त्रं—सर्वज्ञप्रतिपादितशास्त्रात्, यथाक्रमं क्रमेण ज्ञातव्याः । तथाहि—प्रथमतः 'उच्छोलनं' प्रक्षालनं द्विविधम्-देशतः सर्वतश्च । तत्र—पुनर्देशविषयकं द्विविधम्—आचीर्णमनाचीर्णं च । तत्र ज्ञातजिनागमश्रमणैराचर्यते यत् तत् आचीर्णम् । एतद्विपरीतमनाचीर्णम् । पुनश्चाऽऽचीर्णं देशप्रक्षालनं कारणाद्भवति निष्कारणाद्वा । यत्पुनः कारणे सति भवति तत्पुनर्द्विविधम्, यथा—अशनादिना लेपकद्रव्येण हस्तमात्रं लिप्तम्, तत्प्रक्षालने यदि मणिबन्धतः प्रक्षालयति । एतत्सकारणकं देशप्रक्षालनम् । यदि वा—यावन्मात्रं शरीरावयवरूपं हस्तपादादिकमशुचिद्रव्येण लिप्तं भवति तावन्मात्रमेव प्रक्षालयति । एतदपि सकारणकं देशप्रक्षालनम् । निष्कारणं तु—एतद्विपरीतम्, यथा—अशुचिद्रव्येण चरणमात्रं लिप्तम् किन्तु—प्रक्षालनं तु सपूर्णस्य शरीरस्य करोति । तत्राऽधिकदेशस्य प्रक्षालनमकारणमेव । प्रक्षालयितव्यदेशादधिकदेशप्रक्षालनस्य निष्प्रयोजनत्वादेतद् अनाचीर्णमिति ॥ सू० २१ ॥

## सूत्रम्—जे भिक्खू कसिणाणि चम्माइं धरेइ धरेंतं वा साइज्जइ ॥

छाया—यो भिक्षुः कृत्स्नानि चर्माणि धरति धरन्तं वा स्वदते ॥ सू० २२ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'कसिणाणि' कृत्स्नानि संपूर्णानि अखण्डानीत्यर्थः 'चम्माइं' चर्माणि मृगादीनाम् 'धरेइ' धरति—पार्श्वे स्थापयति, उपयोगे आनयति वा, 'धरेंतं वा साइज्जइ' धरन्तं-पार्श्वे स्थापयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० २२ ॥

भाष्यम्—कसिणं चउहा वुत्तं, सयलाइपभेयओ ।
चउव्विहस्स चम्मस्स, धारणं नेव कप्पइ ॥

छाया — कृत्स्नं चतुर्धा प्रोक्तं, सकलादिप्रभेदतः ।
चतुर्विधस्य चर्मणो धारणं नैव कल्पते ॥

अवचूरिः — 'कसिणं' इत्यादि । कृत्स्नं चतुर्धा-चतुष्प्रकारकं प्रोक्तं भवति सकलादिप्रभेदतः, तद्यथा -सकलकृत्स्नम्-१, प्रमाणकृत्स्नम् २, वर्णकृत्स्नम् ३, बन्धनकृत्स्नं ४ च । एतत् चतुर्विधं कृत्स्नं भवति । एतच्चतुर्विधस्य-चतुष्प्रकारकस्याऽपि कृत्स्नस्य चर्मणो धारणं भिक्षूणां न कल्पते ॥ सू० २२ ॥

भाष्यम् — एगपुड सयलकसिणं १, पमाणकसिणं २ च होइ दुपुडाई ।
कोसग-खल्लग-वगुरी-खवुसा-जंघ-द्धजघा य ॥
किसणाइपंचवण्णगचम्मेणं निम्मियं च वण्णकसिणं ३।
बंधणकसिणं जमिहा, बंधणतिगओ परं चउत्थाई ४ ॥

छाया — एकपुट सकलं कृत्स्नं, प्रमाणकृत्स्नं च भवति द्विपुटादिकं ।
कोशक-खल्लक-वागुरी-खपुसा-जङ्घा-ऽर्द्धजङ्घा च ॥
कृष्णादिपञ्चवर्णकचर्मणा निर्मितं च वर्णकृत्स्नम् ।
बन्धनकृत्स्नं यदिह बन्धनत्रिकतः परं चतुर्थादि ॥

अवचूरिः — 'एगपुड' इत्यादि । तत्रैकपुटम्-एकतलमखण्डितं सकलकृत्स्नं भवति १। द्विपुटादिकं-द्वयादितलादिकम् यत्रोपानहादौ तत्प्रमाणकृत्स्नं भवति । अस्यैव प्रमाणकृत्स्नस्य भेदानाह-तद्यथा-कोशक-खल्लक-वागुरी-खपुसा-जङ्घाऽर्द्धजङ्घाप्रभृतिका लोके व्यवह्रियमाणा भेदाः, तत्र-कोशकं-चर्ममयं (कोथलो-थैली) इतिप्रसिद्धम् , यस्मिन् प्रवेशितश्चरणाङ्गुलिनखो मार्गे संचलतो न भज्यते-न भिद्यते तत् , सा च चर्ममयी कुत्थलिका १। खल्लकम्-अत्र पुनर्द्वौ भेदौ-अर्द्धखल्लकं, सर्वखल्लकं च । तत्र-तलप्रतिबद्धं यावत्खल्लकैरनुस्यूतं यत्रोपानहि साऽर्द्धखल्लकोपानत् , या च-समस्तमेव चरणमाच्छादयति सा सर्वखल्लकोपानत् २ । या च पुनरङ्गुलीश्छादयित्वा चरणावुपरि छादयेत् सा वागुरी वागुरा वा ३। खपुसा सा या जानु पिदधाति-छादयति ४। या जङ्घापर्यन्तमाच्छादयति सा जङ्घा समस्तजङ्घेति यावत् ५ । जङ्घाया अर्द्धभागमेव याऽऽच्छायेत्साऽर्द्धजङ्घोपानत् ६ । इति प्रमाणकृत्स्नमिति द्वितीयो भेदः २। ॥१॥

सम्प्रति भाष्यगततृतीयभेदमाह-'किसणाइ' इत्यादि, यत् पुनश्चर्म वर्णेन कृष्णादिना शोभां पुष्णाति तत् वर्णकृत्स्नम् , तच्च वर्णकृत्स्नं चर्म कृष्णादिवर्णेन पञ्चविधं भवति, वर्णस्य पञ्चविधत्वात् ३। बन्धत्रयात्परं चतुर्थादिबन्धनयुक्तं यत् तद् बन्धनकृत्स्नं भवतीति चतुर्थो भेदः ४। इत्थं सकलचर्मनिर्मितोपकरणानामुपानहादीनां च धारणं साधूनां न कल्पते इति दिग्दर्शनम् ॥ सू० २२ ॥

विशेषत उपानद्धारणे दोषान् दर्शयति—'गव्वो' इत्यादि ।

भाष्यम्—गव्वो निम्मद्दवया, निरवेक्खो य निद्दय-निरंतरया ।
भूयाणं उवघाओ, कसिणे चम्मम्मि छद्दोसा ॥

छाया—गर्वो निर्मार्दवता निरपेक्षो निर्दय-निरन्तरता ।
भूतानामुपघातः कृत्स्ने चर्मणि षड् दोषाः ॥

अवचूरिः – गर्वः—उपानहा संनद्धचरणः पुरुषोऽश्वादावारूढ. पादचारिणं पुरुषमिवानुपानहमनादृत्य स्वस्मिन् गर्वं धारयति—यदहमेतेभ्यो गरीयान् उपानद्भ्यां चलामि, एते रङ्का उपानद्विहीनाः, इत्यनुपानद्धीनं पुरुषं विलोक्य सर्वदैव गर्वयुक्तो भवति १। निर्मार्दवता—उपानद्रहितचरणाभ्यां सचलन् चरणस्य मृदुत्वेन न तथा जीवोपघाताय भवति यथा उपानद्भ्यां संनद्धचरणा मार्दवराहित्येन कठिना अधिकभाराकान्ता जीवोपघाताय भवन्ति। एतावता गर्वो निर्मार्दित्वं च व्याख्यातम् २।

निरपेक्ष इति यस्य चरणे—उपानहौ न स्त स मार्गं विलोक्य व्रजति, अन्यथा चलने मम चरणे कण्टकादिवेध. स्यात्, इति कण्टकवेधभयात् सोपयोगश्चलति, चलन् जीवोपरि-उपयोगं ददत् जीवसङ्घं रक्षति। यदा तूपानद्भ्यामाच्छादितचरणो व्रजति तदा निरपेक्षतया चलन् निरपायत्वादात्मनः कण्टकादिकमुपेक्षमाणो जीवेष्वप्युपेक्षां करोति ३।

'निद्दयनिरंतरया' इत्येकपदत्वात् 'ता' इत्यस्य द्वयोरपि सम्बन्ध', तेन निर्दय इति निर्दयता। आदौ यदाऽऽत्मनो मनसि निर्दयत्वं कृतं भवति तदा चरणयोरुपानहौ धरति, एवंप्रकारेण स्वभावतो दयालुरपि पुरुषः कठोरो भवति, इति दयापरस्यापि तस्य निर्दयता समागच्छति, इत्थं निर्दयत्वं भवति ४।

निरन्तरता—उपानत्संनद्धपादेन षड्जीवनिकायानां विनाशस्याऽवश्यम्भावात् निरन्तरता पापबन्धस्य नैरन्तर्यात्, इति। शुद्धेन चरणेन यदा भूमौ चलति तदा भूतानां विराधनं न भवति। उपानद्वेष्टितचरणतलगतो जीव. कदापि न जीवति कठिनत्वात्, अतिभारत्वात्, अवकाशाऽभावाच्चेति ५।

भूतोपघातश्चेति—स्वभावतो दुर्बलदेहाना कोमलाऽवयवानां भूमौ चलतां लघुजीवानां सौपानत्कचरणैरुपघातो भवत्येव, इति षष्ठो भूतोपघातदोषोऽप्यवश्यम्भावी ६। यत इमे दोषा उपानद्धारणे ततो भिक्षुभिरुपानद्धारणं नैव कर्त्तव्यमिति विवेकः ॥ सू० २२ ॥

## सूत्रम्—जे भिक्खू कसिणाणि वत्थाइं धरेइ धरेंतं वा साइज्जइ ॥

छाया—यो भिक्षुः कृत्स्नानि वस्त्राणि धरति धरन्तं वा स्वदते ॥ सू० २३ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'कसिणाणि वत्थाइं' कृत्स्नानि वस्त्राणि, तत्र-प्रमाणादधिकानि वस्त्राणि कृत्स्नवस्त्राणि 'धरेइ' धरति, कृत्स्नवस्त्राणामुपभोगं

करोतीत्यर्थः। 'धरेंतं वा साइज्जइ' धरन्तं वा स्वदते। यो हि भिक्षुः प्रमाणातिरिक्तवस्त्राणां धारणं करोति, कारयति, कुर्वन्तं वाऽन्यमनुमोदते स प्रायश्चित्तभाग् भवतीति ॥ सू० २२ ॥

भाष्यम् कसिणं दव्व खेत्ते य, काले भावे चउव्विहं।
दुविहं दव्वकसिणं, सयलं च पमाणयं ॥

छाया—कृत्स्नं द्रव्ये क्षेत्रे च काले भावे चतुर्विधम्।
द्विविधं द्रव्यकृत्स्नं सकलं च प्रमाणकम् ॥

अवचूरिः—'कसिणं' इत्यादि। प्रकृतसूत्रघटककृत्स्नं चतुर्विधम् चतुष्प्रकारकं भवति। प्रथमं द्रव्ये-द्रव्यकृत्स्नम् १, द्वितीयं क्षेत्रे-क्षेत्रकृत्स्नम् २, तृतीयं काले-कालकृत्स्नम् ३, तथा चतुर्थे भावे-भावकृत्स्नम् ४। तत्र चतुष्प्रकारककृत्स्नेषु मध्ये द्रव्यकृत्स्नं द्विविधम् द्विप्रकारकं भवति—सकलकृत्स्नम्, प्रमाणकृत्स्नं च। तत्र—सकलकृत्स्नं नाम यद्वस्त्रं तन्तुभिर्घनं स्निग्धं चिक्कणम्—अतिकोमलम्, तथा—अखण्डितं पूर्वं तन्मध्यात् केनापि गृहीतं परिपूर्णमित्यर्थः, एतादृशं सदशिकं 'थान–ताका' इत्यादिरूपेणाऽखण्डं वस्त्रं तत्सकलकृत्स्नमिति कथ्यते। एतच्च सर्वोत्कृष्टत्वान्न ग्राह्यम्। एतादृशानि सकलकृत्स्नानि वस्त्राणि गृहस्थेभ्यः स्वण्डयित्वाऽऽनीतानि जघन्यमध्यमोत्कृष्टरूपाणि मुखवस्त्रिकाचोलपट्टकप्रावरणादीनि साधुना न धारणीयानीति भावः। अथ प्रमाणकृत्स्नमाह—यद्वस्त्रम्—आयामतो द्विसप्ततिहस्तमितं, विस्तारतश्चतुर्विंशत्यङ्गुलकहस्तप्रमाणकम्, निर्ग्रन्थीनां षण्णवतिहस्तप्रमाणम् प्रमाणकृत्स्नमिति कथ्यते, तन्न धारणीयं न च ग्राह्यमिति ॥ सू० २३ ॥

सम्प्रति–क्षेत्रकृत्स्नं प्रदर्शयति—'जं वत्थं' इत्यादि।

भाष्यम्—जं वत्थं जत्थ देसे उ, दुल्लहं बहुमोल्लगं।
कसिणं खेत्तजुत्तं तं, जहन्नुक्कोसमज्झिमं ॥

छाया—यद्वस्त्रं यत्र देशे तु, दुर्लभं बहुमूल्यकम्।
कृत्स्नं क्षेत्रयुक्तं तद् जघन्योत्कृष्टमध्यमम् ॥

अवचूरिः—यद् वस्त्रं कार्पासादिकं यत्र–यस्मिन् देशे मगधादौ दुर्लभं प्राप्त्ययोग्यं महर्घितं च, तद्वस्त्रं तेन क्षेत्रेण–देशादिना युक्तं क्षेत्रकृत्स्नमिति कथ्यते। यथा–हस्तकर्तितकार्पासिकसूत्रनिर्मितं वस्त्रं संप्रति 'खद्दर' इति लोकप्रसिद्धम्–उत्तरविहारदेशेऽतिसुलभम् अल्पमूल्यसाध्यं च, तदेव वस्त्रं गुर्जरद्रविडादौ देशे दुर्लभं भवति तत्क्षेत्रकृत्स्नमिति कथ्यते। तदपि बहुमूल्यं सत्–न कल्पते। तदपि क्षेत्रकृत्स्नं वस्त्रं त्रिप्रकारकम् जघन्य–मध्यमो–त्कृष्टभेदात्, इति। एवं यद्वस्त्रं यस्मिन् काले महर्घितं दुर्लभं च तद्वस्त्रं तस्मिन् काले कालकृत्स्नं भवति। एतदपि जघन्यादिभेदात् त्रिविधं बहुमूल्यं न कल्पते इति विवेकः ॥ सू० २३ ॥

सम्प्रति भावकृत्स्नं दर्शयति—'दुविहं' इत्यादि ।

**भाष्यम्**—दुविहं भावकसिणं, वण्णमुल्लपभेयओ ।
वण्णओ पंचहा वुत्तं, मोल्लओ तिविहं मयं ॥

**छाया**—द्विविधं भावकृत्स्नं वर्णमूल्यप्रभेदतः ।
वर्णतः पञ्चविधं प्रोक्तं मूल्यतस्त्रिविधं मतम् ॥

**अवचूरिः**—भावकृत्स्नं द्विविधं-द्विप्रकारकं भवति, वर्ण-मूल्य-भेदात् । वर्णकृत्स्नम्, मूल्यकृत्स्नं च, तत्र-वर्णकृत्स्नं पञ्चविधम् पञ्चप्रकारकं भवति, वर्णानां पञ्चप्रकारकत्वात् । मूल्यकृत्स्न तु त्रिप्रकारकं भवति जघन्यमध्यमोत्कृष्टभेदादिति ॥ सू० २३ ॥

तत्र वर्णत इदम्—

**भाष्यम्**—पंचण्हमवि वण्णाणं, वण्णाइ(ढ)ण्णयरेण जं ।
कसिणं वण्णजुत्तं तं, जहन्नुक्कोसमज्झिमं ॥

**छाया**—पञ्चानामपि वर्णानां वर्णाढ्यमन्यतमेन यत् ।
कृत्स्नं वर्णयुक्तं तत् जघन्योत्कृष्टमध्यमम् ॥

**अवचूरिः**—'पंचण्हमवि'—इत्यादि । पञ्चानां-पञ्चप्रकाराणां कृष्ण—नील—रक्त—पीत—शुक्लभेदभिन्नवर्णानां मध्यात् येन केनचित्कृष्णादिना वर्णेन—आढ्यमतिशयेन युक्तम् यथा—कृष्णं—पुंस्कोकिलतुल्यम्, नीलं—शुकपक्षसन्निभम्, रक्तम्—इन्द्रगोपकीटसन्निभम्, पीतं—तापितस्वर्णसदृशं, शुक्लं—शङ्खशशाङ्कतुषारसन्निभम् । तदेवं विविधवर्णयुक्तं वर्णकृत्स्नमिति कथ्यते । तदपि वर्णकृत्स्नं जघन्यमध्यमोत्कृष्टभेदात् त्रिप्रकारकम् । तस्मात् कृष्ण-नील-रक्त-पीत वस्त्रं कदापि न ग्राह्यम्, शुक्लं तु ग्राह्यं, तदपि शास्त्रदर्शितमेव साधारणं शुक्लं ग्राह्यम्, तदपि बहुमूल्यं न ग्राह्यम्—इति ॥ सू० २३ ॥

## सूत्रम्—जे भिक्खू अभिण्णाइं वत्थाइं धरेइ धरेंतं वा साइज्जइ ।२४।

**छाया**—यो भिक्षुरभिन्नानि वस्त्राणि धरति धरन्तं वा स्वदते ॥ सू० २४ ॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'अभिण्णाइं वत्थाइं' अभिन्नानि—अखण्डितानि वस्त्राणि 'धरेइ' धरति—परिदधाति पार्श्वे स्थापयति वा, अन्यं धारयति, 'धरेंतं वा साइज्जइ' धरन्तं—धारयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाक् । अभिन्नवस्त्रं नाम—विक्रयस्थाने पूर्वं न खण्डितं भवेत् 'ताका' इति भाषाप्रसिद्धम्, तत् साधुभिर्न धार्यम् किन्तु 'ताका' इति भाषाप्रसिद्धाद् यद् खण्डीकृतं वस्त्रं भवेत् तद् दातुः प्राप्य तस्योपभोगः करणीय इति सूत्राशयः ॥ सू० २४ ॥

ननु–अभिन्नवस्त्रधारणे को दोषस्तत्राह भाष्यकारः—'अभिण्ण०' इत्यादि ।

भाष्यम्—अभिण्णवत्थजुत्तस्स, भवे चोरभयाइयं ।
पडिलेहणबाधाइ, संजमत्तविराहणं ॥

छाया—अभिन्नवस्त्रयुक्तस्य भवेच्चौरभयादिकम् ।
प्रतिलेखनबाधादि संयमात्मविराधनम् ॥

अवचूरिः—अभिन्नवस्त्रयुक्तस्य साधोः चौरभयम् , चौरो हि–अभिन्नवस्त्रं दृष्ट्वा तल्लोभात्–चोरयितुमागच्छेत् , मारयेदपि कदाचित्साधुमित्यात्मविराधनासंभवः । तथा–तादृशविपुलवस्त्रस्य सम्यक् प्रतिलेखनमपि न सभवतीति तदकरणजनितोऽपि दोषः । प्रतिलेखनाधकरणे संयमविराधनं स्यात् , अतः साधुभिरभिन्नवस्त्रं न धारणीयम् ॥ सू० २४ ॥

सूत्रम्—जे भिक्खू लाउपायं वा दारुपायं वा मट्टियापायं वा सयमेव परिघट्टेइ वा संठवेइ वा जमावेइ वा परिघट्टेंतं वा संठवेंतं वा जमावेंतं वा साइज्जइ ॥ सू० २५ ॥

छाया—यो भिक्षुः अलाबूपात्रं वा दारुपात्रं वा मृत्तिकापात्रं वा स्वयमेव परिघट्टयति वा संस्थापयति वा 'जमावेइ' इति यमयति वा परिघट्टयन्तं वा संस्थापयन्तं वा यमयन्तं वा स्वदते ॥ सू० २५ ॥

चूर्णिः—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'लाउपायं वा' अलाबूपात्रं वा 'तुम्बा' इति लोकप्रसिद्धम् 'दारुपायं वा' काष्ठपात्रं वा, 'मट्टियापायं वा' मृत्तिकापात्रं वा 'सयमेव परिघट्टेइ' स्वयमेव परिघट्टयति–निर्माति । 'संठवेइ वा' सस्थापयति–तत्र–संस्थानमवयवविशेषः मुखादिकं पात्रस्य करोतीत्यर्थ । 'जमावेइ वा' यमयति–विषम समं करोति, तथाच–पात्राणां विषमभाग समीकरोतीत्यर्थः । तथा–'परिघट्टेंतं वा' परिघट्टयन्तं वा–निर्माणं कुर्वन्तं वा 'संठवेंतं वा' संस्थापयन्त वा, 'जमावेंत वा' यमयन्त वा, विशेषतो विषमभागस्य समतां कुर्वन्तं वा 'साइज्जइ' स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ।

तत्र—पूर्वघट्टितादिपात्राणा ग्रहणं कल्पते, तत्र–त्रिविधमपि पात्र बहुकर्मिताऽल्पकर्मिताऽपरिकर्मितभेदात् त्रिप्रकारकं भवतीति प्रकृतसूत्रविषये प्रथमोद्देशके–एव व्याख्यानं कृतं तत एव द्रष्टव्यम् । विशेषस्तु केवलमेतावानेव यत् प्रथमोद्देशके परकृत निषिद्धम् , अत्र तु स्वयंकरणस्य निषेध इति ॥ सू० २५ ॥

**सूत्रम्—जे भिक्खू दंडयं वा लट्ठियं वा अवलेहणियं वा वेणुसूइयं वा सयमेव परिघट्टेइ वा संठवेइ वा जमावेइ वा परिघट्टेंतं वा संठवेंतं वा जमावेंतं वा साइज्जइ ॥ सू० २६ ॥**

छाया—**यो भिक्षुः दण्डकं वा यष्टिकां वा अवलेहनिकां वा वेणुसूचिकां वा, स्वयमेव परिघट्टयति वा संस्थापयति वा यमयति वा, परिघट्टयन्तं वा संस्थापयन्तं वा यमयन्तं वा स्वदते ॥ सू० २६ ॥**

**चूर्णिः**—'**जे भिक्खू**' इत्यादि । '**जे भिक्खु**' यो भिक्षुः '**दंडयं वा**' दंडकं वा दण्डः–रजोहरणसम्बन्धी तम् '**लट्ठियं वा**' यष्टिकां वा–लघुदण्डं '**अवलेहणियं वा**'=अवलेहनिकां वा–कर्दमावगुण्ठितचरणे तदपनयनाय शलाकाविशेषस्ताम् , '**वेणुसूइयं वा**' वेणुसूचिका वा–वेणुर्वंशस्तन्मयी सूची ताम् . '**सयमेव परिघट्टेइ**' स्वयमेव परिघट्टयति, परिघट्टन निर्माणम् तथाच–दण्डादीनां निर्माणं करोतीत्यर्थः । '**संठवेइ वा**' संस्थापयति दण्डादिकस्य हस्तिमुखसिंहमुखादीनां निर्माणं करोति । '**जमावेइ वा**' यमयति वक्रदण्डादीन् ऋजून् करोति । '**परिघट्टेंतं वा**' परिघट्टयन्त–निर्माण कुर्वन्तम् , '**संठवेंतं वा**' संस्थापयन्तम्, '**जमावेंतं वा**' यमयन्त वक्र ऋजुं कुर्वन्तम् '**साइज्जइ**' स्वदतेऽनुमोदते स प्रायश्चित्तभाग्भवति ॥ सू० २६ ॥

**सूत्रम्—जे भिक्खू णियगगवेसियं पडिग्गहं धरेइ धरेंतं वा साइज्जइ ॥ सू० २७ ॥**

छाया—**यो भिक्षुर्निजकगवेषितं प्रतिग्रहं धरति धरन्तं वा स्वदते ॥ सू० २७ ॥**

**चूर्णिः**—'**जे भिक्खू**' इत्यादि । '**जे भिक्खु**' यो भिक्षु '**णियगगवेसियं**' निजकगवेषितम् , निजकः स्वजन सांसारिको मातृ- पितृ--बन्धु -बान्धवादिः तेनाऽन्विष्यानीतम् '**पडिग्गहं**' प्रतिग्रहं -पात्रम् '**धरेइ**' धरति पार्श्वे स्थापयति गृह्णाति । '**धरेंतं वा साइज्जइ**' धरन्तं पार्श्वे स्थापयन्तमन्यं स्वदतेऽनुमोदते स प्रायश्चितभाग्भवति ॥ सू० २७ ॥

**सूत्रम्—जे भिक्खू परगवेसियं पडिग्गहं धरेइ धरेंतं वा साइज्जइ ॥ सू० २८ ॥**

छाया—**यो भिक्षु परगवेषितं प्रतिग्रहं धरति, धरन्तं वा स्वदते ॥ सू० २८॥**

**चूर्णी**—'**जे भिक्खू**' इत्यादि । '**जे भिक्खू**' यो भिक्षुरित्यादि पूर्ववत् । नवरम्—'**परगवेसियं**' परगवेषितम् , तत्र–परोऽन्यः स्वजनातिरिक्तः सामान्यगृहस्थः विसंभोगी संयतो वा, तेन गवेषितमन्विष्यानीतम् ॥ सू० २८ ॥

**सूत्रम्—जे भिक्खू वरगवेसियं पडिग्गहं धरेइ धरेंतं वा साइज्जइ ॥**

छाया—यो भिक्षुर्वरगवेषितं प्रतिग्रहं धरति धरन्तं वा स्वदते ॥ सू० २९॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुरित्यादि पूर्ववत्। नवरम्–'वरगवेसियं' वरगवेषितम्। तत्र वरो नाम ग्रामे प्रधान. पुरुषस्तेन गवेषितमन्विष्यानीतम् ॥ सू० २९॥

संप्रति वरशब्दार्थमाह भाष्यकार—'जो जत्थ' इत्यादि।

भाष्यम्—जो जत्थ माणणिज्जो य, गामाइम्मि महत्तरो।
पामाणिओ पहाणो सो, वरो तत्थ पउज्जइ ॥

छाया—यो यत्र माननीयश्च ग्रामादौ महत्तर।
प्रामाणिक प्रधानः स वरस्तत्र प्रयुज्यते ॥

अवचूरिः—यः पुरुषो यत्र ग्रामादौ नगरादौ लोकैर्नागरिकै संमानितो नागरादिषु मुख्यः प्रामाणिक. प्रधानश्च, तत्र वरशब्द' प्रयुज्यते। तेनानीतं पात्रादिकं गृह्णतो ग्राहयतः गृह्णन्तमनुमोदमानस्याऽऽधाकर्मिकादिमिथ्यात्वाऽऽत्मविराधनसयमविराधनादयो दोषा भवन्ति ॥ सू० २९॥

**सूत्रम्—जे भिक्खू बलगवेसियं पडिग्गहं धरेइ धरेंतं वा साइज्जइ ॥**

छाया—यो भिक्षुर्बलगवेषित प्रतिग्रह धरति धरन्तं वा स्वदते ॥ सू० ३०॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुरित्यादि पूर्ववत्। नवरम्–'बलगवेसियं' बलगवेषितम्। बलवता–शरीरजनपदादिबलविशिष्टेन पुरुषेण गवेषितमन्विष्यानीतम् ॥ सू० ३०॥

भाष्यम्—जस्सोवरि पहू जो उ, बलड्ढो वा भवे अवि।
बलवंतो सो विन्नेओ, घरसामी जहा मओ ॥

छाया—यस्योपरि प्रभुर्यस्तु बलाढयो वा भवेदपि।
बलवान् स विज्ञेयो गृहस्वामी यथा मतः ॥

अवचूरिः—'जस्सोवरि' इत्यादि। यः पुरुषो यस्योपरि प्रभुत्वं–स्वकीयं प्रभावं करोति, तथा–बलाढ्यः बलेन–शरीरादिबलेन समृद्धो भवेत् स बलवान् विज्ञेयः। तत्र दृष्टान्तं दर्शयति–'घरसामी' इत्यादि। यथा-येन प्रकारेण गृहस्वामी स्वकीयपरिवारोपरि प्रभुत्वं कुर्वन् परीवारे बलवान् भवति, यथा वा–शरीरबलेनोर्जितः सिंहो वनपशुं प्रति बलं दर्शयन् बलवान् कथ्यते, यथा वा कश्चिद्विद्वान् सामान्यजनं प्रति स्वविद्याबलं दर्शयन् प्रभुर्बलवान् इति कथ्यते।

यद्वा–कश्चिदप्रभुरपि–अबलोऽपि बलवान् भवति-यथा गृहस्वामी, न तादृश प्रभु' किन्तु स्वपरिवारे बलवानिति कथ्यते, एतादृशबलवता पुरुषेणाऽन्विष्यानीतं पात्रं यो भिक्षुर्धरति, धरन्तं वाऽनुमोदते स प्रायश्चित्तभाग् भवति तथा तस्याज्ञाभङ्गानवस्थामिथ्यात्वसंयमात्मविराधनादयो दोषा भवन्तीति ॥ सू० ३०॥

**सूत्रम्—जे भिक्खू लवगवेसियं पडिग्गहं धरेइ धरंतं वा साइज्जइ ॥**

**छाया**—यो भिक्षुर्लवगवेषितं प्रतिग्रहं धरति धरन्तं वा स्वदते ॥ सू० ३१ ॥

**चूर्णी**—'जे भिक्खू, इत्यादि । 'जे भिक्खू, यो भिक्षुरित्यादि पूर्ववत् । नवरम्—'लवगवेसियं,लवगवेषितम् तत्र—लवो नाम-यो दानफलं दर्शयित्वा वस्त्रपात्रादिकमुत्पादयति, तादृशः पुरुषो लव इति कथितो भवति, तेनान्विष्यानीतम् । यो हि भिक्षुर्वस्त्रपात्रादिस्वामिनं वस्त्रपात्रादिदानस्य फलं श्रावयित्वा तस्माद्वस्त्रपात्रादिकमादत्ते दापयति चान्यस्मै । तथा—यथोक्तव्यापारेणाऽऽददानमन्यमनुमोदते स प्रायश्चित्तभागिति भावः ॥ सू० ३१ ॥

**भाष्यम्**—दाणफलं तु दंसीय, आदेइ दावए खलु ।
वत्थपायाइगं नूणं, तारिसो लव वुच्चइ ॥

**छाया**—दानफलं तु दर्शयित्वा आदत्ते दापयेत्खलु ।
वस्त्रपात्रादिक नूनं तादृशो लव उच्यते ॥

**अवचूरिः**—'दाणफलं' इत्यादि । यो भिक्षु दानस्य फलं दर्शयित्वा वस्त्रपात्रादिकमादत्ते—आनयति लोकेभ्य, दापयति चाऽन्यस्मै स लव उच्यते—कथ्यते । तत्र दानं द्विविधम्—लौकिकं लोकोत्तरं च । लोकमुदिश्य यद्दीयते तल्लौकिकम् । कर्मनिर्जरार्थं दातव्यमित्तिबुद्धया पात्राय महाव्रतधारिणे यद्दानं तल्लोकोत्तरम् ॥ सू० ३१ ॥

**सूत्रम्—जे भिक्खू णितियं अग्गपिंडं भुंजइ भुजंतं वा साइज्जइ ॥**

**छाया**—यो भिक्षुर्नैत्यिकं-अग्रपिण्डं भुङ्क्ते भुञ्जन्तं वा स्वदते ॥ सू० ३२ ॥

**चूर्णी**—'जे भिक्खु' इत्यादि । 'जे भिक्खु' यो भिक्षुः 'णितियं' नैत्यिकं नियतं वा, तत्र नैत्यिकं प्रतिदिनम्, नियतं नियतकालप्रतिबद्धं-यथा कस्मिश्चिद् गृहे कचित् दिनद्वयमन्तराकृत्य दिनत्रयादिकं वा व्यवधानीकृत्य नियमतो गमन नियतशब्दार्थः। 'अग्गपिंडं' अग्रपिण्डम् अग्रः प्रधान. पिण्डः—अग्रपिण्डस्तम् , अथवा भोजनात्पूर्वं यो निष्कास्यते सः तम् अग्रपिण्डम् । यदा तदा साधुभ्योऽन्नपानवितरणकाले अग्रपिण्डं भुङ्क्ते भुञ्जन्त वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवतीति ॥ सू० ३२ ॥

**भाष्यम्**—निमंतणं उप्पीलणं, परिमाणं सभावियं ।
आइल्ला तिण्णि नो कप्पे, कप्पेज्जा य चउत्थगं ॥

**छाया**—निमन्त्रणमुत्पीलनं परिमाणं स्वाभाविकम् ।
आद्यास्त्रयो न कल्पन्ते कल्पते च चतुर्थकम् ॥

अवचूरिः—'निमंतणं' इत्यादि 'निमंतणं' निमन्त्रणम्–आमन्त्रणम्, भोजनादिग्रहणार्थमभ्यर्थनमित्यर्थः १। 'उप्पीलणं' देशी शब्दः तदर्थस्तु–उपहासः २। परिमाणं भोजनस्येयत्ता ३। स्वाभाविकं स्वतः सिद्धम्, यथा–गृहस्थस्य दानम् ४। अत्राऽऽद्यास्त्रयो न कल्पन्ते, चतुर्थोऽपि नैत्यिकाग्रपिण्डदोषरहितः स्वाभाविकपक्षः साधूनां कल्पते।

अयं भावः–निमन्त्रणोप्पीलणपरिमाणानामेतत्स्वरूपम्, तथाहि–कश्चित् श्रद्धालुः श्रावकः श्रमणसमीपमागत्य निवेदयति–भगवन्! ममोपरि क्रियतामनुग्रहः, मद्गृहे समागत्य भक्तपानादिकं गृह्यताम्। इति प्रथमो भेदः (निमन्त्रणम्) १।

'उप्पीलणं' यथा–श्रमणो वदति–भो श्रावक! तवोपरि करोम्यनुग्रहम् किन्तु–कथय यत् किं दास्यसि?। श्रावको वदति–यद्भवतामभीष्टम्, येन वस्तुना भवतः प्रयोजनं तद्दास्यामि। तदनन्तरं साधुरुपहासमिव कुर्वन् वदति–भो श्रावक! अत्र प्रतिश्रुत्य गृहं नेष्यसि तत्र गतः सन् यदि नो दास्यसि तदा किम्? एवं प्रकारेण–उप्पीलणमुपहासं करोति। इति द्वितीयो भेदः २।

अथ परिमाणस्वरूपमाह—अवश्यमेव दास्यामि नाऽत्र सन्देहः। एवं कथिते गृहस्थे साधुः परिमाणं वदति–भोः श्रावक! कियत्परिमाणं दास्यसि? कियत्कालपर्यन्तं दास्यसि? किं दास्यसि?, यदि स्वल्पं दास्यसि अदत्तवत् स्यात्। ततो दाता वदति–यावता भक्तेन–पानेन वा भवतः प्रयोजनम्, यावन्तं वा कालं भवतः प्रयोजनं तावन्तं कालं भवते परिपूर्णमोदनादिकं दास्यामि, किं बहुना–यद्वस्तु भवते रोचते, यावत्परिमाणं वा रोचते, यावत्कालं वा तावत्कालपर्यन्तमपरिहीनमपरिश्रान्तोऽहं दास्यामि। इति तृतीयो भेदः ३। अत्र—निमन्त्रणोप्पीलणपरिमाणेषु प्रायश्चित्तं भवति। स्वाभाविकं यद् भक्तपानादिकमात्मार्थं गृहस्थेन निष्पादितं नैत्यिकाग्रपिण्डदोषवर्जितं च तदेव साधुभिर्ग्राह्यम् नत्वन्यत्। इति चतुर्थो भेदः ४।

अत्राह कश्चित्–चतुष्प्रकारकेऽपि अग्रपिण्डे न किमपि दोषं पश्यामि? आचार्यः प्राह–यत्स्वात्मार्थं स्वभावत एव निष्पादितं तत्–नितिकम् अनिमन्त्रितमनुप्पीलणमपरिमाणमपि यदि निमन्त्रणादिभिक्षाकर्णेनाऽपि स्पृष्टं तत्साधूनां न कल्पते। एतत् त्रयातिरिक्तं स्वाभाविकमपि भक्तपानादिकं यदि नियताग्रपिण्डदोषवर्जितं भवेत् तत् साधूनां कल्पते इति।

स्वात्मार्थे निष्पादितेऽपि नियताग्रपिण्डदोषनिमन्त्रणादिदोषदूषिते इमे दोषा भवन्ति–आत्मार्थं निष्पन्नेऽपि–उद्गमादिदोषा भवन्ति, साधुनिमित्तमयं पिण्डो नियमितः, इत्यवश्य दातव्यम्, इति कृत्वा कुण्डादिषु स्थापयति तस्मात्–निमन्त्रणादिपिण्डो वर्जनीयः॥ सू० ३२॥

सूत्रम्—जे भिक्खू णितियं पिंडं भुंजइ भुंजंतं वा साइज्जइ ॥ ३३ ॥

छाया—यो भिक्षुर्नैत्यिकं पिण्डं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ३३ ॥

चूर्णी - 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'णितियं' नैत्यिकं 'पिंडं' पिण्डं अहरहरेकस्मादेव गृहादानीतम् 'भुंजइ' भुङ्क्ते, भोजयति 'भुंजंतं वा साइज्जइ' भुञ्जानं वा स्वदतेऽनुमोदते तस्याज्ञाभङ्गादिका दोषा भवन्ति ॥ सू० ३३ ॥

सूत्रम्—जे भिक्खू णितियं अवड्ढभागं भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ३४ ॥

छाया—यो भिक्षुर्नैत्यिकमपार्द्धभागं भुङ्क्ते-भुञ्जन्तं वा स्वदते ॥ सू० ३४ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'णितियं' नैत्यिकम् 'अवड्ढभागं' अपार्द्धभागं—भक्तस्यार्द्धभागमपि अर्थात् पात्रे स्थाल्यादौ स्थापितभोजनस्यार्धभागस्त्रिभागश्चतुर्थभागो वा यो दानार्थं निष्कासितः यस्मिन् गृह्यमाणेऽन्यस्यान्तरायसम्भवात्, एवंविधभोजनापार्द्धभागम् 'भुंजइ' भुङ्क्ते, भोजयति 'भुंजंतं वा साइज्जइ' अपार्द्धभागं भुञ्जानं स्वदतेऽनुमोदते तस्याज्ञाभङ्गादिका दोषा भवन्ति ॥ सू० ३४ ॥

सूत्रम्—जे भिक्खू णितियं भागं भुंजइ भुंजंतं वा साइज्जइ ॥ ३५ ॥

छाया—यो भिक्षुर्नैत्यिकं भागं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ३५ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'णितियं भागं' नैत्यिकं भागं यत्र प्रतिदिन यो भागो दानार्थं निष्कास्यते त भागं 'भुंजइ' भुङ्क्ते 'भुंजंतं वा साइज्जइ' भुञ्जानं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ३५ ॥

सूत्रम्—जे भिक्खू णितियं ऊणड्ढभागं भुंजइ भुंजंतं वा साइज्जइ ॥

छाया—यो भिक्षुर्नैत्यिकमूनार्द्धभागं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ३६ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'णितियं' नैत्यिकम्, 'ऊणड्ढभागं' ऊनार्धभागं—त्रिभागादितोऽप्यर्द्धभाग ऊनार्द्धभागस्तम् 'भुंजइ' स्वयं भुङ्क्ते । 'भुंजंतं वा साइज्जइ' भुञ्जानं वा स्वदते । यः साधुः पुण्यार्थरक्षितभोजनमध्यात् कमपि भागं भुङ्क्ते, भोजयति, तथा—भुञ्जानमनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ३६ ॥

भाष्यम्—पिंडो भत्तद्धगो णेओ, तयद्धं च अवड्ढगो ।
भागो तिभागो तस्सद्धं, ऊणड्ढो सो वियाहिओ ॥
पिंडे णिइए अवड्ढे, भागे ऊणड्ढगे तहा ।
एस एव गमो णेओ, सव्वया सत्थसंमओ ॥

छाया—पिण्डो भक्तार्थको ज्ञेय-स्तदर्धं वाऽपार्धकः ।
भागस्त्रिभागस्तस्यार्धं ऊनार्धः स व्याख्यातः ॥
पिण्डे नैत्यिकेऽपार्धे भागे ऊनार्द्धके तथा ।
एष एव गमो ज्ञेयः सर्वदा शास्त्रसंमतः ॥

अवचूरिः — 'पिंडो भत्तट्ठगो'—इत्यादि । पिण्डः—पिण्डशब्दोऽत्र भक्तार्थकः भक्तार्थवाचको ज्ञेयः, ततः पिण्ड इति भक्तमित्यर्थः, तस्य यदर्द्धं सोऽपार्द्धभागः प्रोच्यते, भागः त्रिभागः, तथा तस्यापि यद् अर्द्धं स ऊनार्द्धः ऊनार्द्धभागः ।

ततो नैत्यिके पिण्डे, तथा सूत्रघटकेऽपार्धे तथा भागे, तथा ऊनार्धके सर्वत्र एष एव गमोऽग्राह्यरूपः तीर्थकरगणधरैः सर्वदा—सर्वकालं व्याख्यातः कथितः, अत एव स शास्त्रसम्मतो ज्ञेयः । तत्र—गमस्वरूपमेव दर्शयति—'पिंडे' इत्यादि । सूत्रघटकपिण्डपदं भक्तार्थकं भवति, पिण्डो भक्तार्थ इति पर्यायः । यथा चतुस्त्रिंशत्सूत्रघटक 'अवड्ढं' इति पदं पिण्डार्धबोधकम् , पिण्डस्यार्धभाग इत्यर्थः । भागपदम्—पञ्चत्रिंशत्सूत्रघटकपिण्डस्य त्रिभागबोधकम् । तथा षट्त्रिंशत्सूत्रघटकम् 'ऊणड्ढभाग'—पदं त्रिभागस्याप्यूनाऽर्धभागबोधकं ज्ञातव्यम्, एतत्सर्वं दानार्थं निष्कासितविषयकं बोध्यम् , तद्ग्रहणे साधुर्दोषभाग् भवति ॥ सू० ३६ ॥

सूत्रम्—जे भिक्खू णितियं वासं वसइ वसंतं वा साइज्जइ ॥ सू० ३७।

छाया—यो भिक्षुर्नैत्यिकं वासं वसति वसन्तं वा स्वदते ॥ सू० ३६ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'णितियं वासं' नैत्यिकं वासं वर्षाकालवर्जिते ऋतुबद्धकालातिरिक्तकालेऽप्यकारणमेकस्मिन् स्थाने नित्यवासम् 'वसइ' वसति—वासं करोति कारयति 'वसंतं वा साइज्जइ' वसन्तं वा स्वदतेऽनुमोदते, स हि—

शीतकालाद्वर्षकालात् , परतः कारणेऽसति ।
प्रायश्चित्ती वसन्नित्यं, वसतो वाऽनुमोदनात् ॥१॥ इति ॥ सू०३७॥

सूत्रम्—जे भिक्खू पुरेसंथवं पच्छासंथवं वा करेइ करेंतं वा साइज्जइ।

छाया—यो भिक्षुः पुरःसंस्तवं पश्चात्संस्तवं वा करोति-कुर्वन्तं वा स्वदते ॥३८॥

चूर्णी — 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'पुरेसंथवं' पुरःसंस्तवम् वस्त्रपात्रादिदातुर्दानात्पूर्वं—पूर्वकालमेव संस्तवम् प्रशंसनम्—परिचयं वा 'संस्तवः स्यात्परिचयः' इति वचनात् , 'पच्छासंथवं' पश्चात्संस्तवम् , वस्त्रपात्रादिदानानन्तरकाले संस्तवं प्रशंसनम्—परिचयं वा 'करेइ' करोति 'करेंतं वा साइज्जइ' कुर्वन्तं वा स्वदते—अनुमोदते स प्रायश्चित्तभाग् भवति ।

''दातुश्च दानात्परतः पुरो वा, कुर्वन् स्तवं वाऽन्यश्च कारयन् वः ।
'कुर्वन्तमन्यं यदि वाऽनुमोदते, आज्ञादिभङ्गाल्लभते स दोषान् ॥१॥ इति सारः ॥ सू०३८॥

**भाष्यम्**—दव्वे खेत्ते तहा काले, भावे संथव इस्सइ ।
सपरोभयसंजाओ, संतासंतो पुणो दुहा ॥

**छाया**—द्रव्ये क्षेत्रे तथा काले, भावे संस्तव इष्यते ।
स्वपरोभयसंजातः, सन्नसन् पुनर्द्विधा ॥

**अवचूरिः**—'दव्वे'-इत्यादि । संस्तवः प्रशंसनम् चतुष्प्रकारक इष्यते भवति । तद्यथा—द्रव्ये—द्रव्यविषये १, क्षेत्रे—क्षेत्रविषये २, काले—कालविषये ३, तथा—भावे—भावविषये चेति ४, द्रव्यादीनां चतुर्भेदभिन्नत्वात्, तत्सम्बन्धी संस्तवोऽपि चतुर्विध इष्यते कथ्यते इत्यर्थः । पुनः स्वपरोभयसंजात' पुनरेकैक' स्वपरोभयभेदात् त्रिविध संजात' । पुन. स सदसद्भेदेन प्रत्येकं द्विधा भवति, तत्र—आत्मपरोभयभेदादेकैकस्त्रिविध ,यथा साधुरात्मनः संस्तवं करोति १, साधुः परस्य संस्तवं करोति २, साधुरुभयोरपि संस्तवं करोति ३ । अथवा—आत्मना संस्तवं करोतीति-आत्मसंस्तव', इति व्युत्पत्त्या साधुरात्मना गृहस्थं संस्तौति—एष आत्मसंस्तव १, गृहस्थः साधु स्तौति—इति परसंस्तव' २, द्वावपि परस्पर संस्तवं कुरुत इत्युभयसंस्तव ३ । सदसद्भेदेन पुनर्द्विधा । एतेषामेकैकः पुनर्द्विविधो द्विप्रकारको भवति । सन्—विद्यमान' १, असन्-अविद्यमानश्च २ । तत्र सद्रूपे सत्सु गुणेषु प्रशंसाकरणम् १, असद्रूपेणेति असत्स्वपि गुणेषु प्रशंसाकरणम् २ । अथवा सदिति विद्यमाने तस्मिन् तस्य समक्षं प्रशंसनम् १, असदिति अविद्यमाने तस्मिन् तस्य परोक्षं प्रशंसनमिति २ । द्रव्य-क्षेत्र-कालैस्त्रिविधसंस्तवमध्ये **द्रव्यसंस्तवमाह**—यथा कश्चित् परेण पृष्टः—किं भवान् पूर्वं धनवानासीत् ? साधुर्वदति—एवमहं धनवानासम् ? स साधुः पूर्वं धनवानासीन्न वेति सन्देह किन्तु तथा वदति । ततो गृहस्थ आह—अमुको हि धनवान् श्रेष्ठी—अमुकनामानं भवन्तं न जानाति भवानेव कथयति, दरिद्र. प्रव्रजति न धनिक इति । तत्—श्रुत्वा गर्वयुक्त साधु. परं निन्दन् स्वात्मानं प्रशंसन् एव वदति—यथेदानीं भवानैश्वर्ययुक्तस्तथाऽहमपि पूर्वमासम्, इति ।

**क्षेत्रसंस्तवमाह**—यथा—साधुं प्रति कश्चित् पृच्छति—त्वं कस्मात् क्षेत्रात् प्रव्रजितवान् साधुर्वदति—युष्माकमेवाहं सहवासी ।

**कालसंस्तवमाह**—कस्मिन् वयसि प्रव्रजितः ? इति पृष्टो वदति—त्वत्सदृशवयस्क एव प्रव्रज्यां प्राप्तवानस्मि । अथवा—प्रथमे वयसि—उद्वाहिते सति प्रव्रजितः स्थापितविवाहदिने वा प्रव्रजित' ।

**भावसंस्तवमाह**—भावसंस्तवो द्विप्रकारक संयते वचने च । यथा कश्चित् साधुं पृच्छति—योऽमुकः प्रव्रजितः स त्वत्सदृश एव ? साधुराह- एवमेव । अथवा- तूष्णीं स्थितो भवति, वदति वा—क एवं पृच्छति ?

वचनस्तवः पूर्वसंस्तवः-भदन्त दाने पूर्वमेव संस्तवं करोति-भद्रमेनम सन्तुष्टोऽभिलषितं मे दास्यति । वचनस्तवः पश्चात्संस्तवः-दाने दत्ते वा वचसा संस्तवं करोतीति संक्षेपः । एव गुण-संस्तवोऽपि पूर्वपश्चाद्भेदेन विज्ञेयः ॥ सू०३८॥

**सूत्रम्—जे भिक्खू समाणे वा वसमाणे वा गमाणुगामं दूइज्जमाणे वा पुरेसंथुयाणि वा पच्छासंथुयाणि वा कुलाइं पुव्वामेव अणुप्पविसित्ता पच्छा भिक्खायरियाए अणुप्पविसइ अणुप्पविसंतं वा साइज्जइ ॥ सू० ३९॥**

छाया—यो भिक्षुः समाणो वा वसमाणो वा ग्रामानुग्रामं द्रवन् पुरःसंस्तुतानि वा पश्चात्संस्तुतानि वा कुलानि पूर्वमेवानुप्रविश्य पश्चात्-भिक्षाचर्यायै अनुप्रविशति अनुप्रविशन्तं वा स्वदते ॥ सू०३९॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'समाणे वा' समाणो वा यो गृद्धिरहितः समर्यादं स्थिरवासं स्थितः स 'समाण' इत्युच्यते, एतादृशः साधुः, तथा योऽष्ट-मासिकं ऋतुबद्धकालं, चातुर्मासिकं वर्षाकालमिति नवकल्पविहारी भवति स 'वसमाण' इति कथ्यते 'समाण' 'वसमाणः' इति द्वावपि सैद्धान्तिकौ शब्दौ, एतादृशः कोऽपि साधुः 'गामाणुगामं दूइज्जमाणे' ग्रामानुग्रामं द्रवन् एकस्माद्ग्रामादपरं ग्रामं विहारं कुर्वन् 'पुरेसंथुयाणि वा' पुरः-संस्तुतानि—गृहस्थावस्थायां पूर्वं बाल्ये वयसि संस्तुता वा परिचिता ये मातृ-पितृ-बान्धवादयस्ते यत्र वसन्ति तानि, 'पच्छासंथुयाणि' पश्चात्—युवावस्थायाम् संस्तुतानि—परिचिताः श्वश्रू-श्वशुर-श्यालकादयः ते, वसन्ति यत्र तानि 'कुलाइं' कुलानि दीक्षाग्रहणात् प्राग्वर्त्तीनि पूर्वापरसंस्तु-तानां गृहाणि 'पुव्वामेव' पूर्वमेव—भिक्षाग्रहणात्प्रागेव 'अणुप्पविसित्ता' अनुप्रविश्य—गत्वा 'पच्छा भिक्खायरियाए' पश्चात्-ततः परम् पूर्वापरसंस्तुतगृहाणि प्रविश्य तान् स्वागमननिवेदन-बुद्ध्या संबोध्य तदनु पश्चात् भिक्षाचर्यायै 'अनुप्पविसइ' अनुप्रविशति—गच्छति भिक्षार्थं प्रस्तुतो भिक्षाग्रहणं पृष्ठतः कृत्वा ज्ञातिकुलं पुरा प्रयाति ततो यो भिक्षां चरति 'अणुपविसंतं वा साइज्जइ' अनुप्रविशन्तम् इत्थमन्यं यः स्वदतेऽनुमोदते स प्रायश्चित्तभाक् ॥ सू० ३९॥

सूत्रे 'समाणे' 'वसमाणे' इति पाठेऽयमर्थः—

भाष्यम्—समाणे वुड्ढवासी य, वसमाणे तहेयरो ।
गमणं दुविहं वुत्तं, निक्कारण-सकारणं ॥

छाया—समाणो वृद्धवासी च, वसमाणस्तथेतरः ।
गमनं द्विविधमुक्तं निष्कारण-सकारणम् ॥

**अवचूरिः**— यद्वा सूत्रे-'**समाणे**' इति वृद्धवासवासी-वृद्धत्वग्लानत्वादिकारणवशात् स्थिरवासं स्थितः, तथा- इतरः- '**वसमाणे**' नवकल्पविहारी । तत्राऽष्ट कल्पाः ऋतुबद्धकालसंबद्धाः, नवमः कल्पो वर्षाकालः, तत्र विहारी नवकल्पविहारी ।

गमनं द्विविधं--द्विप्रकारकमुक्त- कथितम्—एकं निष्कारणम् १, अपरं-सकारणम् २ । कारणविशेष-माश्रित्य जायमानं सकारणम् , कारणमन्तरेण जायमानं निष्कारणम् । तत्र सकारण गमनं यथा—आचार्यप्रभृतीनां वैयावृत्यनिमित्तं भिक्षानिमित्तं वा गमनम् । एवं -निष्कारणमेव ग्रामानुग्रामं गमनम्, अकाले वा भिक्षार्थं गमनम् । तत्र इमे वक्ष्यमाणाः भूयांसो दोषा भवन्ति, तथाहि—कदाचिन्मार्गो-ऽशोभनो भवेत् , भिक्षा वसतिरपि न सुलभा भवति, स्वपक्षपरपक्षेभ्योऽपमानं भवति, भिक्षार्थं निषिद्ध-गृहे गच्छतः शास्त्रस्य—जिनप्रवचनस्य निन्दा भवति, पृथिवीकायिकादीनां जीवानां विराधना भवति। एवं निष्कारण गच्छता षड्जीवनिकायानां विराधना क्रियते—इति संयमविराधना भवति । कण्ट-यादिद्वारा पादे क्षतिर्भवतीत्यात्मविराधनाऽपि । सागारिकभयात् प्रमादेन वा परिश्रान्त उपधीनां प्रतिलेखनं न करोति, उपधीनां हरणं वा भवति । एवं भिक्षाकालातिक्रमणे ग्रामं प्राप्तस्तत्राऽनेष-णीयमप्याहारं ग्रहिष्यति । हिंस्रजन्तुना खादितः आत्मविराधनं प्राप्स्यति । एव—समयातिक्रमे भिक्षार्थं गच्छतः पश्चात्कर्मदोषा अपि भवेयुः । इत्येते अकारणगमने दोषा आपद्यन्ते इति । सकारणं गमनं द्विविधम्—निर्व्याघाते व्याघाते च गमनम् । तत्र-निर्व्याघातगमनम्—ऋतुबद्धकल्पे वर्षाकल्पे वा समाप्ते क्षेत्रात् क्षेत्रान्तरगमनम् । तत्र द्वयोः कालयोर्मध्ये एकतरस्मिन्नपि काले मासकल्प-प्रायोग्यानि क्षेत्राणि यो लङ्घयति स प्रायश्चित्तभाक् । सम्प्रति व्याघातेन मासकल्पप्रायोग्यं क्षेत्रा-न्तरं संक्रामति, तत्र-व्याघातकारणमाह—अशिवादिगृहीत क्षेत्रम् , तत्र स्वाध्यायादिक सम्यक् न भवति, उपधिर्वा तत्र न प्राप्यते, आचार्यादिप्रायोग्यं वा नास्ति । एतादृशे कारणे व्याघात-गमनं भवति । कारणविशेषमाश्रित्यैकस्मात् क्षेत्रात् क्षेत्रान्तरं गच्छतो दोषो न भवति यस्मात् स तीर्थकराज्ञां नातिक्रामतीति । अत्र सकारणानामधिकारः । निष्कारण गच्छतां तु दोषो भवत्येव । एवं पूर्वोक्तप्रकारेण विहारं कुर्वतां संस्तव—इत्थं भवति ॥ सू० ३९॥

पुनराह भाष्यकारः —

**भाष्यम्**— **कुलसंथवो य तेसिं, गिहत्थधम्मे तहेव सामण्णे ।**
**पुण एक्केक्को दुविहो, पुव्वं पच्छा य णायव्वो ॥**

छाया— **कुलसंस्तवश्च तेषां गृहस्थधर्मे तथैव श्रामण्ये ।**
**पुनरेकैको द्विविधः पूर्वं पश्चाच्च ज्ञातव्यः ॥**

**अवचूरिः**—'**कुलसंथवो**' इत्यादि । तेषाम् पूर्वोक्तप्रकारेण विहारं कुर्वतां भिक्षूणां संस्तवः द्विविधो—द्विप्रकारको भवति । तत्र-संस्तवो नाम परिचयः, स च द्विधा भवति—गृहि-

धर्मे–गृहस्थे १, श्रामण्ये–साधुपर्याये च २। स च गृहिधर्मे स्थितस्य परिचयो द्विधा द्विप्रकारकः–पूर्वसंस्तवः १, पश्चात्संस्तवः २। तत्र–पूर्वसंस्तुताः परिचिताः–पितृ–मातृ–प्रभृतयः, पश्चात्–संस्तुताः परिचिताः श्वशुर–श्वश्रूप्रभृतय ।

एवं श्रामण्ये स्थितस्य परिचय पूर्वसस्तुतः पश्चात्संस्तुतः। अथ साधूनां पूर्वं विहारसमये ये परिचितास्ते पूर्वसस्तुताः। ये वर्तमानविहारकाले संस्तुतास्ते पश्चात्संस्तुता। एतेषां पूर्व-सस्तुत–पश्चात्संस्तुतानां श्रावकादीनां गृहे यः साधुः प्राप्तभिक्षाकाले प्रविशति, अथवा व्यतिक्रा-न्तभिक्षाकाले प्रविशति तस्याऽऽज्ञाभङ्गानवस्थामिथ्यात्वादिदोषा. सम्भवन्ति, तथा संयमविराधना आत्मविराधना च भवति। तत्र संयमविराधना चेत्थम्–अकाले भिक्षार्थं परिभ्रमन्तं–गेहाद्गेहा-न्तरं गच्छन्तं साधुं दृष्ट्वा पूर्वसंस्तुता पश्चात्संस्तुता वा श्रावकादय उदगमादिदोषयुक्तमाहार निष्पादयिष्यन्ति, अतोऽकाले भिक्षार्थं तत्र साधुभिर्न गन्तव्यम् इति। अनाभोगादिकारण-वशात् अकालेऽपि श्रावककुले प्रवेशो न निषिद्धः। यद्वा ग्लानाद्यर्थमकालेपि प्रविशेत्। यद्वा–आकस्मिके विषूचिकादिरोगे समुपस्थिते पूर्वसंस्तुतादिकुलं प्रविशति। यद्वा यस्मिन् काले राज्ञा गमन निवारित 'कर्फ्यू' इति प्रसिद्धम्, तत्समये यदि चलिष्यति तदा द्रक्ष्यति राज-पुरुषः, इतिकृत्वाऽकालेऽपि चलति यदि तदा तादृशो दोषो न भवति श्रमणानाम्। अका-रणे पूर्वसंस्तुतादिगृहं वेलातिक्रमेण यदि गच्छति तदा सूत्रप्रतिपादितं प्रायश्चित्तं भवत्येवेति भावः ॥ सू० ३९ ॥

**सूत्रम्—जे भिक्खू अण्णउत्थिएण वा गारत्थिएण वा पारिहारिओ वा अपारिहारिएण सद्धिं गाहावइकुलं पिंडवायपडियाए णिक्खमइ वा अणुप्पविसइ वा, णिक्खमंतं वा अणुप्पविसंतं वा साइज्जइ॥सू०४०॥**

**छाया—यो भिक्षुः अन्ययूथिकेन वा गृहस्थेन वा पारिहारिको वा अपारिहारि-केण सार्धम् गृहपतिकुलं पिण्डपातप्रतिज्ञया निष्क्रामति वा–अनुप्रविशति वा निष्क्रामन्तं वा–अनुप्रविशन्तं वा स्वदते ॥ सू० ४० ॥**

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षु 'अण्णउत्थिएण वा' अन्य-यूथिकेनाऽन्यतीर्थिकेन, 'गारत्थिएण वा' गृहस्थेन वा 'पारिहारिओ वा' पारिहारिको वा–मूलो-त्तरगुणधारी परिहारतपोवाहको वा भिक्षुः 'अपारिहारिएण' अपारिहारिकेण–अपारिहारिको मूलोत्तरगुणदोषयुक्तः पार्श्वस्थादिस्तेन 'सद्धिं' सार्धम्–युगपदेकत्रेत्यर्थः 'गाहावइकुलं' गाथा-पतिकुलम्, गाथा–गृह तस्य पतिः गाथापतिः गृहस्थः, तस्य कुलं प्रति 'पिंडवायपडियाए' पिण्डपातप्रतिज्ञया भिक्षाग्रहणबुद्ध्या 'णिक्खमइ' निष्क्रामति–भिक्षां नीत्वा गृहस्थगृहात् निर्ग-

च्छति 'अणुप्पविसइ वा' अनुप्रविशति–भिक्षार्थं गृहस्थगृहे प्रवेशं करोति । 'णिक्खमंतं वा' निष्क्रामन्तं बहिरायान्तम्, 'अणुप्पविसंतं वा' अनुप्रविशन्तम्, 'साइज्जइ' स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ४० ॥

अत्राह भ-ष्यकारः—

भाष्यम्—नो कप्पए य भिक्खुस्स, अण्णुत्थिय–गिहत्थिहिं ।
तहेव पारिहारिस्स, तव्विपक्खेण केणवि ॥
सद्धिं णिक्खमिउं णिच्चं, पविसित्तुं तहेव य ।
णिक्खमणं पवेसं चे, जो करे दोसवं भवे ॥

छाया—नो कल्पते च भिक्षोः, अन्ययूथिकगृहस्थैः ।
तथैव पारिहारिणः, तद्विपक्षेण केनापि ॥
सार्धं निष्क्रमितुं नित्यं, प्रवेष्टुं तथैव च ।
निष्क्रमणं प्रवेशं चेद् यः कुर्याद् दोषवान् भवेत् ॥

अवचूरिः—'नो कप्पए' इत्यादि । भिक्षोः श्रमणस्यान्यतीर्थिकैः गृहस्थैर्वा, तथा पारिहारिकस्य मूलोत्तरगुणयुक्तस्य तद्विपक्षेण अपारिहारिकेण मूलोत्तरगुणदोषवता पार्श्वस्थादिना सार्धं गृहिगृहे भिक्षार्थं निष्क्रमितुं प्रवेष्टुं वा न कल्पते नैव कथमपि युज्यते । एतैः सह निष्क्रमणं प्रवेशनं च कुर्वतः साधोः पारिहारिकस्य चाधाकर्मिकादिदोषाः समापद्यन्ते । यः कोऽपि भिक्षुः पारिहारिकश्च यदि एतैः सह निष्क्रमणं प्रवेशं च कुर्यात् तदा स आज्ञाभङ्गादिदोषभाग् भवति । सूत्रे 'गाहावइकुलं' इति पदं, तस्याऽयमर्थः–गाथा–गृहं तस्य पतिः–स्वामी, दारापत्यादिसमुदायविशिष्टो गृहस्थः, तेषां कुलं–समूहः ।

तत्र–'पिंडवायपडियाए' इत्यस्य व्याख्या–पिण्डोऽशनादिकम्, तस्य गृहिणा दीयमानाऽऽहारस्य पातः ससत्कारं साधवे समर्पणम्, तस्य प्रतिज्ञया मध्यस्थभावेन ग्रहणबुद्ध्या । तथा 'अणुप्पविसइ' तस्याऽयमर्थः–अनु–पश्चात् चरकादिषु भिक्षामादाय गतेषु । अथवा–भोजनकालतः पश्चात् भोजनकालसमाप्त्यनन्तरम्, एवमनुशब्दः पश्चाद्योगे प्रसिद्धः, भिक्षुः पारिहारिकश्च प्रविशतीत्यर्थः । गृहि–परतीर्थिकाऽपरिहारिकाऽन्यतमेन सह प्रविशतः श्रमणस्य पारिहारिकस्य च–आज्ञाभङ्गानवस्थामिथ्यात्वसंयमविराधनाऽऽत्मविराधनादिका दोषा भवन्ति ।

तथा–परिव्राजकादिभिः सह भिक्षार्थं गमने प्रवचनस्य निन्दा भवति । लोको वदति–परिव्राजकादिप्रसादाल्लभ्यते भिक्षादिकम्, स्वयं न लभ्यते असारवचनप्रवृत्तत्वात् । अथवा–लोको वदेद्–अलब्धिमन्त एते जैनभिक्षुकाः परभवेऽदत्तदानाः आत्मानं न जानन्ति, अत एभिः सह परिभ्रमन्ति तस्मात् कारणाद् एभिः सह न गन्तव्यम् ॥ सू० ४० ॥

**सूत्रम्—जे भिक्खू अण्णउत्थिएण वा गारत्थिएण वा पारिहारिओ वा अपारिहारिएण सद्धिं बहिया वियारभूमिं वा विहारभूमिं वा णिक्खमइ वा पविसइ वा, णिक्खमंतं वा पविसंतं वा साइज्जइ ॥ सू० ४१॥**

छाया—यो भिक्षु अन्ययूथिकेन वा गृहस्थेन वा, पारिहारिको वा अपारिहारिकेण सार्द्धं बहिर्विचारभूमिं वा विहारभूमिं वा निष्क्रामति वा प्रविशति वा, निष्क्रामन्तं वा प्रविशन्तं वा स्वदते ॥ सू० ४१ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'अण्णउत्थिएण वा' अन्ययूथिकेन वा-परतीर्थिकेन 'गारत्थिएण वा' गृहस्थेन वा, तथा पारिहारिको वा अपारिहारिकेण मूलोत्तरगुणदोषवता पार्श्वस्थादिना 'सद्धिं' सार्धम् एकत्र मिलित्वा 'बहिया' बहिः-'वियारभूमिं वा' विचारभूमिं वा तत्र-विचार मूत्रपुरीषादिसमुत्सर्ग, तदर्थं योग्या या भूमिः सा विचारभूमि, ता विचारभूमिम्, 'विहारभूमिं वा' विहारभूमिम्, स्वाध्यायभूमि विहारभूमि', तां विहारभूमिम् 'णिक्खमइ वा' निष्क्रामति 'पविसइ वा' प्रविशति विचाराद्यर्थं गच्छति वा । 'णिक्खमंतं वा' निष्क्रामन्त वा 'पविसंतं वा' प्रविशन्तं वा 'साइज्जइ' स्वदतेऽनुमोदते स प्रायश्चित्तभागू भवति ॥ सू० ४१॥

अत्राह भाष्यकारः—

भाष्यम्—भिक्खुस्स नेव कप्पेइ, गंतुमण्णुत्थियाईहिं ।
सद्धिं चारित्तपालस्स, वियारट्ठं कयाइवि ॥

छाया—भिक्षोर्नैव कल्पते गन्तुमन्ययूथिकादिभिः ।
सार्द्धं चारित्रपालस्य विचारार्थं कदाचिदपि ॥

अवचूरिः—'भिक्खुस्स' इत्यादि । यो हि भिक्षु' चारित्रपालकः चारित्रस्य पालने सदा यतनावान् भवति तस्य भिक्षोः विचारार्थं मूत्र-पुरीषाद्युत्सर्जनाय संज्ञाभूमिम् उपलक्षणाद् विहारभूमिं वा गन्तुम्-अन्ययूथिकादिभिः सह अर्थात्-अन्ययूथिकैः परतीर्थिकैः शाक्यभिक्षुक-चरक-परिव्राजकैः सह आदिपदात्-गृहस्थैः, पारिहारिकस्य च अपरिहारिकै सह गन्तुं न कल्पते । एतेषु गृहस्थपरतीर्थिकाऽपरिहारिकादिषु मध्यादेकतरेणाऽपि सह विचाराद्यर्थं चकारात्-विहाराद्यर्थं वा यो भिक्षु' पारिहारिको वा गच्छति तस्याऽऽज्ञाभङ्गानवस्थामिथ्यात्वसंयमात्मविराधनादोषा भवन्ति । विचारभूम्यां पुरुषाद्यागमने संलोकदोषः शङ्का च लोकानां भवेत् । अप्रवर्त्तने मूत्रपुरीषादिनिरोधाद् रोगादिसंभवः । उक्तं च केनचित्कविना राजसमीपे—

त्रयः शल्याः महाराज !, अस्मिन् देहे प्रतिष्ठिताः ।
वायुमूत्रपुरीषाणां, प्राप्तं वेगं न धारयेत् ॥१॥

वायोः-अधोवातस्य पुरीषस्य च वेगधारणे मस्तकादिरोगोत्पत्तिः । मूत्रवेगधारणे नेत्रहानिः, अतो नैतेषां प्राप्तं वेगं धारयेत् । स्थानमार्गादिपरिचयाभावरूपे सति कारणे पुनर्गच्छेदपि गृहस्थादिभि' सह विचारार्थम् ॥ सू० ४१॥

## सूत्रम्—जे भिक्खू अण्णउत्थिएण वा गारत्थिएण वा पारिहारिओ अपारिहारिएण सद्धिं गामानुगामं दूइज्जइ दूइज्जंतं वा साइज्जइ ॥

छाया—यो भिक्षुरन्ययूथिकेन वा गृहस्थेन वा पारिहारिकोऽपारिहारिकेण सार्द्धं ग्रामानुग्रामं द्रवति द्रवन्तं वा स्वदते ॥ सू० ४२॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु, 'अण्णउत्थिएण वा' अन्ययूथिकेन 'गारत्थिएण वा' गृहस्थेन तथा 'पारिहारिओ वा' पारिहारिको वा 'अपारिहारिएण' अपारिहारिकेण 'सद्धिं' सार्द्धम् 'गामाणुगामं' ग्रामानुग्रामम् एकस्माद् ग्रामाद् ग्रामान्तरम् 'दूइज्जइ' द्रवति-गच्छति विहारं करोतीत्यर्थ । 'दूइज्जंतं वा साइज्जइ' द्रवन्तं-गच्छन्तं स्वदतेऽनुमोदते । स्वयमन्यतीर्थिकादिभिर्ग्रामादग्रामान्तरं गच्छन् गच्छन्तमनुमोदमानश्च प्रायश्चित्तभाग् भवति ॥ सू० ४२॥

अत्राह भाष्यकार.—

भाष्यम्—गामाणुगामं भिक्खुस्स, गमणं नेव कप्पइ ।
अणुत्थियाइलोगेहिं, सद्धिं तस्स कयाइवि ॥

छाया—ग्रामानुग्रामं भिक्षोः गमनं नैव कल्पते ।
अन्यथूथिकादिलोकैः सार्द्धं तस्य कदाचिदपि ॥

अवचूरिः—'गामाणुगाम'-इत्यादि । भिक्षोः पारिहारिकस्य च चारित्रपालकस्य अन्ययूथिकादिलोकै., आदिशब्देन गृहस्थैः अपारिहारिकैश्च सार्द्धं ग्रामानुग्रामं-एकस्माद् ग्रामाद् ग्रामान्तरं गमनं तस्य कदाचिदपि नैव कल्पते । एषु-अन्यतमेन येन केनाऽपि सह ग्रामानुग्रामं विहरत. साधोराज्ञाभङ्गानवस्थामिथ्यात्वसंयमात्मविराधनादिदोषा भवन्ति । तत्र-परतीर्थिकादिभिः सह गमने तीर्थकराणामाज्ञा भग्ना भवति, तीर्थकरैस्तैः सह गमनस्य निषिद्धत्वात् । अनवस्था च भवति-एकस्तथा कुर्यात् तदा तं दृष्ट्वाऽन्योऽपि कुर्यात्, एवमन्योऽपीति-एवमनवस्था । तथा-तादृशैः सह गमनं कुर्वन्तं साधुं दृष्ट्वा द्रष्टुर्मनसि अश्रद्धा भवेत्, यद् इमे जैनभिक्षवोऽपि शिथिलाचाराः सन्तीति । तद्वार्त्ताश्रवणादिना मिथ्यात्वमपि समुत्पद्येत । तथा-तैः सह यत्र तत्र वा आधाकर्मिकाद्याहारं भुञ्जन् संयमं विराधयेत् । तथा-चौरोऽयमिति कृत्वा ताडनभेदनादि-संभवाद्-आत्मविराधनमपि संभवेदिति ॥ सू० ४२॥

सूत्रम्—जे भिक्खू अन्नयरं भोयणजायं पडिग्गाहित्ता सुब्भि भुंजइ दुब्भि परिट्ठवेइ, परिट्ठवेंतं वा साइज्जइ ॥ सू० ४३ ॥

छाया—यो भिक्षुः अन्यतरत् भोजनजातं प्रतिगृह्य सुरभि भुङ्क्ते दुरभि परिष्ठापयति, परिष्ठापयन्त वा स्वदते ॥ सू० ४३ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'अन्नयरं भोयणजायं अन्यतरद् भोजनजातम्—अनेकप्रकारकं स्वादिमस्वादिमादिमेदभिन्नं विविध भोजनजातं भक्तादिकम् 'पडिग्गाहित्ता' प्रतिगृह्य, यदि श्रावकादिगृहादनेकप्रकारकं सुस्वादु दुःस्वादु वा भोजनादिकमानीय तन्मध्यात् 'सुब्भि भुंजइ' सुरभि मनोज्ञं विशिष्टवर्ण-गन्ध-रस-स्पर्शयुक्त भोजनं भुङ्क्ते । दुब्भि परिट्ठवेइ' दुरभि—दुरभिगन्धयुक्तं दुर्वर्ण—प्रशस्तवर्णरहितं दूरसं—प्रशस्तरसवर्जितं दुःस्पर्श—प्रशस्तस्पर्शहीनं भोज्य परिष्ठापयति—गर्त्तादिषु प्रक्षिपति, 'परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्तं वा स्वदते । यो भिक्षुः श्रावकगृहादानीताहारमध्यात् सुस्वादूद्धृत्य भुङ्क्ते, दुःस्वादु परित्यजति, एवं कुर्वन्तमनुमोदते वा स प्रायश्चित्तभाग् भवति ॥ सू० ४३ ॥

अत्राह भाष्यकारः—

भाष्यम्—वण्ण-गध-रसेहिं जं, फासेहिं भोयणं जुअं ।
सुब्भि तं चेव जाणिज्जा, इयरं इयर हवे ॥

छाया—वर्ण-गन्ध-रसैर्यत्-स्पर्शैर्भोजनं युतम् ।
सुरभि तदेव जानीयात् इतरदितरद् भवेत् ॥

अवचूरिः—'वण्ण-गंध' इत्यादि । यद्भोजनं भोक्तुं योग्यमोदनादिकम्, विलक्षणवर्णेन—श्वेतादिना, विलक्षणेन गन्धेन—सौरभ्यादिना भोजनोपयुक्तेन, मनोज्ञेन—रसेन मधुरादिना, मनोज्ञस्पर्शेन—कोमलादिस्पर्शयुक्तेन, एभिर्वर्णादिभिर्युक्तं यद् भोजनं तदेव सुरभि विजानीयात् । एतादृशं भोजन सूत्रघटकसुरभिव्यपदेशं लभते इत्यर्थः 'इयरं इयरं हवे' इतरदितरद्भवेत्, यद्भोजनमितरत्—पूर्वोक्तविलक्षणवर्णादिना नोपेत तद् भोजनमिरतरत्, दुरभि—दुर्वर्णगन्धादियुक्तमिति ज्ञेयम् । अथवा—रसोपेतमपि भोजनं दुरभिगन्धयुक्तं न प्रशस्तम्, तथा—अरसालं—शुष्कं भोजनं सुरभिगन्धयुक्तं सुरभि भवतीति । अत्र—सुरभि—दुरभि, एतदुभयप्रकारकमपि भोजनमेकतः प्रत्येकं वा गृहीत्वा सुरभिभोजनं भुङ्क्ते, दुरभि च परिष्ठापयति, तस्यैवं कुर्वतो यतेः प्रायश्चित्तं भवति । तथा—आज्ञाभङ्गानवस्थामिथ्यात्वात्मसंयमविराधनाः, यस्मादेते दोषा भवन्ति, तस्माद् दुरभिभोज्यस्य वस्तुनः पूर्वं भोजनं कर्त्तव्यम्, तदनन्तरं सुरभिभोजन कर्त्तव्यमिति ॥ सू० ४३ ॥

**सूत्रम्—जे भिक्खू अन्नयरं पाणगजायं पडिग्गाहित्ता पुप्फगं–पुप्फगं आवियइ कसायं–कसायं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥ सू० ४४ ॥**

**छाया—यो भिक्षुः अन्यतरत् पानकजातं प्रतिगृह्य पुष्पकं पुष्पकं आपिबति, कषायं कषायं परिष्ठापयति परिष्ठापयन्त वा स्वदते ॥ सू० ४४ ॥**

**चूर्णी**—'**जे भिक्खू**' इत्यादि । '**जे भिक्खू**' यो भिक्षुः '**अन्नयरं**' अन्यतरत् अन्यतर पदग्रहणात्–अनेकप्रकारकम्, मधुररसयुक्तं कषायरसयुक्तं च, खण्ड–गुड–शर्करा–दाडिमी–मृद्वीकाऽऽमलक–हरीतकी–चिञ्चादिरसरूपं द्वयमपि '**पाणगजायं**' पानकजातं, जातशब्दग्रहणात् प्रासुकं '**पडिग्गाहित्ता**' प्रतिगृह्य–विधिपूर्वकं गृहीत्वा '**पुप्फगं–पुप्फगं आवियइ**' पुष्पकं पुष्पकमापिबति, तत्र–पुष्पकं–शुभवर्ण–गन्ध–रसस्पर्शैः प्रधानम् अच्छं मनोज्ञमित्यर्थः । एतादृशमुत्तमोत्तमं पानकजातमापिबति, तथा–'**कसायं–कसायं**' कषायं कषाय कलुषितं शुभवर्ण-गन्ध-रस स्पर्शैः प्रतिलोमं-कलुषितमप्रधानं वा पानकजातम् '**परिट्ठवेइ**' परिष्ठापयति-भूमौ निक्षिपति ।

उक्तञ्च पुष्पककषायविषये—

यच्च गन्धरसोपेत–मच्छं तत् पुष्पकं भवेत् ।
दुर्गन्धमरसं यच्च, कषायं कलुषं च तत् ॥१॥ इति ।

अनेकप्रकारकानीतपानकमध्यात् यत्समीचीनं तत्पिबति, यच्चाऽसमीचीनं तन्निक्षिपति । '**परिट्ठवेंतं वा साइज्जइ**' परिष्ठापयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ।

साधुलक्षणमेतत् तथाहि—

मा भूयासमहं साधुः, प्रायश्चित्ती कदाचन ।
मन्यते सोऽसमीचीनं, मुक्त्वा मुङ्क्ते तथेतरत् ॥१॥

अत्र भाष्यकारोऽप्याह—

भाष्यम्–वण्ण–गंध-रसोवेयं, दव्वं तं पुप्फनामगं ।
दुब्भिगंधाइसंजुत्तं, कसायं तं हवे पुणो ॥
कसायं पुव्वमापेज्जं, पुप्फगं तयणंतरं ।
एसा सत्थविही वुत्ता, अणंतवरनाणिहिं ॥

छाया—वर्ण–गंध–रसोपेतं द्रव्यं तत्पुष्पनामकम् ।
दुरभिगन्धादिसंयुक्तं कषायं तद् भवेत्पुनः ॥
कषायं पूर्वमापेयं पुष्पकं तदनन्तरम् ।
एष शास्त्रविधिः प्रोक्तः अनन्तवरज्ञानिभिः ॥

अवचूरिः—'वण्णगंध' इत्यादि। यत्पानकजातं वस्तु, वर्ण-गन्ध-रसोपेतं-सुवर्णेन सुगन्धेन सुरसेन मधुरादिना युक्तं भवेत् तद्-द्रव्यं पुष्पसंज्ञकं भवति। तथा-यत्पानकजातं दुर्गन्धादि-विशिष्टं दुर्वर्णेन कुत्सितगन्धेन क्रूरसेन कठोरस्पर्शेन युक्तं तत् कषायं-कलुषितं भवेत्। तत्र कषायं पानकजातं पूर्वमापेयं, तदनन्तरं पुष्पकं पिबेत्, एष शास्त्रविधिः अनन्तवरज्ञानिभिस्तीर्थकरैरुक्तः, अत पुष्पकं कषाय चैतदद्वयमप्यानीय यत्पुष्पकं तत् पीत्वा यत्कषायं तस्य परिष्ठापनं न कुर्यात्, किन्तु प्रथमं पुष्पकं पीत्वा पश्चात् कषायं पिबेत्। उक्तञ्च—

शास्त्रकर्तुश्च मर्यादा, कषायं प्रथमं पिबेत्।
आज्ञाभङ्गादिकान् दोषान् पश्यन् पश्चात्तु पुष्पकम् ॥१॥

अन्यथा प्रायश्चित्तभाग् भवेत् ॥ सू० ४४ ॥

**सूत्रम्—जे भिक्खू मणुण्णं भोयणजायं पडिग्गाहेत्ता बहुपरियावन्नं सिया अदूरे तत्थ साहम्मिया संभोइया समणुन्ना अपरिहारिया संता परिवसंति ते अणापुच्छिय अणिमंतिय परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥**

छाया—यो भिक्षुर्मनोज्ञं भोजनजातं प्रतिगृह्य बहुपर्यापन्नं स्यात् अदूरे तत्र साधर्मिकाः सांभोगिकाः समनोज्ञा अपरिहार्याः सन्तः परिवसन्ति तान् अनापृच्छ्य अनिमन्त्र्य परिष्ठापयति, परिष्ठापयन्तं वा स्वदते ॥ सू० ४५ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'मणुण्णं भोयणजायं' मनोज्ञं भोजनजातम्—शुभ—वर्ण—गन्ध—रस—स्पर्शसमन्वितमुत्तमभोजनजातम् अनेकप्रकारकमाहारादिकम् 'पडिग्गाहेत्ता' प्रतिगृह्य—आनीय भुङ्क्ते। तच्च यदि 'परियावन्न सिया' पर्यापन्नं स्यात्—प्रयोजनतोऽधिकं भवेत् 'अदूरे तत्थ साहम्मिया' अदूरे तत्र-न दूरमदूरम्-आसन्नम् क्रोशद्वयान्तरावधौ ग्रामादौ साधर्मिकाः-समानधर्माचरणशीलाः साधवः 'संभोइया' सांभोगिकाः, यैः सहैक-मण्डल्यामाहारादिकं कर्तुं कल्पते तथाविधाः साधवः 'समणुन्ना' समनोज्ञाः उद्यतविहारिणः, एतादृशाः पूर्वोक्तविशेषणविशिष्टाः सन्तोऽपि सातिचारत्वेनाऽदेयाहारा भवेयुस्तत्राह—'अपरिहारिया' अपरिहार्याः, निरतिचारचारित्रत्वेनापरित्याज्याः, निरतिचारा इत्यर्थः। एतादृशाः साधवो यथासन्ने 'संता' सन्तः विद्यमानाः 'परिवसंति' क्रोशद्वयपरिमिते ग्रामादौ तिष्ठन्ति तदा 'ते अणापुच्छिय' तान्-अनापृच्छ्याऽपृष्ट्वा 'अणिमंतिय' अनिमन्त्र्य, तेषां निमन्त्रणमकृत्वा, 'मत्स-विधे-एतावदधिकं जातं, तस्य यदि भवतां प्रयोजनं भवेत्-तदा-गृह्णन्तु भवन्तः' एवंप्रकारेण तेषामामन्त्रणमकृत्वा अपृष्ट्वेत्यर्थः यदि 'परिट्ठवेंति' परिष्ठापयन्ति, यद्वा 'परिट्ठवेंतं साइज्जइ' परिष्ठापयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवतीति ॥ सू० ४५ ॥

अत्राह भाष्यकारः—

भाष्यम्—जावइयं उवजुत्तं, गिण्हेज्जा तावमेत्तमसणाइ ।
साहुस्स अहियगहणे, दोसा लोभाइणो होंति ॥

छाया—यावत्कमुपयुक्तं गृह्णीयात् तावन्मात्रमशनादि ।
साधोरधिकग्रहणे दोषा लोभादयो भवन्ति ॥

अवचूरिः—'जावइयं उवजुत्तं' इत्यादि । साधूनां यावन्मात्रमुपयुक्तमाहारादिक स्यात् तावन्मात्रमाहारं गृह्णीयात्–श्रावकगृहादानयेत् न तु ततोऽधिकग्रहणं कुर्यात्, प्रमाणादधिकाहार ग्रहणे साधोः पुनर्लोभादयो दोषा भवन्ति । तथाहि–प्रमाणतो यावदेवोपयुक्तं तावन्मात्रमेवाहारादिकं गृह्णीयात्। अधिकग्रहणे लोभदोषः । तथा–तस्य परिष्ठापने परिष्ठापनादोषः । आज्ञाभङ्गादिकाश्चाऽपि दोषाः, तत्र–एकेन्द्रियादीनां विराधनात् । अधिकभोजनकरणे विषूचिकादयो रोगाः इत्यात्मविराधनम्, यस्मादेते दोषाः तस्मात् कारणात् प्रमाणादधिकमाहारादिकं न ग्रहीतव्यम् । अत्र शिष्यः प्राह–हे गुरो ! यदि प्रमाणयुक्तमेवाहारादिकं ग्रहिष्यति तदा–अधिक न भवति, अथ–यदि अधिकम् तदा प्रमाणतो ग्रहणमिति वाक्यं निरर्थकम्, एवं परस्परविरोधे सूत्रं निरर्थकमेव भवति ? आचार्यः प्राह–सूत्रं सार्थकमेव न निरर्थकम् । तथाहि–यत्र ग्रामे नगरे वा बहूनि श्रावककुलानि–अतिभावयुक्तानि सन्ति, तत्र भिक्षार्थं गतस्य साधोर्मनोज्ञमितिकृत्वा तैर्भावतोऽधिकं पात्रे निपातितं भवेत्, तच्च साधुरानीतवान्, एवमधिकं भवेदिति । तत्र यदधिकं तद् यदि क्रोशद्वयदूरे सांभोगिकसाधूनां निवासो भवेत् तदा तेषामावश्यकतायां तत्र गत्वा दद्यात् । तत्र प्रच्छनेऽयं क्रमः–यदि कृतेऽपि भोजनेऽधिकमवशिष्ट आहारो भवेत् तदा–प्रथमतः स्वग्रामे स्वकीये उपाश्रये च ये सांभोगिका भवेयुस्ते पूर्वं प्रष्टव्याः । यदि ते न स्वीकुर्यु तदा स्वग्रामेऽन्योपाश्रये ये भवेयुस्ते सांभोगिकाः प्रष्टव्या, यदि स्वीकुर्युस्तदा तेभ्यो देयम् । अथ यदि ते न स्वीकुर्युस्तदा स्वक्षेत्रेऽन्यग्रामे प्रष्टव्या, ते यदि स्वीकुर्युस्तदा सम्यक् । नो चेत्, तदा स्वक्षेत्राद्बहिरन्यग्रामे किन्तु क्रोशद्वयाभ्यन्तरे यदि सांभोगिका भवेयुस्ते प्रष्टव्या, एवं क्रमशः साधवः प्रष्टव्याः एवमनापृच्छ्यैव यद्यधिकमाहार साधुः परिष्ठापयेत्तदा–आज्ञाभङ्गादिदोषभाग् भवतीति ॥सू० ४५॥

## सूत्रम्—जे भिक्खू सागारियं पिंडं गिण्हइ, गिण्हंतं वा साइज्जइ ॥

छाया—यो भिक्षुः सागारिक पिण्डं गृह्णाति गृह्णन्तं वा स्वदते ॥ सू० ४६ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'सागारियं पिंडं' सागारिकं पिण्डं, तत्र–सागारिकः–उपाश्रयाधिपतिः साधोः स्थानदाता शय्यातरो गृहस्थः, तस्य

पिण्डं भक्तादिकम् 'गिण्हइ' गृह्णाति-स्वीकरोति 'गिण्हंतं वा' गृह्णन्त वा-स्वीकुर्वन्तं स्वदते स प्रायश्चित्तभाग् भवति ॥ सू० ४६ ॥

संप्रति सागारिकस्य षड् द्वाराणि प्राह—

भाष्यम्—सागारियस्स दाराणि, अणेगाणि हवंति खु ।
ताइं सव्वाइं जाणंतु, जहासत्थं वियक्खणा ॥

छाया—सागारिकस्य द्वाराणि अनेकानि भवन्ति खलु ।
तानि सर्वाणि जानन्तु यथाशास्त्रं विचक्षणाः ॥

अवचूरिः—'सागारियस्स' इत्यादि । सागारिकस्य-शय्यातरस्य द्वाराणि अनेकानि-अनेकप्रकारकाणि भवन्ति, तानि सर्वाणि यथाशास्त्रं-शास्त्रप्रतिपादितप्रकारेण विचक्षणाः-बुद्धिमन्तो जानन्तु ।

सागारिकस्य सप्त द्वाराणि भवन्ति, अत्र तत्संग्राहकं गाथाद्वयम्, तथाहि—

"सागारिक इति को वा १, कदा शय्यातरो भवेत् २।
कतिविधश्च तत्पिण्डः ३, अशय्यातरकः कदा ४ ॥१॥
त्याज्योऽसौ कस्य विज्ञेयो ५, दोषाः पिण्डग्रहे च के ६।
अनेकेषु च तेषु स्यादेकः सागारिकः पुनः ७ ॥२॥" इति

तथा च तदर्थं—कः पुनः सागारिकः शय्यातरो भवतीति प्रथमद्वारम् १, कदा स शय्यातरो भवतीति द्वितीयद्वारम् २, कतिप्रकारकः शय्यातरपिण्ड इति तृतीयद्वारम् ३, अशय्यातरः स कदा भवतीति चतुर्थद्वारम् ४, स च कस्य त्याज्यो भवति, इति पञ्चमं द्वारम् ५, दोषाः पिण्डग्रहे च के, इति षष्ठं द्वारम् ६, अनेकेषु द्वित्र्यादिषु सागारिकेषु वा एको ग्रहीतव्यः, इति सप्तमं द्वारम् ७ । 'सागारिक इति को वा' इति प्रथमं द्वारमाह-तत्र-अगारेण गृहेण यत् सहितं तत्सागारं, तत्संयोगात् सागारिक इति, अस्य पञ्च नामानि एकार्थकानि नानाव्यञ्जनानि सन्ति, तथाहि-सागारिकः १, शय्यातरः २, शय्यादाता ३, शय्याधरः ४, शय्याकरः ५, इति । तत्र सागारिकशब्दस्यार्थः पूर्वमुक्त एव १, साधवे शय्यादानेन भवं तरतीति शय्यातरः २, शय्यादाता-साधवे शय्यादानात् ३, शय्याधरः-साधवे शय्यादानेन धरति आत्मानं दुर्गतेरुद्धरतीति ४, शय्याकरः-यस्मात् शय्यां करोति तस्मात् शय्याकरः ५, इति । 'सागारिक इति को वा' इति प्रथमं द्वारम् १ । 'कदा शय्यातरो भवेत्' इति द्वितीयं द्वारमाह-यस्मिन् काले वसतौ वस्तुं यत्सकाशाद् आज्ञा गृह्यते स तस्मात्कालादेव शय्यातरो भवेदिति द्वितीयं द्वारम् २ । 'कतिविधश्च तत्पिण्डः' इति तृतीयं द्वारमाह—शय्यातरपिण्डो द्विविधो भवति आहारः-उपधिश्च । चतुर्विधो वा भवति,

अशन–पान–खाद्य–स्वाद्य–भेदात् । चतुर्विधो वा भवति–अशनादयश्चत्वारः द्वौ उपधिविषयकौ–औधिकोपधिः औपग्रहिकोपधिश्चेति तृतीयं द्वारम् ३ । 'अशय्यातरकः कदा' इति चतुर्थं द्वारमाह–यदा–वसतिं परित्यज्य गृहस्वामिन आज्ञां परावर्त्य स्थानान्तरं करोति तदा–सोऽशय्यातरो भवति–इति चतुर्थं द्वारम् ४ । 'त्याज्योऽसौ कस्य विज्ञेयः' इति पञ्चमं द्वारमाह–साधुगुणवर्जितानां लिङ्गमात्रधारिणां यः शय्यातरो भवेत्, ते तस्य शय्यातरस्य पिण्डं गृह्णीयात् न वा गृह्णीयात् तथापि स शय्यातरः साधूना त्याज्य एव भवतीति पञ्चमं द्वारम् ५ । 'दोषाः पिण्डग्रहे च के' तस्य सागारिकस्य पिण्डग्रहणे के दोषा इति षष्ठं द्वारमाह–शय्यातरपिण्डस्तीर्थकरैः ऋषभादिभिः प्रतिषिद्धः तस्मात्–शय्यातरपिण्डो न ग्रहीतव्यः, इति षष्ठ द्वारम् ६ । 'अनेकेषु च०' इत्यादि, अनेकस्वामिकेषु वसत्यादिषु "एकस्यैवाज्ञा ग्रहीतव्या" इति सप्तमं द्वारम् ७। शय्यातरस्य सविस्तर-वर्णनं दशवैकालिकसूत्रस्य मत्कृतायामाचारमणिमञ्जूषाव्याख्याया विलोकनीयम् ॥ सू० ४६॥

## सूत्रम्—जे भिक्खू सागारियपिंडं भुंजइ भुंजंतं वा साइज्जइ ।सू०४७।

**छाया—यो भिक्षुः सागारिकपिण्डं भुङ्क्ते भुञ्जन्तं वा स्वदते ॥ सू० ४७॥**

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'सागारियपिंडं' सागारिक-पिण्डं शय्यातरस्य भक्तपानादिकम् 'भुंजइ' भुङ्क्ते–शय्यातरपिण्डस्योपभोगं करोतीत्यर्थः । 'भुजं-तं वा साइज्जइ' भुञ्जन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ४७॥

## सूत्रम्—जे भिक्खू सागारियकुलं अजाणिय अपुच्छिय अगवे-सिय पुव्वामेव पिण्डवायपडियाए अणुप्पविसइ अणुप्पविसंतं वा साइ-ज्जइ ॥सू० ४८॥

**छाया—यो भिक्षुः सागारिककुलमज्ञात्वा–अपृष्ट्वा–अगवेषयित्वा पूर्वमेव पिण्डपात-प्रतिज्ञयाऽनुप्रविशति–अनुप्रविशन्तं वा स्वदते ॥ सू० ४८॥**

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'सागारियकुलं' सागारिक-कुलं–शय्यातरगृहम्, 'अजाणिय' अज्ञात्वा–किमिदं श्रावकस्य गृहम्–अन्यस्य वेति निश्चयम-कृत्वा 'अपुच्छिय' अपृष्ट्वा–अमुकशय्यातरगृहं क्व वर्त्तते, इति समीपवर्त्तिश्रमणादिभ्यः पृच्छा-मकृत्वा 'अगवेसिय' अगवेषयित्वा–शय्यातरः कस्मिन् स्थाने वसति–इति गवेषणामकृत्वा । तत्र–पूर्वदृष्टे पृच्छा, अपूर्वदृष्टे गवेषणा, इति पृच्छा–गवेषणयोर्भेदः । 'पुव्वामेव' पूर्वमेव–शय्यातरगृहा-दिगवेषणाकरणतः–प्रागेव 'पिंडवायपडियाए' पिंडपातप्रतिज्ञया, तत्र–पिण्डोऽशनादिकम् गृहिणा दीयमानस्याहारस्य पात्रे पातः प्रक्षेपो ग्रहणं, तस्य प्रतिज्ञया पिण्डग्रहणबुद्ध्येत्यर्थः, 'अणुप्प-

विसइ' अनुप्रविशति शय्यातरमज्ञात्वा भिक्षार्थं निर्णयात्पूर्वमेव शय्यातरकुलं प्रविशति, 'अणुप्पविसंतं वा साइज्जइ' अनुप्रविशन्तमन्यं स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥

न दोषभागी भवामि तस्माज्ज्ञात्वा च पृष्ट्वाऽथ गवेषयित्वा ।
ततो विशेत् श्रावकगेहमध्यं, मर्यादितः शास्त्रविलोकनेन ॥१॥ इति ॥ सू० ४१ ॥

सूत्रम्—जे भिक्खू सागारियणीसाए असणं वा पाणं वा खाइमं वा साइमं वा ओभासिय-ओभासिय जायइ जायंतं वा साइज्जइ ॥ सू० ४९ ॥

छाया—यो भिक्षुः सागारिकनिश्रया-अशनं वा पानं वा खादिमं वा स्वादिमं वा-अवभाष्याऽवभाष्य याचते याचमानं वा स्वदते ॥ सू० ४९ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'सागारियणीसाए' सागारिकनिश्रया, सागारिकः—श्रावकः, तस्य निश्रा—परिचयरूपा, तया 'अहममुकस्य वसतौ स्थितोऽस्मि' इति परिचयरूपया, अथवा स्वजनस्य कस्यचिद् गृहे शय्यातरं स्थितं दृष्ट्वा—'अयं मे भिक्षां दापयिष्यति' तदाश्रयेण 'असणं वा पाणं वाखइमं वा साइमं वा' अशनं पानं खाद्यं स्वाद्यम्—अशनादिचतुर्विधाहारं 'ओभासिय-ओभासिय' अवभाष्यावभाष्य विशिष्टवचनरचनापूर्वकम् उच्चैः स्वरेण वदित्वा-वदित्वा 'जायइ' याचते याचनां करोति-कारयति । 'जायंतं वा साइज्जइ' एवं प्रकारेण याचमानमनुमोदते स प्रायश्चित्तभाग् भवतीति ॥ सू० ४९ ॥

अत्राह भाष्यकारः—

भाष्यम्—सयणो सावगस्सायं, तत्थ दट्ठूण सावगं ।
दावेज्जा एस मे भिक्खं,-तिकट्टु सोऽवभासइ ॥

छाया—स्वजनः श्रावकस्यायं तत्र दृष्ट्वा तु श्रावकम् ।
दापयेदेष मे भिक्षा-मितिकृत्वाऽवभाषते ॥

अवचूरिः—'सयणो'- इत्यादि । श्रावकस्य प्रतिष्ठितोदारचित्तस्य यः स्वजनः आत्मीयो जनः स यत्र प्राङ्गणादौ तिष्ठति, तत्र प्राङ्गणे श्रावकं शय्यातरश्रावकं दृष्ट्वा एष महामस्मात्परिजनसकाशाद् भिक्षां दापयेत्, इतिकृत्वा तन्निश्रयोच्चैःस्वरेण तमेव सागारिकमवभाषते १, तव स्वजनोऽयमतस्त्वं दापय एतस्मादशनादिकम् २, यद्वा—सागारिकस्य—पूर्वपश्चात्संस्तुतस्य निश्रायां भाषते—यदस्यैव गौरवेणायं मे भिक्षां दास्यतीति तं वाऽवभाषते ३, मम चारित्राचारसंपन्नस्य प्रभावेण वा दापय ४ । एभिश्चतुर्भिरपि प्रकारैर्यो भिक्षुरशनादिकमवभाष्य

याचते, तस्याज्ञाभङ्गादिका दोषा भवन्ति। तथा–पूर्वपश्चात्संस्तुते उद्गमैषणादिदोषा भवन्ति, एव–मुद्गमादिदोषाः श्रावकेऽपि भवन्ति । तथा–पूर्वपश्चात्संस्तुतेऽपि एते दोषा –ये श्रावकस्य पूर्वपश्चात्संस्तुतास्ते परगृहेषु–अवभाषमाणा एवं कुर्युः –एष नित्यमस्माकमेव गृहे तिष्ठतीति कृत्वा, उद्गमादि-दोषदुष्टमप्यशनादिकं करिष्यन्ति, परुषादिकं च वदेयुः । यस्मादिमे दोषा भवन्ति तस्मात्सागारिक-निश्रया पूर्वपश्चात्संस्तुतस्य सागारिकस्य निश्रया वा श्रावककुलेऽवभाष्याऽवभाष्याशनादीनां याचना न कर्त्तव्या । सागारिकस्याहारादिग्रहणं प्रागेव निषिद्धं पुनरत्र सागारिकनिश्राघटकस्य सागारिक-शब्दस्य कोऽर्थः ? इत्यत आह–अत्र सागारिकशब्देन सामान्यो गृहस्थो बोध्यः ॥ सू० ४९ ॥

## सूत्रम्—जे भिक्खू उउबद्धियं सेज्जासंथारगं परं पज्जोवसणाओ उवाइणावेइ उवाइणावेंतं वा साइज्जइ ॥ सू० ५० ॥

छाया—यो भिक्षुः ऋतुबद्धकं शय्यासंस्तारकं परं पर्युषणातः अतिक्रामयति अति-क्रामयन्तं वा स्वदते ॥ सू० ५० ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'उउबद्धियं सेज्जासंथारगं' ऋतुबद्धकम्–ऋतुबद्धकालसम्बन्धि शय्यासंस्तारकम् पीठफलकतृणादिकं, शय्या च संस्तारकश्च, अनयोः समाहारे शय्यासंस्तारकम् , तत्र-शय्या शरीरप्रमाणा, संस्तारकः सार्द्धहस्तद्वयप्रमाणः । ऋतुबद्धे–मार्गशीर्षाषाढपर्यन्ताष्टमासात्मके शेषकाले गृहीतं शय्यासंस्तारकम् शेषकाले समानीतं शय्यासंस्तारकं 'परं पज्जोवसणाओ' पर्युषणातः परं संवत्सरीदिनतः परम् 'उवाइणावेइ' अतिक्रामयति उल्लङ्घयति यस्माद् गृहीतं तस्मै यः समर्पणकालस्तमुल्लङ्घयति, ऋतुबद्धकाल-गृहीतशय्यासंस्तारकं गृहस्थाय न समर्प्य पर्युषणानन्तरं तस्योपभोगं करोतीत्यर्थः, अतिक्रामयन्तं वा स्वदते स प्रायश्चित्तभाग् भवति । संवत्सरीदिनतः प्रागेव तद् भोक्तव्यम् , संवत्सरीदिने तत् तत्स्वामिने समर्पणीयमेवेति भावः । यदि तस्योपभोगकारणं स्यात् तदा तदुपभोगाय तत्स्वामिनः आज्ञा पुनर्ग्रहीतव्येति विवेकः ॥ सू० ५० ॥

## सूत्रम्—जे भिक्खू वासावासियं सेज्जासंथारयं परं दसरायकप्पाओ उवाइणावेइ उवाइणावेंतं वा साइज्जइ ॥ सू० ५१ ॥

छाया—यो भिक्षुः वर्षावासिकं शय्यासंस्तारकं परं दशरात्रकल्पात् अतिक्रामयति अतिक्रामयन्तं वा स्वदते ॥ सू० ५१ ॥

चूर्णिः—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'वासावासियं' वर्षावासिकं वर्षाकाले उपभोगार्थमानीतम् तत्–'सेज्जासंथारगं' शय्यासंस्तारकम् वर्षाकाले व्यतीतेऽपि

वर्षादिकारणगौरवात् पञ्चदशरात्रपर्यन्तं व्यवहर्तुमुपभोक्तुं शक्नोति कथञ्चित्, किन्तु–'परं दस-रायकप्पाओ' परमधिक दशरात्रकल्पात् यदि–'उवाइणावेइ' अतिकामयति–उल्लङ्घयति 'उवा-इणावेंतं वा साइज्जइ' अतिकामयन्त वा यो यदा स्वदतेऽनुमोदते स तदा प्रायश्चित्तभाग् भवति। शय्यासंस्तारकं द्विविधं भवति–परिशाटि अपरशाटि च। तत्र–कुशतृणादिनिर्मितस्य यस्योपभोग-काले कश्चिदंशः परिशटति -नश्यति तत् परिशाटि, यस्य च वंशकाष्ठादिनिर्मितस्योपभोगकाले किञ्चिन्मात्रोऽप्यंशो न परिशटति–न नश्यति तदपरिशाटि–इति बोध्यम्। परिशाटि च साधूनां नो कल्पते यतस्तद्ग्रहणे अनेके जीववधादयो दोषा, तेन च संयमात्मविराधना भवति। परिशटितपीठ-फलकादिषु शुषिरस्थितजीवानां विराधना भवति, शटित तत् त्रुटयति तदा आत्मविराधनाऽपि भवति। तथा–आज्ञाभङ्गानवस्थामिथ्यात्वसंयमात्मविराधनं च भवति। तीर्थकृतामाज्ञाभङ्गस्तैर्निषिद्धत्वात्, अनवस्था च–अन्यान्यकरणसंभवात्, लोके–मिथ्यात्वमपि जायते जीवविराधकवस्तूपभोगात्। संयम-विराधनमित्थम्- शुषिरादिषु कुन्थुकादिसूक्ष्मजीवाः संमूर्च्छिता भवन्ति। तत्र परिशाटिशय्यासंस्ता-रकमास्तीर्य स्वपत कुन्थुकादिजीवा विराधिता भवेयुरिति संयमविराधनम्। तथा–अन्येऽपि बहवो जीवाः पिपोलिकादय. वर्षायां शुषिरे सम्मूर्च्छिता भवन्ति, इत्येवमपि सयमविराधनम्। आत्मविरा-धन चेत्थम्- वर्षायां तत्र शयने कृते शुषिरे स्थितः सर्पादिर्दशति–इत्यात्मविराधनम्, तत्र शुषिरसद्भावात् पनक (लीलनफूलन) अपि संमूर्च्छितो भवति। एते प्राणविघातकादयो दोषाः। तथा तद्गन्धादुपधौ यूकादिजीवा भवन्ति। इत्यादयो दोषा परिशाटिशय्यासस्तारकग्रहणे भवन्ति।

यस्मादेते दोषा. तस्मात्–कारणात् वर्षाकालेऽपरिशाटि शय्यासंस्तारकं ग्रहीतव्यम्। तदपि विधिपूर्वकं ग्रहण कर्त्तव्यम्। यदा खलु पीठफलकादिकं लभ्यते–तदैवं वक्तव्यम्- भो श्रावक! अस्य शय्यासंस्तारकस्योपभोगानन्तर पुनरर्पयिष्यामि प्रातिहारिकं च ग्रहिष्यामि नियमतोऽमुकेन कालेनाऽर्पयिष्यामि। यदेव श्रावक स्वीकरोति तदा ग्रहीतव्यम्। अथ यदि कदाचिदेव न स्वी करोति श्रावक तदाऽन्यदेव समारकादिकं मार्गयितव्यम्। यदि गृहीतं च शय्यासस्तारकादिकं नेतुं न शक्यते तदा- छन्ने प्रदेशे स्थापयितव्यम् येन वर्षाजलेन प्लावितं न भवेत्। एव दाता (श्रावक) प्रष्टव्यः मदीये कार्ये समाप्ते शय्यासस्तारक मया कस्मै–अर्पणीयम् ? श्रावको वदति मह्यमेव दात्रेऽर्पणीयम्। तदा पुन. साधुर्वदति–यदि त्वं कदाचिद् दृष्टो न भवेः तदा कस्मै अर्पणीयम् ? श्रावको वदति–अत्रैव गृहे भवद्भिरानेतव्यम्।

तदा वक्तव्यं साधुना–कस्मिन् स्थाने स्थापयिष्यामि! अथ स वदेत् -अत्रैव गृहे प्रच्छन्न-प्रदेशे स्थापयितव्यम्। अथवा–एव वदेत्–यस्मात्–स्थानाद् गृहीतं तत्रैव स्थापनीयम्। एवंप्रकारेण गृहीतशय्यासंस्तारकादिविषये भणितव्यम् ॥ सू० ५१ ॥

**सूत्रम्—जे भिक्खू उउवद्धियं वा वासावासियं वा सेज्जासंथारगं उव्वरिसिज्जमाणं पेहाए न ओसारेइ न ओसारेंतं वा साइज्जइ ॥ सू० ५२॥**

छाया—यो भिक्षु ऋतुबद्धकं वा-वर्षावासिकं वा शय्यासंस्तारकं उद्वर्ष्यमाणं प्रेक्ष्य नाऽपसारयति, नाऽपसारयन्तं वा स्वदते ॥ सू० ५२ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'उउबद्धियं वा' ऋतुबद्धकं वा-मार्गशीर्षाषाढपर्यन्ताष्टमासात्मके काले स्वेनात्मना परेण वा गृहीतम् । 'वासावासिय वा' वर्षावासिक वा–चातुर्माससम्बन्धिकम्, उपभोगाय वर्षाकाले समानीय स्ववसतौ स्थापितम् । 'सेज्जासथारगं' शय्यासस्तारकं पीठफलकतृणादिकमनावृतस्थाने प्रसारितं 'उव्वरिसिज्जमाणं' उद्वर्ष्यमाणं वृष्टचा क्रियमानं जलेन आर्द्रीभवन्तमित्यर्थः 'पेहाए' प्रेक्ष्य–दृष्ट्वा 'न ओसारइ' नाऽपसारयति–न दूरीकरोति, अनावृतप्रदेशादावृतप्रदेशे न करोति, न कारयति 'न ओसारेंतं वा साइज्जइ' नाऽपसारयन्तं–नोऽन्तःकुर्वन्तं स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ॥ ५२॥

अत्राह भाष्यकारः—

भाष्यम्—वासाजलेण सित्तं, सेज्जासंथारगं च पीढाइ ।
नो ओसारइ जो उ, पावइ सो आणभंगाइ ॥

छाया—वर्षाजलेन सिक्तं शय्यासंस्तारकं च पीठादि ।
नो अपसारयति यस्तु प्राप्नोति स आज्ञाभङ्गादि ॥

अवचूरिः—'वासाजलेणं'–इत्यादि । यो भिक्षुः ऋतुबद्धकाले वर्षाकाले वा अनावृतस्थाने प्रसारित यत्–शय्यासस्तारकं पीठादि–पीठफलकतृणादिकं तद्यदि वृष्टिजलेन सिक्तं सिच्यमानं वा भवेत् तत् नाऽपसारयति नो दूरीकरोति वर्षाप्रदेशात् वर्षारहितप्रदेशे–वसतेरन्तर्भागे न करोति यः स आज्ञाभङ्गादिदोषान् प्राप्नोति ॥ सू० ५२ ॥

**सूत्रम्—जे भिक्खू पाडिहारियं सेज्जासंथारगं दोच्चंपि अणणुण्णवेत्ता बाहिं णीणेइ णणेंतं वा साइज्जइ ॥ सू० ५३ ॥**

छाया—यो भिक्षुः प्रातिहारिकं शय्यासंस्तारकं द्विवारमपि-अननुज्ञाप्य बहिः निर्णयति निर्णयन्तं वा स्वदते ॥ सू० ५३ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'पाडिहारियं' प्रातिहारिकम् श्रावकगृहात्तस्य गृहपतेराज्ञया समानीय वसतौ स्थापितं–पुनः प्रतिज्ञातसमये प्रत्यर्पणीयम्

'सेज्जासंथारगं' शय्यासंस्तारकम् यद्यन्यस्थाने नयनप्रयोजनं भवेत्तदा 'दोच्चंपि' द्वितीयवार-मपि 'अणणुण्णवेत्ता' अननुज्ञाप्य, स्वामिन आज्ञां विना यदि 'बाहिं णीणेइ' बहिः उपा-श्रयाद्बहिरन्यस्थाने निर्णयति, अयं भावः—अशय्यातरस्य—शय्यातरस्य वा शय्यासंस्तारकं पूर्णे मास-कल्पे पुनर्द्वितीयवारं स्वामिनमननुज्ञाप्य वसतेर्बहिरुपाश्रयान्तरं नयति चेत्, तथा—'णीणेंतं वा' साइ-ज्जइ' निर्णयन्तं यः स्वदतेऽनुमोदते, तस्य प्रायश्चित्तमिति ॥ सू० ५३ ॥

अत्राह भाष्यकारः—

भाष्यम्—भिक्खू जं बाहिरं णेइ, अणणुण्णाय संथरं ।
आणाभंगाइया दोसा, हवंति तस्स निच्छिय ॥

छाया—भिक्षुर्यद् बहिर्नयति अननुज्ञाप्य संस्तरम् ।
आज्ञाभङ्गादिका दोषा भवन्ति तस्य निश्चितम् ॥

अवचूरिः—'भिक्खू जं' इत्यादि । यो भिक्षुर्यत् सस्तर-संस्तारकं पीठफलकादिकं एता-दृशं यत्—अननुज्ञाप्य तत्स्वामिनो द्वितीयवारमाज्ञामगृहीत्वा शय्यासंस्तारकं वसतेर्बहिरन्यस्थले नयति, तस्य भिक्षुकस्याऽऽज्ञाभङ्गादिका दोषा निश्चित भवन्ति, अत्र न कोऽपि सशय इति ॥ सू० ५३ ॥

सूत्रम्—जे भिक्खू सागारियसंतियं सेज्जासंथारगं दोच्चंपि अण-णुण्णवेत्ता बाहिं णीणेइ णीणेंतं वा साइज्जइ ॥ सू० ५४ ॥

छाया—यो भिक्षुः सागारिकसत्कं शय्यासंस्तारक द्वितीयमपि अननुज्ञाप्य बहि-र्निर्णयति निर्णयन्तं वा स्वदते ॥ सू० ५४ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'सागारियसंतियं' सागा-रिकसत्कम्-गृहस्थसबंधि 'सेज्जासंथारगं' शय्यासंस्तारकम्, यदसतौ वर्त्तमानं यदा तदा तत्स्वामिना गृहादागत्योपभुज्यमानम् ऋतुबद्धकाले वर्षाकाले वा कञ्चित्कालमुपभोगाय याचित-वान् तद्यदि—उपाश्रयान्तरं प्रस्थातुकाम पुनर्द्वितीयवारमपि शय्यासस्तारकस्वामिनमनिवेद्य 'बाहिं णीणेइ' बहिर्द्वितीयां वसतिं नयति । इत्थमेव—'णीणेंतं वा साइज्जइ' निर्णयन्तमन्य वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति । पूर्वसूत्रे—श्रावकगृहादानीतवस्तुन आज्ञां विना बहि-र्नयने दोष. कथितः, अस्मिन् सूत्रे तु—वसतिस्थितश्रावकसंबन्धिवस्तुन· आज्ञां विना बहिर्नयने दोषः कथित इत्यनयोर्भेदः ॥ सू० ५४ ॥

सूत्रम्—जे भिक्खू पाडिहारियं सागारियसंतियं वा सेज्जासं-थारगं दोच्चंपि अणणुण्णवेत्ता बाहिं णीणेइ । णीणेंतं वा साइज्जइ ॥५५॥

छाया—यो भिक्षुः प्रातिहारिकं-सागारिकसत्कं वा शय्यासंस्तारकं द्वितीयमपि अननुज्ञाप्य बहिः निर्णयति निर्णयन्तं वा स्वदते ॥ सू० ५५ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'पाडिहारियं' प्रातिहारिकं उपभोगानन्तरं प्रत्यर्पणयोग्यम् 'सागारियसंतियं वा' सागारिकसत्कं-सागारिकसम्बन्धिकं वा 'सेज्जासंथारगं' शय्यासंस्तारकं-पीठफलकादिकं अपरिशाटिलक्षणं (५१ सू० द०) पीठफलक-तृणादिकम् 'दोच्चंपि अणणुण्णवेत्ता' द्वितीयमपि वारमननुज्ञाप्य । प्रथमवारं तु मासकल्पशेषकालेऽनुज्ञापितम्, इदानीं पुनर्बहिर्निर्णयनेऽनुज्ञाप्यम्, किन्तु-एकदैवाऽनुज्ञाप्यानीतं शय्यासंस्तारकं पुनर्द्वितीयोपाश्रये नयनसमयेऽननुज्ञाप्य नयति । तथा 'णीणेंतं वा साइज्जइ' अननुज्ञाप्यैव बहिर्निर्णयन्तमन्यं स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ।

चतुष्पञ्चाशत्सूत्रे सागारिकाधीनवस्तुनो नयने दोषः कथित । अत्र तु-पुनः प्रातिहारिक-वस्तुनयने दोष इत्यनयोर्भेदः । मन्दमतीनां सुखबोधाय पुनः कथनम् ॥ सू० ५५ ॥

## सूत्रम्—जे भिक्खू पाडिहारियं सेज्जासंथारयं आदाए अपडिहट्टु संपव्वयइ संपव्वयंतं वा साइज्जइ ॥ सू० ५६ ॥

छाया—यो भिक्षुः प्रातिहारिक शय्यासंस्तारकम्-आदाय अप्रतिहृत्य संप्रव्रजति संप्रव्रजन्तं वा स्वदते ॥ सू० ५६ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'पाडिहारियं सेज्जासंथारयं' प्रातिहारिकम्-प्रत्यर्पणयोग्यम् । अयं भावः—यद् मासकल्पादिकरणार्थं सागारिककुलादानीतं शय्यासंस्तारकम्, तत्—मासकल्पे परिपूर्णे सति यस्माद् गृहीतं पुनस्तस्मै प्रत्यर्पणीयम्, एतादृशशय्यासंस्तारकस्य धारणं भवति तत्प्रातिहार्यं शय्यासंस्तारक कथ्यते, एतादृशं शय्यासंस्तारकं पीठफलकादिकं श्रावकसकाशात् 'आयाए' आदाय-गृहीत्वा-अनुज्ञापूर्वकं प्रतिगृह्येत्यर्थः 'अपडिहट्टु' अप्रतिहृत्य अनर्पयित्वा, पूर्णे मासकल्पे पुनरर्पणमकृत्वैव यदि-'संपव्वयइ' संप्रव्रजति-विहारं करोति । तथा 'संपव्वयंतं वा साइज्जइ' संप्रव्रजन्तमन्यं 'वा' स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ५६ ॥

## सूत्रम्—जे भिक्खू सागारियसंतियं सेज्जासंथारयं आयाए अविगरणं कट्टु अणप्पिणित्ता संपव्वयइ संपव्वयंतं वा साइज्जइ ॥ सू० ५७॥

छाया—यो भिक्षुः सागारिकसत्कं शय्यासंस्तारकमादायाऽविकरणं कृत्वा अनर्पयित्वा संप्रव्रजति संप्रव्रजन्तं वा स्वदते ॥ सू० ५७ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'सागारियसंतियं' सागारिकसत्कं-गृहस्थसम्बन्धिकम् 'सेज्जासंथारयं' शय्यासंस्तारकम् 'आयाए' आदाय तदुपभोगं

कृत्वा विहारकाले 'अविगरणं कट्टु अणप्पिणित्ता' अविकरणं कृत्वा—अनर्पयित्वा, विकरणम् अन्यथा करणं, न तथा—अविकरणं-यथागृहीतं तथाकरणमित्यर्थः, तत् कृत्वा श्रावकात् पीठ-फलकतृणादिकं यथागृहीत तथाकृत्वा—तथासंपादनपूर्वकम्, अनर्पयित्वा—अदत्त्वा मत्कुणादि-जीवसहितमेव पीठफलकादिकं तृणादिसंस्तारकं च दत्त्वेति भाव 'संपव्वयइ' संप्रव्रजति—विहारं करोति, तथा 'संपव्वयंतं' सप्रव्रजन्तमन्यम् 'साइज्जइ' स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ५७ ॥

## सूत्रम्——जे भिक्खू पाडिहारियं वा सागारियसंतियं वा सेज्जा-संथारगं विप्पणट्ठं न गवेसइ न गवेसंतं वा साइज्जइ ॥ सू० ५८ ॥

छाया—यो भिक्षुः प्रातिहारिकं वा सागारिकसत्कं वा शय्यासंस्तारकं विप्र-णष्टं न गवेषयति न गवेषयन्तं वा स्वदते ॥ सू० ५८ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खु' यो भिक्षुः 'पाडिहारियं वा' प्राति-हारिकं—प्रत्यर्पणार्हम् 'सागारियसंतियं' सागारिकसत्कम् सागारिकसम्बन्धिक सांप्रतं श्रम-णाधीनम् 'सेज्जासंथारगं' शय्यासंस्तारकं—पीठफलकादिकं रक्ष्यमाणमपि 'विप्पणट्ठं' विप्रण-ष्टम्—चौरादिनाऽपहृतम् तद्यदि 'ण गवेसइ' न गवेषयति, इतस्ततोऽन्यान्यं न पृच्छति तद्रूपां गवे-षणां न करोतीत्यर्थ, तथा 'न गवेसंतं साइज्जइ' न गवेषयन्तमन्य स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ५८ ॥

## सूत्रम्——जे भिक्खू इत्तरियंपि उवहिं ण पडिलेहइ ण पडिलेहंतं वा साइज्जइ ॥ सू० ५९ ॥

छाया—यो भिक्षुः इत्वरिकमपि उपधिं न प्रतिलेखयति न प्रतिलेखयन्तं वा स्वदते ॥ सू० ५९ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'इत्तरियंपि उवहिं' इत्वरिकं स्वल्पमप्युपधिं वस्त्रपात्रादिकम्, स त्रिधा—जघन्य—मध्यमो—त्कृष्टभेदात् । तत्र—जघन्यो मुखवस्त्रिका वस्त्रखण्डं वा, मध्यमः—प्रावरणचोलपट्टकादिरूप', उत्कृष्ट—सर्वं वस्त्रपात्रादिकम्, तस्मिन् स्वल्पमपि मुखवस्त्रिकारूपमपि 'न पडिलेहइ' न प्रतिलेखयति तस्य प्रतिलेखनां न करोति उभयकालं सर्वभाण्डोपकरणादीनाम्, तेन प्रमादी भवति । प्रमादप्रभावात् सयमक्रियां विस्मरति । एकस्यां संयमक्रियायां विस्मृतायामन्यापि स्वाध्यायादिक्रिया विस्मृता भवति, ततश्चारित्रभ्रंशः, चारित्र-भ्रंशात्—चातुर्गतिकसंसारभ्रमणमनन्तजन्ममरणप्राप्तिः, तस्मादुभयकालं सर्वभाण्डोपकरणानां प्रति-लेखना कर्त्तव्या । 'ण पडिलेहंतं वा साइज्जइ' न प्रतिलेखयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्त-भाग् भवति ॥ सू० ५९ ॥

सूत्रे-इत्वरग्रहणेन सर्वोपकरणग्रहणं कृतम्, अत प्रथमत उपकरणं निरूपणीयम्, अत्राह भाष्यकारः—

**भाष्यम्**—उवगरणं दुविहं, ओहियं च तहेयरं ।
एक्केक्कं तिविहं णेयं, जहन्नुक्किट्ठमज्झिमं ॥

**छाया**—उपकरणं द्विविध,-मौधिकं च तथेतरत् ।
एकैकं त्रिविधं ज्ञेय, जघन्योत्कृष्टमध्यमम् ॥

**अवचूरिः**—'**उवगरणं**' इत्यादि । उपकरणं—वस्त्रपात्रादिकं द्विविधं—द्विप्रकारकमुक्तम्—एकमौधिक—सर्वसामान्यम्, वस्त्रपात्रादिसामान्यम् । तथा इतरत् औपग्रहिकम्, प्रातिहारिकपीठ-फलकादिकम् । तद्—एकैकमपि जघन्यमध्यमोत्कृष्टभेदात् त्रिविधम् । तत्र—जघन्य—मुखवस्त्रिका, वस्त्रखण्डं वा, मध्यमं—"चद्दर" चोलपट्टकादिकम्, उत्कृष्ट वस्त्रपात्रादिकं सर्वम् ॥ सू० ५९॥

**सूत्रम्—तं सेवमाणे आवज्जइ मासियं परिहारट्ठाणं उग्घाइयं ।६०।**

**॥ णिसीहज्झयणे बीओ उद्देसो समत्तो ॥२॥**

**छाया**—तत्सेवमान आपद्यते मासिकं परिहारस्थानमुद्घातिकम् ॥ सू० ६० ॥

**॥ इति निशीथाध्ययने द्वितीय उद्देशः समाप्तः ॥२॥**

**चूर्णी**—'**तं सेवमाणे**' इत्यादि । '**तं सेवमाणे**' तत् उद्देशकप्रारभे-'**दारुदंडयं पायपुंछणं करेइ**' इत्यादिप्रथमसूत्रादारभ्य, उद्देशकान्ते-'**इतरियंपि उवहिं ण पडिलेहइ**' इति सूत्रपर्यन्तमेकोनषष्टिसूत्राणि सन्ति, तत्र—यानि यानि प्रायश्चित्तस्थानानि कथितानि तन्मध्यादन्यतममपि—अपराधस्थानं सेवमान प्रतिसेवना कुर्वन् श्रमण '**आवज्जइ**' आपद्यते—प्राप्नोति । किमितिजिज्ञासायामाह—'**मासियं परिहारट्ठाण उग्घाइयं**' मासिक परिहारस्थानमुद्घातिकं प्रायश्चित्तम् लघुकमित्यर्थ ॥ सू० ६० ॥

इति श्री-विश्वविख्यात—जगद्वल्लभ—प्रसिद्धवाचक—पञ्चदशभाषाकलितललितकलापालापक—
प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक—वादिमानमर्दक—श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-
"जैनशास्त्राचार्य"-पदभूषित—कोल्हापुरराजगुरु—बालब्रह्मचारि—जैनाचार्य—जैन-
धर्म-दिवाकर—पूज्यश्री—घासीलालव्रति—विरचितायां "निशीथसूत्रस्य"
चूर्णिभाष्यावचूरिरूपाया व्याख्यायां द्वितीय उद्देशकः समाप्तः ॥२॥



## ॥ तृतीयोद्देशकः ॥

अथ तृतीयोद्देशकप्रथमसूत्रस्य द्वितीयोद्देशकान्तिमसूत्रेण सह कः संबंधः ? इति चेदत्राह भाष्यकार:—'उवहि' इत्यादि ।

भाष्यम्—उवहिपडिलेहो य, पुव्वुत्तो तयणंतरं ।
आहारं पडिगिण्हिज्जा, संबंधोऽत्थ वियाहिओ ॥१॥

छाया—उपधिप्रतिलेखश्च पूर्वोक्तस्तदनन्तरम् ।
आहारं प्रतिगृह्णीयात्, सम्बन्धोऽत्र व्याख्यातः ॥१॥

अवचूरिः—'उवहीपडिलेहो य' उपधिप्रतिलेखश्च, उपधिप्रतिलेख. उपधेः—प्रतिलेखना 'पुव्वुत्तो' पूर्वोक्त. पूर्वमुक्त कथित, तदन्तरम् उपधिं प्रतिलिख्य उपधे वस्त्रादे आहार-प्रसङ्गात्पात्रस्य च प्रतिलेखनां कृत्वा आहारं प्रतिगृह्णीयात्, इति अस्मिन् तृतीयोद्देशे आहार-ग्रहणविधिः प्रदर्श्यते, एष एवात्र तृतीयोद्देशस्य द्वितीयोद्देशान्तिमसूत्रेण सह सम्बन्धो व्याख्यातः कथित. । अनेन सम्बन्धेनायातस्यास्य तृतीयोद्देशकस्येदमादिमं सूत्रम्, तत्र प्रथम पुरुषमधिकृत्य—एकवचनसूत्रमाह—'जे भिक्खू' इत्यादि ।

**सूत्रम्—जे भिक्खू आगंतागारेसु वा, आरामागारेसु वा गाहावइ-कुलेसु वा परियावसहेसु वा अण्णउत्थियं वा गारत्थियं वा असणं वा पाणं वा खाइमं वा साइमं वा ओभासिय-ओभासिय जायइ, जायंतं वा साइज्जइ ॥ सू० १ ॥**

छाया—यो भिक्षुः आगन्त्रागारेषु वा-आरामागारेषु वा गाथापतिकुलेषु वा पर्या-वसथेषु वा अन्ययूथिकं वा-गार्हस्थिकं वा अशनं वा पानं वा खाद्यं वा स्वाद्यं वा अवभाष्याऽवभाष्य याचते, याचमानं वा स्वदते ॥ सू० १ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'आगंतागारेसु वा' आगन्त्रागा-रेषु वा, तत्र—आगन्तार:—पथिका. तेषां विश्रामकरणाय कृत आगारो गृहम् 'धर्मशाला' इति लोके प्रसिद्धम्, तत्र गत्वा, अर्थात्- यत्र स्थानविशेषे निर्मिते गृहे आगन्तुका: सार्थवाहादयो गमनागमन-समये समागत्य विश्रामार्थं निवसन्ति तादृशगृहविशेषे स्थितश्रावकाणां पुरतोऽशनादिकं याचते—इत्यग्रिमेण सबन्धः । 'आरामागारेसु वा' आरामागारेषु, तत्र—"आराम: स्यादुपवन कृत्रिमं वनमेव यत्" इत्यमर., तस्मिन्नारामे—उपवने -आगारो गृहम् कञ्चित्काले मनोविनोदनाय क्रीडार्थं वस्तुम् निर्मीयते, तेषु वा 'गाहावइकुलेसु वा' गाथापतिकुलेषु वा-गाथा:-गृहा, तेषां पतयस्तेषां कुलेषु । 'परियावसहेसु वा' पर्यावसथेषु वा, तत्र—गृहिपर्यायं परित्यज्य प्रव्रज्यापर्याये ये स्थितास्तापसा-

स्तेषामावसथाः, तेषु तापसनिवासस्थानेषु वा 'अण्णउत्थियं वा गारत्थियं वा' अन्ययूथिकं वा गार्हस्थिकं व गृहस्थं, 'असणं वा पाणं वा खाइमं वा साइमं वा' अशनादिचतुर्विधाहारम् 'ओभासिय ओभासिय जायइ' अवभाष्याऽवभाष्य याचते, अर्थात् पूर्वोक्तधर्मशालाप्रभृतिषु स्थितमन्ययूथिकं गृहस्थं वा अवभाष्योच्चैःस्वरेण सबोध्य, यथा-"भो भो ! त्वं मह्यमशनादिकं देहि" इति क्रमेणाऽशनपानादिकं याचते। एकवचनात्मकमिदं सूत्रम्। 'जायंतं वा साइज्जइ' याचमानं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० १ ॥

अत्राह भाष्यकारः—

**भाष्यम्** आगंतागाराइसु, ओभासिय जायए य जो समणो ।
आणाभंगाईए, दोसे पावेइ सो नियमा ॥

**छाया** —आगन्त्रागारादिषु अवभाष्य याचते च यः श्रमणः।
आज्ञाभङ्गादिकांश्च दोषान् प्राप्नोति स नियमात् ॥

**अवचूरिः** —'आगंतागाराइसु' इत्यादि । य श्रमण या श्रमणी वा आगन्त्रागारादिषु, आदिपदात्–उपवनस्थितगृहेषु गाथापतिकुलेषु वा स्थितान् शाक्यभिक्षुकादीन्–अन्यदर्शनाऽनुयायिन, श्रावकान् वा अवभाष्य तारस्वरेण "भिक्षां ददत" इति कथयित्वा, अशनं-पानं-खाद्यं-स्वाद्यं वा याचते स आज्ञाभङ्गादिकान् आज्ञाभङ्गाऽनवस्थामिथ्यात्वात्मविराधन-सयमविराधनलक्षणान् दोषान् प्राप्नोति ।

तत्राज्ञाभङ्ग इत्थम्–नहि–एतादृश्याज्ञा तीर्थंकरस्य विद्यते यदेतादृशस्थानेषु गत्वाऽनाथवत् श्रमणैर्याचितव्यमिति, ततस्तीर्थंकराज्ञाप्रातिकूल्येन याचनाकरणे भवत्येव तीर्थकराज्ञाभङ्ग । तथा यद्येक. श्रमण एवं करिष्यति, तदा तद्दृष्ट्वाऽन्योऽपि तथा करिष्यते-इति स्पष्टैवाऽनवस्था। तथा-धर्मशालादौ भिक्षाया अलाभेऽपमाने च सति साधोर्जिनवचसि–अनास्था सपद्येत तेन मिथ्यात्वसभव. । एवमेव जैनभिक्षव इतस्ततो भ्रमन्ति–इति लोके जिनशासनस्याऽवहेलना भवेत्। तथा-तीर्थकराज्ञाभङ्गेनैव सयमविराधनम् । तथा–कदाचित्–द्वेषयुक्तो दाता विषमिश्रितां भिक्षां दद्यात् इति तादृशभिक्षाप्राप्त्या विविधरोगोत्पादनद्वारा मरणमपि संभवेदित्यात्मविराधनम् ॥ सू० १॥

अथ पुरुषमेवाधिकृत्य बहुवचनसूत्रमाह—-

**सूत्रम्—जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा, परियावसहेसु वा, अण्णउत्थियाओ वा गारत्थियाओ वा असणं वा पाणं वा खाइमं वा साइमं वा ओभासिय–ओभासिय जायइ जायंतं वा साइज्जइ ॥ सू० २ ॥**

छाया—यो भिक्षुः आगन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा पर्यावसथेषु वा, अन्ययूथिकान् वा गार्हस्थिकान् वा, अशनं वा पानं वा खाद्यं वा स्वाद्यं वा, अवभाष्याऽवभाष्य याचते याचमानं वा स्वदते ॥ सू० २ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः, 'आगंतागारेसु वा' आगन्त्रागारेषु धर्मशालादिषु 'आरामागारेसु वा' आरामागारेषु वा 'गाहावइकुलेसु वा' गाथापतिकुलेषु वा 'परियावसहेसु वा' पर्यावसथेषु वा, एतेषु पूर्वप्रदर्शितप्रकारेषु स्थानेषु ये स्थितास्तान् 'अण्णउत्थियाओ वा' अन्ययूथिकास्तीर्थान्तरीया तापस-शाक्यभिक्षुकादयस्तान वा 'गारत्थियाओ वा' गार्हस्थिका गृहस्थाः श्रावकास्तान् वा 'असणं वा पाणं वा खाइमं वा साइमं वा' अशनादिचतुर्विधाऽऽहारम् 'ओभासिय-ओभासिय जायइ' अवभाष्याऽवभाष्य याचते, महता दीर्घस्वरेण याचनां करोति। आगन्त्रागारादिषु स्थितान् तीर्थान्तरीयान् श्रावकान् वा उच्चैःस्वरेण संबोध्य तेभ्योऽशनादिकं याचते इत्यर्थः। 'जायंत वा साइज्जइ' याचमान वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति। अत्र सूत्रे प्रथमसूत्रवद्भाष्य ज्ञातव्यम्। एकत्र–प्रथमसूत्रे दायकपदे एकवचनम्, अपरत्र–द्वितीयसूत्रे बहुवचनमित्यनयोर्भेदः ॥ सू० २ ॥

पूर्वं पुरुषमधिकृत्य एकत्वबहुत्वेन सूत्रद्वयमुक्तम्, साम्प्रतं स्त्रीमधिकृत्य–एकवचन–बहुवचनाभ्या सूत्रद्वयमाह—

सूत्रम्—जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा, अण्णउत्थिणिं वा गारत्थिणिं वा असणं वा पाणं वा खाइमं वा साइमं वा ओभासिय–ओभासिय जायइ जायंतं वा साइज्जइ ॥ सू० ३ ॥

छाया—यो भिक्षुः आगन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा पर्यावसथेषु वा अन्ययूथिकीं वा गार्हस्थिकीं वा अशनं वा पानं वा खाद्य वा स्वाद्यं वा अवभाष्याऽवभाष्य याचते याचमानं वा स्वदते ॥ सू० ३ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'आगंतागारेसु वा' आगन्त्रागारेषु 'आरामागारेसु वा' आरामागारेषु वा 'गाहावइकुलेसु वा' गाथापतिकुलेषु वा 'परियावसहेसु वा' पर्यावसथेषु वा 'अण्णउत्थिणिं वा' अन्ययूथिकीं–अन्यतीर्थिकस्त्रीं 'गारत्थिणिं वा' गार्हस्थिकीं गृहस्थस्त्रीं वा 'असणं वा पाणं वा खाइमं वा साइमं वा' अशनादिचतुर्विधाऽऽहारम्, एतदशनादिकमागन्त्रागारादिस्थितानाम् अन्ययूथिकादिस्त्रीणा सकाशादित्यर्थः। यदि–'ओभासिय-ओभासिय' अवभाष्याऽवभाष्य–"साधुरहं मह्यमशनादिकं भवत्या देयम्" इत्येव-

प्रकारेण तारस्वरेण कथयित्वा कथयित्वा 'जायइ' याचते 'जायंत वा साइज्जइ' याचमानं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति । इदं सूत्रं स्त्रीजातीयविषयकमेकवचनपरकं प्रायश्चित्तपरकं च ॥ सू० ३ ॥

अथ बहुवचनपरकं स्त्रीसूत्रमाह—

**सूत्रम्—जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइ-कुलेसु वा परियावसहेसु वा अण्णउत्थिणीओ वा गारत्थिणीओ वा असणं वा पाणं वा खाइमं वा साइमं वा ओभासिय-आभासिय जायइ, जायंतं वा साइज्जइ ॥ सू० ४ ॥**

छाया—यो भिक्षुः आगन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा पर्यावसथेषु वा अन्ययूथिकीर्वा गार्हस्थिकीर्वा, अशनं वा पानं वा खाद्य वा स्वाद्यं वा अवभाष्य-अवभाष्य याचते याचमानं वा स्वदते ॥ सू० ४ ॥

चूर्णी—व्याख्यानं पूर्ववत् । इदं स्त्रीसूत्रं बहुवचनपरकमित्येव भेदः ॥सू० ४॥

अत्राह भाष्यकारः—

भाष्यम्— पढमे जो गमो वुत्तो, सो चेव य बितीयगे ।
तइएवि चउत्थेवि, भेओ एगबहुत्तगो ॥

छाया— प्रथमे यो गमः प्रोक्तः स एव च द्वितीयके ।
तृतीयेऽपि चतुर्थेऽपि भेद एकबहुत्वकः ॥

अवचूरिः—'पढमे'-इत्यादि । प्रथमे-तृतीयोद्देशकस्य प्रथमसूत्रे यो गम.—प्रकार. प्रायश्चित्तादीनामाज्ञाभङ्गादिदोषाणां कथितः स एव गमो द्वितीयके, तृतीयोद्देशकस्य द्वितीये पुरुषबहुत्वसूत्रेऽपि ज्ञातव्य· । एवमेव तृतीयेऽपि तृतीयोद्देशकस्य तृतीये स्त्रीसूत्रेऽपि स एव गम एकवचनात्मको ज्ञातव्य । तथा—चतुर्थेऽपि तृतीयोद्देशकस्य चतुर्थे सूत्रे स्त्रीबहुत्वविषयको गमो ज्ञातव्यः, केवल भेदो नानात्वं एकत्वबहुत्वयो । अर्थात् प्रथमं द्वितीयं च सूत्र पुरुषमाश्रित्यैक-वचनबहुवचनविषयकम् , तृतीयं चतुर्थं च सूत्रं स्त्रियमाश्रित्य एकवचनबहुवचनविषयकं ज्ञातव्यम् ॥ सू० ४ ॥

**सूत्रम्—जे भिक्खू आगंतागारेसु वा, आरामागारेसु वा गाहावइ-कुलेसु वा परियावसहेसु वा अण्णउत्थियं वा, गारत्थियं वा, कोउहल-पडियाए पडियागयं समाणं असणं वा पाणं वा, खाइमं वा साइमं वा आभासिय-ओभासिय जायइ जायंतं वा साइज्जइ ॥ सू० ५ ॥**

छाया—यो भिक्षुः आगन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा पर्यावसथेषु वा अन्ययूथिकं वा गार्हस्थिकं वा, कौतूहलप्रतिज्ञया प्रत्यागतं सन्तं अशनं वा पानं वा खाद्यं वा स्वाद्यं वा अवभाष्याऽवभाष्य याचते, याचमानं वा स्वदते ॥सू०५॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षु. 'आगंतागारेसु वा' आगन्त्रागारेषु वा 'आरामागारेसु वा' आरामागारेषु वा 'गाहावइकुलेसु वा' गाथापतिकुलेषु वा 'परियावसहेसु वा' पर्यावसथेषु वा 'अण्णउत्थियं वा' अन्ययूथिकं–दर्शनाऽन्तरीयं यं कमप्येकम्, 'गारत्थियं वा' गार्हस्थिकं गृहस्थं वा 'कोउहलपडियाए पडियागयं समाणं' कौतूहलप्रतिज्ञया प्रत्यागतं सन्तम् कौतूहल क्रीडादिकं-धर्मपृच्छा वा, तत्कौतूहलप्रतिज्ञया प्रत्यागतमागतं सन्तं तिष्ठन्तम् 'अण्णउत्थियं' अन्ययूथिकम् 'गारत्थियं वा' गार्हस्थिकं वा उपेत्य, तत्सकाशात्-'असणं वा' अशनं वा, 'पाणं वा' पानं वा खाइमं वा' खाद्यं वा, 'साइमं वा' स्वाद्यं वा यदि-'ओभासिय-ओभासिय' अवभाष्याऽवभाष्य उच्चैरुच्चार्य्य तिष्ठन्तमागन्तुकं परतीर्थिकं श्रावकं वा–'भो भो मह्यं साधवेऽन्नपानादिकं देहि' इत्थम् 'जायइ' याचते, 'जायंतं वा साइज्जइ' याचमान वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ५ ॥

अत्राह भाष्यकारः—

भाष्यम्—आगंतुगाइगेहेसु, कोउगट्ठं उवट्ठियं।
ओभासिय जायमाणो, समणो, दोसभा हवे ॥

छाया—आगन्तुकादिगेहेषु कौतुकार्थमुपस्थितम्।
अवभाष्य याचमानः श्रमणो दोषभाग् भवेत् ॥

अवचूरिः—'आगंतुगाइ०' इत्यादि। यो भिक्षुः आगन्तुकादिगेहेषु-आरामागारेषु वा गाथापतिगेहेषु वा कौतुकार्थं साधोरागमनात् पूर्वमागत्य समुपस्थितं वर्त्तमानं परतीर्थिकं गृहस्थं वा एकमपि आभाष्योच्चस्वरेण शब्दं कृत्वा-अशन-पान-खाद्य–स्वाद्यादिकं याचते स श्रमणः दोषभाग् भवेत्। कथमेते परतीर्थिकाः गृहस्था वा समागत्य स्थिता भवन्ति ? इति चेत् श्रृणु–केचित्--यक्षाभावेन, केचन कौतुकेन, केचन साधूनां दर्शनार्थम्, केचन-स्वकीयसंशयनिराकरणार्थम्, केचन-श्रावकधर्मं श्रमणधर्मं वा श्रोतुम् आगच्छन्ति। एषु समुपस्थितेषु-एकतमादपि-अवभाष्याऽशनादिकं याचते तस्यैते भद्रप्रान्तदोषा भवन्ति। तत्र भद्रदोषः-स्वस्य भद्रत्वेन उद्गमादिदोषदुष्टाहारग्रहणरूपः। प्रान्तदोषः अदत्तादानविषयकलोकगर्हारूप इति। तत्र यदि अवभाष्य कृतेपि याचने न लभ्यते तदा साधोरपमानं भवति। कथयन्ति लोकाः— क्षुद्राः साधवो न लभन्ते। अदत्ते दातुरपमानं कृपणोऽयमिति ॥सू० ५ ॥

सूत्रम्—जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गहावइकुलेसु वा परियावसहेसु वा कोऊहलपडियाएपडियागया समाणा अण्णउत्थिया वा गारत्थिया वा असणं वा, पाणं वा, खाइमं वा साइमं वा ओभासिय-ओभासिय जायइ, जायंतं वा साइज्जइ ॥ सू० ६ ॥

छाया—यो भिक्षुः आगन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा पर्यावसथेषु वा कौतूहलप्रतिज्ञया प्रत्यागतान् सतः-अन्ययूथिकान् वा गार्हस्थिकान्, वा अशनं वा पानं वा खाद्य वा स्वाद्य वा, अवभाष्याऽवभाष्य याचते, याचमानं वा स्वदते ॥ सू० ६ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'आगंतागारेसु वा' आगन्त्रागारेषु वा-धर्मशालासु 'आरामागारेसु वा' आरामागारेषु वा 'गाहावइकुलेसु वा' गाथापतिकुलेषु वा 'परियावसहेसु वा' पर्यावसथेषु वा 'कोउहलपडियाए' कौतूहलप्रतिज्ञया 'पडियागया समाणा' प्रत्यागतान् सतः-स्थितान् आगन्तुकादिगृहेषु केचन-स्वभावतः, केचन-दर्शनार्थम्, केचन कौतुकेन, केचन-धर्मश्रवणार्थम्, केचन संशयनिराकरणार्थं समागतास्तान्। कांस्तान्? तत्राह—'अण्णउत्थिया' इत्यादि। 'अण्णउत्थिया' अन्ययूथिकान्-तीर्थान्तरीयान् वा तथा-'गारत्थिया वा' गार्हस्थिकान्-गृहस्थान् 'असणं वा पाणं वा खाइमं वा साइमं वा' अशनादिचतुर्विधाहारम्, 'ओभासिय-ओभासिय जायइ' अवभाष्याऽवभाष्य उच्चैरुच्चार्य याचनां करोति, तथा-'जायंतं वा साइज्जइ' याचमानं वा स्वदते स प्रायश्चित्तभाग् भवति। पूर्वसूत्रे पुरुषमधिकृत्यैकवचनप्रयोगः, अत्र बहुवचनस्य प्रयोग इत्यनयोर्भेदः ॥ सू० ६ ॥

सूत्रम्—जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा कोऊहलडियाए पडियागयं समाणं अण्णउत्थिणिं वा गारत्थिणिं वा असणं वा पाणं वा खाइमं वा साइमं वा ओभासिय-ओभासिय जायइ जायंतं वा साइज्जइ ॥ सू० ७ ॥

छाया—यो भिक्षु आगन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा पर्यावसथेषु वा कौतूहलप्रतिज्ञया प्रत्यागतां सतीं अन्ययूथिकीं वा गार्हस्थिकीं वा, अशनं वा पानं वा खाद्यं वा स्वाद्यं वा अवभाष्याऽवभाष्य याचते, याचमानं वा स्वदते ॥ सू० ७ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'आगंतागारेसु वा' आगन्त्रागारेषु वा 'आरामागारेसु वा' आरामागारेषु वा 'गाहावइकुलेसु वा' गाथापतिकुलेषु वा 'परिया-

वसहेसु वा' पर्यावसथेषु वा परिव्राजकावसथेषु 'कोऊहलडियाए पडियागयं समाणं' कौतूहल-प्रतिज्ञया प्रत्यागतां सतीम्-कौतुकार्थं दर्शनार्थं संशयादिच्छेदनार्थं धर्मश्रवणार्थं वा समागताम् 'अण्ण-उत्थिणिं वा गारत्थिणिं वा' अन्ययूथिकीं गृहस्थिनीं वा 'असणं वा पाणं वा खाइमं वा साइमं वा'अशनादिचतुर्विधाहारम् 'ओभासिय-ओभासिय' अवभाष्याऽवभाष्य उच्चैः सम्बोधनं कृत्वा 'जायइ' याचते 'जायंतं वा साइज्जइ' याचमान वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ७ ॥

सूत्रम्—जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा कोऊहलपडियाए पडियागया समाणा अण्णउत्थिणीओ वा गारत्थिणीओ वा, असणं वा पाणं वा खाइमं वा साइमं वा ओभासिय-ओभासिय जायइ, जायंतं वा साइज्जइ ॥ सू० ८॥

छाया—यो भिक्षुः आगन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा पर्यावसथेषु वा कौतूहलप्रतिज्ञया प्रत्यागताः सतीः अन्ययूथिकीर्वा गार्हस्थिकीर्वा अशनं वा पानं वा खाद्यं वा स्वाद्यं वा अवभाष्याऽवभाष्य याचते याचमानं वा स्वदते ॥८॥

चूर्णी-'जे भिक्खु' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'आगंतागारेसु वा' आगन्त्रागारेषु 'आरामागारेसु वा' आरामागारेषु 'गाहावइकुलेसु वा' गाथापतिकुलेषु 'परियावसहेसु वा' पर्यावसथेषु-परिव्राजकावसथेषु 'कोऊहलपडियाए' कौतूहलप्रतिज्ञया 'पडियागया समाणा' प्रत्यागताः सतीः 'अन्नउत्थिणीओ वा' अन्ययूथिकीर्वा 'गारत्थिणीओ वा' गार्हस्थिकीर्वा 'असणं वा' अशनं वा 'पाणं वा' पान वा 'खाइमं वा' खाद्यं वा 'साइमं वा' स्वाद्यं वा, 'ओभासिय-ओभासिय' अवभाष्यावभाष्य उच्चस्वरैः उद्घोष्य परतीर्थिक स्त्रियो गृहस्थस्त्रियो वा 'जायइ' याचते 'जायंतं वा साइज्जइ' याचमानं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति॥ सू० ८ ॥

अत्राह भाष्यकारः—

भाष्यम्—पुरिसाणं गमो वुत्तो, पंचमे छट्ठगे जहा।
सत्तमट्ठमसुत्तेसु, इत्थीणेगपुहुत्तओ ॥

छाया—पुरुषाणां गमः प्रोक्तः पञ्चमे षष्ठके यथा।
सप्तमाष्टमसूत्रयोः स्त्रीणामेकपृथक्त्वतः ॥

अवचूरिः—'पुरिसाणं'-इत्यादि। यथा येन प्रकारेण पञ्चमे षष्ठे वा सूत्रे पुरुषाणामागन्तुकादीनां धर्मशालादौ स्थितानामन्ययूथिकानां गृहस्थानां वा एकस्य बहूनां वा समी-

पेऽवभाष्य याचनाकरणे यो गमः-प्रकारः प्रोक्तः स एव गमः सप्तमेऽष्टमे च सूत्रेऽन्ययूथिकादिस्त्रीणां एकत्वपृथक्त्वत इत्येकवचन-बहुवचनत एकस्याः स्त्रियाः, बह्वीनां स्त्रीणां वा पुरतोऽवभाष्य याचना-करणे स एव प्रकारो ज्ञातव्य. । पंचमं-षष्ठं च सूत्रं पुंविषयकम् , सप्तममष्टमं तु स्त्रीविषयकम् । एतावानेव भेदः । तत्रापि यथा पञ्चमसूत्रमेकपुरुषविषयकम्, यथा वा-षष्ठसूत्र बहुपुरुषविषयकम् तथैव-सप्तमसूत्रमेकस्त्रीविषयकम्, अष्टमसूत्रं त्वनेकस्त्रीविषयकम् । अन्यत्सर्वं समानम् ॥ सू० ८॥

**सूत्रम्—जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइ-कुलेसु वा परियावसहेसु वा अण्णउत्थिएण वा गारत्थिएण वा असणं वा पाणं वा खाइमं वा साइमं वा अभिहडं आहट्टु दिज्जमाणं पडिसेहेत्ता तमेव अणुवत्तिय-अणुवत्तिय परिवेढिय परिवेढिय-परिजविय-परिजविय ओभासिय-ओभासिय जायइ, जायंतं वा साइज्जइ ॥ सू ९ ॥**

छाया—यो भिक्षुः आगन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा पर्यावसथेषु वा-अन्ययूथिकेन वा गार्हस्थिकेन वा, अशनं वा पानं वा खाद्यं वा स्वाद्य वा अभिहृतम् (पुर आनीतम्) आहृत्य दीयमानं प्रतिषेध्य, तमेवाऽनुवर्त्यानुवर्त्य परि-वेष्ट्य परिवेष्ट्य परिजल्प्य-परिजल्प्य, अवभाष्याऽवभाष्य याचते, याचमानं वा स्वदते ।९।

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'आगंतागारेसु वा' आगन्त्रागारेषु 'आरामागारेसु वा' आरामागारेषु 'गाहावइकुलेसु वा' गाथापतिकुलेषु 'परियावहेसु वा' पर्यावसथेषु वा परिव्राजकावसथेषु 'अण्णउत्थिएण वा' अन्ययूथिकेन वा-परतीर्थिकेन 'गारत्थिएण वा' गार्हस्थिकेन वा, अशनं वा पानं वा खाद्यं वा स्वाद्यं वा 'अभिहडं' अभिहृतम् साधवर्थं संमुखमानीत, तत् 'आहट्टु' आहृत्य-गृहीत्वा 'दिज्जमाणं' दीयमानमशनादिकम् 'पडिसेहेत्ता' प्रतिषिध्य, पूर्वमभिमुखीभूय ददत निषिध्य-ग्रहणार्थं निषेध कृत्वा पुन.-तमेव 'अणुवत्तिय-अणुवत्तिय' तमेव दातारमनुवर्त्यानुवर्त्य पञ्च-सप्त-पदगमनानन्तरमनुवर्तनं कृत्वा पृष्ठतो गत्वा 'परिवेढिय-परिवेढिय' परिवेष्ट्य-परिवेष्ट्य पुरतः पृष्ठतः पार्श्वतो वा स्थित्वा । 'परिजविय-परिजविय' परिजल्प्य परिजल्प्य 'त्वया मदर्थमिदमशनादिकमानीतम् परिश्रमस्तव निरर्थको मा भवतु तवाऽशनादिकं ग्रहिष्यामी'-येवंप्रकारेणोक्त्वा 'ओभासिय-ओभासिय' अवभाष्याऽवभाष्य 'जायइ' याचते, 'जायंतं वा साइज्जइ' याचमानं वा एवंविधमन्यं स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवतीति ॥ सू० ९ ॥

भाष्यम्—आहट्टु दिज्जमाणं जं, पडिसेहिय पुव्वओ ।
पच्छा तं अणुवट्टित्ता, जायए दोसमावहे ॥

छाया—आहृत्य दीयमानं यत्, प्रतिषिध्य पूर्वतः ।
पश्चात्तमनुवर्त्य, याचते दोषमावहेत् ॥

अवचूरिः—'आहट्टु' इत्यादि । 'आहट्टु' आहृत्य संमुखमानीय 'दिज्जमाणं' दीयमानमशनादिकं यत् 'पुव्वओ' पूर्वतः पूर्वं प्रतिषिध्य ग्रहणार्थं तस्य निषेधं कृत्वा पश्चात् दातरि प्रस्थिते सति तमेव अनुवर्त्य पञ्चसप्तपदानि अनुगमनं कृत्वा पुरतः पृष्ठतः पार्श्वतो वा स्थित्वा परिजल्प्य 'त्वया यन्मदर्थमानीतमशनादिकं ततस्तव प्रयासो विफलो माभूदिति ग्रहीष्यामि त्वत्तोऽशनादिक'-मिति अवभाष्य पुनरशनादिकं यो भिक्षुर्याचते स दोषमावहेत् दोषमाज्ञाभङ्गादिकं प्राप्नुयादिति ॥ सू० ९ ॥

सूत्रम्—जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा अण्णउत्थिएहिं वा गारत्थिएहिं वा, असणं वा पाणं वा खाइमं वा साइमं वा अभिहडं आहट्टु दिज्जमाणं पडिसेहेत्ता तमेव अणुवत्तिय-अणुवत्तिय, परिवेढिय-परिवेढिय, परिजविय-परिजविय, आभासिय-ओभासिय जायइ जायंतं वा साइज्जइ ॥ सू० १० ॥

छाया—यो भिक्षुः आगन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा पर्यावसथेषु वा अन्ययूथिकैर्वा गार्हस्थिकैर्वा, अशनं वा पानं वा खाद्यं वा स्वाद्यं वा, अभिहृतमाहृत्य दीयमानं प्रतिषेध्य तमेवाऽनुवर्त्याऽनुवर्त्य परिवेष्ट्य परिवेष्ट्य प्रजल्प्य-प्रजल्प्य, अवभाष्याऽवभाष्य याचते, याचमानं वा स्वदते ॥ सू० १० ॥

चूर्णी—'जे भिक्खू आगंतागारेसु वा' इत्यादि सर्वं पूर्ववदेव, विशेष एतावानेव-यत् पूर्वं पुरुषविषयकं तृतीयैकवचनमाश्रित्य सूत्रं प्रोक्तम्, अत्र तु तृतीयाबहुवचनमाश्रित्य सूत्रं प्रवर्तते इति ॥ सू० १० ॥

सूत्रम्—जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा अण्णउत्थिणीए वा गारत्थिणीए वा असणं वा पाणं वा खाइमं वा साइमं वा अभिहडं आहट्टु दिज्जमाणं पडिसेहेत्ता तमेव अणुवत्तिय-अणुवत्तिय रिवेढिय-परिवेढिय, परिजविय-परिजविय ओभासिय-ओभासिय जायइ जायंतं वा साइज्जइ ॥ सू० ११ ॥

छाया—यो भिक्षुः आगन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा पर्यावसथेषु वा, अन्ययूथिक्या वा गार्हस्थिक्या वा अशनं वा पानं वा खाद्यं वा स्वाद्यं

वा, अभिहृतमाहृत्य दीयमानं प्रतिषेध्य तामेव अनुवर्त्याऽनुवर्त्य परिवेष्ट्य-परिवेष्ट्य-प्रजल्प्य प्रजल्प्य अवभाष्याऽवभाष्य याचते याचमानं वा स्वदते ॥ सू० ११ ॥

चूर्णी—नवमं दशमं च सूत्रं याच्यमानपुरुषविषयकमेकत्व-पृथक्त्वेन व्याख्यातम्, संप्रति-एकादशसूत्रं याच्यमानस्त्रीविषयकं व्याख्यातुमाह-'जे भिक्खू' इत्यादि स्पष्टम् ॥ सू० ११ ॥

एकादशं सूत्रमेकां स्त्रीमाश्रित्य याचनाविषयकं व्याख्याय तदनु-अनेकस्त्रीविषयकं द्वादशं सूत्रमाह —'जे भिक्खू' इत्यादि ।

**सूत्रम्—जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइ-कुलेसु वा परियावसहेसु वा अण्णउत्थिणीहिं वा गारत्थिणीहिं वा असणं वा पाणं वा खाइमं वा साइमं वा अभिहडं आहट्टु दिज्जमाणं पडिसेहेत्ता-ताओ अणुवत्तिय-अणुवत्तिय परिवेढिय-परिवेढिय परिजविय-परिजविय ओभासिय-ओभासिय जायइ जायंतं वा साइज्जइ ॥ सू० १२ ॥**

छाया – यो भिक्षुः आगन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा पर्यावसथेषु वा अन्ययूथिकीभिर्वा गार्हस्थिकीभिर्वा अशनं वा पानं वा खाद्यं वा स्वाद्यं वा अभिहृतमाहृत्य दीयमानं प्रतिषेध्य ता एवाऽनुवर्त्याऽनुवर्त्य परिवेष्ट्य-परिवेष्ट्य, परिजल्प्य परिजल्प्य अवभाष्याऽवभाष्य याचते याचमानं वा स्वदते ॥ सू० १२ ॥

चूर्णी—'जे भिक्खू' इत्यादि । याच्यमानाऽनेकस्त्रीविषयकं सूत्रम्-'जे भिक्खू' यो भिक्षुः, इत्यादि स्पष्टम् । एतच्च सूत्रं याच्यमानाऽनेकस्त्रीविषयकमित्येतावता-एकादशसूत्रादेक-स्त्रीविषयकाद्भिद्यते ॥ सू० १२ ॥

**सूत्रम्—जे भिक्खू गाहावइकुलं पिंडवायपडियाए पविट्ठे पडियाइ-क्खिए समाणे दोच्चंपि तमेव कुलं अणुप्पविसइ अणुप्पविसंतं वा साइज्जइ॥**

छाया—यो भिक्षुः गाथापतिकुलं पिण्डपातप्रतिज्ञया प्रविष्टः प्रत्याख्यातः सन् द्वितीयमपि (वारं) तमेव कुलं अनुप्रविशति अनुप्रविशन्तं वा स्वदते ॥ सू० १३ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'गाहावइकुलं' गाथापति-कुलम् गृहिणां गृहम् 'पिंडवायपडियाए' पिंडपातप्रतिज्ञया अशन-पानादिग्रहणेच्छया 'पविट्ठे' प्रविष्टः-कोऽपि साधुः केषाञ्चित्-श्रावकादीनां गृहे भिक्षां ग्रहीतुं गतः परन्तु 'पडियाइक्खिए समाणे' प्रत्याख्यातः-निषिद्धः सन्-साधुर्भिक्षार्थे गृहस्थगृहे प्रविशति किन्तु गृहस्वामी निषे-धति "नाऽऽगन्तव्यम्"-इत्थं प्रतिषेधितोऽपि सन् साधुः 'दोच्चंपि तमेव कुलं अणुप्पविसइ' द्वितीयमपि वारं-गृहस्वामिन आज्ञामन्तरेणाऽनुप्रविशति, तद्गृहे पुनः प्रवेशं करोति । तथा 'अणुप्पविसंतं वा साइज्जइ' अनुप्रविशन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥१३॥

भाष्यम्—गाहावइकुलं भिक्खू, पच्चक्खाओ गओ जइ।
पुणो पवेसमेत्तेणं, आणाभंगाइयं भजे ॥

छाया—गाथापतिकुलं भिक्षुः प्रत्याख्यातो गतो यदि।
पुनः प्रवेशमात्रेण-आज्ञाभङ्गादिकं भजेत् ॥

अवचूरिः—'गाहावइकुलं' इत्यादि। कश्चिद्भिक्षुः भिक्षाप्राप्त्यर्थं गृहपतिकुलं गतः, तत्र प्रविशन्नेव गृहपतिना प्रत्याख्यात. "नास्ति मद्गृहे भिक्षावकाशः" एवंप्रकारेण निराकृतोऽपि यदि पुनर्गृहपतेराज्ञां विना तस्मिन् गृहे प्रविशति। ततः प्रवेशमात्रेणाज्ञाभङ्गादिकं दोषं भजते तस्मात्तत्कुलं न प्रविशेदननुज्ञात इति ॥ सू० १३ ॥

## सूत्रम्—जे भिक्खू संखडिपलोयणाए असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० १४ ॥

छाया—यो भिक्षुः संखडिप्रलोकनया अशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्णाति, प्रतिगृह्णन्तं वा स्वदते ॥ सू० १४॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'संखडिपलोयणाए' संखडिप्रलोकनया, संखडीति देशी शब्द: तदर्थस्तु यत्र स्थानेऽनेकजनानां भोजनं निष्पाद्यते, तादृशस्थानं संखडी। यत्राऽनेकपृथिव्यादिषड्जीवनिकायजीवाना प्राणाः खण्डिताः विराधिता भवन्ति सा संखडीति व्युत्पत्ते.—"जिमनवार" इति भाषायाम् तत्र—संखडीस्थले गत्वा—'असणं वा' अशनं वा, 'पाणं वा' पानं वा, 'खाइमं वा' खाद्यं वा, 'साइमं वा' स्वाद्यं वा, 'पडिग्गाहेइ' प्रतिगृह्णाति 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० १४ ॥

## सूत्रम्—जे भिक्खू गाहावइकुलं पिंडवायपडियाए अणुप्पविट्ठे समाणे परं तिघरंतराओ असणं वा पाणं वा खाइमं वा साइमं वा अभिहडं आहट्टु दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० १५ ॥

छाया—यो भिक्षुः गाथापतिकुलं पिंडपातप्रतिज्ञया अनुप्रविष्टः सन् परं त्रिगृहान्तरात् अशनं वा पानं वा खाद्यं वा स्वाद्यं वा अभिहृतमाहृत्य दीयमानं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० १५ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'गाहावइकुलं' गाथापतिकुलम् 'पिंडवायपडियाए' पिण्डपातप्रतिज्ञया तत्र—पिण्डोऽशनादिकं, तस्य गृहिणा दीयमानाहारस्य पात्रे

पातः प्रक्षेपः, तस्य प्रतिज्ञया मध्यस्थभावेन तद्ग्रहणबुद्ध्या भिक्षाग्रहणार्थमित्यर्थः **'अणुप्पविट्ठे समाणे'** अनुप्रविष्टः सन् भिक्षाग्रहणाय गाथापतिगृहं गतः सन् **'परं तिघरंतराओ'** परम-धिकं त्रिगृहान्तरात्, तत्र-त्रयाणां गृहाणां समाहारस्त्रिगृहम् त्रिगृहमेवाऽन्तरं व्यवधानमिति त्रिगृहान्तरम् गृहत्रयात्परत इत्यर्थः, प्रथमगृहादारभ्य तृतीयगृहान्तराल एव, न तु-चतुर्थादिगृहे भिक्षा-नियमः। ततः परं यदि चतुर्थादिगृहात् **'असणं वा'** अशनम् **'पाणं वा'** पानम् **'खाइमं वा'** खाद्यम् **'साइमं वा'** स्वाद्यम् **'अभिहडं'** अभिहृतम्-आभिमुख्येनाहृतम् आनीतम्, तत् **'आहट्टु दिज्जमाणं'** आहृत्य गृहीत्वा दीयमानमशनादिकं चतुर्विधं **'पडिग्गाहेइ'** प्रतिगृह्णाति। **'पडिग्गाहेंतं वा साइज्जइ'** प्रतिगृह्णन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० १५ ॥

## सूत्रम्—जे भिक्खू अप्पणो पाए आमज्जेज्ज वा पमज्जेज्ज वा आमज्जंतं वा पमज्जंतं वा साइज्जइ ॥ सू० १६ ॥

**छाया—यो भिक्षुः आत्मनः पादौ आमार्जयेद्वा प्रमार्जयेद्वा आमार्जयन्तं वा प्रमार्जयन्तं वा स्वदते ॥ सू० १६ ॥**

**चूर्णी—'जे भिक्खू'** इत्यादि। **'जे भिक्खू'** यो भिक्षुः **'अप्पणो पाए'** आत्मनः पादौ-स्वचरणौ **'आमज्जेज्ज वा'** आमार्जयेद्वा-मलनिवारणार्थं शोभादिसंपादनार्थं वा येन केनाऽपि द्रव्येण सकृत्प्रमार्जनं कुर्यात् **'पमज्जेज्ज वा'** प्रमार्जयेद्वा पुनः पुनः प्रमार्जनं कुर्यात्। तथा—**'आमज्जंतं वा पमज्जंतं वा'** आमार्जयन्तं वा प्रमार्जयन्तं वा **'साइज्जइ'** स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० १६ ॥

अत्राह भाष्यकारः—

**भाष्यम्**—पमज्जणं च दुविहं, आइण्णाइण्णभेयओ ।
अणाइण्णं सेवमाणे, आणाभंगाइ पावइ ॥

**छाया—प्रमार्जनं च द्विविधं-माचीर्णादिप्रभेदतः ।
अनाचीर्णं सेवमान आज्ञाभङ्गादिकं प्राप्नोति ॥**

**अवचूरिः**—**'पमज्जणं'**-इत्यादि। सूत्रे-चरणप्रमार्जने साधूनां दोषमुक्तवान्, तत्र-प्रमार्जनं द्विविधं द्विप्रकारकं भवति आचीर्णादिप्रभेदतः-आचीर्णाऽनाचीर्णभेदात्। तत्र-साधुभिराचर्यमाणं चरणप्रमार्जनम्-आचीर्णप्रमार्जनम्, एतद्विपरीतमनाचीर्णं भवति। तत्राऽऽ-चीर्णं प्रमार्जनमनेकप्रकारकं भवति तथथा—ससक्तौ चरणौ प्रमार्जयितव्यौ, मार्गे वा चलतः साधोर्यदि धूल्यादिभिश्चरणौ धूसरितौ भवेतां तदा प्रमार्जनीयौ। अस्थण्डिलात् स्थण्डिले गच्छतः पङ्किलभूमौ वा गच्छतो यदि पङ्केन चरणौ लिप्तौ तदा प्रमार्जनीयौ।

भिक्षाकरणेन प्रतिनिवृत्तः, यद्वा-संज्ञाभूमित आगतः, विहारभूमित आगतः, स्वाध्यायं कृत्वा समागतः, यद्वा-ग्रामान्तराद् गणकार्यं कृत्वा प्रत्यागतः ।

एतेषु कार्येषु साधुश्चरणौ प्रमार्जयति । एतत् प्रमार्जनमाचीर्णम्, एतद्विपरीतमनाचीर्णं प्रमार्जनमिति कथ्यते । तत्राऽनाचीर्णं चरणप्रमार्जनं कुर्वन् श्रमणः आज्ञाभङ्गादीन् दोषान् लभते । तत्र संयमविराधनेत्थम्-रजोहरणेन येन केनचिदन्येनापि साधनेन चरणप्रमार्जने वायवः संघट्टिता भवन्तीति वायुकायिकजीवानां विराधनं भवति ।

तथा-अन्येऽपि वायुकायिकेषु समुड्डीयमाना मशकादयो जीवा बादराश्च पतङ्गादयः संघट्टनेन विराधिता भवेयुः, बकुशदोषः, ब्रह्मचर्याऽगुप्तिश्च यस्मात् पादप्रमार्जने संयमविघातः अनेकविधप्राणानां विराधनात् , तस्मात्कारणात् साधुभिरनाचीर्णं चरणप्रमार्जनं न कथमपि कर्त्तव्यम् ॥ सू० १६ ॥

सूत्रम्—जे भिक्खू अप्पणो पाए संवाहेज्ज वा पलिमद्देज्ज वा संवाहेंतं वा पलिमद्देंतं वा साइज्जइ ॥ सू० १७॥

छाया—यो भिक्षुः आत्मनः पादौ संवाहयेद्वा परिमर्दयेद्वा संवाहयन्तं वा परिमर्दयन्तं वा स्वदते ॥ सू० १७ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'अप्पणो पाए' आत्मनः स्वस्य पादौ-चरणा 'संवाहेज्ज वा' सवाहयेत्-एकवार चरणौ सवाहयेत्-निष्पीडयेत् 'पगचंपी' ति भाषाप्रसिद्धं कारयेत् 'पलिमद्देज्ज वा' परिमर्दयेद्वा वारं वारं चरणयोः संवाहन कारयेत् । 'संवाहेंतं वा पलिमद्देंतं वा' सवाहयन्तं परिमर्दयन्तं वा, तत्र-संवाहनं चरणादिनिष्पीडनम्, तत् सवाहनं चतुर्विधम्-अस्थिसुखकरम् १, मांससुखकरम् २, रोमसुखकरम् ३, त्वक्सुखकरम् ४ । एव संवाहयन्तं वा परिमर्दयन्तं वाऽन्यं 'साइज्जइ' स्वदते-यः श्रमणः स्वयं चरणयोः संवाहन परिमर्दन वा कारयति कारयन्तं वा श्रमणान्तरं अनुमोदते स प्रायश्चित्तभाग् भवति । तथा-आज्ञाभङ्गानवस्थामिथ्यात्वसयमविराधनात्मविराधनादिदोषान् लभते तस्माच्चरणयोः संवाहनं-परिमर्दन वा न स्वयं कारयेत् न वा कारयन्तमन्यं श्रमणमनुमोदयेत् ॥ सू० १७ ॥

सूत्रम्—जे भिक्खू अप्पणो पाए तेल्लेण वा घएण वा णवणीएण वा वसाए वा मक्खेज्ज वा भिलिंगेज्ज वा मक्खेंतं वा भिलिंगेंतं वा साइज्जइ ॥सू० १८॥

छाया—यो भिक्षुः आत्मनः पादौ तैलेन वा घृतेन वा नवनीतेन वा वसया वा म्रक्षयेद्वा-अभ्यञ्जयेद्वा म्रक्षयन्तं वा अभ्यञ्जयन्तं वा स्वदते ॥ सू० १८ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'अप्पणो पाए' आत्मनः–स्वस्य चरणौ, 'तेल्लेण वा' तैलेन–तिलतैलेन सर्षपादितैलेन वा, 'घएण वा' घृतेन–गोमहिष्यादीनाम् 'नवणीएण वा' नवनीतेन 'मक्खन' इति प्रसिद्धेन, 'वसाए वा' वसया 'चर्बी'–ति लोकप्रसिद्धया, चिक्कणपदार्थविशेषेणेत्यर्थः, पूर्वोक्तवस्तुविशेषै. स्वकीयौ चरणौ 'मक्खेज्ज वा' म्रक्षयेत्–एकवारं मर्दयेत् 'भिलिंगेज्ज वा' अभ्यञ्जयेद्वा–पुनः पुनः स्तोकं–स्तोकं तैलादिना मर्दयेत् । तथा–'मक्खेंतं वा भिलिंगेंतं वा साइज्जइ' म्रक्षयन्त वा अभ्यञ्जयन्तं वा स्वदते । यो हि भिक्षुः स्वकीयचरणौ–एकवारमनेकवार वा तैलादिनाऽभ्यञ्जयति, यश्च तमनुमोदते सोऽसौ प्रायश्चित्तभाग् भवति, भवन्ति च तस्य आज्ञाभङ्गानवस्थामिथ्यात्वसयमात्मविराधनादयो दोषाः । तस्मात्कारणाद् भिक्षुणा कदापि तैलादिनाऽभ्यञ्जनं न कर्त्तव्यम् , न च कुर्वतो वाऽनुमोदनं करणीयमिति ॥ सू० १८ ॥

**सूत्रम्–जे भिक्खू अप्पणो पाए लोद्धेण वा कक्केण वा चुण्णेण वा वण्णेण वा पउमचुण्णेण वा उल्लोलेज्ज वा उव्वट्टेज्ज वा, उल्लोलंतं वा उव्वट्टंतं वा साइज्जइ ॥ सू० १९ ॥**

छाया—यो भिक्षुः आत्मनः पादौ लोध्रेण वा कल्केन वा चूर्णेन वा वर्णेन वा पद्मचूर्णेन वा उल्लोलयेद्वा उद्वर्त्तयेद्वा, उल्लोलयन्तं वा उद्वर्त्तयन्तं वा स्वदते ॥ सू०१९॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'अप्पणो पाए' आत्मनः स्वस्य पादौ–चरणौ, 'लोद्धेण वा' लोध्रेण–लोध्रद्रव्येण 'कक्केण वा' कल्केनाऽनेकद्रव्यमिश्रित-द्रव्यविशेषेण वा, 'चुण्णेण वा' चूर्णेन–पिष्टसुगन्धिद्रव्यविशेषेण' 'वण्णेण वा' वर्णेनाऽबीरादि-द्रव्यविशेषेण, 'पउमचुण्णेण वा' पद्मचूर्णेन–सुरभिगन्धद्रव्यविशेषेण 'उल्लोलेज्ज वा' उल्लोलयेद्वा- एकवारं मर्दयेत् 'उव्वट्टेज्ज वा' उद्वर्त्तयेद्वा अनेकवारं मर्दयेत् 'उल्लोलंतं वा उव्वट्टंतं वा साइज्जइ' उल्लोलयन्तं वा उद्वर्त्तयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० १९ ॥

**सूत्रम्—जे भिक्खू अप्पणो पाए सीओदगवियडेण वा उसिणोदगवियडेण वा उच्छोलेज्ज वा पधोवेज्ज वा उच्छोलेंतं वा पधोवेंतं वा साइज्जइ ॥ सू० २० ॥**

छाया—यो भिक्षुः आत्मनः पादौ शीतोदकविकटेन वा उष्णोदकविकटेन वा उच्छोलयेद्वा प्रधावयेद्वा उच्छोलयन्तं वा प्रधावयन्तं वा स्वदते ॥सू० २०॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'अप्पणो पाए' आत्मनः पादौ 'सीओदगवियडेण वा' शीतोदकविकटेन वा, तत्र शीतं च तदुदकं शीतोदकं तच्च विकटम्—अचित्तं तण्डुलधावनादिजलं, तेन 'उसिणोदगवियडेण वा' उष्णोदकविकटेन वा—उष्णं तदुदकम्, कथंभूतम्?—विकटम्, तेन—अचित्तोष्णोदकेन 'उच्छोलेज्ज वा' उच्छोलयेत्—एकवार प्रक्षालयेत् 'पधोएज्ज वा' प्रधावयेत्- वार वारं प्रक्षालयेत्। तथा 'उच्छोलेंतं वा पधोवेंतं वा साइज्जइ' उच्छोलयन्तं वा प्रधावयन्तं वा स्वदते। यो हि भिक्षुरात्मनश्चरणौ शीतजलेनोष्णजलेन वा—एकवारमनेकवारं वा प्रक्षालयति तं योऽनुमोदते वा स प्रायश्चित्तभाग् भवति, तस्याज्ञाभङ्गादयो दोषा भवन्ति ॥ सू० २० ॥

## सूत्रम्—जे भिक्खू अप्पणा पाए फुमेज्जा वा रएज्ज वा, फुमेंतं वा रएंतं वा साइज्जइ ॥सू० २१॥

छाया—यो भिक्षुः आत्मनः पादौ फूत्कारयेद्वा-रञ्जयेद्वा, फूत्कारयन्तं वा रञ्जयन्त वा स्वदते ॥सू०२२॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः पादौ पूर्वमलक्तकादिना लिप्त्वा पश्चात्तदार्द्रताशोषणार्थं फूत्करोतीति फूत्करणविषकं रञ्जनविषयकं चेदं सूत्रम्, ततो यो भिक्षुः 'अप्पणो पाए' आत्मनः पादौ—चरणौ 'फुमेज्ज वा' देशी शब्दोऽयम्, मुखादिवायुना फूत्कुर्यात् 'रएज्ज वा' रञ्जयेद्वा अलक्तकादिरञ्जनद्रव्येण रञ्जयेत्। तथा—'फुमंतं वा रएंतं वा साइज्जइ' फूत्कारयुक्तौ अलक्तकादिरागरञ्जितौ च कुर्वन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २१ ॥

अत्राह भाष्यकारः—

भाष्यम्—संवाहणाइ कुव्वंतो, समणो जिणसासणे।
आणाभंगाइदोसे य, पावेई नेत्थ संसओ ॥

छाया—संबाहनादि कुर्वाणः श्रमणो जिनशासने।
आज्ञाभङ्गादिदोषांश्च प्राप्नोति नाऽत्र संशयः ॥

अवचूरिः—'संवाहणाइ'—इत्यादि। तत्र—संवाहनं चरणमर्दनं सप्तदशसूत्रकथितम् १, तैला-दिनाऽऽत्मनश्चरणमर्दनादिकमष्टादशसूत्रकथितम् २, लोध्रादिनोल्लोलनोद्वर्त्तनमेकोनविंशतिसूत्रकथि-तम् ३, शीतोदकविकटादिना चरणप्रक्षालनं विंशतिसूत्रकथितद् ४, तथा-मुखादिवायुना चरणयोः

फूत्करणमक्षणकादिरसेन लेपनं नैकविंशतिसूत्रकथितम् ५ । एतत् पञ्चसूत्रोक्तं पञ्चप्रायश्चित्त-स्थानमासेवमानः, तथा–एतान् पञ्च दोषान् सेवमानोऽनुमोदमानश्च भिक्षुराज्ञाभङ्गादिकान् दोषान् प्राप्नुवन् प्रायश्चित्तभाग् भवति ॥ सू० २१ ॥

एवमित ऊर्ध्वं षट् सूत्राणि एकगमानि सन्ति । विशेष एतावानेव–यत् पूर्वं पादौ आश्रित्य षट् सूत्राणि कथितानि, अत्र तु कायमाश्रित्य षट् सूत्राणि व्याख्येयानि, तानि चेमानि—'जे भिक्खू' इत्यादि ।

**सूत्रम्**—जे भिक्खू अप्पणो कायं आमज्जेज्ज वा, पमज्जेज्ज वा, आमज्जंतं वा पमज्जंतं वा साइज्जइ ॥ सू० २२॥ जे भिक्खू अप्पणा कायं संवाहेज्ज वा पलिमद्देज्ज वा संवाहेंतं वा पलिमद्देंतं पा साइज्जइ ॥सू० २३॥ जे भिक्खू अप्पणो कायं तेल्लेण वा घएण वा णवणीएण वा वसाए वा मक्खेज्ज वा भिलिंगेज्ज वा मक्खेंतं वा भिलिंगेंतं साइज्जइ ॥ सू० २४॥ जे भिक्खू अप्पणा कायं लोद्धेण वा कक्केण वा चुण्णेण वा वण्णेण वा पउमचुण्णेण वा उल्लोलेज्ज वा उव्वट्टेज्ज वा उल्लोलेंतं वा उव्वट्टेंतं वा साइज्जइ ॥ सू० २५॥ जे भिक्खू अप्पणो कायं सीओदगवियडेण वा उसिणोदगवियडेण वा उच्छोलेज्ज वा पधोवेज्ज वा उच्छोलेंतं वा पधोवेंतं वा साइज्जइ ॥सू० २६ ॥ जे भिक्खू अप्पणो कायं फुमेज्ज वा रएज्ज वा फुमेंतं वा रएंतं वा साइज्जइ ॥ सू० २७॥

छाया—यो भिक्षुः आत्मनः कायं आमार्जयेद्वा-प्रमार्जयेद्वा आमार्जयन्तं वा प्रमार्जयन्तं वा स्वदते ॥सू०२२॥ यो भिक्षुः आत्मनः कायं संवाहयेद्वा परिमर्दयेद्वा संवाहयन्तं वा परिमर्दयन्तं वा स्वदते ॥सू०२३॥ यो भिक्षुः आत्मन कायं तैलेन वा घृतेन वा नवनीतेन वा वसया वा म्रक्षयेद् वा अभ्यञ्जयेद् वा म्रक्षयन्तं वा अभ्यञ्जयन्तं वा स्वदते ॥सू०२४॥ यो भिक्षुः आत्मन· कायं लोध्रेण वा कल्केन वा चूर्णेन वा वर्णेन वा पद्मचूर्णेन वा उल्लोलयेद् वा उद्वर्तयेद्वा, उल्लोलयन्तं वा उद्वर्तयन्तं वा स्वदते ॥सू०२५॥ यो भिक्षुः आत्मनः कायं शीतोदकविकटेन वा उष्णोदकविकटेन वा उच्छोलयेद्वा प्रधावयेद्वा उच्छोलयन्तं वा प्रधावयन्तं वा स्वदते ॥सू०२६॥ यो भिक्षुः आत्मनः कायं फूत्कुर्याद्वा रञ्जयेद्वा फूत्कुर्वन्तं वा रञ्जयन्तं वा स्वदते ॥सू०२७॥

चूर्णी—'जे भिक्खू' इत्यादि। एषा द्वाविंशतितमसूत्रादारभ्य सप्तविंशतितमसूत्रपर्यन्तानां कायसम्बन्धिनां षण्णां सूत्राणां व्याख्या पादसंबन्धिसूत्रषट्कवदेव कर्त्तव्या ॥ सू० २२-२७॥

एवमेवात्राऽप्यग्रे अष्टाविंशतितमसूत्रादारभ्य त्रयस्त्रिंशत्तमसूत्रपर्यन्तानि षट् सूत्राणि एकगमानि सन्ति, विशेष एतावानेव—यत् पूर्वं पादौ कायं चाश्रित्य प्रत्येकं षट् सूत्राणि कथितानि, अत्र तु कायगतव्रणमाश्रित्य तत्सदृशाण्येव षट् सूत्राणि व्याख्येयानि, तानि चेमानि— 'जे भिक्खू' इत्यादि ।

सूत्रम्—जे भिक्खू अप्पणो कायंसि वणं आमज्जेज्ज वा पमज्जेज्ज वा आमज्जंतं वा पमज्जंतं वा साइज्जइ ॥ जे भिक्खू अप्पणो कायंसि वणं संवाहेज्ज वा पलिमद्देज्ज वा, संवाहेंतं वा पलिमद्देंतं वा साइज्जइ ॥ जे भिक्खू अप्पणो कायंसि वणं तेल्लेण वा घएण वा नवणीएण वा वसाए वा मक्खेज्ज वा भिलिंगेज्ज वा मक्खेंतं वा भिलिंगेंतं वा साइज्जइ ॥ जे भिक्खू अप्पणो कायंसि वणं लोद्धेण वा कक्केण वा चुण्णेण वा वण्णेण वा पउमचुण्णेण वा उल्लोलेज्ज वा उव्वट्टेज्ज वा उल्लोलेंतं वा उव्वट्टेंतं वा साइज्जइ ॥ जे भिक्खू अप्पणो कायंसि वणं सीओदगवियडेण वा उसिणोदगवियडेण वा उच्छोलेज्ज वा पधोवेज्ज वा उच्छोलेंतं वा पधोवेंतं वा साइज्जइ ॥ जे भिक्खू अप्पणो कायंसि वणं फुमेज्ज वा रएज्ज वा, फुमेंतं वा, रएंतं वा साइज्जइ ॥ सू० २८-३३ ॥

छाया—यो भिक्षुः आत्मनः काये व्रणमामर्जयेद्वा, प्रमार्जयेद्वा आमार्जयन्तं वा प्रमार्जयन्तं वा स्वदते ॥ यो भिक्षुः आत्मनः काये व्रणं संवाहयेद् वा परिमर्दयेद्वा संवाहयन्तं वा परिमर्दयन्तं वा स्वदते ॥ यो भिक्षु आत्मन काये-व्रणं, तैलेन वा, घृतेन वा नवनीतेन वा वसया वा म्रक्षयेद्वा, अभ्यञ्जयेद्वा, म्रक्षयन्तं वा अभ्यञ्जयन्तं वा स्वदते ॥ यो भिक्षुः आत्मनः काये व्रणं लोध्रेण वा कल्केन वा चूर्णेन वा वर्णेन वा पद्मचूर्णेन वा उल्लोलयेद्वा उद्वर्त्तयेद्वा उल्लोलयन्तं वा उद्वार्त्तयन्तं वा स्वदते ॥ यो भिक्षुः आत्मनः काये व्रणं शीतोदकविकटेन वा उष्णोदकविकटेन वा, उच्छोलयेद्वा, प्रधावयेद्वा उच्छोलयन्तं वा प्रधावयन्त वा स्वदते ॥ यो भिक्षुः आत्मनः काये व्रणं फूत्कारयेद्वा रञ्जयेद्वा, फूत्कुर्वन्तं वा रञ्जयन्तं वा स्वदते ॥ सू० २८-३३ ॥

चूर्णी—'जे भिक्खू' इत्यादि । एवम्—अष्टाविंशतितमसूत्रादारभ्य (२८-२९-३०-३१-३२-३३) त्रयस्त्रिंशत्तमसूत्रपर्यन्तं प्रत्येकैकस्य सूत्रस्य व्याख्या क्रमशः षोडशपादसूत्रादारभ्य (१६-१७-१८-१९-२०-२१) एकविंशतितमसूत्रपर्यन्तवदेव कर्त्तव्या ॥ सू० २८-३३ ॥

अत्राह भाष्यकारः—

भाष्यम्—वणं च दुविहं णेज्जं, साभावियमथेयरं ।
साभावियं देहजायं, सत्थाइजमथेयरं ॥
छाया—व्रणं च द्विविधं ज्ञेयं स्वाभाविकमथेतरत् ।
स्वाभाविकं देहजातं शस्त्रादिजमथेतरत् ॥

अवचूरिः—'वणं च' इत्यादि । शरीरसंबन्धि व्रणं द्विविधं-द्विप्रकारकं भवति । तत्रैकं स्वाभाविकं-बाह्यकारणरहितं सत्-जायमानम् । अथेतरत्-इतोऽन्यत् द्वितीयम् इति ज्ञेयम् । तत्र-स्वाभाविकं देहस्थितदोषतो जायमानम् आन्तरिकदोषमूलकमित्यर्थः, कुष्ठ-(कोढ) -दद्रु-(दाद) पामा-(खुजली)-इति लोकप्रसिद्धं गण्डमालादिकं च । अथेतरत्-इतो द्वितीयं शस्त्रादिजातमागन्तुकम्, आदिपदात्-खड्ग-कण्टक-स्थाणु-प्रभृतिवस्तुजातसंबाधाजनितानां संग्रहः । एतेषा व्रणानां मध्यादन्यतममपि व्रणं एकवारमनेकवारं वाऽऽमार्जनादिकं करोति स प्रायश्चित्तभाग् भवति, तस्याज्ञाभङ्गादयो दोषा भवन्ति । अत्र गुरोरुपदेशो यथा—

"न रोदनं हन्त ! पितर्न मातरालप्य ताडयः शिरसः प्रदेशः ।
प्रसन्नचित्तेन तदीयतीव्र-संवेदनायाः सहनं क्रियेत" ॥१॥

प्रसन्नमनसा रोगसंजाततीव्रसंवेदनायाः सहनमेव कार्यम्, न तु हा पितः ! हा मातः ! इति मुहुर्मुहुरालप्य रोदनं कार्यम्, न वा शिरसो मस्तकस्य प्रदेशो भागस्ताडनीयः । जिनकल्पिकपरकमिदं सूत्रम्, स्थविरकल्पिकस्य तु कारणवशात् व्रणस्य आमार्जनप्रमार्जनादिकं निरवद्यतया कर्तुं कल्पते ॥ सू० २८-३३ ॥

**सूत्रम्—जे भिक्खू अप्पणो कायंसि गंडं वा पिलगं वा अरइयं वा असियं वा भगंदलं वा, अन्नयरेण तिक्खेण सत्थजाएण आच्छिंदेज्ज वा विच्छिंदेज्ज वा, आच्छिंदंतं वा विच्छिंदंतं वा साइज्जइ ॥ सू० ३४॥**

छाया—यो भिक्षुः आत्मनः काये गण्डं वा पिलकं वा अरतिकां वा अर्शो वा भगन्दरं वा अन्यतरेण तीक्ष्णेन शस्त्रजातेन, आच्छिन्द्याद्वा विच्छिन्द्याद्वा आच्छिन्दन्तं वा विच्छिन्दन्तं वा स्वदते ॥ सू० ३४ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'अप्पणो कायंसि' आत्मनः काये-स्वशरीरे 'गंडं वा' गण्डं वा तत्र-गण्डो नाम य उच्चप्रदेशात् नीचप्रदेशं गच्छति स व्रणः गण्डमाला-कण्ठमालेति लोकप्रसिद्धः, तम्, तथा-पिलकं वा पादव्रणम्, 'अरइयं वा' अरतिकां वा-यस्या वेदनया मनसि अरतिरुत्पद्यते, शरीरे रक्तविकारेण जायमानलघुव्रणपुञ्ज-

रूपाम् , यस्याः खर्जने तत्समये सुखमिव जायते पश्चात्--दुःखाधिक्यम् 'फुनसी'–ति लोकप्रसिद्धम् , 'असियं वा' अर्शो वा–गुदागतो रोगः 'बवासीर' इति लोकप्रसिद्धस्तम्, 'भगंदलं वा' भगन्दरं वा--भगन्दरो गुह्यस्थानगतरोगविशेषो लोकप्रसिद्धस्तम्। एतान् व्रणविशेषान् 'अन्नयरेण तिक्खेण सत्थजाएण' अन्यतरेण येन केनाऽपि तीक्ष्णेन--निशितेन--शस्त्रजातेन क्षुरादिना 'आच्छिदेज्ज वा' आच्छिन्द्यात् न्यूनमेकवारं वा छेदनं कुर्यात् 'विच्छिदेज्ज वा' विच्छिन्द्यात् अधिकमनेकवारं वा छेदनं कुर्यात्। तथा–'आच्छिदंतं वा विच्छिदंतं वा साइज्जइ' आच्छिन्दन्तं वा विच्छिन्दन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति। तस्याज्ञाभङ्गादिदोषा भवन्ति ॥ सू० ३४ ॥

अत्राह भाष्यकारः—

भाष्यम्—सरीरत्थं च गंडाइ, छिंदंतो पावए जई।
आणाभंगाइए दोसे, दुविहं च विराहणं ॥

छाया—शरीरस्थ च गण्डादि छिन्दन् प्राप्नोति यतिः।
आज्ञाभङ्गादिकान् दोषान् द्विविधं च विराधनम् ॥

अवचूरिः—'सरीरत्थं' इत्यादि। यः खलु यतिः सम्यग् यतनावान् श्रमणः–श्रमणी वा शरीरस्थं–स्वकीयशरीरे वर्त्तमानं गण्डादिव्रणं तीक्ष्णेन क्षुरकादिशस्त्रेण स्वयमेव छिन्दन् छेदयन् वा परेण आज्ञाभङ्गानवस्थामिथ्यात्वलक्षणान् दोषान् प्राप्नोति। तथा–द्विविधं–द्विप्रकारकं विराधनम् संयमविराधनमात्मविराधनं च प्राप्नोति। व्रणच्छेदनकरणे सूक्ष्मबादराद्यनेक–प्रकारकजीवानां विराधनं सम्भवति। तथा–क्षुरकादिशस्त्रेण व्रणादिच्छेदने आत्मवधस्याऽपि संभवेनात्मविराधना चेति॥ सू० ३४ ॥

सूत्रम्—जे भिक्खू अप्पणो कायंसि गंडं वा पिलगं वा अरइयं वा भगंदलं वा अन्नयरेणं तिक्खेणं सत्थजाएणं आच्छिदित्ता–विच्छिदित्ता, पूयं वा सोणियं वा, णीहरेज्ज वा विसोहेज्ज वा, णीहरेंतं वा विसोहेंतं वा साइज्जइ ॥सू० ३५॥

छाया—यो भिक्षुः आत्मनः काये गण्डं वा पिलकं वा अरतिकां वा भगन्दरं वा अन्यतरेण तीक्ष्णेन शस्त्रजातेन आच्छिद्य विच्छिद्य पूयं वा शोणितं वा निर्हरेद्वा विशोधयेद्वा, निर्हरन्तं वा विशोधयन्तं वा स्वदते ॥ सू० ३५ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'अप्पणो कायंसि' आत्मनः काये स्थितम् 'गंडं वा' गण्डाभिधव्रणम्, 'पिलगं वा' पिलकं वा 'अरइयं वा' अरतिकां 'भगंदलं वा'

अभ्यन्तरं-छिद्रगुदयोर्मध्ये नाडीरूपं व्रणम्, यदि 'अन्नयरेण' अन्यतरेण-येन केनाऽपि 'तिक्खेणं' तीक्ष्णेन, 'सत्थजाएणं' शस्त्रजातेन 'आच्छिदित्ता' आच्छिद्य-ईषदेकवारं वा छेदनं कृत्वा 'विच्छिदित्ता' विच्छिद्य-अधिकमनेकवारं वा छेदनं कृत्वा ततो व्रणप्रदेशात् 'पूयं वा सोणियं वा' पूयं वा शोणितं वा-पक्वरुधिरं पूयः, अपक्वं रुधिरं शोणितम् 'णीहरेज्ज वा' निर्हरेत्-निष्कासयेत् 'विसोहेज्ज वा' विशोधयेत्-व्रणगतपूयादिकस्य शोधनं कुर्यात्। तथा 'णीहरेंतं वा' निर्हरन्तं व्रणप्रदेशात् पूयादिकं निष्कासयन्तम्, 'विसोहेंतं वा' विशोधयन्त पूयशोणितादेः शुद्धिं कुर्वन्तम् 'साइज्जइ' स्वदते, यो भिक्षुः स्वशरीरस्थितव्रणादिविशेषं छित्त्वा ततो गलन्तं पूयशोणितादिकं निष्कासयति विशोधयति वा, तं योऽनुमोदते वा स प्रायश्चित्तभाग् भवति, भवन्ति च तस्याज्ञाभङ्गानवस्थामिथ्यात्वसंयमविराधनात्मविराधनादोषा, तस्मात् कारणात् शरीरस्थमपि व्रणविशेषं छित्त्वा छेदयित्वा वा ततो निर्गलन्तं पूयशोणितादिकं न निर्हरेत्, न वा विशोधयेत्, किन्तु ततो जायमानां वेदनां साम्यभावेन सहेतेति ॥ सू० ३५ ॥

अत्राह भाष्यकारः—

भाष्यम्—जम्मंतरोवज्जियमत्थु दुक्खं, सुहं समागच्छउ वा जहिच्छं।
इत्थं समाहित्थमणो मुणंतो, जो सम्मभावेण सहे स साहू ॥

छाया—जन्मान्तरोपार्जितमस्तु दुःखं सुखं समागच्छतु वा यथेच्छम्।
इत्थं समाधिस्थमना जानन् य साम्यभावेन सहेत स साधुः ॥

अवचूरिः—'जम्मंतरोवज्जिय' इत्यादि। जन्मान्तरे परभवे यद् उपार्जितं दुःखमस्तु सुखं वा यथेच्छं समागच्छतु नात्र मम काऽपि चिन्ता, इत्थम्—अनेन प्रकारेण समाधिस्थमनाः स्वकृतकर्मफलं जानन् सन् यो मुनिः दुःखं सुखं वा साम्यभावेन सहेत स साधुः कथ्यते ॥

अयं भावः—समाधौ वर्त्तमानो भिक्षुः स्वात्मानं भूषयन्तं छेदयन्तं वा न जानीते तत्र तस्य किं महत्त्वम्, यत् सुखं दुःखं वा सहते!। इत्थमोषधिप्रयोगेण भिषग्भिरचैतन्यावस्थामानीतस्तावत्सुखं दुःखं वा न जानाति तत्रापि तस्य सुखदुःखसहने न महत्त्वम्। महत्त्वं तु—यश्चैतन्यदशायां स्थितो न समाधौ—न वा मूर्च्छितावस्थायां तत्र प्रतिक्षणं स्वशरीरे व्रणादिजनितमसह्यमपि दुःखं जन्मान्तरकर्मोपार्जितमिति मत्वा समभावेन सहते तस्य तदेव महत्त्वम्, उक्तं च—

विषगणपरिवेगाद्वा समाधेः प्रयोगाद्,
यदि सहनसमर्थः स्वाङ्गदुःखस्य भोगे।
नहि भवति स सोढा नास्य तत्तन्महत्त्वं,—
परिभजति समस्यस्तन्महत्त्वं महत्त्वम् ॥१॥

सुखं तु सर्वोऽपि जनः सानन्दो भूत्वा हसन् सहते किन्तु—धीरस्तत्रानन्दमजानानस्तीक्ष्णरोगभावनां भावयन् दिवसं वा रात्रिं वा व्यतिक्रामतीति ॥ ३५ ॥

सूत्रम्—जे भिक्खू अप्पणो कायंसि गंडं वा पिलगं वा अरइयं वा असियं वा भगंदलं वा अन्नयरेणं तिक्खेणं सत्थजाएणं आच्छिदित्ता विच्छिदित्ता पूयं वा सोणियं वा नीहरित्ता विसोहित्ता सीओदगविय-डेण वा उसिणोदगवियडेण वा उच्छोलेज्ज वा पधोवेज्ज वा उच्छोलेंतं वा पधोवेंतं वा साइज्जइ ॥ सू० ३६ ॥

छाया—यो भिक्षुः आत्मनः काये गण्डं वा पिलकं वा अरतिकां वा अर्शो वा भगन्दरं वा अन्यतरेण तीक्ष्णेन शस्त्रजातेन, आच्छिद्य विच्छिद्य पूयं वा शोणितं वा निर्हृत्य विशोध्य, शीतोदकविकटेन वा उष्णोदकविकटेन वा, उच्छोलेद्वा प्रधावेद्वा, उच्छो-लन्तं वा प्रधावन्तं वा स्वदते ॥ सू० ३६ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'अप्पणो कायंसि' आत्मनः काये 'गंड वा' गण्डं—कण्ठमालां वा, 'पिलगं वा'—पादव्रणं वा 'अरइयं वा' अरतिकां वा—लघु-व्रणजालरूपाम् 'असियं वा' अर्शो वा 'भगंदलं वा' भगन्दरं वा 'अन्नयरेणं तिक्खेणं सत्थजा-एणं' अन्यतरेण तीक्ष्णेन शस्त्रजातेन 'आच्छिदित्ता विच्छिदित्ता' आच्छिद्य विच्छिद्य, ततो निर्ग-लन्तं पूय वा 'सोणियं वा' शोणितं वा 'नीहरित्ता' निर्हृत्य—निष्कास्य 'विसोहित्ता' विशोध्य, तदनन्तरम् 'सीओदगवियडेण वा' शीतोदकविकटेन वा- अचित्तशीतोदकेन- तण्डुलादिधावन-जलेन वा, 'उसिणोदगवियडेण वा' उष्णोदकविकटेन—अचित्तोष्णोदकेन, 'उच्छोलेज्ज वा' उच्छोलेत्—एकवारमल्पं वा प्रक्षालयेत्, 'पधोवेज्ज वा' प्रधावयेत्—अनेकवारमधिक वा प्रक्षा-लयेत् । तथा-उच्छोलेंतं वा पधोवेंतं वा साइज्जइ' उच्छोलन्तं वा प्रधावन्तं वा स्वदते-ऽनुमोदते स प्रायश्चित्तभाग् भवति, भवन्ति च तस्याज्ञाभङ्गानवस्थामिथ्यात्वसयमविराधनात्म-विराधनादोषाः, तस्मात्तथा न कर्त्तव्यं भिक्षुणा ॥ सू० ३६ ॥

सूत्रम्—जे भिक्खू अप्पणो कायंसि गंडं वा पिलगं वा अरइयं वा असियं वा भगंदलं वा अन्नयरेणं तिक्खेणं सत्थजाएणं आच्छिदित्ता-विच्छिदित्ता णीहरेत्ता विसोहेत्ता उच्छोलित्ता पधोवित्ता अन्नयरेणं आले-वणजाएणं आलिंपेज्ज वा विलिंपेज्ज वा, आलिंपेंतं वा विलिंपेंतं वा साइ-ज्जइ ॥ सू० ३७ ॥

छाया—यो भिक्षुः आत्मनः काये-गण्डं वा पिलकं वा अरतिकां वा अर्शो वा भगन्दरं वा अन्यतरेण तीक्ष्णेन शस्त्रजातेन, आच्छिद्य विच्छिद्य निर्हृत्य विशोध्य उच्छोल्य

प्रधाव्य अन्यतरेण आलेपनजातेन आलिम्पेद्वा विलिम्पेद्वा आलिम्पन्तं वा विलिम्पन्तं वा स्वदते ॥ सू० ३७ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः, इत्यादि स्पष्टम् । नवरम्—उच्छोलनप्रधावनानन्तरम् 'अन्नयरेण आलेवणजाएणं' अन्यतमेनाऽऽलेपनजातेन–औषधिविशेषेण 'मलहम' इति लोकप्रसिद्धेन, 'आलिंपेज्ज वा' आलिम्पेत् ईषदेकवारं वा आलेपन कुर्यात् , 'विलिंपेज्ज वा' विलिम्पेत्–अधिकमनेकवारं वा द्रव्यलेपनं व्रणोपरि कुर्यात्। 'आलिंपेंतं वा विलिंपेंतं वा साइज्जइ' आलिम्पन्तं वा विलिम्पन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति, भवन्ति च तस्याज्ञाभङ्गादिदोषाः ॥ सू० ३७ ॥

सूत्रम्—जे भिक्खू अप्पणा कायंसि गंडं वा पिलगं वा अरइयं वा असियं वा भगंदलं वा, अन्नयरेणं तिक्खेणं सत्थजाएणं आच्छिदित्ता विच्छिदित्ता णीहरित्ता विसोहेत्ता उच्छोलित्ता पधोइत्ता विलिंपित्ता तेल्लेण वा घएण वा वसाए वा णवणीएण वा अब्भंगेज्ज वा मक्खेज्ज वा अब्भंगेंतं वा मक्खेंतं वा साइज्जइ ॥ सू० ३८ ॥

छाया—यो भिक्षुः आत्मनः काये गण्डं वा पिलकं वा अरतिकां वा अर्शो वा भगन्दरं वा अन्यतरेण तीक्ष्णेन शस्त्रजातेन आच्छिद्य विच्छिद्य निहृत्य विशोध्य उच्छोल्य प्रधाव्य विलिप्य तैलेन वा घृतेन वा वसया वा नवनीतेन वा अभ्यङ्गयेद्वा म्रक्षयेद्वा अभ्यङ्गयन्तं वा म्रक्षयन्तं वा स्वदते ॥ सू० ३८ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुरित्यादि स्पष्टम् । पूर्वोक्तं सर्वं कृत्वा तदनन्तरं 'तेल्लेण वा' तैलेन सार्षपादिना 'घएण' घृतेन 'वसाए वा' वसया 'णवणीएण वा' नवनीतेन म्रक्षणेन 'अब्भंगेज्ज वा' अभ्यङ्गयेत्–अल्पमेकवार वाऽभ्यङ्गनं कुर्यात् , 'मक्खेज्ज वा' म्रक्षयेद्वा–अत्यधिकमनेकवारं वा तैलादिना मर्दन कुर्यात् । 'अब्भंगेंतं वा मक्खेंतं वा साइज्जइ' अभ्यङ्गयन्तं वा म्रक्षयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति, तस्याज्ञाभङ्गादयो दोषा भवन्ति ॥ सू० ३८ ॥

सूत्रम्—जे भिक्खू अप्पणो कायंसि गंडं वा पिलगं वा अरइयं वा असियं वा भगंदलं वा अन्नयरेणं तिक्खेणं सत्थजाएणं आच्छिदित्ता विच्छिदित्ता नीहरित्ता विसोहित्ता उच्छोलित्ता पधोइत्ता विलिंपित्ता

**मंखेत्ता, अण्णयरेणं धूवजाएणं धूवेज्ज वा पधूवेज्ज वा, धूवेंतं वा पधूवेंतं वा साइज्जइ ॥ सू० ३९ ॥**

**छाया—यो भिक्षुः आत्मनः काये गण्डं वा पिलकं वा अरतिकां वा अर्शो वा भन्दरं वा अन्यतरेण तीक्ष्णेन शस्त्रजातेन आच्छिद्य-विच्छिद्य निर्हृत्य विशोध्य उच्छोल्य-प्रधाव्य विलिप्य म्रक्षयित्वा अन्यतरेण धूपजातेन धूपयेद्वा प्रधूपयेद्वा धूपयन्तं वा प्रधूपयन्तं वा स्वदते ॥ सू० ३९ ॥**

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः **'अप्पणो कायंसि'** आत्मनः काये, गण्डादिकं स्पष्टम् । पूर्वोक्तं सर्वं म्रक्षणादिपर्यन्तं कृत्वा तदनन्तरं **'अन्नयरेणं धूवजाएणं'** अन्यतरेण धूपजातेन य कमपि धूप वह्नौ प्रक्षिप्य—तज्जातधूमेन **'धूवेज्ज वा'** धूपयेत्—धूमेनैकवारं धूपयेत् **'पधूवेज्ज वा'** प्रधूपयेत्तादृशधूमेन वारं वारम् **'धूवेंतं वा पधूवेंतं वा साइज्जइ'** धूपयन्तं वा, प्रधूपयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति । तस्याज्ञाभङ्गादयो दोषाश्च भवन्ति ॥ सू० ३९ ॥

अत्राह भाष्यकारः—

**भाष्यम्—कायंसि अप्पणो भिक्खू, गंडाइं जइ छिंदए ।**
**छिंदित्ता य विच्छिदित्ता, नीहरे पूयसोणियं ॥**
**णीहरेत्ता विसोहेत्ता, सीओसिणवियडेण वा ।**
**उच्छोलेज्जा पधोवेज्जा, विलिंपेज्जाहवा जइ ॥**
**मंखेत्ता धूवजाएणं, धूवेज्जा अणुमोयए ।**
**आणाभंगाइदोसाइं, पावई नत्थि संसओ ॥**

**छाया—काये-आत्मनो भिक्षु-र्गण्डादि यदि छिनत्ति ।**
**छित्वा च विच्छिद्य निर्हरेत् पूयशोणितम् ॥**
**निर्हृत्य विशोध्य शीतोष्णविकटेन वा ।**
**उच्छोलेत्प्रधावेत् विलिंपेदथवा यदि ॥**
**म्रक्षयित्वा धूपजातेन धूपयेदनुमोदयेत् ।**
**आज्ञाभङ्गादिदोषान् प्राप्नोति नास्ति संशयः ॥**

**अवचूरिः**—**'कायंसि अप्पणो'** इत्यादि । यो भिक्षुर्गण्डादिमात्मन. काये स्थितं यदि छिनत्ति । अथाऽनन्तरम्—छित्वा, विच्छिद्य, एकवारमनेकवारं वा । ततः-पूय वा शोणितं वा निर्हरेत्, निर्हृत्य—विशोध्य वा शीतोदकविकृतेन अचित्तशीतजलेन तण्डुलधावनादिना, अचित्तोष्णोदकेन वा उच्छोलेद्वा प्रधावेद्वा । अथवा विलिप्य म्रक्षयित्वा हस्तलाघवेन मर्दनं कृत्वा, ततो धूपजातेन केनापि धूपेन धूपयेत् । तथाभूतमन्यं वाऽनुमोदते स आज्ञाभङ्गादिदोषान् प्राप्नोति अत्र संशयो नाऽस्तीति ॥ सू० ३९ ॥

**सूत्रम्—जे भिक्खू अप्पणो पाउकिमियं वा कुच्छिकिमियं वा अंगुलीए निवेसिय निवेसिय णीहरइ, णीहरंतं वा साइज्जइ ॥ सू० ४० ॥**

छाया—यो भिक्षुः आत्मनः पायुकृमिकं वा कुक्षिकृमिकं वाऽङ्गुल्यां निवेश्य-निवेश्य निर्हरति, निर्हरन्तं वा स्वदते ॥ सू० ४० ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'अप्पणो पाउकिमियं वा' आत्मनः पायुकृमिकं वा स्वगुदास्थितक्षुद्रजीवान् -'कुच्छिकिमियं वा' कुक्षिकृमिकम्, तत्र-कुक्षावुदरे भवान्-लघुजीवान् 'अगुलीए निवेसिय निवेसिय' अङ्गुल्या निवेश्य निवेश्य-स्वाङ्गुलीमन्तः पायौ-कुक्षौ वा प्रवेश्य प्रवेश्य 'णीहरइ' निर्हरति-निष्कासयति 'णीहरंतं वा साइज्जइ' निर्हरन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति । तस्याज्ञाभङ्गानवस्थामिथ्यात्वसयमात्मविराधनादोषा भवन्ति । तत्र विधिनाऽविधिना निष्कासने जीवाना विराधनसभवेन संयमविराधनम् । तथा—कदाचित् देहक्षतौ स्वात्मविराधनम् । तस्मात्कारणात् संयमार्थिना कदाचिदपि कृमीणा निर्हरणं न कर्त्तव्यम्, किन्तु-समभावेन कृमिबाधाजनितं दुःख सर्वदाऽदीनभावेनाऽधिसोढव्यम्, इति ॥ सू० ४० ॥

**सूत्रम्—जे भिक्खू अप्पणो दीहाओ णहसीहाओ कप्पेज्ज वा संठवेज्ज वा कप्पंतं वा संठवेंतं वा साइज्जइ ॥ सू० ४१ ॥**

छाया—यो भिक्षुः आत्मनो दीर्घाः नखशिखाः कल्पेत वा संस्थापयेद्वा कल्पयन्तं वा संस्थापयन्तं वा स्वदते ॥ सू० ४१ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु, 'अप्पणो दीहाओ' आत्मनो दीर्घा अतिवर्द्धमाना 'नहसिहाओ' नखशिखा—नखाग्रभागान् 'कप्पेज्ज वा' कल्पेत—कर्त्तयेत्, 'संठवेज्ज वा' संस्थापयेत्-संस्कुर्यात् रागादिना, 'कप्पेतं वा संठवेंतं वा साइज्जइ' कल्पमान-कर्त्तयन्त संस्थापयन्तं संस्कुर्वन्त वा स्वदतेऽनुमोदते स प्रयश्चित्तभाग् भवति । तस्याऽऽज्ञाभङ्गादयो दोषा भवन्ति । इत आरभ्यैकोनपञ्चाशत्सूत्र यावत्-जिनकल्पिकमधिकृत्य ज्ञातव्यम् ॥ सू० ४१ ॥

**मूलम्—एवं-दीहाइं वत्थिरोमाइं० ॥४२॥ दीहाइं चक्खुरोमाइं० ४३ दीहाइं जंघरोमाइं० ॥४४॥ दीहाइं कक्खरामाइं ॥४५॥ दीहाइं मंसुरोमाइं० ॥४६॥ दीहाइं केसाइं० ॥४७॥ दीहाइं कण्णरामाइं० ॥४८॥ एवं नासारोमाइं० ॥सू० ४९ ॥**

छाया – एवम्-दीर्घाणि वस्तिरोमाणि० ॥४२॥ दीर्घाणि चक्षूरोमाणि० ॥४३॥ दीर्घाणि जङ्घारोमाणि० ॥४४॥ दीर्घाणि कक्षारोमाणि० ॥४५॥ दीर्घाणि श्मश्रुरोमाणि० ॥४६॥ दीर्घान् केशान्० ॥४७॥ दीर्घाणि कर्णरोमाणि० ॥४८॥ एवं नासारोमाणि० ॥४९॥

चूर्णी—एतानि द्विचत्वारिंशत्सूत्रादारभ्य एकोनपञ्चाशत्सूत्रपर्यन्तानि सूत्राणि पूर्ववद् व्याख्येयानि ॥ सू० ४२–४९॥

## सूत्रम्—जे भिक्खू अप्पणो दंते आघंसेज्ज वा पघंसेज्ज वा आघंसंतं वा पघंसंतं वा साइज्जइ ॥ सू० ५० ॥

छाया—यो भिक्षुः आत्मनो दन्तान् आघर्षेद्वा प्रघर्षेद्वा आघर्षन्तं वा प्रघर्षन्तं वा स्वदते ॥ सू० ५० ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'अप्पणो दंते' आत्मनः स्वस्य दन्तान् 'आघंसेज्ज वा' आघर्षेत् मृत्तिकया क्षारपुटादिना वा सकृत् घर्षेत्, 'पघंसेज्ज वा' प्रघर्षेत्—अनेकवारं वा घर्षेत् । तथा–'आघंसंतं वा पघंसंतं वा साइज्जइ' आघर्षन्तं वा प्रघर्षन्तं वा स्वदते । यो भिक्षुः स्वकीयदन्तान् मृत्तिकादिनैकवारमनेकवारं वा घर्षति घर्षन्तं वाऽनुमोदते स प्रायश्चित्तभागी भवति । तस्याज्ञाभङ्गानवस्थामिथ्यात्वसंयमात्मविराधनादयो दोषा भवन्ति ॥ सू० ५०॥

## सूत्रम्—जेभिक्खू अप्पणो दंते सीओदगवियडेण उसिणोदगवियडेण वा उच्छोलेज्ज वा पधोवेज्ज वा, उच्छोलेंतं वा पधोवेंतं वा साइज्जइ ॥ सू० ५१॥

छाया—यो भिक्षुः आत्मनो दन्तान् शीतोदकविकटेन वा उष्णोदकविकटेन वा, उच्छोलेद्वा प्रधावेद्वा उच्छोलन्तं वा प्रधावन्तं वा स्वदते । सू० ५१॥

चूर्णी —'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'अप्पणो दंते' आत्मनः स्वस्य दन्तान् 'सीओदगवियडेण वा उसिणोदगवियडेण वा' शीतोदकविकटेन–तण्डुलधावनादिजलेन अचित्तेन, उष्णोदकविकटेन–अचित्तोष्णोदकेन 'उच्छोलेज्ज वा' उच्छोलेत् एकवारं वा 'पधोवेज्ज वा' प्रधावेद् वार वारम् । तथा–'उच्छोलेंतं वा पधोवेंतं वा साइज्जइ' उच्छोलन्तं वा–प्रधावन्तं वा स्वदते । यो भिक्षुः स्वकीयदन्तानेकवारमनेकवारं वा प्रक्षालयेत् अथवा–प्रक्षालयन्तमनुमोदते स प्रायश्चित्तभाग् भवति । तस्याज्ञाभङ्गादयो दोषा भवन्ति । यस्माद्दन्तधावने–एते दोषा अतो भिक्षुभिर्दन्ता न प्रक्षालयितव्याः ॥ सू० ५१॥

सूत्रम्—जे भिक्खू अप्पणो दंते फुमेज्ज वा रएज्ज वा फुमेंतं रएंतं वा साइज्जइ ॥सू० ५२॥

छाया—यो भिक्षुरात्मनो दन्तान् फूत्कुर्याद्वा रञ्जयेद्वा फूत्कुर्वन्तं वा रञ्जयन्तं वा स्वदते ॥ सू०५२॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'अप्पणो दंते' आत्मनो दन्तान् 'फुमेज्ज वा' फूत्कुर्यात् मुखवायुना 'रएज्ज वा' रञ्जयेद्वा–रागादिद्रव्येण स्वदन्तान् रागयुक्तान् कुर्यात् । तथा 'फुमेंतं वा रएंतं वा साइज्जइ' फूत्कुर्वन्तं वा रञ्जयन्त स्वदते स प्रायश्चित्त-भाग् भवति । तस्याज्ञाभङ्गादयो दोषा भवन्ति । दन्तानां फूत्कारे वायुकायविराधना भवति रञ्जनेऽनेके दोषा उक्ता अतस्तान्न फूत्कुर्यात् न वा रञ्जयेत् ॥ सू० ५२॥

सूत्रम्—जे भिक्खू अप्पणो ओट्ठे आमज्जेज्ज वा पमज्जेज्ज वा आमज्जंतं वा पमज्जंतं वा साइज्जइ ॥सू० ५३॥

सूत्रम्—एवं ओठे पायगमओ भाणियव्वो जाव फुमेज्ज वा रएज्ज वा, फुमेंतं वा रएंतं साइज्जइ ॥ सू० ५४–५८॥

छाया—यो भिक्षुः आत्मन ओष्ठौ–आमार्जयेद्वा प्रमार्जयेद्वा आमार्जयन्तं वा प्रमार्जयन्तं वा स्वदते ॥सू० ५३॥

एवम्-ओष्ठे पादगमको भणितव्यो यावत्फूत्कुर्याद्वारञ्जयेद्वा, फूत्कुर्वन्त वा रञ्जयन्त वा स्वदते ॥ सू० ५४–५८॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'अप्पणो ओट्ठे' आत्मनः–ओष्ठौ, 'आमज्जेज्ज वा' आमार्जयेत्–एकवारं वस्त्रादिना ओष्ठयो. प्रमार्जन कुर्यात् 'पमज्जेज्ज वा' प्रमार्जयेद्वा–अनेकवारं प्रमार्जनं कुर्यात् । 'आमज्जंतं वा पमज्जंतं वा साइज्जइ' आम-र्जयन्तं वा प्रमार्जयन्त वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ५३॥ 'एवं ओट्ठे' इत्यादि । 'एवं ओट्ठे' एवम्-अनेन प्रकारेणोष्ठे–ओष्ठविषयेऽपि 'पायगमओ' पादसूत्रोक्तो गमकः प्रकार. 'भाणियव्वो' भणितव्य 'जाव फुमेज्ज वा–रएज्ज वा' यावत्-फूत्कुर्याद्वा–रञ्जयेद्वार, 'फुमेंतं वा रएंतं वा साइज्जइ' फूत्कुर्वन्तं वा रञ्जयन्तं वा स्वदते ॥सू० ५४–५८॥

तथाहि–"जे भिक्खू अप्पणो ओट्ठे संवाहेज्ज वा पलिमद्देज्ज वा संवाहेंतं वा पलि-मद्देंतं वा साइज्जइ ॥सू० ५४॥ जे भिक्खू अप्पणो ओट्ठे तेल्लेण वा घएण वा वसाए वा णवणीएण वा, मंखेज्ज वा भिलिंगेज्ज वा मंखेंत वा भिलिंगेंतं वा साइज्जइ ॥सू०५५॥

जे भिक्खू अप्पणो ओट्ठे लोद्धेण वा कक्केण वा चुण्णेण वा पउमचुण्णेण वा, उल्लोलेज्ज वा उव्वट्टेज्ज वा, उच्छोलेंतं वा उव्वट्टेंतं वा साइज्जइ ॥ सू०५६॥ जे भिक्खू अप्पणो ओट्ठे सीओदगवियडेण वा उसिणोदगवियडेण वा उच्छोलेज्ज वा पधोवेज्ज वा उच्छोलेंतं वा पधोवेंन्तं वा साइज्जइ ॥सू०५७॥ जे भिक्खू अप्पण्णो ओट्ठे फुमेज्ज वा रएज्ज वा फुमेंतं वा रएंतं वा साइज्जइ ॥सू० ५८॥" व्याख्या पूर्वं पादसूत्रे गता ॥ सू०५४-५८॥

सूत्रम्—जे भिक्खू अप्पणो दीहाइं उत्तरोट्ठरोमाइं कप्पेज्ज वा संठवेज्ज वा, कप्पेंतं वा संठवेंतं वा साइज्जइ ॥ सू० ५९॥ एवं दीहाइं अच्छिपत्ताइं ॥ सू० ६० ॥

छाया—यो भिक्षुः आत्मनो दीर्घाणि-उत्तरोष्ठरोमाणि कल्पयेद्वा संस्थापयेद्वा, कल्पयन्तं वा संस्थापयन्तं वा स्वदते ॥ सू० ५९ ॥ एवम्-दीर्घाणि-अक्षिपत्राणि० ॥ सू० ६० ॥

चूर्णी—'जे भिक्खु' इत्यादि । 'जे भिक्खू यो भिक्षुः 'अप्पणो' आत्मनः 'दीहाइं' दीर्घाणि-प्रवृद्धानि 'उत्तरोट्ठरोमाइं' उत्तरोष्ठरोमाणि 'कप्पेज्ज वा' कल्पयेत्-शोभार्थं छिन्द्यात्, 'संठवेज्ज वा' सस्थापयेत्, शोभावृद्धयर्थमशोभानिवारणार्थमूर्ध्वमधः कुर्यात् । तथा 'कप्पेंतं वा संठवेंतं वा साइज्जइ' कल्पयन्तं वा सस्थापयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति । तस्याज्ञाभङ्गादयो दोषा भवन्ति ॥सू० ५९॥ 'एवं दीहाइं अच्छिपत्ताइं' एवम्-पूर्वोक्तोत्तरोष्ठसूत्रवदेव-अक्षिपत्रसूत्रमपि ज्ञेयम् । अक्षिपत्राणीति-अक्षिपक्ष्माणीत्यर्थ, एव पूर्वसूत्रवत्-अक्षिपत्रसूत्रं ज्ञेयम् । तथाहि-"जे भिक्खू अप्पणो दीहाइं अच्छिपत्ताइं कप्पेज्ज वा संठवेज्ज वा, कप्पेंतं वा संठवेंतं वा साइज्जइ" व्याख्या पूर्वोक्तोत्तरोष्ठरोमकर्तनसूत्रस्येव बोध्या ॥ सू० ६०॥

सूत्रम्—जे भिक्खू अप्पणो अच्छीणि आमज्जेज्ज वा पमज्जेज्ज वा आमज्जंतं वा पमज्जंतं वा साइज्जइ ॥ सू० ६१॥ एवमच्छिसु पायगमओ भाणियव्वो, जाव फुमेज्ज वा रएज्ज वा फुमेंतं वा रएंतं वा साइज्जइ ॥६६॥

छाया—यो भिक्षुः आत्मनोऽक्षिणी आमार्जयेद्वा प्रमार्जयेद्वा, आमार्जयन्तं वा, प्रमार्जयन्तं वा स्वदते ॥ सू० ६१ ॥ एवमक्षिषु पादगमको भणितव्यः यावत् फूत्कुर्याद्वा रञ्जयेद्वा फूत्कुर्वन्तं वा रञ्जयन्तं वा स्वदते ॥ सू० ६२-६६ ॥

चूर्णी—'जे भिक्खु' इत्यादि 'जे भिक्खू' यो भिक्षु. 'अप्पणो अच्छीणि' आत्मनोऽक्षिणी-नेत्रे, "आमज्जेज्ज वा' आमार्जयेत्-तयोरेकवारं मार्जनं कुर्यात् 'पमज्जेज्ज वा' प्रमार्जयेद्वा, अनेकवारं प्रमार्जनं कुर्यात् । तथा 'आमज्जंतं वा पमज्जंतं वा 'साइज्जइ' आमार्जयन्तं वा-प्रमार्जयन्तं वा-स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ६१॥ 'एवमच्छिसु'

इत्यादि । 'एवमच्छिसु' एवम्-अनेनप्रकारेणाऽक्ष्णोः विषये पादसूत्रवद्गमकः प्रकारो भणितव्यः, यावत्-'फूमेज्ज वा रएज्ज वा, फूमंतं वा-रएंतं वा साइज्जइ' ॥

तथाहि—"जे भिक्खू अप्पणो अच्छीणि संबाहेज्ज वा पलिमद्देज्ज वा, संबाहेंतं वा पलिमद्देंतं वा साइज्जइ ॥ सू० ६२॥ जे भिक्खू अप्पणो अच्छीणि तेल्लेण वा घएण वा वसाए वा णवणीएण वा मंखेज्ज वा भिलिंगेज्ज वा, मंखंतं वा भिलिंगेंतं वा साइज्जइ ॥ सू०६३॥ जे भिक्खू अप्पणो अच्छीणि लोद्धेण वा कक्केण वा चुण्णेण वा वण्णेण वा पउमचुण्णेण वा, उल्लोलेज्ज वा उव्वट्टेज्ज वा, उल्लोलेंतं वा उव्वट्टेंतं वा साइज्जइ ॥ सू० ६४॥ जे भिक्खू अप्पणो अच्छीणि सीओदगवियडेण वा उसिणोदग-वियडेण वा, उच्छोलेज्ज वा पधोवेज्ज वा, उच्छोलेंतं वा-पधोवेंतं वा साइज्जइ ॥ सू० ६५॥ जे भिक्खू अप्पणो अच्छीणि फुमेज्ज वा-रएज्ज वा, फुमेंत वा रएंतं वा साइज्जइ ॥ सू० ६६॥" एवं व्याख्या पादसूत्रवत् कर्तव्या ॥

## जे भिक्खू अप्पणो दीहाइं भमुहरामाइं कप्पेज्ज वा संठवेज्ज वा कप्पेंतं वा संठवेंतं वा साइज्जइ ॥ सू० ६७ ॥

**छाया—यो भिक्षु आत्मनो दीर्घाणि भ्रूरोमाणि कल्पयेद् वा-संस्थापयेद्वा, कल्पयन्तं वा संस्थापयन्तं वा स्वदते ॥ सू० ६७ ॥**

चूर्णी—'जे भिक्खू' इत्यादि । जे भिक्खू' यो भिक्षुः 'अप्पणो' आत्मनः 'दीहाइं' दीर्घाणि-लम्बमानानि 'भमुहरोमाइं' भ्रूरोमाणि-भ्रुवो रोमाणि केशान्, 'कप्पेज्ज वा' कल्पयेद् वा-शोभार्थ कर्तयेत्, 'संठवेज्ज वा' संस्थापयेद्वा, तत्र संस्थापनं कर्तरिकादिवत्-तीक्ष्णीकरण, शुक-तुण्डवद्वाऽऽकुञ्चितं कुर्यात । तथा-'कप्पेंतं वा संठवेंतं वा साइज्जइ' कल्पयन्त वा संस्थापयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ६७॥

## सूत्रम्—जे भिक्खू अप्पणो दीहाइं पासरामाइं कप्पेज्ज वा संठ-वेज्ज वा कप्पेंतं वा संठवेंतं वा साइज्जइ ॥ सू० ६८॥

**छाया—यो भिक्षुः आत्मनो दीर्घाणि पार्श्वरोमाणि कल्पयेद्वा संस्थापयेद्वा कल्पयन्तं वा संस्थापयन्तं वा स्वदते ॥ सू० ६८॥**

चूर्णी—"जे भिक्खु' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'अप्पणो दीहाइं पासरोमाइं' आत्मनो दीर्घाणि पार्श्वरोमाणि 'कप्पेज्ज वा' कल्पयेत् कर्त्रीप्रभृतिना 'संठवेज्ज वा' संस्थापयेद्वा-शुकतुण्डादिवत् कुर्यात् । "कप्पेंतं वा-संठवेंतं वा साइज्जइ' कल्पयन्तं संस्था-पयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ६८॥

**सूत्रम्—जे भिक्खू अप्पणो अच्छिमलं वा कण्णमलं वा दंतमलं वा णहमलं वा णीहरेज्ज वा विसोहेज्ज वा, णीहरंतं वा विसोहेंतं वा साइज्जइ ॥ सू० ६९॥**

छाया—यो भिक्षुः आत्मनोऽक्षिमलं वा कर्णमलं वा दन्तमलं वा नखमलं वा निर्हरेद्वा विशोधयेद्वा, निर्हरन्त वा-विशोधयन्तं वा स्वदते ॥सू० ६९॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'अप्पणो' आत्मनः 'अच्छिमलं वा' -अक्षिमलं नेत्रमलम्, तथा—'कण्णमलं वा' कर्णमलं वा, 'दंतमलं वा' दन्तमलं-दन्तपङ्क्तिसंलग्नम् । 'णहमलं वा' नखमलं वा-नखानां करचरणगतानां मध्ये विद्यमानं मलम् तत्स्थानात् 'णीहरेज्ज वा' निर्हरेत् निष्कासयेत्, तथा--'विसोहेज्ज वा' विशोधयेत् -मलमपनीय शोभां सपादयेत् । 'णीहरेंत वा विसोहेंत वा साइज्जइ' निर्हरन्तं वाविशोधयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ६९॥

**सूत्रम्—जे भिक्खू अप्पणो कायाओ सेयं वा जल्लं वा पंकं वा मलं वा णीहरेज्ज वा विसोहेज्ज वा नीहरेंतं वा विसोहेंतं वा साइज्जइ ॥७०॥**

छाया—यो भिक्षुरात्मनः कायात् स्वेदं वा-जल्लं वा पङ्कं वा-मलं वा निर्हरेद्वा-विशोधयेद्वा, निर्हरन्त वा-विशोधयन्तं वा स्वदते ॥ सू० ७०॥

चूर्णी—'जे भिक्खु' इत्यादि । 'जे भिक्खू, यो भिक्षुः, 'अप्पणो कायाओ' आत्मनः कायात्–स्वशरीरात् 'सेयं वा' स्वेद वा–घर्माऽतिशयेन शरीराद्विनिर्गतं जलम्, 'जल्लं वा' जल्लं शरीरमलम् 'पंक वा' तत्र–पङ्क'–शरीरसलग्नप्रस्वेदमिश्रितधूलिरूपस्तम्' 'मलं वा' मलं–शोणितादिरूपम् 'नीहरेज्ज वा' निर्हरेत्–निष्कासयेत् 'विसोहेज्ज वा' विशोधयेत, तथा–'नीहरेंतं वा–विसोहेंतं वा साइज्जइ' निर्हरन्तं वा विशोधयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति तस्याज्ञाभङ्गादयो दोषा भवन्ति ॥ सू० ७०॥

(वसन्ततिलकावृत्तम्)

भाष्यम्– दिट्ठं मलं सयमहेत्थ पडेज्ज चित्तं,
तप्पाडणे जइ जएज्ज मुमुक्खुलोगो ।
सिंगारकामुगजणेसु य साहुलोगे,
मेओ कियं अहह संसइयं च चेओ ॥
सेयाइयं देहमलं, नीहरेज्जा सदेहओ ।
आणाभंगाइए दोसे, पावेज्जा नेत्थ संसओ ॥

छाया—दिग्धं मलं स्वयमथाऽत्र पतेत् चित्रं–,
तत्पातने यदि यतेत मुमुक्षुलोकः।
शृङ्गारकामुकजनेषु च साधुलोके,
भेद कियानहह ! संशयितं च चेतः॥
स्वेदादिक देहमल निर्हरेत् स्वदेहतः।
आज्ञाभङ्गादिकान् दोषान् प्राप्नुयान्नात्र संशय ॥

**अवचूरिः**–'दिद्धं मलं' इत्यादि। अथ–अत्र देहे दिग्ध-लिप्तं शरीरसग्नं मलं वृद्धिगतं 'सत्' स्वयमेव पतेत्–शरीरात् पृथग् भवेत् तस्य–स्वय पततो मलस्य पातने–निष्कासने, शृङ्गारिकजनो व्यवस्यति तथैव क्षुद्रकर्मणि मलनिष्कासने यदि मुमुक्षुलोक साधुवर्गो यतेत, अत्र चित्रं मन्ये। यः साधुर्मोक्षं यत्नतः साधयति, स यदि यत्नमास्थाय शरीरशोभामेव वर्द्धयेत्, शरीरशोभामेव साधयेत्–तदा शृङ्गारकामुकेषु जनेषु च पुन साधुलोके कियान् भेद ? को भेद ? अहह (!) मदीयं चेत संशयितम्, यथा न संभावयामि यत् शरीरशोभासंलग्नो मुनिर्मोक्षं साधयिष्यतीति। इत्थंमुहुर्मुहु शास्त्रतत्त्वविद्भिर्बोध्यमानोऽपि यदि भिक्षु स्वदेहत स्वदादिकं देहमलम् उपलक्षणात्कर्ण–नेत्रादिमलं निर्हरेत्, तदा–आज्ञाभङ्गादिकान दोषान् प्राप्नुयात्, अत्र सन्देहो न मन्तव्यः॥सू० ७०॥

## सूत्रम्—जे भिक्खू गामाणुगामं दूइज्जमाणे अप्पणो सीसदुवारियं करेइ करेंतं वा साइज्जइ॥सू० ७१॥

**छाया**—यो भिक्षुर्ग्रामानुग्रामं द्रवन्-आत्मन शीर्षद्वारिकां करोति कुर्वन्तं वा स्वदते॥ सू० ७१।

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षु 'गामाणुगामं दूइज्जमाणे' ग्रामानुग्राम द्रवन्–एकस्माद् ग्रामाद् ग्रामान्तरं गच्छन्, शिशिरऋतौ–ग्रीष्मऋतौ च शीत–घर्मवारणार्थं 'अप्पणो' आत्मन, 'सीसदुवारियं' शीर्षद्वारिका –शीर्षस्य मस्तकस्य द्वारिका आवरकां, शीर्षाऽऽवरणमिति यावत्। साध्वी तु मस्तक 'घूंघट' इति लोकप्रसिद्धेनाऽवगुण्ठयितु शक्नोतीत्यपवाद। 'करेइ' करोति, आतप शीतं वा मा बाधतामिति बुद्धया येन केनापि साधनेन मस्तकमाछादयति। 'करेंतं वा साइज्जइ' कुर्वन्त वा स्वदते। यो हि भिक्षुर्मासकल्पं परिसमाप्य ग्रामाद्ग्रामान्तरं गच्छन् स्वात्मन. शिरसि वस्त्रादिना छत्रवत् प्रावरण–मवगुण्ठनं करोति तथा कुर्वन्तं स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति॥ सू० ७१॥

अत्राह भाष्यकार—

**भाष्यम्**— मत्थे पावरणं अंसे, करेमाणेऽवरोवणं।
गिहिस्स लिंगमन्नस्स, करंतो दोसभा हवे॥

छाया—मस्तके प्रावरणमंसे कुर्वाणोऽवरोपणम् ।
गृहिणो लिङ्गमन्यस्य कुर्वन् दोषभाग् भवेत् ॥

अवचूरिः—'मत्थे' इत्यादि। ग्रामाद्ग्रामान्तरं गच्छन् सयतः मस्तके स्वशिरोदेशे प्रावरणम् आच्छादनम्, अंसे—स्कन्धस्यैकदेशे शोभार्थम् अवरोपणं—स्थापनं वा कुर्वन्, मस्तके स्कन्धदेशे वा चोलपट्टादिक बध्नन्, यद्वा—गृहिणो लिङ्गम्—गृहस्थवेषं, यद्वा-गृहस्थवत् वस्त्राच्छादनं करोति, अन्यस्य वा लिङ्गम् अन्ययूथिकवत् वस्त्रस्य परिधानादि कुर्वन् तिष्ठति स दोषभाग् भवेत्, आज्ञाभङ्गादिकान् दोषान् लभेत ॥सू० ७१॥

सूत्रम्—जे भिक्खू सणकप्पासाओ वा उण्णकप्पासाओ वा बोंडकप्पासाओ वा अमिलकप्पासाओ वा वसीकरणसुत्ताइं करेइ करेंतं वा साइज्जइ ॥ सू० ७२॥

छाया—यो भिक्षुः शणकार्पासाद्वा ऊर्णाकार्पासाद्वा बोंडकार्पासाद्वा अमिलकार्पासाद्वा वशीकरणसूत्राणि करोति कुर्वन्तं वा स्वदते ॥सू० ७२॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः, 'सणकप्पासाओ वा' शणकार्पासाद्वा--शणसूत्रात् 'उण्णकप्पासाओ वा' ऊर्णाकार्पासाद्वा- ऊर्णासम्पादितसूत्राद्वा 'बोंडकप्पासाओ वा' बोंडकार्पासात् तत्र 'बोंड' इति देशी शब्दः कर्पासवाची तेन बोंडसूत्रादिति कार्पाससूत्राद्वा 'अमिलं' इति देशी शब्दः ऊर्णाविशेषवाचा तेन अमिलं--ऊर्णाविशेषः, तन्निर्मितसूत्राद्वा एतैः शणकार्पासादिभिः सूत्रैः 'वसीकरणसुत्ताइं करेइ' वशीकरणसूत्राणि करोति, अयं भावः-यो भिक्षुर्वशीकरणार्थं पतिपुत्रादि वशीकर्तुं शणकार्पासादिना सूत्राणि करोति—निर्माति। 'करेंतं वा साइज्जइ' कुर्वन्त वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ७२॥

सूत्रम्—जे भिक्खू गिहंसि वा गिहमुहंसि वा गिहदुवारंसि वा गिहपडिदुवारंसि वा गिहेलुयंसि वा गिहंगणंसि वा गिहवच्चंसि वा उच्चारं वा पासवणं वा परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥सू० ७३॥

छाया—यो भिक्षुः गृहे वा गृहमुखे वा गृहद्वारे वा गृहप्रतिद्वारे वा गृहैलुके वा गृहाङ्गणे वा गृहवर्चसि वा उच्चारं वा प्रस्रवणं वा परिष्ठापयति परिष्ठापयन्तं वा स्वदते ॥सू० ७३॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः 'गिहंसि वा' गृहे वा 'गिहमुहंसि वा' गृहमुखे वा 'गिहदुवारंसि वा' गृहद्वारे वा यदाश्रित्य गेहे प्रविशति—तस्मिन् स्थाने वा, 'गिहपडिदुवारंसि वा' गृहप्रतिद्वारे वा—गृहस्याऽवान्तरद्वारे इत्यर्थः 'गिहेलुयंसि वा'

गृहैलुके वा--गृहस्य--एलुकेऽग्रभागे '**गिहंगणंसि वा**' गृहाङ्गणे वा--गृहमध्ये निरावृतस्थानविशेषे '**गिहवच्चंसि वा**' गृहवर्चसि वा -गृहस्थवर्चोगृहे, गृहस्थस्योच्चारनिवारणस्थाने, '**उच्चारं वा**' उच्चारं--पुरीषोत्सर्गं वा '**पासवणं वा**' प्रस्रवणम्--मूत्रं वा '**परिट्ठवेइ**' परिष्ठापयति--व्युत्सृजति गृहस्थस्यैतेषु प्रदेशेषु यदि भिक्षुर्मूत्रपुरीषादिकं करोतीत्यर्थः। '**परिट्ठवेंतं वा साइज्जइ**' परिष्ठापयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ७३॥

**सूत्रम्—जे भिक्खू मडगगिहंसि वा मडगछारियंसि वा मडगथूभियंसि वा मडगआसयंसि वा मडगलेणंसि वा मडगथंडिलंसि वा मडगवच्चंसि वा उच्चारं वा पासवणं वा परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥ सू० ७४ ॥**

**छाया—यो भिक्षुः मृतकगृहे वा मृतकक्षारे वा मृतकस्तूपे वा मृतकाश्रये वा मृतकलयने वा मृतकस्थण्डिले वा मृतकवर्चसि वा, उच्चारं वा प्रस्रवणं वा, परिष्ठापयति परिष्ठापयन्तं वा स्वदते ॥सू० ७४॥**

**चूर्णी—'जे भिक्खू'** इत्यादि 'जे भिक्खू' यो भिक्षुः '**मडगगिहंसि वा**' मृतकगृहे—यत्र मृतकं स्थापयित्वा तदुपरि मृत्तिकादिना चयनं क्रियते किन्तु न दहति तत् मृतकगृहं कथ्यते, तस्मिन् '**मडगछारियंसि वा**' मृतकक्षारे वा—दग्धमृतकस्य पुञ्जीकृतभस्मस्थाने '**मडगथूभियंसि वा**' मृतकस्तूपे मृतकोपरिकृतशिखररूपे स्थाने वा '**मडगआसयंसि वा** मृतकाश्रये—श्मशानासन्नप्रदेशे यत्रानीय मृतकं स्थाप्यते तस्मिन् '**मडगलेणंसि वा**' मृतकलयने मृतकदाहस्थाने कृतं देवकुलादिकं स्थानम्, तस्मिन्, '**मडगथंडिलंसि वा**' मृतकस्थण्डिले वा मृतकभस्मचितावर्जिते मृतकदहनस्थाने '**मडगवच्चंसि वा**' मृतकवर्चसि शटितमृतकस्थाने, यत्र—श्वादयो मृतकस्याङ्गप्रत्यङ्गान्यानीय पातयन्ति, तत्स्थाने '**उच्चारं वा पासवणं वा परिट्ठवेइ**' उच्चारं—पुरीषं प्रस्रवणं—मूत्रं परिष्ठापयति, तथा '**परिट्ठवेंतं वा साइज्जइ**' परिष्ठापयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ७४॥

**सूत्रम्—जे भिक्खू इंगालदाहंसि वा खारदाहंसि वा गायदाहंसि वा तुसदाहंसि वा भुसदाहंसि वा उच्चारपासवणं परिट्ठवेइ, परिट्ठवेंतं वा साइज्जइ ॥ सू० ७५॥**

**छाया—यो भिक्षुः अङ्गारदाहे वा क्षारदाहे वा गात्रदाहे वा तुषदाहे वा भुसदाहे वा उच्चारं वा प्रस्रवणं वा परिष्ठापयति, परिष्ठापयन्तं वा स्वदते ॥ सू० ७५॥**

**चूर्णी—'जे भिक्खू'** इत्यादि। 'जे भिक्खू' यो भिक्षुः '**इंगालदाहंसि वा**' अङ्गारदाहे वा, यत्र—खदिराद्यङ्गारा (कोलसा) इति लोकप्रसिद्धाः क्रियन्ते तत्स्थाने '**खारदाहंसि वा**' क्षार-

दाहे वा-क्षारकरणस्थाने, यत्र स्थानविशेषे क्षारद्रव्य (साजी खार-आदि) करणार्थं क्षारजातीय-काष्ठं दह्यते तादृशस्थानं क्षारदाह इति कथ्यते, तत्र, **'गायदाहंसि वा'** गात्रदाहे वा ज्वरादि-रोगाक्रान्तानां पालितपशूनां गवादीनां तत्तदङ्गावयवस्तप्तलोहशलाकया दंदह्यते तस्मिन् गात्रदाह-स्थाने **'तुसदाहंसि वा'** तुषदाहे वा-यत्र स्थले कुम्भकारादयः नूतनघटादीनां पाकक्रियायां तुषा-दिकं दहन्ति तस्मिन् तुषदाहस्थाने **'भुसदाहंसि वा'** बुसदाहे वा ' कडङ्गरो बुसं क्लीबे, धान्यत्वचि पुमांस्तुष " इत्यमरः "भुसा" इति लोकप्रसिद्धस्य दाहस्थाने । एतादृशदाहस्थाने यदि **'उच्चार-पासवणं परिट्ठवेइ'** उच्चारप्रस्रवण परिष्ठापयति, तथा-**'परिट्ठवेंतं वा साइज्जइ'** परिष्ठा-पयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ७५॥

## सूत्रम्—जे भिक्खू सेयाययणंसि वा पंकंसि वा पणगंसि वा उच्चार-पासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥ सू० ७६॥

**छाया—यो भिक्षु स्वेदायतने वा, पङ्के वा पनके वा उच्चारप्रस्रवणं परिष्ठा-पयति परिष्ठापयन्तं वा स्वदते ॥ सू० ७६॥**

चूर्णी—'जे भिक्खू' इत्यादि । **'जे भिक्खू'** यो भिक्षु **'सेयाययणंसि वा**, स्वेदायतने वा-सचित्तजलमिश्रितकर्दमबहुलस्थाने **'पंकंसि वा'** पङ्के वा सामान्यपङ्के **'पणगंसि वा'** पनके वा-जलप्रपातजनितशेवाल ('नीलन- फुलन') इति लोकप्रसिद्धस्थाने वा **'उच्चारपासवणं परिट्ठवेइ'** उच्चारप्रस्रवणं परिष्ठापयति, **'परिट्ठवेंतं वा साइज्जइ'** परिष्ठापयन्तं वा स्वदतेऽनुमोदते स प्राय-श्चित्तभाग् भवति ॥ सू० ७६॥

## सूत्रम्—जे भिक्खू अहिणवियासु गोलेहणियासु वा अहिणवियासु मट्टियाखाणीसु वा परिभुंजमाणियासु वा अपरिभुंजमाणियासु वा उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं व साइज्जइ ॥ सू० ७७॥

**छाया—यो भिक्षु अभिनविकासु गोलेहनिकासु वा अभिनविकासु मृत्तिकाखानिषु वा परिभुज्यमानासु वा अपरिभुज्यमानासु वा उच्चारप्रस्रवणं परिष्ठापयति परिष्ठा-पयन्तं वा स्वदते ॥ सू० ७७॥**

चूर्णी—'जे भिक्खू' इत्यादि । **'जे भिक्खू'** यो भिक्षु **'अहिणवियासु'** अभिनविकासु-नव निर्मितासु **'गोलेहणियासु'** गोलेहनिकासु-यत्र गवामवलेहनार्थं लवणादिक्षारद्रव्यं स्थाप्यते यदवलिह्य गावो रुचिपूर्वकं पानीयं पिबन्ति तृणादिकं वा खादन्ति तादृशानि स्थानानि गोलेहनिकाः कथ्यन्ते, तासु गोनिमित्तं नवनिर्मितासु गोलेहनिकासु **'अहिणवियासु वा मट्टियाखाणीसु'** नवीनासु वा मृत्तिकाखानिषु यस्मात्-मृत्तिका निष्कास्यते तादृशस्थानेषु **'परिभुंजमाणियासु वा' अपरिभुंज-**

माणियासु वा' परिभुज्यमानासु-व्यवह्रियमाणासु अपरिभुज्यमानासु-अव्यवह्रियमाणासु वा भूमिषु 'उच्चारपासवणं परिट्ठवेइ' उच्चारप्रस्रवणं परिष्ठापयति, 'परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति, संयमात्मविराधनालोकनिन्दादिदोषसद्भावात् ॥ सू० ७७॥

सूत्रम्—जे भिक्खू उंबरवच्चंसि वा नग्गोहवच्चंसि वा आसत्थवच्चंसि वा उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥सू० ७८॥

छाया—यो भिक्षुः उदुम्बरवर्चसि वा न्यग्रोधवर्चसि वा अश्वत्थवर्चसि वा उच्चारप्रस्रवणं परिष्ठापयति परिष्ठापयन्तं वा स्वदते । सू० ७८।

चूर्णी—'जे भिक्खू इत्यादि । 'जे भिक्खू' यो भिक्षुः 'उंबरवच्चसि वा' उदुम्बरवर्चसि वा, उदुम्बरो वृक्षविशेषः 'उमर' इति 'गुल्र' इति वा लोके प्रसिद्धस्तस्य वर्चसि प्रत्यासन्नप्रदेशे यत्र गिरितटे फलानि पतन्ति पात्यन्ते पुञ्जीक्रियन्ते वा, तस्मिन् प्रदेशे, 'नग्गोहवच्चंसि वा' न्यग्रोधवर्चसि वा, न्यग्रोधो वटवृक्षस्तस्यासन्नप्रदेशो यत्र फलानि पतन्ति पात्यन्ते वा तत्र, 'आसत्थवच्चसि वा' अश्वत्थवर्चसि वा तत्राऽश्वत्थ पिप्पलवृक्षस्तत्फलपतन–पातनप्रदेशे, 'उच्चारपासवणं' उच्चारप्रस्रवणं 'परिट्ठवेइ' परिष्ठापयति 'परिट्ठवेंत वा साइज्जइ' परिष्ठापयन्त वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ७८॥

सूत्रम्—जे भिक्खू इक्खुवणंसि वा सालिवणंसि वा कुसुंभवणंसि वा कप्पासवणंसि वा उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥सू० ७९॥

छाया—यो भिक्षु इक्षुवने वा शालिवने वा कुसुम्भवने वा कार्पासवने वा उच्चारप्रस्रवण परिष्ठापयति परिष्ठापयन्त वा स्वदते॥ सू० ७९॥

चूर्णी— –'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'इक्खुवणंसि वा' इक्षुवने वा, इक्षुः–'सेलडी'–तिभाषाप्रसिद्ध', तस्य वनं-क्षेत्रं, तत्र । यथा-वने वृक्षा निविडाः सघनाः तद्वत्क्षेत्रे–इक्षूणां सघनत्वात् क्षेत्रे वनत्वस्योपचार', तथा च एतादृशेक्षुवने वा 'सालिवणंसि वा' शालिवने वा, शालि –र्व्रीहिस्तस्य वनं तत्र 'कुसुंभवणंसि वा' कुसुम्भवने वा तत्र–कुसुम्भ –रक्तरङ्गसमुत्पादकपुष्पविशेष. 'कुसुंबा' इति भाषाप्रसिद्धः, तस्य वनं क्षेत्रं तत्र 'कप्पासवणंसि वा' कार्पासवने वा कार्पासक्षेत्रे 'उच्चारपासवणं परिट्ठवेइ' उच्चारप्रस्रवणं परिष्ठापयति, 'परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्तं वा स्वदते स प्रायश्चितभाग् भवति ॥ सू० ७९॥

सूत्रम्—जे भिक्खू डागवच्चंसि वा सागवच्चंसि वा मूलगवच्चंसि वा कोत्थुंभरिवच्चंसि वा खारवच्चंसि वा जीरयवच्चंसि वा दमणय-

वच्चंसि वा मरुयवच्चंसि वा उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥सू० ८०॥

छाया—यो भिक्षुः डागवर्चसि वा शाकवर्चसि वा मूलकवर्चसि वा कोत्थुम्भरिवर्चसि वा क्षारवर्चसि वा जीरकवर्चसि वा दमनकवर्चसि वा मरुकवर्चसि वा उच्चारप्रस्रवणं परिष्ठापयति, परिष्ठापयन्तं वा स्वदते ॥ सू० ८०॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'डागवच्चंसि वा' डागवर्चसि वा-डागः पत्रशाकस्तस्य वर्चसि तदासन्नस्थाने यत्र पत्रशाक पुञ्जीक्रियते तत्स्थाने 'सागवच्चंसि वा' शाकवर्चसि वा-शाको वृन्ताकादिस्तस्य स्थाने 'मूलगवच्चंसि वा' मूलकवर्चसि वा मूलकं 'मूली'-तिलोकप्रसिद्धं, तस्य क्षेत्रे 'कोत्थुंभरिवच्चंसि वा' कोत्थुम्भरिवर्चसि वा-कोत्थुम्भरिधान्याकम् 'धाना' 'कोथमी' इति भाषाप्रसिद्धः, तस्य पुञ्जे 'जीरयवच्चंसि वा' जीरकवर्चसि यत्र जीरकमुत्पद्यते संस्थाप्यते वा तादृशस्थाने 'दमणयवच्चंसि वा' दमनकवर्चसि वा दमनकोनाम-वनस्पतिविशेषस्तस्य वर्चसि स्थाने 'मरुयवच्चंसि वा' मरुकवर्चसि वा, मरुकोऽपि वनस्पतिविशेषस्तस्य पुञ्जस्थाने 'उच्चारपासवणं परिट्ठवेइ' उच्चारप्रस्रवणं परिष्ठापयति, 'परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ८०॥

सूत्रम्—जे भिक्खू असोगवणंसि वा सत्तवण्णवणंसि वा चंपयसि वा चूयवणंसि वा अण्णयरेसु वा तहप्पगारेसु पत्तोवेएसु पुप्फोवेएसु फलोवेएसु छाओवेएसु उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥

छाया—यो भिक्षुः अशोकवने वा सप्तपर्णवने वा चम्पकवने वा चूतवने वा अन्यतरेषु वा तथाप्रकारेषु पत्रोपेतेषु पुष्पोपेतेषु फलोपेतेषु छायोपेतेषु उच्चारप्रस्रवणं परिष्ठापयति परिष्ठापयन्तं वा स्वदते ॥ सू० ८१॥

चूर्णी—''जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'असोगवणंसि वा' अशोकवने वा-लोकप्रसिद्धोऽशोकवृक्षस्तस्य वनं, तत्र 'सत्तवण्णवणंसि वा' सप्तपर्णवने वा तत्र-सप्तपर्णो नाम-वृक्षविशेषस्तस्य वनं, तत्र, 'चंपगवणंसि वा' चम्पकवने, 'चूयवणंसि वा' आम्रवने वा 'अण्णयरेसु वा तहप्पगारेसु' अन्यतरेषु वा तथाप्रकारेषु अशोकादिवृक्षभिन्नाऽशोकादिसमानेषु वृक्षसमुदायेषु । कथम्भूतेषु तेषु ? तत्राह-'पत्तोवेएसु' इत्यादि । 'पत्तोवेएसु' पत्रोपेतेषु-पत्रयुक्तेषु वृक्षेषु 'पुप्फोवेएसु' पुष्पोपेतेषु पुष्पसहितेषु 'फलोवेएसु' फलोपेतेषु 'छाओवेएसु' छायोपेतेषु पत्र-पुष्प-फल-च्छाया-समन्वितवृक्षसमूहेषु इत्यर्थः उच्चारपासवणं 'परिट्ठवेइ' उच्चारप्रस्रवणं परिष्ठापयति, तथा-'परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति, तस्याज्ञाभङ्गादयो दोषा भवन्ति ॥ सू० ८१॥

**सूत्रम्—जे भिक्खू सपायंसि वा परपायंसि वा दिया वा राओ वा वियाले वा उव्वाहिज्जमाणे सपायं गहाय, परपायं वा जाइत्ता उच्चार-पासवणं परिट्ठवेत्ता अणुग्गए सूरिए एडइ एडंतं वा साइज्जइ ॥ सू० ८२॥**

**छाया**— यो भिक्षुः स्वपात्रे वा परपात्रे वा दिवा वा रात्रौ वा विकाले वा उद्बाध्यमानः स्वपात्रं गृहीत्वा परपात्रं वा याचित्वा उच्चारप्रस्रवणं परिष्ठाप्य अनुद्गते सूर्ये एडति एडन्तं वा स्वदते ॥ सू० ८२॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'सपायंसि वा' स्वपात्रे वा स्वनिश्रितोन्दके वा पात्रे इत्यर्थः 'परपायंसि वा' परपात्रे वा-परकीयोन्दके वा 'दिया वा' दिवा वा-दिवसे इत्यर्थः, 'राओ वा' रात्रौ वा 'वियाले वा' विकाले वा, विकाले-संन्ध्यासमये वा 'उव्वाहिज्जमाणे' उद्बाध्यमानः उच्चारप्रस्रवणवेगेन बाध्यमान उच्चारप्रस्रवणबाधामनुभवन् 'सपायं गहाय' स्वपात्रं गृहीत्वा, स्वकीयं पात्रं गृहीत्वा 'परपायं वा जाइत्ता' परपात्रं वा याचित्वा तस्मिन् 'उच्चारपासवणं' उच्चारप्रस्रवणम्, 'परिट्ठवेत्ता' परिष्ठाप्य कृत्वेत्यर्थ 'अणुग्गए सूरिए' अनुद्गते सूर्ये सूर्योदयात्प्रागेव 'एडइ' एडति-परिष्ठापयति अप्रतिलिखितभूमौ व्युत्सृजति, 'एडंतं वा साइज्जइ' एडन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥सू० ८२॥

**सूत्रम्—तं सेवमाणे आवज्जइ मासियं परिहारट्ठाणं उग्घाइयं ॥८३॥**

तइओ उद्देसो समत्तो ॥३॥

**छाया**— तत्सेवमान आपद्यते मासिकं परिहारस्थानमुद्घातिकम् ॥ सू० ८३॥

॥ इति तृतीयोद्देशः समाप्तः ॥

**चूर्णी**—'तं सेवमाणे' इत्यादि । तं सेवमाणे, तत्सेवमानः, तृतीयोद्देशके आदित आरभ्य समाप्तिपर्यंतं यद्यत् प्रायश्चित्तकारणं वर्णितं तदेकमपि यत्किञ्चित्सेवमानः श्रमणः श्रमणी वा 'उग्घाइयं' उद्घातिकम्, 'मासियं परिहारट्ठाणं' मासिकं परिहारस्थानम्, लघुमासिकं प्रायश्चित्तम् 'आवज्जइ' आपद्यते प्राप्नोति ॥सू० ८३॥

इति श्री-विश्वविख्यात-जगद्वल्लभ-प्रसिद्धवाचक-पञ्चदशभाषाकलितललितकलापालापक-प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक-वादिमानमर्दक-श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-"जैनशास्त्राचार्य"-पदभूषित-कोल्हापुरराजगुरु-बालब्रह्मचारि-जैनाचार्य-जैन-धर्म-दिवाकर-पूज्यश्री-घासीलालव्रति-विरचितायां "निशीथसूत्रस्य" चूर्णिभाष्यावचूरिरूपायां व्याख्यायां तृतीय उद्देशकः समाप्तः ॥३॥



## ॥ चतुर्थोद्देशकः ॥

व्याख्यातस्तृतीयोद्देशकः, तदनु-अवसरसङ्गत्या चतुर्थोद्देशकः प्रारभ्यते- अथाऽस्य चतुर्थोद्देशकीयादिसूत्रस्य तृतीयोद्देशकीयान्तिमसूत्रेण सह कः सम्बन्धः? इति जिज्ञासायामाह भाष्यकारः—

भाष्यम्— परिट्ठावेउमुच्चारं, वसहीओ बहिं गयं ।
गिण्हिज्जा जइ मं राया, एवं तं ण वसं नए ॥

छाया — परिष्ठापयितुमुच्चारं, वसतितो बहिर्गतम् ।
गृह्णीयाद्यदि मां राजा, एवं तं न वशं नयेत् ।

अवचूरिः—'परिट्ठावेउ०' इत्यादि । तृतीयोद्देशकान्तिमसूत्रे-उच्चारप्रस्रवणयोः परिष्ठापनं कथितम्। तत्र-रात्रौ उच्चारम्-उपलक्षणात्, प्रस्रवणादिकं परिष्ठापयितुं यद्युपाश्रयाद् बहिर्गतं मां 'चौरोऽयं विचरती'ति शङ्कया गृह्णीयात् गृहीतोऽदण्ड्योऽपि ततः आत्मानं मोचयितुं नृपाश्रयः-राज्ञा सह परिचय आवश्यकः, एवम् इति मत्वा तं राजानं न वशं नयेत् राजानं वशीकर्तुं न यतेतेति भावः । यः एवं कुर्यात् स प्रायश्चित्तभागी भवतीत्यस्मिन्नुद्देशके प्रतिपादयिष्यते । अयमेव सम्बन्धः पूर्वापरोद्देशकसूत्रयोः । तदनेनसम्बन्धेनायातस्याऽस्योद्देशकस्य प्रथमं सूत्रमाह—

### सूत्रम्—जे भिक्खू रायं अत्तीकरेइ अत्तीकरेंतं वा साइज्जइ ॥सू० १॥

छाया— यो भिक्षुः राजानमात्मीकरोति आत्मीकुर्वन्तं वा स्वदते ॥सू० १॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'रायं अत्तीकरेइ' राजानं तत्रत्यमण्डलाधिपतिमात्मीकरोति स्वाधीनं नयति, 'अत्तीकरेंतं वा साइज्जइ' आत्मीकुर्वन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्ती भवति । तथा-तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्ति । तत्र-राज्ञः आत्मीकरणं द्विप्रकारकम्-प्रत्यक्षं, परोक्षं च । तत्र—तत् प्रत्यक्षं यत्स्वयमेव करोति १, परोक्षं तु पुनरन्येन अमात्यादिना कारयति । यत्र स्वकीयप्रयत्नेन स्वयमेव गत्वा राज्ञा सह परिचयकरणं तत् प्रत्यक्षम् । परोक्षमन्यद्वारा राज्ञा सह सम्बन्धसंपादनमिति ॥सू० १ ॥

### सूत्रम्—जे भिक्खू रायं अच्चीकरेइ अच्चीकरेंतं वा साइज्जइ ॥सू०२॥

छाया — यो भिक्षुः राजानमर्चीकरोति, अर्चीकुर्वन्तं वा स्वदते ॥सू० २॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'रायं' राजानम् 'अच्चीकरेइ' अर्चीकरोति-शौर्यादिगुणवर्णनेन प्रशंसति, तद् अर्चीकरणं द्विविधम्—सदसद्गुणवर्णनभेदात् । पुनरपि एकैकं द्विविधम्— प्रत्यक्षम् १ परोक्षं च २ । तत्र-प्रत्यक्षं स्वयमेवात्मना गुणवर्णनम् १, परोक्षं तु परद्वारा गुणवर्णनम् २ । तथा-'अच्चीकरेंतं वा साइज्जइ' अर्चीकुर्वन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति । तस्याज्ञाभङ्गादयो दोषा भवन्ति । राजगुणवर्णनेनाऽनुकूलाः प्रतिकूला वा

परिषहा भवन्ति । राज्ञा सहातिपरिचयकरणेऽनुकूलप्रतिकूलोपसर्गसंभवेन सयमात्मविराधनादि-प्रसङ्गोऽपि, तस्माद्राज्ञोऽतिप्रशसनं न कर्त्तव्यमिति ॥ सू० २॥

## सूत्रम्—जे भिक्खू रायं अच्छीकरेइ अच्छीकरेंतं वा साइज्जइ ॥ सू० ३॥

छाया—यो भिक्षुः राजानमच्छीकरोति, अच्छीकुर्वन्त वा स्वदते ॥सू० ३॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'रायं' राजानम् 'अच्छीकरेइ' अच्छी करोति, अच्छो निर्मलस्तं करोति अच्छीकरोति, औषधयन्त्रमन्त्रादिदानेन रुग्णं नीरोग करोति । 'अच्छीकरेंतं वा साइज्जइ' अच्छीकुर्वन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ३॥

## सूत्रम्—जे भिक्खू रायं अत्थीकरेइ अत्थीकरेंतं वा साइज्जइ ॥ सू० ४॥

छाया— यो भिक्षुः राजानमर्थीकरोति अर्थीकुर्वन्त वा स्वदते ॥सू० ४॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'रायं' राजानम् अत्थीकरेइ' अर्थीकरोति यावता व्यापारेण राजा श्रमणेऽर्थी प्रयोजनवान् भवेत् तथा करोतीत्यर्थीकरोति । अतीताऽनागतवस्तुनो ज्ञाताऽय श्रमणो मय्यनुकूलो मा मन्त्रादि दास्यतीत्याशावन्तं राजानं स्वसमीपे समागमनाय प्रयोजनवन्तं करोत्यर्थीकरोतेरर्थ । 'अत्थीकरेंतं वा साइज्जइ' अर्थी-कुर्वन्तं वाऽन्यं स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति, तस्याज्ञाभङ्गादयो दोषा भवन्ति ॥सू० ४॥

एवं–'रायारक्खयं' राजारक्षकं राज्ञ आत्मरक्षकम्–'अत्तीकरेइ ५, अच्चीकरेइ ६, अच्छीकरेइ ७, अत्थीकरेइ ८, इति चत्वारि सूत्राणि ॥सू० ८॥ एवमेव 'नगरारक्खयं' नगरारक्षक नगरपालकं राजपुरुषम्, अत्रापि चत्वारि सूत्राणि ॥सू० १२॥ एवमेव 'णिगमारक्खयं' निगमारक्षकं, तत्र निगम –व्यापारप्रधानस्थान, तस्याधिष्ठातारम् । अत्रापि चत्वारि सूत्राणि ॥सू० १६॥ एवं 'सव्वारक्खयं' सर्वारक्षकम्, सर्वान् राजारक्षकादारभ्य निगमारक्षकपर्यन्तान् सर्वान्, आ पामरा प्रजा वा आ-समन्ताद् रक्षति य स सर्वारक्षक प्रधानोऽधिकारी, तम् । अत्रापि, चत्वारि सूत्राणि ॥२०॥ 'अत्तीकरेइ १, अच्चीकरेइ २, अच्छीकरेइ ३, अत्थीकरेइ ४' इत्येत-द्विषयाणि प्रत्येकं चत्वारि चत्वारि सूत्राणि राजारक्षकादारभ्य सर्वारक्षकपर्यन्तानां विषये व्याख्यैयानि राजसूत्रादारभ्य सर्वारक्षकसूत्रपर्यन्तानि पञ्चापि सूत्राणि आत्मीकरणादिकमधिकृत्यैकगमानि सन्तीति ॥सू० ५–२०॥

भाष्यम्—अत्तीकरेइ य णिवाइ कयाइ अच्चो, अच्छीकरेइ जइ वाऽइ करेज्ज अत्थी ।
सव्वत्थ एत्थ दुहओ उवसग्गदोसा, तम्हा जई नहि करेज्ज वयंति सुत्ते ॥

छाया—आत्मीकरोति च नृपादि कदाचिदर्चो अच्छीकरोति यदिवाऽथ कुर्यादर्थी ।
सर्वत्राऽत्र द्विधात उपसर्गदोषाः तस्माद्यतिर्नहि कुर्याद्वदन्ति सूत्रे ॥

अवचूरिः—'अत्तीकरेइ' इत्यादि । यो हि भिक्षुः—'निवाइ' नृपादि अर्थात्—राजानम्, राजारक्षकम्, नगरारक्षकम्, निगमारक्षकम्, सर्वारक्षकं वा, यं कमप्येकमात्मीकरोति, च पुनः—अर्चीकरोति, यदि वा—अच्छीकरोति, अथ कदाचित् अर्थीकरोति । अत्राऽऽत्मीयकरणादौ सर्वत्रापि द्विधात उभयथापि-अनुकूल—प्रतिकूलादिनोपसर्गदोषा सभवेयु, यथाऽङ्गार· शीतो वा उष्णो वा—(ठण्डा—कोलसा) (जलता—कोलसा) करस्पृष्ट· सन् शीतोष्णाभ्यां गुणदोषाभ्यामुपसर्गकर एव भवति, यदा शीतस्तदा करं कृष्णायते यदोष्णो जाज्वल्यमानस्तदा कर दहति । एवमेव--राजा दयोऽपि कुर्यु, तस्मात्-यतिर्मध्यस्थभावे वर्त्तमानो नैतेषामुपकारमपकारं वा कुर्यात् । इति सूत्रे--विंशतिसूत्रसमुदाये गणधरादयो वदन्ति ॥ सू० २०॥

## सूत्रम्—जे भिक्खू कसिणाओ ओसहीओ आहारेइ आहारेंतं वा साइज्जइ ॥ सू० २१॥

छाया—यो भिक्षुः कृत्स्ना ओषधीराहरति-आहरन्त वा स्वदते ॥सू० ।२१॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु· 'कसिणाओ ओसहीओ' कृत्स्नाः सम्पूर्णा अखण्डिता· द्रव्यतो भावतश्च ओषधय· शालिगोधूमादय·, तत्र--द्रव्यतोऽखण्डिता· स्वरूपेणाऽवस्थिता, भावत सचित्ता, ता 'आहारेइ' आहरति, 'आहारेंत वा साइज्जइ' आहरन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति । अत्र कृत्स्नौषधीनां द्रव्यभावभेदेन चत्वारो भङ्गा भवन्ति, तथाहि -द्रव्यतोऽखण्डिता. भावत. खण्डिता इति प्रथमो भङ्ग· १, द्रव्यत· खण्डिता भावतोऽखण्डिता, इति द्वितीयो भङ्ग २, द्रव्यतोऽखण्डिता भावतोऽखण्डिता·, इति तृतीयो भङ्गः ३, द्रव्यत खण्डिता·, भावतश्च खण्डिता, इति चतुर्थो भङ्ग ४ । तत्र--प्रथमचतुर्थौ भङ्गौ शुद्धौ ॥ सू०२१॥

## सूत्रम्—जे भिक्खू आयरियउवज्झाएहिं अदत्तं आहारेइ आहारेंतं साइज्जइ ॥ सू० २२॥

छाया—यो भिक्षुराचार्योपाध्यायैरदत्तमाहरति आहरन्तं वा स्वदते ॥ सू० २२॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु. 'आयरियउवज्झाएहिं' आचार्योपाध्यायै.-उपलक्षणाद्रत्नाधिकैर्वा 'अदत्तं' अनवतीर्णमशनादिकम् 'आहारेइ' आहरति, 'आहारेंतं वा साइज्जइ' आहरन्त वा स्वदते स प्रायश्चित्तभाग् भवति ॥२२॥

भाष्यम्—आयरियाइअदिण्णं, असणाइ चउव्विहं ।
वत्थ कंबल--पत्ताइं, कयावि नेव गेण्हए ॥

छाया—आचार्याद्यदत्तमशनादि चतुर्विधम् ।
वस्त्र-कम्बल-पात्रादि कदापि नैव गृह्णीयात् ॥

अवचूरिः—'आयरियाइ' इत्यादि । अशनादिकं चतुर्विधमाहारम्, तथा—वस्त्रकम्बलपात्रादि, आदिशब्दादौषध-भैषज्यादिकं च सर्ववस्तुजातम्, आचार्योपाध्यायादिनाऽदत्तं मुनिः कदापि काले नैव गृह्णीयात् । यदि गृह्णीयात्तदा प्रायश्चित्तभाग् भवेत् ॥ सू० २२॥

सूत्रम्—जे भिक्खू आयरियउवज्झाएहिं अविदिण्णं विगइं आहारेइ आहारेंतं वा साइज्जइ ॥ सू० २३ ॥

छाया—यो भिक्षुः आचार्योपाध्यायैः अविदत्तां विकृतिम् आहरति आहरन्तं वा स्वदते ॥ सू० २३ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'आयरियउवज्झाएहिं' आचार्योपाध्यायैः उपलक्षणाद्रत्नाधिकैर्वा, 'अविदिण्णं' अविदत्तामननुज्ञाताम् 'विगइं' विकृतिं—दधि—दुग्धादिरूपाम् 'आहारेइ' आहरति—भुङ्क्ते 'आहारेंतं वा साइज्जइ' आहरन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति, तस्याज्ञाभङ्गादयो दोषा भवन्ति ॥ सू० २३ ॥

अत्राह भाष्यकारः—

भाष्यम्—विगई य घयं, तेल्लं, दहिदुद्धगुडाइय ।
भुंजेइ अविदिण्णं जो, पायच्छित्तं स पावई ॥

छाया—विकृतिश्च घृतं तैलं, दधि-दुग्ध-गुडादिकम् ।
भुङ्क्तेऽविदत्तं यः प्रायश्चित्तं स प्राप्नोति ॥

अवचूरिः—'विगई' इत्यादि । सूत्रे विकृतिश्च घृत, तैल, दधिदुग्धगुडादिकं प्रोच्यते । आदिपदान्मधुरादि, तद्विकृतिपदानीत सर्वमपि—आचार्योपाध्यायरत्नाधिकादिभिरविदत्तं सत् यो यतिर्भुङ्क्ते स प्रायश्चित्तं प्राप्नोति ॥ सू० २३॥

सूत्रम्—जे भिक्खू ठवणकुलाइं अजाणिय, अपुच्छिय, अगवेसिय पुव्वामेव पिंडवायपडियाए अणुप्पविसइ अणुप्पविसंतं वा साइज्जइ ॥ सू० २४ ॥

छाया—यो भिक्षुः स्थापनाकुलानि अज्ञात्वा, अपृष्ट्वा, अगवेषयित्वा पूर्वमेव पिण्डपातप्रतिज्ञया अनुप्रविशति, अनुप्रविशन्तं वा स्वदते ॥ सू० २४ ॥

चूर्णी 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'ठवणकुलाइं' स्थापनाकुलानि, तत्र स्थापनाकुलम् यत्र साध्वादिनिमित्तमन्नपानादिकं स्थाप्यते तत् स्थापनाकुलम् 'अजाणिय'

अज्ञात्वा 'अपुच्छिय' अपृष्ट्वा, तत्र-पृच्छा तु नाम्ना गोत्रेण च । 'अगवेसिय' अगवेषयित्वा -अन्वेषणमकृत्वा, तत्र गवेषणं- वृक्षस्तूपादिचिह्नैः परिज्ञानम् 'पुव्वामेव' पूर्वमेव गवेषणकरणादित. प्रागेव, 'पिंडवायपडियाए' पिण्डपातप्रतिज्ञया-आहारग्रहणेच्छया 'अणुप्पविसइ' अनुप्रविशति स्थापना-कुलेषु प्रविशति । 'अणुप्पविसंतं वा साइज्जइ' अनुप्रविशन्तं वा स्वदते स प्रायश्चित्तभाग् भवतीति ॥ सू० २४॥

अत्राह भाष्यकार.—

भाष्यम्—लोगुत्तरं लोगिगं च, दुविहं कुलमुच्चइ ।
लोगिगं दुविहं तत्थ, साहारणं दुगुंछियं ॥१॥
तत्थ लोगुत्तर गच्छे, गच्छे य अदुगुंछियं ।
तत्थावि ठवणादोसं, मुणी जाणिय नो वए ॥२॥

छाया—लोकोत्तर लौकिक च-द्विविध कुलमुच्यते ।
लौकिकं द्विविध तत्र-साधारणं जुगुप्सितम् ॥१॥
तत्र लोकोत्तर गच्छेद् गच्छेच्चाऽजुगुप्सितम् ।
तत्रापि स्थापनादोष मुनिर्ज्ञात्वा नो व्रजेत् ॥२॥

अवचूरिः—'लोगुत्तरं' इत्यादि । यत् खलु सूत्रे कुलं कथितं तत्कुलं द्विविधं द्विकारक-मुच्यते—लौकिक लोकोत्तरं च, तत्र लौकिकं द्विविधं साधारणं जुगुप्सितं च। तत्र—साधारणं ब्राह्मणादिकुलम्, जुगुप्सितं चाण्डालादिकुलम् लोकनिन्दितं च । लोकोत्तरं श्रावक—सम्यग्दृष्टिकुलम्, तत्र मुनिर्गच्छेत् भिक्षालाभाय । तथा—लौकिकमप्यजुगुप्सितं कुलं गच्छेत् । भिक्षार्थं यद्यत्कुलं प्रशस्तं तत्रापि यत्कुलं स्थापनादोषदुष्ट भवति, तज्ज्ञात्वा तत्र नो व्रजेत् ॥२४॥

**सूत्रम्—जे भिक्खू णिग्गंथीणं उवस्सयंसि अविहीए अणुप्पविसइ अणुप्पविसंतं वा साइज्जइ ॥ सू० २५॥**

छाया—यो भिक्षुर्निर्ग्रन्थीनामुपाश्रये अविधिनाऽनुप्रविशति अनुप्रविशन्तं वा स्वदते ॥ सू० २५॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षुः 'णिग्गंथीणं' निर्ग्रन्थीनां-साध्वीनाम् 'उवस्सयंसि' उपाश्रये-वसतौ तदावासस्थाने 'अविहीए' अविधिना—मर्यादामतिक्रम्य 'अणुप्पविसइ' अनुप्रविशति-सहसा याति, अनुप्रविशन्त वाऽन्यं स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० २५॥

अत्राह भाष्यकारः—

भाष्यम्—अकारणे जो विहिणा, कारणेऽविहिणा विसे ।
अकारणे अविहिणा, कारणे विहिणा जई ॥
एत्थ भंगतिगे दोसो, एसो सत्थविणिच्छओ ।
कारणे विहिणा एयं, चउत्थं भगमायरे ॥

छाया—अकारणे यो विधिना कारणेऽविधिना विशेत् ।
अकारणेऽविधिना कारणे विधिना यति ॥
अत्र भंगत्रिके दोष एष शास्त्रविनिश्चयः ।
कारणे विधिनैतं चतुर्थं भङ्गमाचरेत् ॥

अवचूरिः—'अकारणे' इत्यादि । सूत्रेऽविधिना श्रमण्या उपाश्रये प्रवेशो वारित । तत्र प्रवेशे चत्वारो भङ्गा भवन्ति तथाहि–अकारणे–विधिना, इति प्रथम १, कारणे–ऽविधिना, इति द्वितीय २, अकारणे–ऽविधिना, इति तृतीय ३, कारणे–विधिना, इति चतुर्थ ४ । अत्र यदि भङ्गत्रयमाश्रित्य प्रविशेत् तदा दोष प्रायश्चित्तमिति शास्त्रविनिश्चयः शास्त्रनिर्णय, तस्मात्कारणात्, 'कारणे विधिना' एत चतुर्थं भङ्गमाचरेद्भिक्षु । उपाश्रये स्थानत्रयं भवति, तच्चेत्थम्–अग्रभागद्वारमेकम् १, उपाश्रयमध्य द्वितीयम् २, श्रमण्या आसन्नस्थान तृतीयम् ३ । एतेषु त्रिष्वपि स्थानेषु नैषेधिकीं 'निसीहि–निसीहि' इत्युच्चारणं विना श्रमण्या उपाश्रये प्रविशत श्रमणस्य प्रायश्चित्तम् ।

अथ यदि–श्रमणोवसतेर्मूलद्वारसमीपे बहिस्तिष्ठेत् तदापि प्रायश्चित्तम्, अथान्तर्मध्य वा प्रविशति तदापि प्रायश्चित्तमापद्यते, इति श्रुत्वा शिष्य पृच्छति—

हे गुरो ! यदि श्रमण श्रमण्या उपाश्रय गच्छति तदा तु तत्र न भवति किञ्चित्प्राणातिपातादिकम्, तथाप्यधुना केन कारणेन प्रायश्चित्तं कथ्यते ? कस्मात् कारणात् मूलद्वारस्य बहिर्भागेऽपि तिष्ठत. प्रायश्चित्तम् ? केन वा कारणेन द्वारस्य मध्यं गच्छतोऽन्तर्गच्छतश्च प्रायश्चित्तम् ? इति प्रश्नः । आचार्य उत्तरं प्राह–तत्र विह्वलादयो बहवो दोषा, तथाहि–'सुखासीना कदाचित्स्यात्-प्रावृताऽवृता यदि वा, नैषेधिकीं बिना यान्त दृष्ट्वा सा विह्वला भवेत् । एवमन्येऽपि दोषा भवेयुरिति ॥ सू० २५॥

## सूत्रम्—जे भिक्खू णिग्गंथीणं आगमणपहंसि दंडगं वा लट्ठियं वा रयहरणं वा मुहपत्तियं वा अण्णयरं वा उवगरणजायं ठवेइ ठवेंतं वा साइज्जइ ॥ सू० २६॥

छाया—यो भिक्षुः निर्ग्रन्थीनामागमनपथे दण्डक वा यष्टिकां वा रजोहरणं वा मुखवस्त्रिकां वा अन्यतरद् वा उपकरणजात स्थापयति स्थापयन्तं वा स्वदते ॥सू० २६॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु 'णिग्गंथीणं' निर्ग्रन्थीनाम्–साध्वीनाम् 'आगमणपहंसि' आगमनपथे, येन पथा श्रमण्य साधोरुपाश्रयं पाक्षिकक्षमापना-

रोगादिकारणेष्वागच्छन्ति तस्मिन् मार्गे साध्वीनां गमनागमनमार्गे **'दंडग वा'** दण्डकं वा, तत्र दण्डो नाम-य हस्ते निधाय वृद्धस्य-रोगादिकारणे साधुर्गच्छति स तम् **'लट्ठियं वा'** यष्टिकां वा, यष्टिका लघुर्य· प्रतलो दण्डश्चलनसहायभूत·, साऽपि कारणवशादेव गृह्यते, तां वा **'रयहरणं वा'** रजोहरणम् **'मुहपत्तियं वा'** सदोरकमुखवस्त्रिकाम्, प्रक्षालिता या शुष्ककरणार्थं स्थाप्यते **'अण्णयरं वा उवगरणजायं'** अन्यतरद् वा उपकरणजातम् प्रमार्जिकादि, अन्यतरपदग्रहणात्-औधिकमौपग्रहिकं चेति द्विविधमप्युपकरणजातं गृह्यते। तत्र-औघिकं सामान्य वस्त्रपात्रादिकम्, औपग्रहिक-रोगादिकारणेऽल्पकालार्थं यद् गृह्यमाणं शय्यासंस्तारकपीठफलकादिकमुपकरणजातं, तत् 'ठवेइ' स्थापयति, 'ठवेंतं वा साइज्जइ' स्थापयन्त वा स्वदते। यो भिक्षु. पाक्षिकक्षमापनारोगादिकारणेन साधूनामुपाश्रये समागच्छन्तीना साध्वीनां मार्गे पूर्वोक्तोपकरणादिकं स्थापयति स प्रायश्चित्तभाग् भवति ॥ सू० २६॥

ननु साधो. रजोहरणादिकं सर्वदैव सार्धं ग्राह्यत्वेन सूत्रे कथित ततश्च तस्य मार्गे स्थापनसभावना कुत, यस्य सम्भावनैव नास्ति तस्य निषेध. सुतरा निरर्थक. ? इत्याशङ्कयाह भाष्यकार·—

**भाष्यम्**—चिट्ठतो पडिलेहंतो, कुणंतो वावि लुंचणं।
मिसेणं वाऽह वत्थूणं, णिक्खेवस्स हि संभवो॥

**छाया**—तिष्ठन् प्रतिलिखन् कुर्वन् वाऽपि लुञ्चनम्।
मिषेण वाऽथ वस्तूनां निक्षेपस्य हि सम्भवः॥

**अवचूरिः**—'चिट्ठतो' इत्यादि। मार्गे तिष्ठन् वा साधु· कदाचित् रजोहरणं निक्षिपेत्, भक्तपानादिक प्रतिलिखन् वा, अथवा-लुञ्चनमप्यात्मन. शिरसः कुर्वन् मार्गे रजोहरणादिक निक्षिपेत्। अथवा-मिषेण-केनचिद् व्याजेन उपहासार्थं वा वस्तूना रजोहरणाद्युपकरणानां निक्षेपस्य सम्भव.। संभाव्यते-एभि. कारणैर्मार्गे रजोहरणादीनां निक्षेप·। इत्थं मार्गे निक्षिपतः साधो, रजोहरणादिक निक्षिपन्तं वा अनुमोदमानस्य साधो. प्रायश्चित्तमाज्ञाभङ्गादया दोषाश्च भवन्ति॥ सू० २६॥

## सूत्रम्—जे भिक्खू णवाइं अणुप्पण्णाइं अहिगरणाइं उप्पाएइ उप्पाएंतं वा साइज्जइ ॥ सू० २७॥

**छाया**—यो भिक्षुः नवानि-अनुत्पन्नानि अधिकरणानि-उत्पादयति, उत्पादयन्तं वा स्वदते ॥ सू० २७॥

**चूर्णी**—**'जे भिक्खू'** इत्यादि। **'जे भिक्खू'** यो भिक्षुः, **'णवाइं'** नवानि-नवीनानि-अपूर्वाणि **'अणुप्पण्णाइं'** अनुत्पन्नानि-तत्कालेऽविद्यमानानि **'अहिगरणाइं'** अधिकरणानि-कलहान्,

तत्राऽधिकरणं नाम—अधिक्रियतेऽधोगतौ पात्यते आत्माऽनेनेत्यधिकरणं कलहः, तथाभूतानि—अधिकरणानि **'उप्पाएइ'** उत्पादयति-नवीनक्लेशानुत्पादयति **'उप्पाएन्तं वा साइज्जइ'** उत्पादयन्तं वा नवीनमधिकरणम्, स्वदतेऽनुमोदते, स प्रायश्चित्तभाग् भवति तस्याज्ञाभङ्गादयोऽपि दोषा भवन्ति ॥ सू० २७ ॥

अत्राह भाष्यकारः—

**भाष्यम्—दुहाहिगरणं वुत्तं, दव्व-भावप्पभेयओ ।**
**दव्वे चउव्विहं णेज्जं, भावे सत्थाणुसारओ ॥**

**छाया—द्विधाऽधिकरणं प्रोक्तं द्रव्य-भाव-प्रभेदतः ।**
**द्रव्ये चतुर्विधं ज्ञेयं भावे शास्त्राऽनुसारतः ॥**

**अवचूरिः—'दुहाहिगरणं'** इत्यादि। यदिदमधिकरणं कथितं तद् द्रव्य-भावप्रभेदतो द्विधा द्विप्रकारकं प्रोक्तम्। तत्र द्रव्यतोऽधिकरणं चतुर्विधम्, तद्यथा—निर्वर्त्तनाधिकरणम् १, निक्षेपाधिकरणम् २, संयोजनाधिकरणम् ३, निसर्जनाधिकरणम ४ चेति। तत्र—निर्वर्त्तनाऽधिकरणं' द्विविधम्—मूलोत्तरभेदात्। तत्र—मूलनिर्वर्त्तनाऽधिकरण पञ्चविधम्, तानि—औदारिकादिशरीरपञ्चकस्य निर्वर्त्तनरूपाणि पञ्च, तान्यपि एकैकं संघातकरणशाटकरणतदुभयकरणभेदात् त्रिविधम्। तत्र—संघातकरण—पुद्गलानां पिण्डीकरणम्। शाटकरणं पुद्गलाना परिशाटनम्। उभयकरणम्—संघात—परिशाटोभयकरणम्। एतद्विषयेऽधिकरणम्। तत्र—तैजसकार्मणरूपे शरीरद्वये सर्वसंघातकरणं न भवति, अनादित्वात्, शेषेषु त्रिषु शरीरेषु—औदारिक-वैक्रिया-ऽऽहारकरूपेषु संघात—परिशाट—तदुभयरूपं त्रयमपि निर्वर्त्तनाधिकरणं भवति, तत्र स्थिति संघात—परिशाटयो प्रत्येकमेकसामयिकी, तदुभयस्यानियता स्थितिः, यथा—संघात आदौ, परिशाटोऽन्ते भवति। अत्रापूपदृष्टान्त - यथा—अपूप, स च घृते प्रक्षिप्तः प्रथमसमये एकान्तेन घृतग्रहणं करोति, द्वितीयादिसमयेषु घृतं गृह्णाति मुञ्चति च, एव यथा लोहकारस्तप्तमायस जले प्रक्षिपति तदा तत् प्रथमसमये एकान्तेन जलादानं करोति, द्वितीयादिसमयेषु गृह्णाति मुञ्चति च। एव त्रिषु औदारिकादिशरीरेषु प्रथमसमये ग्रहणं, द्वितीयादिसमयेषु संघात-परिशाटौ द्वावपि भवत। तैजसकार्मणयो सार्वकालिकः संघात परिशाटश्च, तयोरनादित्वात्। पञ्चानामपि सर्वशाटोऽन्ते भवति। इदं मूलनिर्वर्त्तनाधिकरणम्। अथवा—औदारिक-वैक्रियाऽऽहारकेति त्रयाणा शरीराणा मूलकारणानि अष्टौ—शिरः १, उर, २, उदर ३, पृष्टि. ४, बाहुद्वयम् ५, ६, उरुद्वयं ७–८ चेति। शेषमुत्तरकरणम्। अथवा—आद्येषु औदारिकवैक्रियाहारकरूपेषु त्रिषु शरीरेषु कर्णवेधकरणं, कर्णच्छेदकरण त्रिफलादिघृतादिना वर्णकरणं चेत्युत्तरकरणम्। अथवा त्रिषु आद्येषु शरीरेषु निर्वर्त्तनाधिकरण भवति। तत्र—औदारिकम्—एकेन्द्रिय-द्विन्द्रिय—त्रीन्द्रिय-चतुरिन्द्रिय—पञ्चेन्द्रिय—भेदात्पञ्चविधम्। तत्तच्छरीरनिर्वर्त्तन-

रूपं निर्वर्त्तनाधिकरणम् । उक्तञ्च भगवतीसूत्रे षोडशशतकस्य प्रथमोद्देशे—"जीवे णं भंते ! ओरालियसरीरं निव्वत्तेमाणे अहिगरणी अहिगरणं ? गोयमा ! अहिगरणी वि अहिगरणंपि" । जीवः खलु भदन्त ! औदारिक शरीरं निर्वर्त्तयन् अधिकरणी अधिकरणम् ? गौतम ! अधिकरणी अपि, अधिकरणमपि, । इति च्छाया । ततः जीवोऽधिकरणी, शरीरमधिकरणम् । गत निर्वर्त्तनाधिकरणं प्रथमम् । द्वितीयं-निक्षेपाधिकरणम्, तत्र निक्षेपो नाम पात्रादीनामध स्थापनम्, तद्विषये यदधिकरण, तच्चतुर्विधम्, तत्र—प्रमार्जनाया· प्रतिलेखनायाश्चाऽकरणे द्वौ २, तथैवतयोरेव प्रतिलेखन—प्रमार्जनयोरविधिकरणे द्वौ २, एवं निक्षेपणाधिकरणस्य चत्वारो भेदा· ।

तृतीयं-संयोजनाधिकरणम्—संयोजना—संमेलनम्, तद्विषयेऽधिकरणम्, तद् द्विविधम्—भक्तसंयोजनाधिकरणाम् १, उपधिसंयोजनाधिकरण च २ । तत्र भक्तसंयोजनाधिकरणम्-सरसभोजनेऽरसभोजनस्य, अरसे सरसस्येत्यादिरूपेण संयोजनम् तत्र कलहोऽधिकरणम् ।

चतुर्थ—निसर्जनाधिकरणम्-निसर्जनं-निष्कासन प्रदानम्, तद्विषयकमधिकरणम् । तत् त्रिप्रकारकम्, तद्यथा-सहसानिसर्जनम् १, प्रमादनिसर्जनम् २, अनाभोगनिसर्जनम् ३, क्रमेण त्रयो भेदा· । तत्र-सहसानिसर्जनमाकस्मिकम् । प्रमादनिसर्जनम्—कर्त्तव्याऽकर्त्तव्याऽनवधारणे निःसारणम् । अनाभोगनिसर्जनम् अज्ञानवशात् निस्सारणम् ।

पूर्ववर्णितेषु मध्ये-निर्वर्त्तनाऽधिकरणं विशेषत· पूर्वं निरूपितम् । अथ निक्षेपाधिकरणं विविच्यते—निक्षेपाधिकरण द्विविधम्—लौकिकं लोकोत्तरिकंच । तत्र लौकिकमनेकप्रकारकं—हल—मुसल-मृगबन्धन्यादीना स्थापनम्, लोकोत्तरिकं वस्त्रपात्रादीनां स्थापनम्, तच्च सप्तविधम्, तद्यथा—'न प्रत्युपेक्षते न प्रमार्जयति १, न प्रत्युपेक्षते प्रमार्जयति २, प्रत्युपेक्षते न प्रमार्जयति ३, दुष्प्रत्युपेक्षते दुष्प्रमार्जयति ४, दुष्प्रत्युपेक्षते सुप्रमार्जयति ५, सुप्रत्युपेक्षते-दुष्प्रमार्जयति ६, यस्तु-सप्तमो भङ्गः—सुप्रत्युपेक्षते सुप्रमार्जयति ७, एष नाधिकरणम्, तस्य शुद्धत्वात् । यद्वा—अशनादीनामप्रावृतत्वेन स्थापन तदपि निक्षेपाधिकरणम् । इति निक्षेपाधिकरणम् ॥

अथ सयोजनाधिकरण प्रारभ्यते—सयोजनाधिकरण द्विविधम्—लौकिकं १, लोकोत्तरिक च २ । तत्र—लौकिकं तद् यद् रोगादिकारणे नानाविधौषधीनां सम्मेलनम्, विषगरादीनां निष्पत्तिनिमित्तकं सम्मेलनम् । लोकोत्तरिक संयोजनाधिकरणं द्विविधम् -आहारे-उपकरणे च २। तत्राहारेऽपि द्विविधम्—अन्त-र्बहिश्च २ । तत्रान्तर्वसतौ यत् सयोजनाधिकरणं तत्-त्रिविधम्—भाजने १, हस्ते २, मुखे च ३ । तत्र भाजने क्षीरखण्डादीनां सम्मेलनम्, हस्ते-गुडादिकस्य । मुखे प्रथमं मण्डादिकं प्रक्षिप्य पश्चात् गुडादिक प्रक्षिपेत् ।

बहिस्तत्—यद्भिक्षामटन् यद्येन सह संयुज्यते तत्तेन सह सयोजयेत् । यत्सामान्यं दुग्धं, घनीभूता दुग्धविकृतिश्च (मावा) इति लोके प्रसिद्धा, यदि लभ्यते तत्र विचारणा जायेत—

"आचार्यो दुग्धमेव मह्यं दास्यति, न दुग्धविकृतिम्" इति हेतोस्तावुभावपि पदार्थौ सम्मेलयतीत्यादि। उपाधौ--अकारणेऽविधिना वस्त्रादिकं सीव्यते १, अकारणे विधिना सीव्यते २, कारणेऽविधिना सीव्यते ३, एते त्रयोऽपि भङ्गा अधिकरणम्। 'कारणे विधिना सीव्यते' इति चतुर्थो भङ्गस्तु शुद्धः, अनधिकरणत्वात्। तदेतत्संयोजनाधिकरणम्।

अथ निमर्जनाधिकरणं प्रदर्श्यते--तद्-द्विविधम्--लौकिकं-लोकोत्तरिकं च २, तत्र-लौकिकं यथाकृतं निसृजति, यथा कस्मैचिद्वस्त्रभूषणादीनां क्रोधादिवशात्प्रदानम्, इत्यादिकम्। लोकोत्तरिकं निसर्जनं त्रिविधम्--सहसा १, प्रमादेन २, अनाभोगेन च ३।

तत्र--पूर्वादिष्टेन योगेन किञ्चित्सहसा निसृजेत्। पञ्चविधप्रमादाऽन्यतरेण प्रमत्तो निसृजेत्। एकतो विस्मृत्याऽनाभोगेन निसृजेत्, तदेतन्निसर्जनाऽधिकरणम्। इति द्रव्याधिकरणम्।

इदानीं-भावाधिकरणं प्रदर्शयामि--तद्यथा--सरम्भे १, समारम्भे २, आरम्भ च ३।

**उक्तञ्च--संकप्पो संरभो, परितावकरो भवे समारंभो।**
**आरंभो उद्दवओ, सव्वनयाणं विसुद्धाणं॥**

प्राणातिपातादे सङ्कल्प--सरम्भ १, परितापकरण-समारम्भ २, उपद्रवणं--हननम्--आरम्भ ३ विशुद्धानां सर्वनयाना मतमेतत्। एतेषामधो मनोवचनदेहा स्थापनीया, तदध करण--कारणाऽनुमोदनानि, एतानि त्रीणि स्थापयितव्यानि। एतेषामप्यध. क्रोधमानमायालोभा., एते चत्वारः स्थापयितव्या। तत्राऽऽलापप्रकार इत्थम्--क्रोधसम्प्रयुक्तो मनसा सरंभ करोति १, मानसम्प्रयुक्तो मनसा सरम्भं करोति २, मायासम्प्रयुक्तो मनसा सरम्भ करोति ३, लोभसम्प्रयुक्तो मनसा संरम्भं करोति ४, एते चत्वार आलापका करणे।

एवमन्यद्वारा कार्यमाणेऽपि चत्वार आलापकाः। तथा--क्रोधसम्प्रयुक्तो मनसा संरभं कारयति १, मानसम्प्रयुक्तो मनसा सरम्भं कारयति २, मायासम्प्रयुक्तो मनसा सरम्भं कारयति ३, लोभसप्रयुक्तो मनसा संरम्भ कारयति ४।

एवं क्रोधसम्प्रयुक्तो मनसा सरम्भमनुमोदते १ मानसप्रयुक्तो मनसा सरम्भमनुमोदते २, मायासम्प्रयुक्तो मनसा सरम्भमनुमोदते ३, लोभसम्प्रयुक्तो मनसा सरम्भमनुमोदते ४,

एवं द्वादश विकल्पा मनसा लब्धा। एवमेव--द्वादश वचनेन। तथैव द्वादश कायेन। तदेवं सरम्भस्य षट्त्रिंशद्भङ्गा। एवं-समारम्भस्याऽपि षट्त्रिंशद्भङ्गा। एवमारम्भस्याऽपि षट्त्रिंशद्भङ्गा। सर्वसङ्कलनयाऽष्टोत्तरशतं भङ्गाना भवति।

एतेषा द्रव्य--भावाधिकरणानामन्यतरेणाऽपि--अधिकरणं यो भिक्षुरुत्पादयति स प्रायश्चित्तभागी भवति, तथा तस्याऽऽज्ञाभङ्गादिका दोषा भवन्ति।

अत्र सूत्रे—भावाधिकरणेन प्रथमभङ्गेनाऽधिकारः, तत्र चैते दोषाः—तापो भवति—अहं तेनाऽतीव तप्ये, एवं भवति तापः साधिकरणस्य । एवं—भेदः—अयशो भवति साधिकरणस्य । तथा—ज्ञान—दर्शन—चारित्र—तपसां ह्रासो भवति । तथा—साधिकरणस्य पुरुषस्य संसारोऽपि वर्द्धते, इत्यादयोऽनेके दोषा भवन्ति । तस्मात् कारणात् श्रमणै श्रमणीभिर्वाऽधिकरणं नोत्पादनीयम्, किन्तु—समभावमास्थाय चारित्राराधनं कर्त्तव्यमिति तीर्थकराणामाज्ञा शास्त्राणां मर्यादा चेति ॥ सू० २७॥

**सूत्रम्—जे भिक्खू पोराणाइं अहिगरणाइं खामिय-विओसमियाइं पुणो उदीरेइ उदीरेंतं वा साइज्जइ ॥ सू० २८।**

**छाया—**यो भिक्षुः पौराणानि अधिकरणानि क्षामितव्युपशमितानि पुनः उदीरयति उदीरयन्तं वा स्वदते ॥सू० २८॥

**चूर्णी—** 'जे भिक्खू' इत्यादि । **'जे भिक्खू'** यो भिक्षुः **'पोराणाइं'** पौराणानि पूर्वकालिकानि—पूर्वकालभवानि व्यतीतानीत्यर्थः **'अहिगरणाइं'** अधिकरणानि-कलहान् । **'खामियविओसमियाइं'** क्षामितव्युपशमितानि, क्षामितानि वन्दनादिना, अतो व्युपशमितानि शान्तीकृतानि तानि यदि **'पुणो उदीरेइ'** पुनरुदीरयति उत्पादयति, तथा **'उदीरतं वा साइज्जइ'** उदीरयन्तं समुत्पादयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति, तस्याऽऽज्ञाभङ्गादयो दोषा भवन्ति ॥सू० २८॥

अत्राह भाष्यकारः—

**भाष्यम्—**अहिगरणं पुव्वगं, उप्पाएइ जई जइ ।
आणाभंगाइए दोसे, पायच्छित्तं च पावइ ॥

**छाया—**अधिकरणं पूर्वगमुत्पादयति यतिर्यदि ।
आज्ञाभङ्गादिकान् दोषान् प्रायश्चित्तं च प्राप्नोति ॥

**अवचूरिः—'अहिगरणं'** इत्यादि । यः कश्चिद्भिक्षुः पूर्वगं-पूर्वं गतं क्षान्तं—विशोधितम् मिथ्यादुष्कृतादिनोपशमितमधिकरणं क्लेशरूपं पुनरुत्पादयति । यत्र यदा कदाचित् द्वयोः श्रमणयोः कलहो जातस्ततस्तं मिथ्यादुष्कृतदानादिना शान्तीभूतमपि पुनरेकः कथयति—"त्वं पूर्वं ममापमानं कृतवानसि" एवंप्रकारेण परस्पर वार्त्तालापप्रवाहे पूर्वजातमपि विस्मृतं नवीनं करोति स आज्ञाभङ्गादीन् दोषान् प्रायश्चित्तं च प्राप्नोति । एवं कलहकरणेन मनसि तापो भवति लोकेऽयशो भवति । एवं--ज्ञान--दर्शन--चारित्र--तपसां परिहानिर्भवति, स्वाध्यायादिकालस्य कलहेनैव परिसमाप्तेः । तथा साधुभिः सह प्रद्वेषोऽपि जायते । एवं-कलहकरणात् संसारोऽपि, परिवर्द्धते, कलहेऽवश्यं कषायोदयात्, कषायाणां च संसारकारणत्वात् ।

यस्मादेते दोषा. कलहकारिणां भवन्ति तस्मात् कारणात् व्यपशमितं पुरातनं कलहं नोत्पादयेत् । कदाचित्-उत्पन्नमपि मिथ्यादुष्कृतिदानादिना प्रशमयेत्, संयमाराधने कालं नयेत् ॥सू०२८॥

## सूत्रम्—जे भिक्खू मुहं विप्फालिय विप्फालिय हसइ हसंतं वा साइज्जइ ॥ सू० २९॥

**छाया—यो भिक्षुर्मुखं विस्फार्य्य-विस्फार्य्य हसति हसन्तं वा स्वदते ॥सू०२९॥**

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु' **'मुहं'** मुखम् **'विप्फालिय-विप्फालिय'** विस्फार्य-विस्फार्य **'हसइ'** हसति, हास्यं च नोमोहनीयकर्मोदयाद्भवति । तच्च-तुर्विधम्-नग्नादिकं दृष्ट्वा हसति १, अथवा-विकृतं वाक्यं समुच्चार्य२, काक-सरटादीनामाख्यानकं श्रुत्वा ३, मोहजनक वाऽन्यस्य हासोत्पादकं सविकारं वाक्य श्रावं-श्राव महता-उत्कलिकाशब्देन कहकह हसति ४ । **'हसंतं वा साइज्जइ'** हसन्तं वाऽन्य श्रमणं स्वदतेऽनुमोदते स प्रायश्चित्ती भवति, तस्याज्ञाभङ्गादिका दोषा भवन्ति ।

एव-यो यतिर्हसति तस्य पूर्वकाले य शूलादिको रोगोऽभूत् स इदानीं च शान्त, परन्तु-अतिहसनेन पुनरपि स रोग. प्रादुर्भवति । एवं-नवीनोऽपि शूलादिरोगोऽतिहास्येन समुत्पद्यते । एव कर्णरोगोऽपि भवति, मुखमपि विकृत विष्फारितं वा भवति । एव-कदाचित् एकत्राऽनेके तापसा आसन्, तत्रैकेन तापसेनाऽदेशकाले केशादीनां मुण्डनं कृतम्, तद्-दृष्ट्वा सर्वेऽप्यन्ये हसितुमारेभिरे, न विरामं नीतवन्त, तेन च तेषा रोगोदयान्मरणं सञ्जातमिति श्रूयते । एवं-यं हसति तस्य मनसि शोको भवति 'अहमुपहसितः' ततश्च तेषु शत्रुभावो वर्द्धते, शरीरे हानिर्ग्लानिश्च भवति । यस्मादेते दोषा भवन्ति तस्मात्कारणात् मुखं व्यादाय नोपहास· करणीय किन्तु-शमभावेन संयमाराधनं कर्त्तव्यमिति ॥ सू० २९॥

## सूत्रम्—जे भिक्खू पासत्थस्स संघाडयं देइ देंतं वा साइज्जइ॥सू०३०॥

**छाया—यो भिक्षुः पार्श्वस्थाय संघाटकं ददाति ददतं वा स्वदते ॥ सू० ३०॥**

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु **'पासत्थस्स'** पार्श्वस्थाय, तत्र-यो ज्ञान-दर्शन-चारित्र-तपसा पार्श्वे-समीपे तिष्ठति न तु-तेषामाराधको भवति स पार्श्वस्थः, तस्मै **'संघाडयं'** संघाटकं-स्वपरशिष्यरूपं साहाय्यम् **'देइ'** ददाति, तथा **'देंतं वा साइज्जइ'** पार्श्वस्थाय संघाटक ददतमन्यं श्रमणं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याऽऽज्ञाभङ्गादयो दोषा भवन्ति ॥ सू० ३०॥

**सूत्रम्—जे भिक्खू पासत्थस्स संघाडयं पडिच्छइ पडिच्छंतं वा साइज्जइ ॥सू० ३१॥**

**छाया—यो भिक्षुः पार्श्वस्थस्य संघाटकं प्रतीच्छति प्रतीच्छन्तं वा स्वदते ॥सू०३१॥**

**चूर्णी—'जे भिक्खू'** इत्यादि । 'जे भिक्खू' यो भिक्षुः **'पासत्थस्स'** पार्श्वस्थस्य **'संघाडयं'** संघाटकं--शिष्यसाहाय्यम् **'पडिच्छइ'** प्रतीच्छति--स्वीकरोति-.गृह्णातीत्यर्थः, **'पडिच्छंतं वा साइज्जइ'** प्रतीच्छन्तं वा स्वदते । य पार्श्वस्थस्य शिष्यादिपरिवारं स्वसाहाय्यतया वाञ्छति तं योऽनुमोदते स प्रायश्चित्तभागी भवति, तस्याज्ञाभङ्गानवस्थामिथ्यात्वसंयमविराधनात्मविराधना-द्यो दोषा भवन्ति, अत पार्श्वस्थसंघाटकस्य साहाय्यं न गृह्णीयात् ॥ सू० ३१॥ एवम् - **'ओसन्नस्स संघाडयं देइ पडिच्छइ'** ॥३२।३३॥ एवं **'कुसीलस्स'** इति सूत्रद्वयम् ॥३४।३५॥ **'णितियस्स'** इति सूत्रद्वयम् ॥३६।३७॥ **'संसत्तस्स'** इति सूत्रद्वयम् ॥३८-३९॥ चेति सूत्राष्टक पार्श्वस्थसूत्रद्वयवद् व्याख्येयम् ॥ सू० ३८-३९॥

अत्राह भाष्यकारः—

**भाष्यम्—पासत्थाईण संघाडं, देइ तेसिं पडिच्छइ ।**
**आणाभंगाइए दोसे, पावई सो जई सया ॥**

**छाया—पार्श्वस्थादिभ्य संघाडं, ददाति तेषां प्रतीच्छति ।**
**आज्ञाभङ्गादिकान् दोषान् प्राप्नोति स यतिः सदा ॥**

**अवचूरिः—'पासत्थाईण'** इत्यादि । यदि भिक्षुः पार्श्वस्थादिभ्यः संघाटं ददाति तदा-ऽऽज्ञाभङ्गानवस्थामिथ्यात्वसंयमात्मविराधनाद्यो दोषा भवन्ति । तत्र संयमात्मविराधना; यथा—पार्श्वस्थादिभ्यः प्रदत्त संघाटको यदि प्रतिलेखन-प्रमार्जनादिका साधुक्रियां सम्यक्तया करोति तदा स्वापमानं विज्ञायेत प्रतिषेधिष्यति च । ततस्तद्वचनं स यदि स्वीकरोति, तदाऽऽचारे शैथिल्यं प्रतिपद्यते तेन सयमविराधना जायते ।

यदि न स्वीकरोति तदा-कलहो युद्धं वा संभवति, तेनाऽऽत्मविराधना समापद्येत । एव मशनादिग्रहणेऽग्रहणे च पूर्वोक्ता दोषा समापद्येरन्, अत. पार्श्वस्थादिभ्यः संघाटको न दातव्यः ।

एवं-यदि पार्श्वस्थादीनां संघाटं प्रतीच्छति तदाऽपि पूर्वोक्ता एव दोषा भवन्ति ।

तथाहि- यदि श्रमण पार्श्वस्थादिसंघाटक स्वीकृत्य तेन सह विहरति तदा विहारसमये स उद्गमादिदोषदूषितं भक्तपानादिकं गृह्णाति । तस्य चोपभोगः श्रमणस्यापि अवश्यमेव भवेत् संघाटाऽऽनीतत्वात् ।

अथ यदि कुत्रचित् साधुना प्रतिषिद्धे पार्श्वस्थादिसंघाटकेन गृहीते सदोषान्नपानादिके साधुर्मौनमालम्बते तदाऽऽज्ञाभङ्गदोषः स्यात् । तथा- दातृणां गृहिणामविश्वासोऽपि स्यात् । तथा

ते श्रावका एव वदेयुः—"किं तीर्थकरेण द्विप्रकारको धर्मः साधूनां कृते कथितः -यदत्र सदोषमपि एके गृह्णन्ति न पुनरेके" एवं गृहस्थैः कथितेऽपि यदि साधुः पार्श्वस्थादिसंघाटकस्याऽनुरोधान्मौनमालम्बते अनुमतिं वा ददाति, तदा धर्मे महान् अविश्वासो भवेत् । तथा--दीर्घससारकान्ताराऽवाप्तिर्भवेत् । अथ यदि साधुर्वदति- "न द्विविधो धर्मस्तीर्थकरेण कथितः" तदा पार्श्वस्थादेर्वचनं प्रतिहतं भवति ततश्च स एव कलहो द्वयोर्भविष्यति तेनाऽऽत्मविराधनाया सम्भवः । तदानीताऽशनादिस्वीकारे षोडश उद्गमादिदोषाः, उत्पादनादोषाश्चापि षोडश, दश -एषणादोषाः, एवं द्विचत्वारिंशदाहारदोषा भविष्यन्तीति पार्श्वस्थादिभिः सह संघाटकस्यादानं प्रदानं वा न कर्त्तव्यमिति ॥सू० ३९॥

**सूत्रम्—जे भिक्खू उदउल्लेण हत्थेण वा मत्तेण वा दव्वीए वा भायणेण वा, असणं वा ४ पडिग्गाहेइ, पडिग्गाहंतं वा साइज्जइ ॥ सू०४०॥**

**छाया — यो भिक्षुः उदकार्द्रेण हस्तेन वा मात्रेण वा दर्व्या वा भाजनेन वा अशनं वा ४ प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० ४०॥**

**चूर्णी**—'**जे भिक्खू**' इत्यादि। '**जे भिक्खू**' यो भिक्षुः '**उदउल्लेण**' उदकार्द्रेण सचित्तजलार्द्रेण '**हत्थेण**' हस्तेन उदकलेपाद् यावद् आर्द्रः करस्तावद् तादृशेनैव करेण '**मत्तेण वा**' मात्रेण—मृत्तिकादिनिर्मितलघुपात्रेण वा '**दव्वीए वा**' दर्व्या—'कडछी' इति भाषाप्रसिद्धया वा '**भायणेण वा**' भाजनेन—कांस्यादिपात्रेण वा । हस्तवत्—अमत्र—दर्वी—भाजनेषु विशेष्येषु सचित्तोदकार्द्रपदं प्रत्येकमभिसबद्ध्यते । तादृशेभ्यो हस्तादिभ्यः '**असणं वा ४**' अशनादिचतुर्विधमाहारम् '**पडिग्गाहेइ**' प्रतिगृह्णाति आदत्ते, '**पडिग्गाहंतं वा साइज्जइ**' प्रतिगृह्णन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति, तस्याज्ञाभङ्गादयो दोषाश्च भवन्ति ॥ सू० ४० ॥

**सूत्रम्--एवं-ससणिद्धेण० २ ॥सू०४१॥ ससरक्खेण०३ ॥सू०४२॥ ॥मट्टियासंसट्ठेण०४ ॥सू०४३॥ ओसा० ५ ॥ सू०४४॥ लोण० ६ ॥सू०४५॥ हरियाल० ७ ॥सू०४६॥ मणोसिला० ८ ॥सू०४७॥ वण्णिय० ९ ॥सू०४८॥ गेरुय०१० ॥सू०४९॥ सेडिय० ११ ॥ सू०५०॥ हिंगुलय० १२ ॥सू०५१॥ अंजण० १३ ॥सू०५२॥ लोद्ध०१४॥ सू ५३॥ कुक्कुस० १५ ॥सू०५४॥ पिट्ठ० १६ ॥सू० ५५॥ कंद०१७ ॥सू०५६॥ मूल० १८ ॥सू०५७॥ सिंगबेर० १९ ॥सू० ५८॥ पुप्फग० २० ॥सू०५९॥ कुट्ठगसंसट्ठेण वा २१, एगवीसभेएण हत्थेण वा मत्तेण वा दव्वीए वा भायणेण वा असणं वा ४ पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥सू०६०॥**

**छाया—एवम्-सस्निग्धेन० २ ॥सू० ४१॥ सरजस्केण० ३ ॥सू० ४२॥ मृत्तिका०४ ॥सू०४३ अवश्याय० ५ ॥सू०४४॥ लवण० ६ ॥सू० ४५॥ हरिताल० ७ ॥सू०४६॥ मनःसिला०८ ॥सू०४७॥ वर्णिक० ९ ॥सू०४८॥ गैरिक० १० ॥सू०४९॥ सेटिका० ११ ॥सू०५०॥ हिंगुलुक० १२ ॥सू०५१॥ अञ्जन० १३। सू०५२॥ लोध्र० १४ ॥सू०५३॥ कुक्कुस०१५ ॥सू०५४॥ पिष्टक० १६ ॥सू०५५॥ कद० १७ ॥सू०५६॥ मूल० १८ । सू०५७॥ गृङ्गबेर० १९ ॥सू०५८॥ पुष्पक० २० ॥सू० ५९॥ कोष्ठक-संसृष्टेन २१, एकविंशतिभेदेन हस्तेन वा मात्रेण-वा १ दर्व्या वा ३ भाजनेन वा ४ अशन वा ४ प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० ६०॥**

**चूर्णी**—एवम्-यदि कोऽपि भिक्षु' सस्निग्धेन—सचित्तजलाऽल्पार्द्रतासंश्लिष्टेनाऽपि "हस्तेन मात्रेण—दर्व्या—भाजनेन वा" इति सर्वत्र सयोज्यम् ॥सू०४१॥ सरजस्केण—सचित्तरजोयुक्तेन ॥४२॥ मृत्तिकाससृष्टेन—सचित्तमृत्तिकासयुक्तेन ॥ सू०४३॥ अवश्याय (तुषार) ससृष्टेन—मचित्त-तुषारयुक्तेन ॥ सू० ४४ ॥ लवणससृष्टेन सचित्तलवणयुक्तेन ॥ सू० ४५ ॥ हरितालसंसृष्टेन—लोकप्रसिद्धसचित्तहरितालनामकपीतखनिजद्रव्ययुक्तेन ॥सू० ४६॥ मन शिलाससृष्टेन- सचित्तमन—शिलाभिधीखनिजद्रव्यसश्लिष्टेन ॥सू० ४७॥ वर्णिकससृष्टेन -सचित्तपीतमृत्तिकासश्लिष्टेन ॥सू० ४८॥ गैरिकससृष्टेन- सचित्तगैरिकधातुलिप्तेन ॥सू० ४९॥ सेटिकाससृष्टेन—सचित्तश्वेतमृत्तिका-सलग्नेन ॥ सू० ५०॥ हिंगुलुकससृष्टेन—सचित्तहिंगुलेतिप्रसिद्धरक्तद्रव्यसलग्नेन ॥ सू० ५१॥ अञ्जनससृष्टेन—सचित्तसौवीराद्यञ्जनयुक्तेन ॥सू०५२॥ लोध्रसंसृष्टेन—लोध्रद्रव्यसश्लिष्टेन ॥सू०५३॥ कुक्कुससससृष्टेन तत्कालसंमर्दितमचित्ततुषसलग्नेन ॥सू० ५४॥ पिष्टकसंसृष्टेन—सचित्तगोधूमादि-चूर्णयुक्तेन ।सू० ५५॥ कन्दसंसृष्टेन—सचित्तकन्दसंश्लिष्टेन ॥सू० ५६॥ मूलससृष्टेन—सचित्तमूललेपयुक्तेन ॥सू० ५७॥ शृङ्गबेरससृष्टेन—सचित्तार्द्रकससृष्टेन ॥सू०५८॥ पुष्पकससृष्टेन—सचित्त-पुष्पयुक्तेन ॥सू० ५९॥ कोष्ठकससृष्टेन—सचित्तसुगन्धितद्रव्यसमुदायसंमिश्रणरूपकोष्ठपुटाभिध-द्रव्यविशेषसश्लिष्टेन २१, पूर्वोक्तैकविंशतिभेदयुक्तेन हस्तेन वा मात्रेन वा दर्व्या वा भाजनेन वा अशनं वा ४ प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते स प्रायश्चित्तभाग् भवति ॥ सू०६०॥

## सूत्रम्—जे भिक्खू गामारक्खयं अत्तीकरेइ अत्तीकरेंतं वा साइज्जइ ६ एवं सो चेव रायगमओ भाणियव्वो ॥ सू० ६१—६४॥

**छाया—यो भिक्षुर्ग्रामारक्षकमात्मीकरोति आत्मीकुर्वन्तं वा स्वदते ॥ सू०६१॥ एवं स एव राजगमको भणितव्यः ॥सू० ६१—६४॥**

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु '**गामारक्खयं**' ग्रामारक्षकम् ग्रामपालकम् '**अत्तीकरेइ**' आत्मीकरोति—मन्त्रादिना स्वाधीन करोति। तथा '**अत्तीकरेंतं वा साइज्जइ**' आत्मीकुर्वन्तं वाऽन्य स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति, तस्याज्ञाभङ्गानवस्थामिथ्या-

त्मसंयमविराधनाऽऽत्मविराधनादोषा भवन्ति ॥सू० ६१॥ 'एवं सो चेव रायगमओ भाणियव्वो' एवम् अनेनैव रीत्या स एव योऽस्यैवोद्देशकस्य द्वितीयादिसूत्रगतो राजगमकः—'अच्चीकरेइ' ॥सू०६२॥ अच्चीकरेइ ॥सू० ६३॥ अत्थीकरेइ ॥सू० ६४॥ इत्येवंरूपः, सोऽपि सूत्रत्रयात्मको-ऽत्रापि भणितव्य. ॥ सू० ६४ ॥

**सूत्रम्—एवं देसरक्खयं ४ (६८) एवं सीमारक्खयं४ (७२) एवं रन्नारक्खयं४ (७६) एवं सव्वारक्खयं४ ॥ सू० ८०॥**

छाया—एवं देशारक्षकम्४ (६८) एवं सीमारक्षकम्४ (७२) एवमरण्यारक्षकम्४ (७६) एवं सर्वारक्षकम् ४ ॥सू० ८०॥

चूर्णी—एषां व्याख्या च पूर्ववद् बोध्या ॥सू० ५–८०॥

**सूत्रम्—जे भिक्खू अण्णमण्णस्स पाए आमज्जेज्ज वा पमज्जेज्ज वा, आमज्जंतं वा पमज्जंतं वा साइज्जइ ॥ सू० ८१॥**

छाया— यो भिक्षुरन्योन्यस्य पादौ आमार्जयेद्वा प्रमार्जयेद्वा आमार्जयन्तं वा प्रमार्जयन्तं वा स्वदते ॥ सू० ८१॥

चूर्णी—'जे भिक्खू' इत्यादि । यो भिक्षु अन्योन्यस्य परस्परं साधु साध्व्याः, साध्वी साधोर्वा, इत्येव परस्परं पादौ आमार्जयेद्वा प्रमार्जयेद् वा आमार्जयन्तं वा प्रमार्जयन्तं वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० ८१॥

**सूत्रम्—एवं तइयउद्देसगमो भाणियव्वो (सू० ८२ से सू० १३३ जाव—**

छाया—एवं तृतीयोद्देशगमो भणितव्यः (सू० ८२ से सू० १३३) यावत् ॥

चूर्णी—'एवं' इत्यादि । एवम्–अनेनैवालापकप्रकारेण तृतीयोद्देशगम.—तृतीयोद्देशे यो गमस्त्रिपञ्चाशत्सूत्रात्मकः प्रोक्त' सोऽत्राऽपि ज्ञातव्यः। कियत्पर्यन्तम् ? इत्याह–'जाव' इत्यादि, 'जाव' यावत् शीर्षकद्वारिकासूत्रपर्यन्तम् । एकाशीतितमादामार्जनसूत्रादारभ्य त्रयस्त्रिंशदधिकशततमं शीर्षद्वारिकासूत्रपर्यन्तं त्रिपञ्चाशत्सूत्रसमुदायोऽत्र वाच्य. । विशेषस्त्वयम्–तत्र तृतीयोद्देशे 'अप्पणो पाए' इत्यादि पठितम् , अत्र तु–'अन्नमन्नस्स पाए' इत्यादि पठितव्यम् । तथाहि तदन्तिमसूत्रम्—

**जे भिक्खू गामाणुगामं दूइज्जमाणे अण्णमण्णस्स सीसदुवारियं करेइ करेंतं वा साइज्जइ ॥ सू० १३३॥**

छाया—यो भिक्षुर्ग्रामानुग्रामं द्रवन् अन्योन्यस्य शीर्षद्वारिकां करोति कुर्वन्तं वा स्वदते ॥सू० १३३॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः 'गामाणुगामं-दूइज्जमाणे' ग्रामानुग्राम द्रवन् एकस्मात् ग्रामाद् ग्रामान्तरं द्वितीयं ग्रामं प्रति गच्छन् मार्गे गमनसमये आतपादिभ्यो रक्षणबुद्ध्या 'अण्णमण्णस्स सीसदुवारियं करेइ' अन्योन्यस्य परस्परस्य साधुसाध्वीति परस्पर शीर्षद्वारिकाम् मस्तकोपरिवस्त्राच्छादनलक्षणां करोति सपादयति तथा 'करेंतं वा साइज्जइ' अन्योन्यस्य शीर्षद्वारिका कुर्वन्तं स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति। एतेषां सर्वेषां पादप्रमार्जन-कायव्रणगण्ड-केश-रोम मल-जल्लादिसूत्राणा चूर्णीभाष्याऽवचूर्यस्तत्तत्सूत्र व्याख्याऽवसरे तृतीयोद्देशके एव द्रष्टव्या॥ सू० १३३॥

अत्राह भाष्यकारः—

भाष्यम्—पमज्जणाइसुत्ताणं, तइए जो गमो मओ।
साहूणीण य साहूणं, अन्नोन्नमेत्थ आहिओ॥

छाया—प्रमार्जनादिसूत्राणां तृतीये यो गमो मतः।
साध्वीनां च साधूना-मन्योन्यमत्राख्यातः॥

अवचूरिः—'पमज्जणाइ' इत्यादि। प्रमार्जनादिसूत्राणां पादप्रमार्जनादारभ्य शीर्षद्वारिकापर्यन्त त्रिपञ्चाशत्सूत्राणा यो गमो यादृशस्तृतीये उद्देशके अरव्यात स एव गमः प्रकारः अत्र चतुर्थे चतुर्थोद्देशके साध्वीनां साधूना च अन्योन्यं शीर्षद्वारिकाकरणे ज्ञातव्य इति सर्वमत्र तृतीयोद्देशकवदेव व्याख्यातव्यमिति॥सू० १३३॥

यावत् शब्देन गृहीतानि सूत्राणि व्याख्यातानि सम्प्रति क्रमप्राप्तं सूत्रमाह—'जे भिक्खू' इत्यादि।

## सूत्रम्—जेक्खू साणुपाए उच्चारपासवणभूमिं ण पडिलेहेइ, ण पडिलेहेंतं वा साइज्जइ॥सू० १३४॥

छाया—यो भिक्षुः सानुपादे उच्चारप्रस्रवणभूमिं न प्रतिलेखयति न प्रतिलेखयन्तंवा स्वदते॥सू० १३४॥

चूर्णी—'जे भिक्खू' इत्यादि। य कश्चिद् भिक्षु श्रमण 'साणुपाए' सानुपादे, पाद चतुर्थभागरूप, तम् अनु-अधिकृत्य यद् भवति तद् अनुपाद, तेन सहित सानुपादम्-दिवसस्य चतुर्थभागावशेषं, तस्मिन् सानुपादे चतुर्थभागावशेषाया चरमाया पौरुष्यामित्यर्थ, यो भिक्षु 'उच्चारपासवणभूमिं ण पडिलेहेइ' उच्चारप्रस्रवणभूमिं न प्रतिलेखयति, अय भाव—रात्रौ यत्र उच्चार-प्रस्रवणं व्युत्स्रक्ष्यते तादृशभूम्या यदि दिवसावसाने चरमपौरुष्यामेव प्रतिलेखनं न करोति तथा 'ण पडिलेहेंतं वा साइज्जइ' न प्रतिलेखयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति॥ सू० १३४॥

अत्राह भाष्यकारः—

**भाष्यम्—साणुप्पाए काले, पडिलेहं नो करिज्ज जो भिक्खू ।**
**उच्चारपासवणस्स, भूमीए पावए मिच्छ ॥**

**छाया—सानुपादे काले प्रतिलेखं नो कुर्याद् यो भिक्षुः ।**
**उच्चारप्रस्रवणस्य, भूम्याः प्राप्नुयात् मिथ्यात्वम् ॥**

**अवचूरिः**—'**साणुप्पाए**' इत्यादि । सानुपादे काले दिवसस्य चतुर्थ भागावशेषे काले उच्चारप्रस्रवणस्य भूम्या प्रतिलेखनं यो भिक्षुर्न कुर्यात् स मिथ्यात्वम् आज्ञाभङ्गादिदोषांश्च प्राप्नोतीति । रात्रौ यत्रोच्चारप्रस्रवणं परिष्ठापनीयं भवेत् तादृशं भूमिभागं दिवसस्य चरमभागे एवावश्यं प्रतिलेखयेदिति, तस्य यः प्रतिलेखनं न करोति तस्य आज्ञाभङ्गानवस्थामिथ्यात्वादिकान् दोषान् प्राप्नोति । तत्राऽप्रतिलेखितायां भूमौ उच्चारप्रस्रवणयोः परिष्ठापने इमे दोषाः, तथाहि—अप्रतिलेखितायां भूमौ परिष्ठापयति उच्चारप्रस्रवणं तदा द्रव्यतः षट्कायानामुपमर्दनसम्भवेन संयमविराधनम्, तथा तत्र बिलादिकसम्भवेऽप्रतिलेखिते प्रतिष्ठापने सर्पवृश्चिकादिजन्तुसम्भवे तेनोपघातसंभवेनात्मविराधनम्, तथा अन्धकारे गमने उच्चारप्रस्रवणादिना चरणौ उपलिप्तौ भवेतामिति उपकरणादिविनाशः, साधोर्विपरिणामो वा भवेत्, यस्मात् अप्रतिलेखितायां भूमौ मूत्रपुरीषपरिष्ठापने इमे दोषा भवन्ति तस्मात् कारणात् दिवसस्य चरमपौरुष्यामेव प्रयत्नपूर्वकम् उच्चारप्रस्रवणभूमिमवश्यमेव प्रतिलेखयेत् ॥१३४॥

## सूत्रम्—जे भिक्खू तओ उच्चारपासवणभूमीओ ण पडिलेहेइ ण पडिलेहेंतं वा साइज्जइ ॥ सू० १३५ ॥

**छाया—यो भिक्षुः तिस्रः उच्चारप्रस्रवणभूमीर्न प्रतिलेखयति न प्रतिलेखयन्तं वा स्वदते ॥सू० १३५॥**

चूर्णी—'जे भिक्खू' इत्यादि । '**जे भिक्खू**' यः कश्चिद् भिक्षुः श्रमणः '**तओ उच्चारपासवणभूमीओ**' तिस्रः—त्रिसंख्यका उच्चारप्रस्रवणभूमीः त्रीणि मण्डलानीति यावत् '**ण पडिलेहेइ**' न प्रतिलेखयति, '**ण पडिलेहेंतं**' न प्रतिलेखयन्तं प्रतिलेखनं न कुर्वन्तं वा स्वदतेऽनुमोदते ।

एकस्या भूम्या एव प्रतिलेखनकरणेन तत्र उच्चारप्रस्रवणपरिष्ठापसम्भवेऽपि भूमित्रयस्य प्रतिलेखनं किमर्थमिति चेत् आह—यदि कदाचित् रात्रौ एकस्या भूमौ परिष्ठापने कश्चित् व्याघातो भवेत् तदा द्वितीयतृतीयप्रतिलेखितभूमौ प्रस्रवणादीनां परिष्ठापनं कर्तव्यम्, अतोभूमित्रयस्य प्रतिलेखनं सूत्रे प्रदर्शितम् ।

यो हि भिक्षुः भूमित्रयं न प्रतिलेखयति किन्तु अप्रतिलेखितायामेव भूमौ उच्चारप्रस्रवणं परिष्ठापयति स प्रायश्चित्तभागी भवति, तथा आज्ञाभङ्गादिकान् दोषान् प्राप्नोति, तथा अप्रतिलेखितभूमौ व्युत्सर्जने द्रव्यतः षड्जीवनिकायविराधने संयमविराधनम्, बिलादिसंभवे सर्पादीनां

दंशने चात्मविराधनं च । यस्मादेते दोषास्तस्मात् कारणात् दिवसस्य चरमपौरुष्यामेव भूमित्रयस्यावश्यमेव प्रतिलेखनं कर्त्तव्यम् । तिस्रो भूमय आसन्न-मध्य-दूररूपा, तत्र—आसन्नभूमिर्वसतिसमीपस्था, मध्यभूमिर्लोकानां गमनागमनमार्गरूपा, दूरभूमि—सार्द्धद्विशतहस्तप्रमाणात्परं या भूमिः सा इति ॥ सू० १३५ ॥

सूत्रम्—जे भिक्खू खुड्डागंसि थंडिलंसि उच्चारपासवणं परिट्ठवेइ, परिट्ठवेंतं वा साइज्जइ १३६॥

छाया—यो भिक्षुः क्षुल्लके स्थण्डिले उच्चारप्रस्रवण परिष्ठापयति परिष्ठापयन्तं वा स्वदते ॥सू० १३६॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु 'खुड्डागंसि थंडिलंसि' क्षुल्लकेऽतिसंकुचिते स्थण्डिले स्थाने, तत्र हस्तप्रमाणतो यत् न्यून स्थान तत् क्षुल्लकं स्थानं, तस्मिन् क्षुल्लकस्थाने 'उच्चारपासवणं परिट्ठवेइ' उच्चारप्रस्रवणं परिष्ठापयति । 'परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्त वा स्वदते स प्रायश्चित्तभाग् भवति ॥१३६॥

क्षुल्लकस्य किं प्रमाणम् ? अत्राह भाष्यकारः—

भाष्यम्—विक्खभायामेहिं, रयणीमेत्तं हवेज्ज थंडिल्लं ।
चउरंगुलमोगाढं, जहण्णवित्थिण्णमच्चित्तं ॥
एत्तो हीणतरं जं, खुड्डागं थंडिलं मुणेयव्वं ।
एत्थ य परिट्ठवेंतो, आणाभंगाइ पावेइ ॥

छाया—विष्कम्भायामाभ्या रत्निमात्र भवेत् स्थण्डिलम् ।
चतुरङ्गुलावगाढं, जघन्यविस्तीर्णमचित्तम् ॥
अस्मात् हीनतरं यत् क्षुल्लकं स्थण्डिलं ज्ञातव्यम् ।
अत्र च परिष्ठापयन्, आज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः—'विक्खमायामेहिं' इत्यादि । विष्कम्भायामाभ्या रत्निमात्रं बद्धमुष्टिकहस्तप्रमाणं यद् भवेत्, तथा यच्च चतुरङ्गुलावगाढं भूमेरधश्चतुरङ्गुलं यावद् अचित्त भवेत् तत् स्थण्डिलं जघन्यविस्तीर्णं जघन्यतो विस्तीर्णं कथ्यते । 'एत्तो' इत्यादि, अस्मात् जघन्यविस्तीर्णात् यत् हीनतरं भवेत् तत् क्षुल्लकं स्थण्डिलं ज्ञातव्यम्, अत्र--अस्मिन् एतत्परिमिते स्थण्डिले उच्चारप्रस्रवणं परिष्ठापयन् साधु आज्ञाभङ्गादि प्राप्नोति ॥ सू० १३६ ॥

सूत्रम्—जे भिक्खू उच्चारपासवणं अविहीए परिट्ठवेइ, परिट्ठवेंतं वा साइज्जइ ॥ सू० १३७ ॥

छाया—यो भिक्षुरुच्चारप्रस्रवणम् अविधिना परिष्ठापयति परिष्ठापयन्तं वा स्वदते ॥सू०१३७॥

चूर्णी— 'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'उच्चारपासवणं' उच्चारप्रस्रवणम् 'अविहीए' अविधिना शास्त्रप्रदर्शितविधिव्यतिक्रमेण 'परिट्ठवेइ' परिष्ठापयति व्युत्सृजति 'परिट्ठवेंतं वा' अविधिना उच्चारप्रस्रवणादिकं परिष्ठापयन्तं व्युत्सृजन्तं स्वदते स प्रायश्चित्तभागी भवति। तत्र विधिमाह–यत्र परिष्ठापयितुमिच्छति तत्र स्थानस्य दिशायाश्च दृष्ट्या प्रतिलेखनं करणीयम्, तथा तादृशस्थाने त्रसस्थावरादिजीवो भवेत् तदा तादृशस्थानस्य प्रमार्जनं कर्तव्यम्, प्रमार्जनं कृत्वा भूमेरुपरि चतुरङ्गुलोच्छ्रितहस्तेन परिष्ठापयेत्, इति विधिर्ज्ञातव्यः। एतादृशविधिव्यतिरेकेण यः उच्चारप्रस्रवणं परिष्ठापयति परिष्ठापयन्तं वा अनुमोदते तस्य पूर्वोक्ता दोषा भवन्तीति ॥१३७॥

**सूत्रम्—जे भिक्खू उच्चारपासवणं परिट्ठवेत्ता न पुंछइ, न पुंछंतं वा साइज्जइ ॥ सू० १३८ ॥**

छाया—यो भिक्षुरुच्चारप्रस्रवणं परिष्ठाप्य न प्रोञ्छति, न प्रोञ्छन्तं वा स्वदते ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'उच्चारपासवणं' उच्चारप्रस्रवणम् 'परिट्ठवेत्ता' परिष्ठाप्य व्युत्सृज्य 'न पुछइ' न प्रोञ्छति तयोर्लेपं नापनयति, तथा 'न पुंछंतं वा साइज्जइ' न प्रोञ्छन्तं वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० १३८॥

**सूत्रम्—जे भिक्खू उच्चारपासवणं परिट्ठवेत्ता कट्ठेण वा किलिंचेण वा अंगुलियाए वा सलागाए वा पुंछइ पुंछंतं वा साइज्जइ ॥१३९॥**

छाया—यो भिक्षुरुच्चारप्रस्रवणं परिष्ठाप्य काष्ठेन वा किलिंचेन वा अङ्गुल्या वा शलाकया वा प्रोञ्छति प्रोञ्छन्तं वा स्वदते ॥सू० १३९॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'उच्चारपासवणं' उच्चारप्रस्रवणं 'परिट्ठवेत्ता' परिष्ठाप्य 'कट्ठेण वा' काष्ठेन वा 'किलिंचेण वा किलिंचेन वा तत्र किलिंचो वंशचीरिका, वेणुना निर्मितः क्षुरिकासदृशो वस्तुविशेषस्तेन वा 'अंगुलियाए वा' अङ्गुल्या वा 'सलागाए वा' शलाकया वा लोहादिनिर्मितशलाकया 'पुंछइ' प्रोञ्छति–स्वच्छं करोति 'पुंछंतं वा साइज्जइ' प्रोञ्छन्तं वा स्वदते। जीर्णवस्त्रस्याङ्गुलत्रयदीर्घायामपरिमितेन खण्डवस्त्रेण क्रमशः प्रथममुच्चारस्थानं प्रोञ्छनीयम्, तदनु च नावापूरत्रयपरिमिताचित्तजलेन तत् स्थानं प्रक्षालनीयं, ततः एकनावापूरपरिमितेनाचित्तजलेन हस्तौ प्रक्षालनीयौ, इति। सू० १३९ ॥

**सूत्रम्—जे भिक्खू उच्चारपासवणं परिट्ठवेत्ता णायमइ, णायमंतं वा साइज्जइ ॥१४०॥**

छाया—यो भिक्षुरुच्चारप्रस्रवणं परिष्ठाप्य नाचमति नाचमन्तं वा स्वदते ।१४०।

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'उच्चारपासवणं'

उच्चारप्रस्रवणं **'परिट्ठवेत्ता'** परिष्ठाप्य व्युत्सृज्य **'णायमइ'** नाचमति आचमनं न करोति-शौचं न करोतीत्यर्थः **'णायमंतं वा साइज्जइ'** नाचमन्तं वा स्वदते मूत्रपुरीषोत्सर्जनानन्तरमचित्तजलेन प्रक्षालनं न करोति न कुर्वन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १४० ॥

## सूत्रम्—जे भिक्खू उच्चारपासवणं परिट्ठवेत्ता तत्थेव आयमइ, आयमंतं वा साइज्जइ ॥१४१॥

**छाया**—यो भिक्षुरुच्चारप्रस्रवणं परिष्ठाप्य तत्रैवाचमति आचमन्तं वा स्वदते ।

**चूर्णी**—'जे भिक्खू' इत्यादि । **'जे भिक्खू'** य कश्चिद् भिक्षु **'उच्चारपासवणं'** उच्चारप्रस्रवणम् **'परिट्ठवेत्ता'** परिष्ठाप्य व्युत्सृज्य **'तत्थेव आयमइ'** यत्रैव स्थण्डिलादौ परिष्ठापयति तत्रैव स्थंडिलादौ—आचमति शौच करोति, तत्रैवाचमने उच्चारादिना हस्तस्य लेपसंभवात् । तथा तत्रैव **'आयमंतं वा साइज्जइ'** आचमन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १४१ ॥

## सूत्रम्—जे भिक्खू उच्चारपासवणं परिट्ठवेत्ता अइदूरे आयमइ आयमंतं वा साइज्जइ ॥१४२॥

**छाया**—यो भिक्षुरुच्चारप्रस्रवणं परिष्ठाप्यातिदूरे आचमति आचमन्तं वा स्वदते ॥१४२॥

**चूर्णी**—'जे भिक्खू' इत्यादि । **'जे भिक्खू'** यः कश्चिद् भिक्षुः **'उच्चारपासवणं'** उच्चारप्रस्रवणम् **'परिट्ठवेत्ता'** परिष्ठाप्य व्युत्सृज्य **'अइदूरे आयमइ'** अतिदूरे आचमति यत्र स्थण्डिलादौ परिष्ठापन कृतं तस्मात् स्थण्डिलादतिदूरे हस्तशतप्रमाणे स्थाने गत्वा आचमति शौचं करोति तथा **'आयमतं वा साइज्जइ'** पुरीषपरिष्ठापनस्थानादतिदूरं गत्वा आचमन्तं शौचादिक कुर्वन्त श्रमणं स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्तीति ॥ सू० १४२ ॥

## सूत्रम्—जे भिक्खू उच्चारपासवणं परिट्ठवेत्ता परं तिण्हं नावापूराणं आयमइ आयमंतं वा साइज्जइ ॥१४३॥

**छाया**—यो भिक्षुरुच्चारप्रस्रवणं परिष्ठाप्य परं त्रयाणां नावापूराणामाचमति आचमन्तं वा स्वदते ॥ सू १४३॥

**चूर्णी**—'जे भिक्खू' इत्यादि । **'जे भिक्खू'** य कश्चिद भिक्षु **'उच्चारपासवणं'** उच्चारप्रस्रवणम् **'परिट्ठवेत्ता'** परिष्ठाप्य व्युत्सृज्य **'परंतिण्हं'** परमधिकं त्रयाणाम् **'नावापूराणं'**

नावापूराणां नावाकारकृतानामेकहस्ततलाना 'पसली' इति प्रसिद्धानां 'आयमइ' आचमति शौचं करोतीत्यर्थः, प्रथमं तु यदि एकेनैव नावापूरेण निर्लेप्तुं शक्यते तदा एकेनैव नावापूरेण निर्लेपयेत् न तु तदधिकेन, किन्तु कारणवशात्तदधिकेन द्वितीयेन तृतीयेन वा नावापूरेणापि निर्लेपयेत्। ततोऽधिकेन चतुर्थपञ्चमादिना नावापूरेण यद्याचमति। 'आयमंतं वा साइज्जइ' नावापूरत्रयात् अधिकेन नावापूरेण आचमन्तं शौचं कुर्वन्त स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १४३ ॥

**सूत्रम्—जे भिक्खू अपारिहारिए णं पारिहारियं वएज्जा–एहि अज्जो ! तुमं च अहं च एगओ असणं वा पाणं वा खाइमं वा साइमं वा पडिगाहेत्ता, तओ पच्छा पत्तेयं पत्तेयं भोक्खामो वा पाहामो वा, जो तं एवं वयइ, वयंतं वा साइज्जइ ॥सू० १४४॥**

छाया - यो भिक्षुः अपारिहारिकः खलु पारिहारिकं वदेत् "एहि आर्य ! त्वं च अहं च एकतोऽशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्य ततः पश्चात् प्रत्येकं प्रत्येकं भोक्ष्यावो पास्यावो वा" यस्तमेवं वदति वदन्तं वा स्वदते ॥ सू० १४४॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'अपारिहारिए णं' अपारिहारिकः खलु, तत्र पारिहारिकः परिहारनामकप्रायश्चित्तरहितो विशुद्धः शुद्धाचारो वा साधुरित्यर्थः, 'पारिहारियं' पारिहारिकं–प्राप्तपरिहारनामकप्रायश्चित्तं मासिकादियावत्षाण्मासिकान्तं परिहारनामकप्रायश्चित्ततपो वहमानं पारिहारिकम् 'वएज्जा' वदेत्–कथयेत्, किं वदेत् ? इत्याह–'एहि अज्जो' ! इत्यादि। 'एहि अज्जो' एहि आर्य ! हे आर्य एहि अत्रागच्छ 'तुमं च अहं च' त्वं चाहं च 'एगओ' एकतः–एकत्र मिलित्वा 'असणं वा' अशनम् वा 'पाणं वा' पानं वा 'खाइमं' खाद्यं वा 'साइमं वा' स्वाद्यं वा 'पडिग्गाहेत्ता' परिगृह्य एतेषामशनादीनां मिलित्वैव ग्रहणं कृत्वा 'तओ पच्छा' ततः पश्चात् ग्रहणादनन्तरम् 'पत्तेयं पत्तेयं' प्रत्येकं प्रत्येकं–भिन्नभिन्नस्थाने उपविश्य 'भोक्खामो वा पाहामो वा' भोक्ष्याव आहारं करिष्याव, पास्याव –जलादिपानं करिष्यावः, 'जो तं एवं वयइ' यो भिक्षुरेवंप्रकारेण तं पारिहारिकं प्रति वदति–कथयति 'वयंतं वा साइज्जइ' वदन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति। सू० १४४॥

सम्प्रति उद्देशकोपसंहारमाह— 'तं सेवमाणे' इत्यादि।

**सूत्रम्—तं सेवमाणे आवज्जइ मासियं परिहारट्ठाणं उग्घाइयं ।१४५।**

॥ निसीहे चउत्थो उद्देसो समत्तो ॥४॥

छाया—तं सेवमान आपद्यते मासिकं परिहारस्थानमुद्घातिकम् ॥सू० १४५॥

॥ निशीथाध्ययनस्य चतुर्थोद्देशकः समाप्तः ॥४॥

चूर्णी—'तं सेवमाणे' इत्यादि। 'तं सेवमाणे' तत् सेवमान. चतुर्थोद्देशकस्य 'रायं अत्ती करेइ' इतिप्रथमसूत्रादारभ्य 'जे भिक्खू अपारिहारिय णं' एतत्सूत्रपर्यन्त यत्-यत् प्रायश्चित्त स्थानं प्रदर्शितम् तेषु एकं किमपि अपराधपदं सेवमानः एकस्यापि स्थानस्य प्रतिसेवनां कुर्वन् 'आवज्जइ' आपद्यते प्राप्नोति 'मासियं' मासिकम् 'परिहारट्ठाणं उग्घाइयं' परिहारस्थानमुद्घातिकम्—लघुमासिक प्रायश्चित्त प्राप्नोतीत्यर्थ. ॥१४५॥

इति श्री–विश्वविख्यात–जगद्वल्लभ–प्रसिद्धवाचक–पञ्चदशभाषाकलितललितकलापालापक–प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक–वादिमानमर्दक श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त–"जैनशास्त्राचार्य"–पदभूषित–कोल्हापुरराजगुरु–बालब्रह्मचारि–जैनाचार्य–जैनधर्म दिवाकर-पूज्यश्री-घासीलालव्रति-विरचितायां "निशीथसूत्रस्य" चूर्णिभाष्यावचूरिरूपायां व्याख्यायां चतुर्थोद्देशक समाप्त ॥४॥



## ॥ पञ्चमोद्देशकः ॥

चतुर्थोद्देशकं व्याख्याय सम्प्रति पञ्चमोद्देशको व्याख्यायते, तत्र चतुर्थोद्देशकीयान्तिमसूत्रेण सह पञ्चमोद्देशकादिसूत्रस्य कः सम्बन्धः ? इत्यत्राह भाष्यकार —

भाष्यम्— परिहारतवट्ठिओ उ, काउस्सग्गं करेज्ज कहिं नो वा ।
चोत्थस्स पंचमस्स य, संबंधो एस अक्खाओ ॥१॥

छाया—परिहारतपःस्थितस्तु, कायोत्सर्गं कुर्यात् कुत्र नो वा ।
चतुर्थस्य पञ्चमस्य च, सम्बन्ध एष आख्यातः ॥१॥

अवचूरिः—'परिहारतवट्ठिओउ' इत्यादि । परिहारतपःस्थितः पूर्वं चतुर्थोद्देशकस्यान्तिमसूत्रे यत् परिहारतपः प्रोक्तं तद् वहमान साधुः कायोत्सर्गं तथा शय्यानिषद्यादिकं वा करोति, तं कायोत्सर्गादिकं साधुः कुत्र स्थित्वा कुर्यात् ? कुत्र वा नो कुर्यात् ? इति तदत्र पञ्चमोद्देशके प्रदर्शयिष्यते, इति चतुर्थस्य पञ्चमस्य च उद्देशकस्य एष सम्बन्ध आख्यात ॥१॥

तदनेन सम्बन्धेनायातस्यास्य पञ्चमोद्देशकस्येदं प्रथमं सूत्रं प्रस्तूयते- 'जे भिक्खू' इत्यादि ।

**सूत्रम्—जे भिक्खू सचित्तरुक्खमूलंसि ठिच्चा ठाणं वा सेज्जं वा निसीहियं वा तुयट्टणं वा चेएइ चेएंतं वा साइज्जइ ॥सू० १॥**

छाया—यो भिक्षुः सचित्तवृक्षमूले स्थित्वा स्थानं वा शय्यां वा नैषेधिकीं वा त्वग्वर्तनं वा चेतयति चेतयन्तं वा स्वदते ॥सू० १॥

चूर्णी—'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः 'सचित्तरुक्खमूलंसि' सचित्तवृक्षमूले—सचित्तवृक्षस्याधः 'ठिच्चा' स्थित्वा—सचित्तवृक्षस्य यदि हस्तिपदप्रमाणः स्कन्धः स्यात् तादृशस्य वृक्षस्य सर्वतः समन्तात् रत्निप्रमाणं यावद् भूमिः सचित्ता भवति, एतदनुसारेण यस्य वृक्षस्य यावत्परिमितः स्कन्धः स्यात् तत्तत्प्रमाणेन तदग्रेतना भूमिः सचित्ता भवतीति स्वयमूहनीयम् । अतो वृक्षस्य हस्तिशुण्डामात्रे दूरे एव स्थातव्यमिति नियमानादरणेन तत्रोपविश्य 'ठाणं वा' स्थानं वा तत्र स्थानं नाम कायोत्सर्गः, स्थीयते स्थिरीभूयते यत्र तत् स्थानं कायोत्सर्गः तत् 'सेज्जं वा' शय्यां वा शरीरप्रमाणां करोति तथा 'निसीहियं वा' नैषेधिकीं वा—पापक्रियानिषेधकत्वात् नैषेधिकी स्वाध्यायभूमिः स्वाध्यायस्थानं, तां वा 'चेएइ' चेतयति करोति, तथा यदि कोपि साधुः स्वयं सचित्तवृक्षमूले कायोत्सर्गं करोति शय्यां वा करोति नैषेधिकीं स्वाध्यायभूमिं निर्धारयतीत्यर्थः । तथा 'चेएंतं वा साइज्जइ' चेतयन्तं कुर्वन्तं वा स्वदते । यो भिक्षुः सचित्तवृक्षमूले कायोत्सर्गादिकं करोति तमनुमोदते वा यः साधुः स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका अपि दोषा भवन्ति तस्मात्तथा न कर्तव्यमिति ॥ सू० १॥

**सूत्रम्**—जे भिक्खू सचित्तरुक्खमूलंसि ठिच्चा आलोएज्ज वा पलोएज्ज वा आलोएंतं वा पलोएंतं वा साइज्जइ ॥ सू० २॥

**छाया**—यो भिक्षुः सचित्तवृक्षमूले स्थित्वा आलोकयेद्वा प्रलोकयेद्वा आलोकयन्तं वा प्रलोकयन्तं वा स्वदते ॥सू० २॥

**चूर्णी**—'**जे भिक्खु**' इत्यादि। '**जे भिक्खु**' य कश्चिद् भिक्षु '**सचित्तरुक्खमूलंसि**' सचित्तवृक्षमूले, प्रकृतसूत्रं सचित्तवृक्षमूलगतसचित्तभूमिपरकम्, तत्र स्थित्वा यो भिक्षुः '**आलोएज्ज वा**' आलोकयेत्-ऊर्ध्वाधस्तिर्यक्षु दिक्षु विदिक्षु काञ्चिदेकां दिशमाश्रित्य पश्येत् एकवार वा पश्येत् '**पलोएज्ज वा**' प्रलोकयेत्-सर्वासु दिक्षु विदिक्षु ऊर्ध्वमधो वार वारं वा पश्येत तथा '**आलोएंतं वा पलोएंतं वा साइज्जइ**' आलोकयन्तं वा प्रलोकयन्तं वा स्वदते। यो हि साधु सचित्तवृक्षमूले स्थित्वा एकवारमनेकवारं वा आलोकयति तस्यानुमोदना वा करोति स प्रायश्चित्तभागी भवति। वृक्षमूलं द्विविध सपरिग्रह वा अपरिग्रह वा, सपरिग्रहं तु चतुर्विधम्—दिव्यमनुजतियङ्मिश्रपरिगृहीतभेदात्। तत्र दिव्यपरिगृहीतं देवाधिष्ठितम् १, एवं मनुष्य-परिगृहीतं मनुष्याधिष्ठितम् २, तिर्यक्परिगृहीत तिर्यगधिष्ठितं यत्र गोमहिष्यादयो बद्धा भवेयुस्तत् ३, मिश्रपरिगृहीतं त्रिभिरप्यधिष्ठितम् ४, तत्र देवपरिगृहीतवृक्षमूले स्थित्वा पश्यति तदा साधोः क्षिप्तचित्तयक्षाविष्टोन्मादप्राप्तत्वादयो दोषा संभवेयु १, मनुष्यपरिगृहीतवृक्षाध. स्थित्वाऽवलोकने तदधिष्ठातु शङ्का स्यात्—"किमर्थमयमेव पश्यति ? किं वृक्षस्य छेदादिक करिष्यति ?" इत्यादि २, तिर्यक्परिगृहीते तेषामाहारादावन्तराय स्यात्, साधुदर्शनात् पशव उद्विग्ना भूत्वा बन्धनं त्रोटयित्वा नश्यन्तीत्यादि ३, मिश्रपरिगृहीते पूर्वोक्ता सर्वेऽपि दोषा समापतेयु ४। एतद्व्य-तिरिक्तमपरिगृहीतम्, तत्राऽपि अनेके दोषा भवन्तीति स्वयमूहनीयम्। अत. साधुर्वृक्षमूले स्थित्वा आलोकनप्रलोकनादिकं न कुर्यात्।

अत्राह भाष्यकार —

**भाष्यम्**—सचित्तरुक्खमूलंसि, ठिच्चा ठाणाइय करे।
पावइ भिक्खुओ सज्जो, आणाभंगाइयं तया ॥

**छाया**—सचित्तवृक्षमूले स्थित्वा स्थानादिकं कुर्यात्।
प्राप्नोति भिक्षुकः सद्य आज्ञाभङ्गादिक तदा ॥

**अवचूरिः**—'**सचित्तरुक्खमूलंसि**' इत्यादि। सचित्तवृक्षमूले स्थित्वा यो भिक्षु. स्थाना-दिकं कायोत्सर्गशय्यादिकम् कुर्यात्, यदि सचित्तवृक्षमूले स्थित्वा य कायोत्सर्गादिकं करोति

स भिक्षुराज्ञाभङ्गादिकान् दोषान् प्राप्नोति । तथा सचित्तवृक्षमूले स्थितस्य भिक्षोर्हस्तपादादिना वृक्षस्य संघट्टनं भवेत् तदा तस्य त्रसस्थावरजीवादिविराधनं भवति तेन संयमविराधना, तथा छायार्थं तत्पत्रादिभक्षणार्थं शरीरसंघर्षणार्थं वा समागततिर्यगादिभ्य उपघातोपि भवति तेनात्मविराधना भवति तस्मात् सचित्तवृक्षमूले स्थित्वा साधुना कायोत्सर्गादिक न कर्तव्यमिति ।।सू०२।।

सूत्रम्—जे भिक्खू सचित्तरुक्खमूलंसि ठिच्चा असणं वा पाणं वा खाइमं वा साइमं वा आहारेइ आहारेंतं वा साइज्जइ ॥ सू० ३ ॥

छाया—यो भिक्षुः सचित्तवृक्षमूले स्थित्वा अशनं वा पानं वा खाद्यं वा स्वाद्य वा आहरति आहरन्तं वा स्वदते ॥सू० ३ ॥

चूर्णी—'जे भिक्खू' इत्यादि । एव सचित्तवृक्षमूले स्थित्वाऽशनादेराहारोऽपि न कर्त्तव्य इति ॥सू० ३॥

सूत्रम्—जे भिक्खू सचित्तरुक्खमूलंसि ठिच्चा उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥ सू० ४ ॥

छाया—यो भिक्षु सचित्तवृक्षमूले स्थित्वा उच्चारप्रस्रवणं परिष्ठापयति परिष्ठापयन्तं वा स्वदते ॥सू० ४॥

चूर्णी—'जे भिक्खू, इत्यादि । एवं सचित्तवृक्षमूले स्थित्वा उच्चारप्रस्रवणादि-परिष्ठापनमपि न कर्त्तव्यम् ॥सू०४॥

सूत्रम्—जे भिक्खू सचित्तरुक्खमूलंसि ठिच्चा सज्झायं करेइ करेंतं वा साइज्जइ ॥ सू ५ ॥

छाया—यो भिक्षुः सचित्तवृक्षमूले स्थित्वा स्वाध्यायं करोति कुर्वन्तं वा स्वदते।

चूर्णी—'जे भिक्खू' इत्यादि । अस्मिन् सूत्रे स्वाध्यायनिषेध प्रतिपादित ॥सू०५॥

सूत्रम्—जे भिक्खू सचित्तरुक्खमूलंसि ठिच्चा सज्झायं उद्दिसइ उद्दिसंतं वा साइज्जइ ॥ सू० ६ ॥

छाया—यो भिक्षुः सचित्तवृक्षमूले स्थित्वा स्वाध्यायमुद्दिशति उद्दिशन्तं वा स्वदते ॥ सू ६॥

चूर्णी—'जे भिक्खू' इत्यादि । अस्मिन् सूत्रे सचित्तवृक्षमूले सूत्रार्थतदुभयरूपस्वाध्यायस्य पाठनं निषिद्धम् ॥सू० ६॥

सूत्रम्—जे भिक्खू सचित्तरुक्खमूलंसि ठिच्चा सज्झायं समुद्दिसइ समुद्दिसंतं वा साइज्जइ ॥ सू० ७ ॥

छाया—यो भिक्षुः सचित्तवृक्षमूले स्थित्वा स्वाध्याय समुद्दिशति समुद्दिशन्तं वा स्वदते ॥ सू० ७॥

चूर्णी—'जे भिक्खु' इत्यादि । अत्र पूर्वोक्तस्वाध्यायस्य वारं वारं पाठनं, परेभ्यः समुपदेशश्चेति द्वयमपि निषिद्धम् ॥सू० ७॥

सूत्रम्—जे भिक्खू सचित्तरुक्खमूलंसि ठिच्चा सज्झायं अणुजाणइ अनुजाणंतं वा साइज्जइ ॥ सू० ८॥

छाया—यो भिक्षुः सचित्तवृक्षमूले स्थित्वा स्वाध्यायमनुजानाति अनुजानन्तं वा स्वदते ॥ सू० ८॥

चूर्णी—'जे भिक्खु' इत्यादि । स्वाध्यायादिकरणार्थमाज्ञाप्रदानमनुज्ञानम्, अन्यत् सर्वं पूर्ववदेवेति ॥सू० ८॥

सूत्रम्—जे भिक्खू सचित्तरुक्खमूलंसि ठिच्चा सज्झायं वाएइ वाएंतं वा साइज्जइ ॥ सू० ९ ॥

छाया—यो भिक्षुः सचित्तवृक्षमूले स्थित्वा स्वाध्यायं वाचयति वाचयन्तं वा स्वदते ॥ सू० ९॥

चूर्णी—'जे भिक्खु' इत्यादि । तत्र वाचयति वाचना ददाति तथा वाचनां ददत स्वदतेऽनुमोदते, अन्यत्सर्वं पूर्ववदेव ॥ सू० ९॥

सूत्रम्—जे भिक्खू सचित्तरुक्खमूलंसि ठिच्चा सज्झायं पडिच्छइ पडिच्छंतं वा साइज्जइ ॥ सू० १० ॥

छाया—यो भिक्षुः सचित्तवृक्षमूले स्थित्वा स्वाध्यायं प्रतीच्छति प्रतीच्छन्तं वा स्वदते ॥ सू० १०॥

चूर्णी—'जे भिक्खु' इत्यादि । एवं पूर्वोक्तप्रकारेण सचित्तवृक्षमूले स्थित्वा स्वाध्यायं प्रतीच्छति आचार्येभ्य. प्रदत्तां वाचना गृह्णाति, तथा वाचनां गृह्णन्त स्वदतेऽनुमोदते ॥सू० १०॥

सूत्रम्—जे भिक्खू सचित्तरुक्खमूलंसि ठिच्चा सज्झायं परियट्टइ परियट्टंतं वा साइज्जइ ॥ सू० ११ ॥

छाया—यो भिक्षुः सचित्तवृक्षमूले स्थित्वा स्वाध्यायं परिवर्तयति परिवर्तयन्तं वा स्वदते ॥ सू० ११॥

चूर्णी—जे भिक्खु' इत्यादि । एव पूर्वोक्तप्रकारेण सचित्तवृक्षमूले स्थित्वा स्वाध्यायं परिवर्तयति पूर्वाधीतस्याऽऽवर्तनं करोति, तथा परिवर्तयन्तं वा स्वदत्तेऽनुमोदते ॥ सू० ११॥

सूत्रम्—जे भिक्खू अप्पणो संघाडियं अण्णउत्थिएण वा गारत्थिएण वा सागारिएण वा सिव्वावेइ वा सिव्वावेंतं वा साइज्जइ ॥ सू० १२॥

छाया—यो भिक्षुरात्मनः संघाटिकाम् अन्ययूथिकेन वा गार्हस्थिकेन वा सागारिकेण वा सीवयति सीवयन्त वा स्वदते ॥ सू० १२॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'अप्पणो संघाडियं' आत्मनः स्वस्य सघाटिका प्रावरणवस्त्रं 'चादर' 'पछेवडी' इति भाषाप्रसिद्धाम् 'अण्णउत्थिएण वा' अन्ययूथिकेन वा परतीर्थिकेन 'गारत्थिएण वा' गार्हस्थिकेन वा येन केनचित् पूर्वसंस्तुतादिना तदन्येन वा गृहस्थेन 'सागारिएण वा' सागारिकेण वा, तत्र सागारिक श्रावक इत्यर्थ तेन 'सिव्वावेइ' सीवयति-परद्वारा स्वकीयप्रावरणवस्त्रस्य संधान कारयतीत्यर्थः, तथा 'सिव्वावेंतं वा साइज्जइ' सीवयन्तं वा स्वदते ।

अत्राह भाष्यकार —

भाष्यम्—परतित्थियगिहत्थेहिं संघाडीए य सीवणं ।
कारेइ समणो जो उ, आणाभंगाइ पावइ ॥

छाया—परतीर्थिगृहस्थैः, संघाटयाश्च सीवनम् ।
कारयति श्रमणो यस्तु, आज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः—'परतित्थि०' इत्यादि । यस्तु श्रमण साधु परतीर्थिकगृहस्थैः, उपलक्षणात् श्रमणीभिर्वा संघाटयाः-'चादर' 'पछेवडी' इति भाषाप्रसिद्धायाः सीवनम्, उपलक्षणत्वात् आहाराद्यानयनवैयावृत्त्यादिकं वा क्वापि कस्मिन्नपि काले कारणेऽकारणे वा कारयेत् तदा आज्ञाभङ्गादिदोषान् प्राप्नोति । यस्मिन् सम्प्रदाये गच्छे वा सर्वतीर्थिः उपर्युक्तं कार्यं कारयति स गच्छः लोकाना पुरतो नपुसक इव शास्त्रविदा परिषदि सर्वथैव अनादृतो भवतीति भाव ॥ सू० १२॥

सूत्रम्—जे भिक्खू अप्पणो संघाडीए दीहसुत्ताइं करेइ करेंतं वा साइज्जइ ॥सू० १३॥

छाया—यो भिक्षुरात्मनः संघाटया दीर्घसूत्राणि करोति कुर्वन्त वा स्वदते ॥सू०१३॥

चूर्णी—'जे भिक्खू' इत्यादि । जे भिक्खू' यः कश्चिद् भिक्षुः 'अप्पणो' आत्मन स्वस्य 'संघाडीए' संघाटयाः प्रावरणवस्त्रस्य 'चादर' 'पछेवडी' इति लोकप्रसिद्धायाः 'दीहसुत्ताइं करेइ' दीर्घसूत्राणि प्रावरणवस्त्रान्तभागस्थितानि दशिकारूपाणि लघुसूत्राणि, तानि दीर्घसूत्राणि कार्पासिकसूत्रेषु ऊर्णासूत्राणां ऊर्णासूत्रेषु क्षौमिकादिसूत्राणा बन्धनं दत्वा दीर्घाणि चतुरङ्गुलादधिकानि विस्तृतानि सूत्राणि शोभार्थं करोति-संपादयति 'करेंतं वा साइज्जइ' कुर्वन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्तीति ॥सू० १३॥

सूत्रम्—जे भिक्खू पिउमंदपलासयं वा पडोलपलासयं वा बिल्लपलासयं वा सीओदगवियडेण वा उसिणोदगवियडेण वा संफाणिय संफाणिय आहारेइ आहारेंतं वा साइज्जइ ॥सू० १४॥

छाया—यो भिक्षुः पिचुमन्दपलासकं वा पटोलपलासकं वा बिल्वपलासकं वा शीतोदकविकटेन वा उष्णोदकविकटेन वा संफाणिय संफाणिय आहरति आहरन्तं वा स्वदते ॥ सू० १४॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'पिउमंदपलासयं वा' पिचुमन्दपलाशकं वा, तत्र पिचुमन्द निम्बवृक्षः, तस्य पलाशकं पत्रं वा 'पडोलपलासयं वा' पटोलपलाशकं वा, तत्र पटोलो लताविशेषः 'परवल' इति भाषाप्रसिद्धः, तस्य पलाशकं पत्रम्, तथा 'बिल्लपलासयं वा' बिल्वपलाशकं वा, तत्र बिल्वो बिल्ववृक्षः 'बिल्ली' 'बेल' इति प्रसिद्धः, तस्य पलाशकं पत्रम्। एतेषां पत्राणां भक्षणस्य दर्शनान्तरीयसाधौ प्रसिद्धत्वेनात्र तस्य प्रतिषेधो वर्णितः, किन्त्वत्र पत्रमात्राणां सर्वेषां पत्राणां ग्रहणं बोध्यम्, तेषां सजीवत्वेन जीवविराधनात्, तादृशानि सचित्तानि पत्राणि 'सीओदगवियडेण' शीतोदकविकटेन वा, तत्र विकटेन व्यपगतजीवेन अचित्तशीतजलेन तण्डुलधावनादिजलेनेत्यर्थः, अथवा 'उसिणोदगवियडेण वा' उष्णोदकविकटेन वा व्यपगतजीवेनोष्णोदकेन अचित्तोष्णोदकेनेत्यर्थः, 'संफाणिय संफाणिय' तत्र 'सफाणिय' इति देशी शब्दस्तेन 'सफाणिय' इति फेनयुक्तानि कृत्वा कृत्वा, तथा च अचित्ताभ्यां शीतोष्णजलाभ्यां सम्यक् तादृशपत्राणि संमर्द्य संमर्द्येत्यर्थः. 'आहारेइ' आहरति तेषां भक्षणं करोति, तथा 'आहारेंतं वा साइज्जइ' आहरन्तं वा स्वदते। निम्बादिवृक्षपत्राणामचित्तजलेन प्रक्षालनं कृत्वा आहारं कुर्वन्तं स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० १४॥

सूत्रम्—जे भिक्खू पाडिहारियं पायपुंछणं जाइत्ता 'तमेव रयणिं पच्चप्पिणिस्सामि'-त्ति सुए पच्चप्पिणइ पच्चप्पिणंतं वा साइज्जइ ॥सू० १५॥

छाया—यो भिक्षुः प्रातिहारिकं पादप्रोंछनकं याचित्वा 'तस्यामेव रजन्यां प्रत्यर्पयिष्यामी'-ति श्वः प्रत्यर्पयति प्रत्यर्पयन्तं वा स्वदते। सू० १५॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'पाडिहारियं पायपुंछणं' प्रातिहारिकं पादप्रोंछनकम्, तत्र श्रावकादिभ्य आनीतं प्रत्यर्पणयोग्यं वस्तु प्रातिहारिकमिति कथ्यते, तथा पादप्रोंछनकं रजोहरणम् 'जाइत्ता' याचित्वा 'तमेव रयणिं पच्चप्पिणिस्सामि'-त्ति तस्यामेव रजन्यां प्रत्यर्पयिष्यामीति, सूत्रे 'तमेव रयणिं' इत्यत्र सप्तम्यर्थे द्वितीया प्राकृतत्वात्;

श्रावकादिभ्यो गत्वा कथितम्-मह्यं रजोहरणं देहि अह पुनः कार्यं संपाद्य तस्यामेव रजन्या रात्रौ प्रत्यर्पयिष्यामि रात्रेः प्रागेवेत्यर्थः, रात्रौ आदानप्रदानस्य निषिद्धत्वात् रजनीतिपदं दिवसावसानबोधकम् , इत्येवं प्रकारेण याचनां कृत्वा रजोहरणमानीतवान् किन्तु **'सुए पच्चप्पिणइ'** श्व प्रत्यर्पयति श्वः परदिने प्रातःकाले रात्रिव्यपगमानन्तरं प्रत्यर्पयति रजोहरणम्, तथा **'पच्चप्पिणंतं वा साइज्जइ'** प्रत्यर्पयन्तं वा स्वदते। यो हि रजोहरणादिकं तद्दिवसमात्रस्य कृते याचित्वा आनीतवान् , यद्यपि प्रातिहारिकं रजोहरणमाहारवस्त्रपात्रादि कम्बलं च न कल्पते साधूनामिति रजोहरणस्य प्रातिहारिकत्वेन याचनं न संगच्छते तथापि अकस्मात् चौरादिना अपहृतम् , अग्निना दग्धं, कुत्रापि विस्मृतं चेद् रजोहरणं भवेत् तदा तात्कालिककार्यकरणाय तद्याचनस्य संभवः किन्तु प्रत्यर्पयति द्वितीयदिने प्रातःकाले। एतादृशं श्रमणं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति मृषावादादिदोषसंभवात् , तथा एतादृशस्याज्ञाभङ्गादयोऽपि दोषा भवन्तीति ॥सू० १५॥

## सूत्रम्—जे भिक्खू पाडिहारियं पायपुंछणं जाइत्ता 'सुए पच्चप्पिणिस्सामि'-त्ति तमेव रयणिं पच्चप्पिणइ पच्चप्पिणंतं वा साइज्जइ। सू० १६।

**छाया**—यो भिक्षुः प्रातिहारिकं पादप्रोंछनकं याचित्वा 'श्वः प्रत्यर्पयिष्यामी'-ति तस्यामेव रजन्यां प्रत्यर्पयति प्रत्यर्पयन्तं वा स्वदते ॥सू० १६॥

**चूर्णी**—**'जे भिक्खू पाडिहारियं'** इत्यादि। **'जे भिक्खू'** यः कश्चित् भिक्षुः श्रमणः श्रमणी वा **'पाडिहारियं'** प्रातिहारिकं पुनः प्रत्यर्पणयोग्यम् **'पायपुंछणं'** पादप्रोंछनकं **'जाइत्ता'** याचित्वा श्रावकेभ्यो पादप्रोंछनस्य याचना कृत्वाऽऽनीतं **'सुए पच्चप्पिणिस्सामि'-त्ति** श्वः प्रातःकाले प्रत्यर्पयिष्यामि, अर्थात् कश्चित् साधुः श्रावकगृहं गत्वा कथयति—'भो ! मह्यमेकं पादप्रोंछनकं देहि कार्यं कृत्वा प्रातः पुनः प्रत्यर्पयिष्यामि' इति कथयित्वा श्रावकेभ्यो पादप्रोंछनकं गृह्णाति किन्तु **'तमेव रयणिं पच्चप्पिणइ'** तस्यामेव रजन्यां-रजनीमुखे दिवसावसाने प्रत्यर्पयति, यद्दिवसे एव याचना कृत्वा द्वितीयदिवसे दातुं कथयित्वा आनीतवान् तत् तस्यामेव रात्रौ रात्रेः पूर्वमेव पुनः प्रत्यर्पयति, तथा **'पच्चप्पिणंतं वा साइज्जइ'** प्रत्यर्पयन्तं वा वा स्वदते, प्रातःकाले प्रत्यर्पयिष्यामीति कथयित्वा प्रातिहारिकं रजोहरणं याचित्वा आनीतवान् परन्तु तद्रात्रे प्रागेव प्रत्यर्पणं करोति, तादृशं श्रमणं योऽनुमोदते स प्रायश्चित्तभागी भवति, एवं करणे साधोर्वचने मृषावाददोषापत्तिः स्यात्।

## सूत्रम्—जे भिक्खू सागारियसंतियं पायपुंछणं जाइत्ता 'तमेव रयणिं पच्चप्पिणिस्सामि'-त्ति सुए पच्चप्पिणइ पच्चप्पिणंतं वा साइज्जइ ॥ सू० १७ ॥

छाया—यो भिक्षुः सागारिकसत्कं पादप्रोञ्छनकं याचित्वा 'तस्यामेव रजन्यां प्रत्यर्पयिष्यामी-'ति श्वः प्रत्यर्पयति प्रत्यर्पयन्तं वा स्वदते ॥सू०१७॥

चूर्णी—'जे भिक्खू सागारिय०' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमण श्रमणी वा 'सागारियसंतियं' सागारिकसत्कम्—सागारिको गृहस्थः तत्सत्कं तत्सम्बन्धि 'पायपुंछणं जाइत्ता' पादप्रोञ्छनकं याचित्वा। शेषं पञ्चदशसूत्रवद् व्याख्येयम् ॥सू० १७॥

सूत्रम्-जे भिक्खू सागारियसंतियं पायपुंछणं जाइत्ता 'सुए पच्चप्पिणिस्सामि'–त्ति तमेव रयणिं पच्चप्पिणइ पच्चप्पिणंतं वा साइज्जइ ॥

छाया—यो भिक्षुः सागारिकसत्कं पादप्रोञ्छनकं याचित्वा श्वः प्रत्यर्पयिष्यामी-ति' तस्यामेव रजन्यां प्रत्यर्पयति प्रत्यर्पयन्तं वा स्वदते ॥सू० १८॥

चूर्णी—'जे भिक्खू सागारिय' इत्यादि। 'जे भिक्खू' यः कश्चिद भिक्षुः 'सागारियसंतियं' सागारिकसत्कम् गृहस्थस्वामिकं यद् उपाश्रये स्थितं तत् 'पायपुंछणं जाइत्ता' पाद–प्रोञ्छनकं याचित्वा, शेषं षोडशसूत्रवद् व्याख्येयम् ॥सू० १८॥

सूत्रम्—जे भिक्खू पाडिहारियं दंडयं वा लट्ठियं वा अवलेहणियं वा वेणुसूइं वा जाइत्ता एवं एएहिं दोहिं वि चेव पाडिहारिय–सागारियगमएहिं दो दो आलावगा णेयव्वा॥ सू० १९ ॥२०॥ २१॥ २२ ॥

छाया—यो भिक्षु प्रातिहारिकं दण्डकं वा यष्टिकां वा अवलेहनिकां वा वेणुसूचीं वा याचित्वा, एवम् एताभ्यां द्वाभ्यामप्येव प्रातिहारिक-सागारिकगमकाभ्यां द्वौ द्वौ आलापकौ ज्ञातव्यौ। सू० १९।२०।२१।२२॥

चूर्णी—'जे भिक्खू पाडिहारिय०' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'पाडिहारियं' प्रातिहारिकम् पुनः प्रत्यर्पणयोग्यम् 'दंडयं वा' दण्डकं वा, तत्र दण्डः पूर्वोक्तस्वरूपस्तम् 'लट्ठियं वा' यष्टिकां लघुदण्डरूपां वा रुग्णाद्यवस्थायां ग्रहणयोग्याम् 'अवलेहणियं वा' अवलेहनिकां वा, तत्र चरणादिसंलग्नकर्दमादिकं यया अपनीयते सा वेत्रप्रभृतिनिर्मिता क्षुरिकादिसदृशवस्तुविशेषरूपा, ताम् अवलेहनिकाम्, तथा 'वेणुसूइं वा' वेणुसूचीं वा वंशनिर्मितां सूचीम् 'जाइत्ता' याचित्वा श्रावकात् तद्याचनां कृत्वा 'एवं एएहिं' इत्यादि—एवम् अनेनैवाऽऽलापकप्रकारेण एताभ्यां पूर्वप्रदर्शिताभ्यामपि द्वाभ्यामेव, कीदृशाभ्यामित्याह—'पडिहारिय०' इत्यादि—"प्रातिहारिक–सागारिकसत्करूपाभ्यां गमकाभ्यां प्रत्येकस्य द्वौ द्वौ आलापकौ कर्त्तव्यौ, तथाहि—प्रातिहारिकस्य दण्डकादिकस्य तस्मिन्नेव दिवसावसाने प्रत्यर्पयिष्यामीति कथयित्वा श्वः प्रातःकाले प्रत्यर्पयतीति तद्विषयकं सूत्रम्

॥१९॥ ततः प्रातिहारिकस्य दण्डकादिकस्य प्रात.काले प्रत्यर्पणार्थं कथयित्वा दिवसावसाने एव प्रत्यर्पयतीति तद्विषयकं सूत्रम् ॥२०॥ एवम्–सागारिकसत्कस्य दण्डकादिकस्य तस्मिन्नेव दिवसावसाने प्रत्यर्पयिष्यामीति कथयित्वा प्रात' प्रत्यर्पयतीति तद्विषयं सूत्रम् ॥२१॥ एवं सागारिकसत्कस्य दण्डकादे. प्रात. प्रत्यर्पयिष्यामीति कथयित्वा तस्मिन्नेव दिवसावसाने प्रत्यर्पयतीति तद्विषयक सूत्रम् ॥२२॥ एतत्सूत्रचतुष्टयमपि साधोर्वचने मृषावाददोषवत्त्वेन निषेधविषयकमस्ति। शेष पञ्चदशसूत्रवद् व्याख्येयम् ॥सू०२२॥

अत्राह भाष्यकार'—

भाष्यम्—पाडिहारियसागारि,-संतिए जे गमा भवे।
पायपुंछणगे दंडाइए चेत्थ तहेव य ॥

छाया—प्रातिहारिकसागारि,-सत्के ये गमा भवेयुः।
पादप्रोञ्छनके दण्डादिके चात्र तथैव च ॥

अवचूरिः—'पाडिहारिय' इत्यादि। प्रातिहारिके प्रातिहारिकपादप्रोञ्छनकविषयकपञ्चदश-षोडशसूत्रयोर्यो गमद्वयप्रकार कथित' स एव हि गमद्वयप्रकार सागारिकपादप्रोञ्छनविषयक-सप्तदशाष्टादशसूत्रयोरपि ज्ञातव्य। तथा पादप्रोञ्छनकविषयके पञ्चदशादिसूत्रचतुष्टये यद्वत् येन प्रकारेण रजोहरणस्य प्रतिपादितो द्वितीयोदेशकप्रकारेण स एव प्रकार. प्रातिहारिकसागारिकसत्क-दण्डादिष्वपि सूत्रचतुष्टयी प्रयोक्तव्या। एतत्सर्वं द्वितीयोदेशके प्रथमसूत्रादारभ्याष्टमसूत्रपर्यन्तं यथा वर्णितम् तथैवात्रापि पञ्चमोदेशके वर्णयितव्यम्। श्रावकात याचित्वा आनीतस्य पादप्रोञ्छनकस्य दण्डादेर्वा यथासमयमप्रदाने प्रायश्चित्तं भवति, तथा आज्ञाभङ्गादिका दोषा अपि भवन्तीति ॥सू०२२॥

**सूत्रम्—जे भिक्खू पाडिहारियं वा सेज्जासंथारगं पच्चप्पिणित्ता दोच्चंपि अणणुन्नविय अहिट्ठेइ अहिट्ठेंतं वा साइज्जइ ॥सू० २३॥**

छाया—यो भिक्षुः प्रातिहारिक वा शय्यासंस्तारकं प्रत्यर्पयित्वा द्वितीयमपि अननुज्ञाप्याधितिष्ठति अधितिष्ठंतं वा स्वदते ॥सू० २३।

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु श्रमणः श्रमणी वा 'पाडिहारियं वा' प्रातिहारिकं वा 'सेज्जासंथारगं' शय्यासंस्तारकं श्रावकादानीतं श्रवकाय 'पच्चप्पिणित्ता' प्रत्यर्पयित्वा प्रत्यर्पणार्थं तु गतवान् किन्तु तत्स्वामिनोऽनुपस्थित्यादिकारणवशात् अनर्पयित्वा तदादायैव समागत, तत् शय्यासंस्तारक तत्रैव तिष्ठति, तादृशं शय्यासंस्तारकं पुनः 'दोच्चं पि अणणुन्नविय' द्वितीयं–द्वितीयमपि वारम् अननुज्ञाप्य तस्याज्ञामगृहीत्वैव यदि कारण-वशात् 'अहिट्ठेइ' अधितिष्ठति तदुपरि समुपविशति तस्याननुज्ञापितस्य शय्यासंस्तारकस्योपभोगं

करोति, तथा 'अहिट्ठेंतं वा साइज्जइ' अधितिष्ठन्तं वा स्वदते। यो हि आनीतं शय्यासंस्तारकं श्रावकायार्पयित्वा पुनरपि आज्ञामन्तरेण तस्योपभोगं करोति उपभोक्तारमनुमोदते च स प्रायश्चित्त-भागी भवति। प्रातिहारिकाऽप्रातिहारिकशय्यासंस्तारकमर्पयितुं गतः किन्तु कारणवशाद् न समर्पितवान् तच्च शय्यासंस्तारकं तथैवावतिष्ठते तादृशं शय्यासंस्तारकं द्वितीयवारमननुज्ञाप्य तदाज्ञामनवाप्य तस्योपभोगं करोति स प्रायश्चितभागी भवती, तथा तस्याऽऽज्ञाभङ्गादिका दोषा भवन्ति। अननुज्ञातस्य शय्यादेरननुज्ञाप्य पुनरुपभोगे मायित्वं मृषावादित्वं च स्यात्, तथा अदत्तादानम् अप्रत्यय कलह. उपालम्भश्च स्यात्, यस्मादेते दोषास्तस्मात्, कारणात् समर्पितं शय्यासंस्तारकं द्वितीयवारमननुज्ञाप्य न भोक्तव्यमिति ।।सू० २३।।

## सूत्रम्—जे भिक्खू सागारियसंतियं सेज्जासंथारगं पच्चप्पिणित्ता दोच्चंपि अणणुन्नविय अहिट्ठेइ अहिट्ठेंतं वा साइज्जइ ॥ सू० २४॥

छाया--यो भिक्षुः सागारिकसत्कं शय्यासंस्तारकं प्रत्यर्पयित्वा द्वितीयमप्यननुज्ञाप्याधितिष्ठति अधितिष्ठन्तं वा स्वदते ।। सू० २४।।

चूर्णी—'जे भिक्खू सागारिय'० इत्यादि। 'जे भिक्खू' यः कश्चित् भिक्षुः श्रमणः श्रमणी वा 'सागारियसंतियं सेज्जासथारगं' सागारिकसत्कं श्रावकसम्बन्धि यदुपाश्रयस्थितं तत् पुन शय्यासंस्तारकं पीठफलकादिकं 'पच्चप्पिणित्ता' प्रत्यर्प्य तदुपभोगाज्ञां समर्प्य तत् पुन 'दोच्चंपि अणणुन्नविय' द्वितीयमपि वारम् अननुज्ञाप्य श्रावकस्याज्ञामनादाय 'अहिट्ठेइ' अधितिष्ठति तादृशशय्यासंस्तारकस्योपभोगं करोति, तथा 'अहिट्ठेंतं वा साइज्जइ' अधितिष्ठन्तमुपभोगं कुर्वन्तं वा श्रमणं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्ति तस्मात् कारणात् तस्य तादृशस्य सागारिकसत्कशय्यासंस्तारकस्य द्वितीयवारम् अननुज्ञाप्य नोपभोग करणीय, न वा तदुपभोक्तुरनुमोदनं करणीयमिति ।।सू० २४।।

## सूत्रम्—जे भिक्खू सणकप्पासाओ वा उण्णकप्पासाओ वा पोंडकप्पासाओ वा अमिलकप्पासाओ वा दीहसुत्ताइं करेइ करेंतं वा साइज्जइ॥

छाया—यो भिक्षुः शणकार्पासतो वा ऊर्णाकार्पासतो वा बोण्डकार्पासतो वा अमिलकार्पासतो वा दीर्घसूत्राणि करोति कुर्वन्तं वा स्वदते ।।सू० २५।।

**चूर्णी**—'जे भिक्खू' इत्यादि। **'जे भिक्खु'** यः कश्चित् भिक्षुः **'सणकप्पासाओ वा'** शणकार्पासात् शणसूत्रात् 'शणं' लोकप्रसिद्धम् **'उण्णकप्पासाओ वा'** ऊर्णाकार्पासाद्वा अजो-ष्ट्रादीनाम्—ऊर्णासूत्रेणेत्यर्थः, **'पोंडकप्पासाओ वा'** पौण्ड्रकार्पासाद्वा- वनजातकार्पासेनेत्यर्थः, **'अमिलकप्पासाओ वा'** अमिलकार्पासाद्वा कार्पासविशेषात्, कर्तितशणादिसूत्रेणेत्यर्थः **'दीह-सुत्ताइं करेइ'** दीर्घसूत्राणि करोति शणादिसूत्रेण दीर्घसूत्राणि वस्त्रान्तभागस्थितसूत्राणि दीर्घाणि संपादयतीत्यर्थः तथा **'करेंतं वा साइज्जइ'** कुर्वन्तं वा स्वदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति । एव शणादिना सूत्राणि संपादयतः श्रमणस्य सूत्रार्थयोर्हानि-र्भवति । यस्मात् दीर्घसूत्रनिर्माणे एव समयस्य व्यतीयमानत्वात् स्वाध्यायार्थं समय एव न मिलति, इत्येवं क्रमेण सूत्रार्थयोर्विस्मरणं जायते। एवं यदि कश्चित् श्रावकादि दीर्घसूत्रं कुर्वतं साधुं पश्यति तदा 'दीर्घसूत्रनिर्माणं गृहिणां कर्म' इति कृत्वा तस्य श्रमणस्य शासनस्य च लघुता भवति । एव तेषु दीर्घसूत्रेषु शुषिरभागे मशकादिजीवानां विनाशोपि जायते इति संयमविराधनमपि भवति । यस्मात् कारणात् दीर्घसूत्रनिर्माणे एते उपर्युक्ता दोषा भवन्ति तस्मात् कारणात् श्रमणः स्वय दीर्घ-सूत्रनिर्माणं न कुर्यात् न वा दीर्घसूत्राणि कुर्वन्तमनुमोदयेदिति । दीर्घसूत्रार्थं यन्त्रादिचालनमावश्यक ततश्च यन्त्रचालनेन वायुकायिका जीवा विनश्यन्ति ततश्च संयमविराधनम्, सयतास्तु वायुविराधना-पेक्षया स्वात्मविराधनमेव वरमिति मन्यन्ते, वायुकायिकविराधने षट्कायानामपि विराधन संभवति तेन संयमविनाशः, सयमविनाशे च सर्वेषां महाव्रतानां विराधनमप्यापद्येत, उक्तं च आचाराङ्गसूत्रे—प्रथमाध्ययने सप्तमोद्देशके प्रथमसूत्रे—'इह संतिगया दविया णावकंखंति जीविउं' इति । इह शान्तिगताः शान्तिमग्ना द्रविका द्रव—सयमस्तद्वन्तः कर्मनिवारणशीलाः संयमिनः जीवितुम् व्यज-नादिना वायुकायिकस्य विराधनेनप्राणान् धारयितुं नावकाङ्क्षन्ति नेच्छन्ति—इत्यर्थः। यस्तु एकजी-वविराधनं करोति स षण्णामपि विराधन करोति । उक्त चाचाराङ्गसूत्रे द्वितीयाध्ययने षष्ठोद्देशके द्वितीयसूत्रे—**'सिया तत्थ एगयरे विप्परामुसइ छसु अन्नयरंमि कप्पइ'** स्यात्तत्रैकतरं विपरामृ-शति षट्सु अन्यतरस्मिन् कल्पते, इति छाया । अय भाव—एककायविराधनायां सत्यां षट्काय विराधना भवति, विस्तरतस्तु तत्रैव विलोकनीयम् । एवं ध्वनिवर्धकयंत्रे (लाउडस्पीकर) इति संप्रति-कालप्रसिद्धे व्याख्यानादिकरणे षट्कायविरा धनं भवतीति, तत्र वायुकायविराधनात् । एवं दीर्घसूत्र-निर्माणे वायुकायिकविराधनासंभवात् सूत्रे दीर्घसूत्रकरणस्य निषेधः कृत इति, तस्मात् वायुकायरक्ष-णार्थं यतना कर्तव्या, अकरणे प्रायश्चित्तप्रसंगात् ॥ सू० २५ ॥

**सूत्रम्—जे भिक्खू सचित्ताइं दारुदंडाणि वा वेणुदंडाणि वा वेत्त-दंडाणि वा करेइ करेंतं वा साइज्जइ ॥ सू० २६ ॥**

छाया— यो भिक्षुः सचित्तान् दारुदंडान् वा वेणुदंडान् वा वेत्रदंडान् वा करोति कुर्वन्तं वा स्वदते ॥सू० २६॥

चूर्णी—'जे भिक्खू सचित्ताइं' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'सचित्ताइं' सचित्तान्–सजीवान् 'दारुदंडाणि वा' दारुदण्डान् वा शिशपादिवृक्षसंपादितदण्डान् इत्यर्थः 'वेणुदंडाणि वा' वेणुदण्डान् वा, तत्र वेणुर्वंशस्तत्सम्बन्धिनो दण्डान् 'वेत्तदंडाणि वा' वेत्रदण्डान् वा तत्र वेत्रम् लताविशेषलक्षणं 'वेंत' 'नेतर' इति लोकप्रसिद्धम्, तस्य वेत्रस्य सचित्तदण्डान् वेत्यर्थः 'करेइ' करोति सचित्तदारुदण्डादीन् स्वयं संपादयतीत्यर्थः तथा 'करेंतं वा साइज्जइ' सचित्तदारुदण्डान् कुर्वन्तं संपादयन्तमन्यमनुमोदते । यो हि भिक्षुः श्रमण सचित्तदारुवंशादिदण्ड स्वयं करोति कुर्वन्तमनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गाऽनवस्थादयो दोषा भवन्तीति ॥ सू० २६॥ एवं 'धरेइ' धरति–हस्ते धारयति ॥सू० २७॥ 'परिभुंजइ' परिभुङ्क्ते अन्यस्मिन् कार्ये परिभोगं करोति, शेष पूर्ववत् ॥सू० २८॥

सूत्रम्—जे भिक्खू चित्ताइं दारुदंडाणि वा वेणुदंडाणि वा वेत्तदंडाणि वा करेइ करेंतं वा साइज्जइ ॥ सू० २९ ॥

छाया—यो भिक्षुः चित्रान् दारुदण्डान् वा वेणुदण्डान् वा वेत्रदण्डान् वा करोति कुर्वन्तं वा स्वदते ॥सू० २९॥

चूर्णी—'जे भिक्खू चित्ताइं' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'चित्ताइं' चित्रान् वर्णयुक्तान् 'दारुदंडाणि वा' दारुदण्डान्, तत्र चित्र. एकवर्णेन नीलपीतादिना वा एकेन वर्णेन अतिशयेनोज्ज्वल, तथा च एकवर्णेन येन केनापि अतिशयेन दारुदण्डान् उज्ज्वलान् 'करोति' इत्यग्रिमेण सम्बन्ध, तथा 'वेणुदंडाणि वा' वेणुदण्डान् वा तत्र वेणुर्वंश, तस्य दण्डान्, तान् वर्णेनोज्ज्वलान् करोति, तथा 'वेत्तदण्डाणि वा' वेत्रदण्डान् वा एकवर्णेनातिशयेनोज्ज्वलान् 'करेइ' करोति स्वयं संपादयति, तथा 'करेंतं वा साइज्जइ' कुर्वन्तं वा संपादयन्तमन्यं श्रमणं स्वदतेऽनुमोदते । यो भिक्षुश्चित्र दारुदण्डं वेणुदण्डं वेत्रदण्डं करोति कुर्वन्तं वा अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्तीति ॥सू०२९॥ एवं 'धरेइ' सू० ३०॥ 'परिभुंजइ' सू०३१॥ व्याख्यानं पूर्ववत् ॥

सूत्रम्—जे भिक्खू विचित्ताइं दारुदंडाणि वा वेणुदंडाणि वा वेत्तदंडाणि वा करेइ करेंतं वा साइज्जइ ॥ सू० ३२ ॥

छाया—यो भिक्षुः विचित्रान् दारुदण्डान् वा वेणुदण्डान् वा वेत्रदण्डान् वा करोति कुर्वन्तं वा स्वदते ॥सू० ३२॥

**चूर्णी**—'जे भिक्खू विचित्ताइं' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः विचित्ताइं विचित्रान् नानावर्णोपेतान् 'दारुदंडाणि' दारुदण्डान् 'वेणुदंडाणि वा' वंशदण्डान् 'वेत्तदंडाणि वा' वेत्रदण्डान् वा 'करेइ' करोति 'करेंतं वा साइज्जइ' कुर्वन्तं वा स्वदतेऽनुमोदते । यः श्रमणः नानावर्णोपेतान् दारुदण्डादिकान् स्वयं करोति कुर्वन्तं वा अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्तीति ॥सू० ३२ ॥ एव 'धरेइ' ॥सू० ३३। 'परिभुंजइ' व्याख्यानं पूर्ववत् ॥सू०३४॥

**सूत्रम्—जे भिक्खू नवणिवेसंसि गामंसि वा जाव संनिवेसंसि वा अणुप्पविसित्ता असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेइ पडिग्गाहेंतं साइज्जइ ॥ सू० ३५॥**

**छाया—यो भिक्षुर्नवनिवेशे ग्रामे वा यावत् संनिवेशे वा अनुप्रविश्याशनं वा पानं वा खाद्य वा स्वाद्यं वा प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० ३५॥**

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'नवणिवेसंसि वा' नवनिवेशे वा—नवतया निवेशः स्थापनं यस्य स नवनिवेशः—तस्मिन् प्रथमतया निवासिते, तादृशे 'गामंसि वा' ग्रामे वा 'जाव संनिवेसंसि वा' यावत् सनिवेशे वा अत्र यावत्—पदेन नगरखेटकर्बटादीनां सग्रहो भवति, एतेषु नवनिवेशितेषु ग्रामादिषु 'अणुप्पविसित्ता' अनुप्रविश्य प्रवेशं कृत्वा, यो हि भिक्षुर्नवनिर्मितग्रामादिषु मध्ये प्रवेशं कृत्वेत्यर्थः 'असणं वा' अशनमाहारादिजातं वा 'पाणं वा' पानं तण्डुलधावनादिकमचित्तजलम् 'खाइमं वा' खाद्यं—द्राक्षाखण्डादिकम् 'साइमं वा' स्वाद्यं लवङ्गादिकम् 'पडिग्गाहेइ' प्रतिगृह्णाति—ग्रहणं करोति 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदते । यो हि श्रमणो नवनिर्मितग्रामादावनुप्रविश्याहारादेर्ग्रहणं करोति समनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्ति तस्मात् कारणात् श्रमणो नवनिर्मितग्रामादिषु प्रविश्य न चतुर्विधाहारादिकं गृह्णीयात् न वा गृह्णन्तमनुमोदयेदिति ।

अयं भाव—नवनिर्मितग्रामादौ प्रविशन्तं श्रमणं दृष्ट्वा भद्रका अनिवसितुकामा अपि एवं विचारयन्ति—अहो भाग्यवशात् साधुः समागतो महन्मङ्गलं जातम्, स्थिरीभूतं च । एवं जानन्ति वदन्ति च—अहो साधुदर्शनं धन्यम्, साधुनाऽत्र प्रथममेव भिक्षाग्रहणं कृतम्, तेन कारणेन ग्रामोपि स्थिरो भविष्यति, वयमपि चात्र सुस्थिरा सन्तो वसिष्यामः, इति कृत्वा ते तत्रागत्य निवसन्ति तेनारम्भप्रवृत्तिः । ततस्ते भद्रका तेषा साधूनामन्येषा वा निमित्तमुद्गमादिदोषदुष्टमाहारादिकं कुर्युः । यश्च अभद्रकः स पुनर्नवनिर्मितग्रामादौ आवासं कर्तुकामोपि प्रथमतः साधुं दृष्ट्वा

अमङ्गलमिति कृत्वा न वासं करोति ततो निवर्तते । अस्थिरे च ग्रामे जाते लोका वदन्ति–कुतोऽस्माकं सुखम् यस्मात् प्रथममेव तु मुण्डशिरसो दृष्टाः भिक्षया लम्भिताश्च, इति तस्यान्येषां च श्रमणानां भक्तादीन् निवारयिष्यन्ति, एवं चान्तरायदोषो भवति । एवं च नवनिर्मितग्रामादौ प्रवेशे दोषा भवन्ति । एवं नवनिर्मितग्रामादौ प्रवेशे कृते सचित्तपृथिव्यादिसंघट्टनादोषः, अप्काय-हरितकायादिसंघट्टनदोषोपि भवेत् तस्मात् कारणात् नवनिर्मितग्रामादौ प्रवेशो न कर्तव्यो न वा प्रविशन्तमनुमोदयेदिति ॥सू० ३५॥

सूत्रम्—जे भिक्खू नवणिवेसंसि अयागरंसि वा तंबागरंसि वा तउआगरंसि वा सीसागरंसि वा हिरण्णागरंसि वा सुवण्णागरंसि वा रयणागरंसि वा वइरागरंसि वा अणुप्पविसित्ता असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥सू० ३६॥

छाया—यो भिक्षुर्नवनिवेशे वा अयआकरे वा ताम्राकरे वा त्रप्वाकरे वा सीसाकरे वा हिरण्याकरे वा सुवर्णाकरे वा रत्नाकरे वा वज्राकरे वा अनुप्रविश्याशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० ३६ ॥

चूर्णी—'जे भिक्खू' इत्यादि । यो भिक्षुः श्रमणः श्रमणी वा इत्यदिना यथा नवनिवेशिते ग्रामादौ प्रविश्य भिक्षाग्रहणनिषेध कृतस्तथैव नवनिवेशिते लोहखन्यादावपि भिक्षाग्रहणनिषेधो ज्ञातव्यः । तथाहि–नवनिवेशिते अयआकरे–लोहखन्यां, एव ताम्राकरे–ताम्रखन्यां, त्रप्वाकरे त्रपु–'जसदा' इति प्रसिद्धो धातुविशेष, तस्य खन्या, सीसाकरे–सीसकनामधातुविशेषखन्यां, हिरण्याकरे–रजतखन्या, सुवर्णाकरे, रत्नाकरे-रत्नखन्या, वज्राकरे वजरत्नखन्या वाऽनुप्रविश्य श्रमणः श्रमणी वाऽशनादिकं गृह्णाति गृह्णन्तं वा स्वदते स दोषभाग् भवति । तत्र गमने सयमात्मविराधनाऽवश्यम्भाविनी, एषा सचित्तत्वात्सयमविराधना । पतनादिसभवेनाऽऽत्मविराधना च भवति । तथा तत्र स्थितानां चौरादिशङ्कासंभवोऽपि स्यात् ॥सू० ३६॥

सूत्रम्—जे भिक्खू मुहवीणियं करेइ करेंतं वा साइज्जइ ॥सू० ३७॥

छाया—यो भिक्षुर्मुखवीणिकां करोति कुर्वन्तं वा स्वदते ॥सू० ३७।

चूर्णी—'जे भिक्खू मुहवीणियं' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'मुहवीणियं करेइ' मुखवीणिकां करोति, तत्र वीणा वाद्यविशेषलक्षणा, तथा च वीणावत् मुखं करोति, वीणया हि मधुरशब्दोऽभिव्यज्यते ततो मुखस्य तथा चेष्टां करोति यथा मुख वीणा-

वद् भवति, तथा 'करेंतं वा साइज्जइ' कुर्वन्त वा स्वदते। यो हि भिक्षु स्वकीयं मुखं कुचेष्टया वीणावत् करोति तमनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति ॥सू० ३७॥ एवं मुखवीणिकाकरणसूत्रवदेवान्यान्यपि दन्तवीणिकाकरणसूत्रत आरभ्य हरितवीणिकाकरणसूत्रपर्यन्तानि एकादश सूत्राणि व्याख्येयानि। तथाहि–'जे भिक्खू दंतवीणियं करेइ' यो भिक्षुर्दन्तवीणिकां करोति॥३८॥ एवम् 'उट्ठवीणियं' ॥३९॥ 'नासावीणियं' ॥४०॥ 'कक्खवीणियं' ॥४१॥ 'हत्थवीणिय' ॥४२॥ 'नहवीणियं' ॥४३॥ 'पत्तवीणियं' ॥४४॥ 'पुप्फवीणियं' ॥४५॥ 'फलवीणिय' ॥४६॥ 'बीयवीणिय' ॥४७॥ 'हरियवीणियं' ॥४८॥ छाया–यो भिक्षुर्दन्तवीणिकां करोति॥३८॥ एवम्- ओष्ठवीणिकाम् ॥३९॥ नासावीणिकाम् ॥४०॥ कक्षावीणिकाम् ॥४१॥ हस्तवीणिकाम् ॥४२॥ नखवीणिकाम् ॥४३॥ पत्रवीणिकाम् ॥४४॥ पुष्पवीणिकाम् ॥४५॥ फलवीणिकाम् ॥४६॥ बीजवीणिकाम् ॥४७॥ हरितवीणिकाम् ॥४८॥ एतानि सूत्राणि मुखवीणिकाकरणसूत्रवद् व्याख्येयानि ॥सू० ४८॥

## सूत्रम्—जे भिक्खू मुहवीणियं वाएइ वाएंतं वा साइज्जइ॥ सू० ४९॥

छाया—यो भिक्षुर्मुखवीणिकां वादयति वादयन्त वा स्वदते ॥सू० ५९॥

चूर्णी– 'जे भिक्खू मुहवीणियं' इत्यादि। 'जे भिक्खू' य कश्चित् भिक्षु श्रमण श्रमणी वा 'मुहवीणिय वाएइ' मुखवीणिकां वादयति मुखं वीणावत् वादयति मुखेन वीणावत् शब्दं करोति, मोह विलक्षणं मधुरशब्दकरणेन जनयति, तथोपशान्तमपि मोहमुदीरयति। तथा 'वाएंत वा साइज्जइ' वादयन्त वा स्वदतेऽनुमोदते। यो हि साधु मुख वीणावद् वादयति वादयन्तं वा अनुमोदते स प्रायश्चित्तभागी भवति, तस्याज्ञाभङ्गादिका दोषा भवन्ति ॥सू०४९॥ एवं मुखवीणिकावादनसूत्रवदेवाऽन्यान्यपि दन्तवीणिकावादनसूत्रत आरभ्य हरितवीणिकावादनसूत्रपर्यन्तानि एकादश सूत्राणि व्याख्येयानि। तथाहि–'जे भिक्खूदंतवीणियं वाएइ' सू० ५०॥ 'ओट्ठवीणिय वाएइ' ॥५१॥ 'नासावीणियं वाएइ' ॥५२॥ 'कक्खवीणियं' वाएइ ॥५३॥ 'हत्थवीणियं वाएइ' ॥५४॥ 'नहवीणिय वाएइ' ॥५५॥ 'पत्तवीणियं वाएइ' ॥५६॥ 'पुप्फवीणियं वाएइ' ॥५७॥ 'फलवीणियं वाएइ' ॥५८॥ 'बीयवीणियं वाएइ' ॥५९॥ 'हरियवीणियं वाएइ' ॥६०॥ छाया–यो भिक्षुर्दन्तवीणिका वादयति ॥सू०५०॥ ओष्ठवीणिकां वादयति॥५१॥ नासावीणिकां वादयति ॥५२॥ कक्षावीणिकां वादयति ॥५३॥ हस्तवीणिका वादयति ॥५४॥ नखवीणिकां वादयति ॥५५॥ पत्रवीणिकां वादयति ॥५६॥ पुष्पवीणिकां वादयति॥५७॥ फलवीणिकां वादयति॥५८॥ बीजवीणिका वादयति ॥५९॥ हरितवीणिकां वादयति ॥६०॥ एतानि सूत्राणि मुखवीणिकावादनसूत्रवद् व्याख्येयानि ॥सू० ६०॥

**सूत्रम्—एवं अण्णयराणि वा तहप्पगाराणि वा अणुदिन्नाइं सद्दाइं उदीरेइ उदीरेंतं वा साइज्जइ ॥ सू० ६१ ॥**

**छाया—एवमन्यतरान् वा तथाप्रकारान् वा अनुदीर्णान् शब्दान् उदीरयति उदीरयन्तं वा स्वदते ॥ सू० ६१ ॥**

चूर्णी—'**एवं अण्णयराणि**' इत्यादि । सम्प्रति प्रकृतप्रकरणमुपसंहरन्नाह—'**एव**'—मित्यादि । '**एवं**' एवं यथोक्तप्रकारेण '**अण्णयराणि वा**' अन्यतरान् वा वीणावादनप्रकारेण अन्यानपि शब्दान् पशुपक्षिसर्पादीनां शब्दान् '**तहप्पगाराणि वा**' तथाप्रकारान् वा तं प्रकारमापन्ना इति तथाप्रकाराः, तान् शब्दान् वादित्रशब्दसमानानन्यानपि '**अणुदिन्नाइं**' अनुदीर्णान् '**सद्दाइं**' शब्दान् '**उदीरेइ**' उदीरयति उच्चारयति, अर्थात् यत् मोहनीयं कर्म उपशमन्त तत् पुनरनेकप्रकारकशब्दोच्चरणेन उदीरयति, तथा '**उदीरेंतं वा साइज्जइ**' उदीरयन्तं वा स्वदते । यो हि श्रमणोऽनेकप्रकारकान् शब्दानुदीरयति त योऽनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्तीति ॥ सू० ६१ ॥

**सूत्रम्—जे भिक्खू उद्देसियं सेज्जं अणुप्पविसइ अणुप्पविसंतं वा साइज्जइ ॥ सू० ६२ ॥**

**छाया—यो भिक्षुरौद्देशिकीं शय्यामनुप्रविशति अनुप्रविशन्तं वा स्वदते ॥ सू० ६२।**

**चूर्णी**—'**जे भिक्खू उद्देसियं**' इत्यादि । '**जे भिक्खू**' यः कश्चिद् भिक्षु श्रमण श्रमणी वा '**उद्देसियं सेज्ज**' औद्देशिकीं शय्याम्-एकं श्रमण श्रमणीं वा उद्दिश्य कृता इति औद्देशिकी, सा चासौ शय्या वसति स्थानकमित्यर्थ तामौद्देशिकीं शय्याम् '**अणुप्पविसइ**' अनुप्रविशति साधुमुद्दिश्य कृतोपाश्रये उपागच्छति, उपाश्रये निवासकरणार्थं य श्रमणः प्रवेश करोति, तथा '**अणुप्पविसंतं वा साइज्जइ**' अनुप्रविशन्त वा स्वदते । य श्रमण औद्देशिकस्थानके उपागच्छति तं योऽन्य श्रमणोऽनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति ॥ सू० ६२ ॥

**सूत्रम्—जे भिक्खू सपाहुडियं सेज्जं अणुप्पविसइ अणुप्पविसंतं वा साइज्जइ ॥ सू० ६३ ॥**

**छाया—यो भिक्षु सप्राभृतिकां शय्यामनुप्रविशति अनुप्रविशन्तं वा स्वदते ६३**

**चूर्णी**—'**जे भिक्खू**' इत्यादि । '**जे भिक्खू**' यः कश्चिद् भिक्षुः '**सपाहुडियं सेज्जं** सप्राभृतिकां शय्याम्, प्राभृतम्-उपहार, यत्र कर्म प्राभृतं भवति कर्मण आगमनं भवति तेन सहिता या सा सप्राभृतिका, यस्यां वसतौ छादनलेपनभूमिकर्मादिक क्रियते तादृशीं शय्यां वसतिम्, यद्वा प्राघूर्णकानां निवासाय कियत्कालार्थं दत्ता साऽपि वसतिरुपचारात् सप्राभृतिका प्रोच्यते, तादृशीं शय्यां वसतिं स्थानकमित्यर्थं '**अणुप्पविसइ**' अनुप्रविशति एतादृशोपाश्रये निवासार्थमागच्छति '**अणुप्पविसंतं वा साइज्जइ**' अनुप्रविशन्तं वा स्वदते । यो हि भिक्षुः सप्राभृतकं स्थानकं निवासार्थमागच्छति तमनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति । यस्मात् कारणात् सप्राभृतिकावसतौ निवासकरणे एते पूर्वोक्ता दोषा भवन्ति तस्मात् कारणात् श्रमणः सप्राभृतकस्थानके निवास न कुर्यात्, न वा सप्राभृतकस्थानके निवसन्तं श्रमण मनुमोदयेदिति ॥ सू० ६३ ॥

## सूत्रम्—जे भिक्खू सपरिकम्मं सेज्जं अणुप्पविसइ अणुप्पविसंतं वा साइज्जइ ॥ सू० ६४ ॥

**छाया—यो भिक्षुः सपरिकर्मां शय्यामनुप्रविशति अनुप्रविशन्तं वा स्वदते ॥सू०६४॥**

**चूर्णी**—'**जे भिक्खू**' इत्यादि । '**जे भिक्खू**' यः कश्चिद् भिक्षुः '**सपरिकम्मं सेज्जं**' '**अणुप्पविसइ**' सपरिकर्मा शय्याम् अनुप्रविशति, तत्र सपरिकर्मा-परिकर्मसहिता लिप्ता घृष्टा मृष्टा धवलिता भवेत्, यत्र निवासकरणेन मूलगुणोत्तरगुणानां विघातो जायते, अथवा यस्यां वसतौ साधुमुद्दिश्यानुद्दिश्य वा कश्चित् धावनघर्षणलेपनादिक चित्रकर्मादिक वा संपादितं भवेत् तादृशी वसतिः सपरिकर्मा शय्या कथ्यते । तामनुप्रविशति तत्र निवास करोति, तथा '**अणुप्पविसंतं वा साइज्जइ**' अनुप्रविशन्तं वा स्वदते । यो हि भिक्षुः सपरिकर्मवसतौ निवासं करोति तं योऽनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति ॥ सू० ६४ ॥

## सूत्रम्—जे भिक्खू 'णत्थि संभोगवत्तिया किरिय'–त्ति वयइ वयंतं वा साइज्जइ ॥ सू० ६५ ॥

**छाया—यो भिक्षुः 'नास्ति संभोगप्रत्यया क्रिया' इति वदति वदन्तं वा स्वदते ॥६५॥**

**चूर्णी**—'**जे भिक्खू**' इत्यादि । '**जे भिक्खू**' यः कश्चिद् भिक्षुः '**णत्थि संभोगवत्तिया किरिय'–त्ति वयइ**' नास्ति संभोगप्रत्यया क्रियेति वदति । तत्र नास्त्ययं प्रतिषेधः, '**संभोग**' इत्यत्र संशब्दः एकीभावे भुजधातुः पालनाभ्यवहरणार्थकः, ततश्च एकत्र भोजनमित्यर्थः, एकमण्डल्या-

मुपविश्याहारादिकरणम्, ततः असमानसामाचारीकैरपि सहाहारादिकरणे संभोगप्रत्ययकारणिका क्रिया कर्मबन्धो न भवति, इत्येवप्रकारेण यो वदति। अत्र 'संभोग'-शब्देन द्वादशप्रकारक-संभोगो ज्ञातव्यः, येन साधुना सह एकत्र भोजनादिव्यवहारो न भवेत्तेन, अथवा यः विरुद्धसामा-चारीकस्तेन सह भोजनादिक्रियां करोतु न तत्र कोऽपि कर्मबन्ध, इत्येव यो वदति, तथा **'वयंतं वा साइज्जइ'** वदन्तं वा स्वदते। यो हि भिक्षु 'संभोगकारणक कर्मबन्धो न भवति' एवं वदति, तमनुमोदते च स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गानवस्थामिथ्यात्वादिका दोषा भवन्ति तस्मात् संभोगप्रत्यया क्रिया न भवतीत्येव न वदेत् ॥सू०६५॥

## सूत्रम्—जे भिक्खू वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं वा अलं थिरं धुवं धारणिज्जं पलिच्छिंदिय पलिच्छिंदिय परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ॥ सू० ६६ ॥

**छाया—यो भिक्षुर्वस्त्रं वा प्रतिग्रहं वा कम्बलं वा पादप्रोञ्छनकं वा अलं स्थिरं ध्रुवं धारणीयं प्रतिच्छिद्य प्रतिच्छिद्य परिष्ठापयति परिष्ठापयन्तं वा स्वदते ॥ सू० ६६ ॥**

चूर्णी—**'जे भिक्खू'** इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षु निरवद्यभिक्षणशीलः श्रमणः श्रमणी वा **'वत्थं वा'** वस्त्र वा—क्षौमिकं कार्पासिकं वा **'पडिग्गहं वा'** प्रतिग्रहं वा—पात्रं वा **'कंबलं वा'** कम्बलं वा—ऊर्णादिनिष्पन्न **'पायपुंछणं वा'** पादप्रोञ्छनकं वा—रजोहरणमित्यर्थः, **'अलं थिरं धुवं'** तत्र अलं कार्यकरणे पर्याप्तं समर्थमपि, स्थिरम् यथावस्थित, ध्रुवं चिरकालपर्यन्त-वर्तनयोग्य **'धारणिज्जं'** धारणीय—धारणयोग्यं कार्यकरणयोग्यमपि वस्त्रादिकम् **'पलिच्छिंदिय-पलिच्छिंदिय'** प्रतिच्छिद्य प्रतिच्छिद्य हस्तेन छुरिकादिना वा खण्डं खण्ड कृत्वा **'परिट्ठवेइ'** परिष्ठापयति—कार्यक्षममपि वस्त्रादिकं हस्तेन शस्त्रादिना वा छित्त्वा भूमौ परिष्ठापयति निक्षिपति तथा **'परिट्ठवेंतं वा साइज्जइ'** परिष्ठापयन्त वा स्वदते, तमनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति। यस्मादेते दोषा भवन्ति तस्मात् कारणात् श्रमणः श्रमणी वा कार्यकरणक्षमं वस्त्रादिक छित्वा न परिष्ठापयेत, न वा परिष्ठापयन्तमनुमोदयेदिति ॥सू०६६॥

## सूत्रम्—जे भिक्खू लाउयपायं वा दारुपायं वा मट्टियापायं वा अलं थिरं धुवं धारणिज्जं पलिब्भिंदिय पलिब्भिंदिय परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ सू० ६७॥

**छाया—यो भिक्षुरलाबुकपात्र वा दारुपात्रं वा मृत्तिकापात्र वा अलं स्थिरं ध्रुवं धारणीयं परिभिद्य परिभिद्य परिष्ठापयति परिष्ठापयन्त वा स्वदते ॥ सू० ६७ ॥**

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'लाउयपायं वा' अलाबुकपात्रं 'अलाबु' इति तुम्बिकेति लोकप्रसिद्धं, तस्य पात्रम् 'दारुपायं वा' दारुपात्रं वा–काष्ठपात्रमित्यर्थः 'मट्टियापायं वा' मृत्तिकापात्रं वा मृण्मय भाजनमित्यर्थः 'अलं' अलम्–अखण्डम् 'थिरं' स्थिरं दृढ़ 'धुवं' ध्रुव बहुकालपर्यन्तपरिभोगयोग्यं 'धारणिज्जं' धारणीयं धारयितु योग्य न तु त्यागयोग्यम् , एतावता पात्राणां परिष्ठापनाभावे कारणं प्रदर्शितम् , एतादृशं कार्यक्षममपि अलाबुपात्रादिकम् 'पलिभिंदिय पलिभिंदिय' परिभिद्य परिभिद्य प्रस्फोटच प्रस्फोटचेत्यर्थः 'परिट्ठवेइ' परिष्ठापयति पात्राणि चूर्णीकृत्य भूमौ निक्षिपतीत्यर्थः, तथा 'परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्त वा स्वदते । यः श्रमणः कार्यक्षममपि अलाबुपात्रादिकं खण्डीकृत्य परिष्ठापयति, तमनुमोदते च स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गानवस्थामिथ्यात्वसयमविराधनादिका दोषाश्चापि भवन्ति, यस्मात्कारणात् कार्यक्षमानामपि पात्राणां खण्डीकृत्य परिष्ठापने परिष्ठापयितुरनुमोदने च पूर्वोक्ता दोषा भवन्ति, तस्मात् कारणात् श्रमणः अलाबुपात्रादिक कार्यक्षमं चूर्णीकृत्य न परिष्ठापयेत् , न वा परिष्ठापयन्तमनुमोदयेदिति ॥सू० ६७॥

## सूत्रम्—जे भिक्खू दंडगं वा लट्ठियं वा अवलेहणियं वा वेणसूइयं वा पलिभंजिय पलिभंजिय परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥ सू० ६८ ॥

छाया – यो भिक्षुः दण्डक वा यष्टिकां वा अवलेहनिकां वा वेणुसूचिकां वा परिभज्य परिभज्य परिष्ठापयति परिष्ठापयन्त वा स्वदते ॥ सू० ६८ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु श्रमणः श्रमणी वा 'दंडगं वा' दडक–दारुवेणुप्रभृतिदण्डं वा 'लट्ठियं वा' यष्टिकां वा 'अवलेहणियं वा' अवलेहनिका वा तत्र अवलेहनिका चरणलग्नकर्दमनिसारणाय वंशादिनिर्मितक्षुरिकादिरूपा, ताम् 'वेणुसूइयं वा' वेणुसूचिका वा 'पलिभंजिय पलिभंजिय' परिभज्य परिभज्य त्रोटयित्वा त्रोटयित्वेत्यर्थ 'परिट्ठवेइ' परिष्ठापयति, तथा 'परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्तं वा स्वदते । यो हि भिक्षुर्दण्डादिकं त्रोटयित्वा परिष्ठापयति, तं वा योऽनुमोदते स प्रायश्चित्तभागी भवति तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति ॥सू० ६८॥

## सूत्रम्—जे भिक्खू अइरेगपमाणं रयहरणं धरेइ धरेंतं वा साइज्जइ ॥ सू० ६९ ॥

छाया – यो भिक्षुरतिरेकप्रमाणं रजोहरणं धरति धरन्तं वा स्वदते ॥ सू० ६९ ॥

चूर्णीः—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'अइरेगपमाणं' अतिरेकप्रमाणम् 'रयहरणं' रजोहरणम्, रजोहरणस्य मानमित्थम्—तथाहि—गमनसमये अधोमुखतामन्तरेणैव सुखतो भूमेः प्रमार्जनं कर्तुं शक्नोति तावत्प्रमाणको दण्ड, तद्घटितरजोहरणं हस्तिपदप्रमाणक शास्त्रसंमतम्, एतस्मादधिकमल्पं वा प्रमाणम् रजोहरणस्यातिरेकप्रमाणम्। अथवा द्वात्रिंशदङ्गुलप्रमाणो दण्डः, अष्टाङ्गुलप्रमाणाफली, ताश्च जघन्यतः सार्द्धशतसङ्ख्यकाः, मध्यमत ऊनशतद्वयसंख्यकाः, उत्कृष्टत शतद्वयसंख्यका फलिकाः, एतादृश भूमिकर्मकरणसमर्थम् भवभ्रमणकारणस्य कर्मरजसो हरणे समर्थं रजोहरणं धर्त्तव्यम्, इतोधिकप्रमाणकं न्यूनप्रमाणकं वा रजोहरणमतिरेकप्रमाणरजोहरणमिति कथ्यते। द्रव्यभावभेदेन द्विप्रकारकरजसो हरणं करोतीति रजोहरणमिति व्युत्पत्तेः। तत् 'धरेइ' एतादृशप्रमाणतोऽतिरेकप्रमाणं रजोहरणं धरति, तथा 'धरेंतं वा साइज्जइ' धरन्तं वा स्वदते। यो हि भिक्षुरतिरेकप्रमाणकं रजोहरणं धरति धरन्तं वा योऽनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति तस्मात् कारणादतिरेकप्रमाणकं रजोहरणं न धरेत् न वा धरन्तं श्रमणं कथं कथमपि अनुमोदयेदिति ॥ सू० ६९ ॥

## सूत्रम्—जे भिक्खू सुहुमाइं रयहरणसीसाइं करेइ करेंतं वा साइज्जइ ॥ सू० ७०॥

छाया—यो भिक्षुः सूक्ष्माणि रजोहरणशीर्षाणि करोति कुर्वन्तं वा स्वदते ॥ ७०॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'सुहुमाइं' सूक्ष्माणि श्लक्ष्णानि शोभार्थम् 'रयहरणसीसाइं' रजोहरणशीर्षाणि-रजोहरणस्य शीर्षाणि फलिकास्तदग्रभागान् 'करेइ' करोति संपादयति 'करेंतं वा साइज्जइ' कुर्वन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ७० ॥

## सूत्रम्—जे भिक्खू रयहरणस्स एक्कं बंधं देइ देंतं वा साइज्जइ ॥७१॥

छाया—यो भिक्षुः रजोहरणस्यैकं बन्धं ददाति ददतं वा स्वदते ॥ सू० ७१ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रयहरणस्स एक्कं बंधं देइ' रजोहरणस्यैकं बन्धनं ददाति रजोहरणस्योपरि निशीथिकासूत्रस्य एकमेव बन्धनं ददाति, अयं भावः—रजोहरणदशानां मध्ये प्रथममेकं बन्धनं दातव्यं, तदनन्तरं द्वितीयं बन्धनं फलिकामध्ये दातव्यम्, तदनन्तरम् तृतीयं बन्धनं रजोहरणस्य दण्डोपरिभागे अङ्गुलत्रयं परित्यज्य देयम्, एतादृशस्थितौ एकमेव बन्धनं ददाति, तमनुमोदते च स प्रायश्चित्तभागी भवति ॥ सू० ७१ ॥

सूत्रम्—जे भिक्खू रयहरणस्य परं तिण्हं बंधाणं देइ देंतं वा साइज्जइ ॥सू० ७२॥

छाया—यो भिक्षुः रजोहरणस्य पर त्रयाणां बन्धानां ददाति ददतं वा स्वदते ॥७२॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु 'रयहरणस्स' रजोहरणस्य 'परं तिण्हं बंधाणं' पर त्रयाणा बन्धानाम् बन्धनत्रयादधिकं बन्धनम् 'देइ' ददाति बन्धनचतुष्कादिना बध्नातीत्यर्थ, 'देंतं वा साइज्जइ' ददतं वा स्वदते। यो हि रजोहरणे बन्धनत्रयादधिकानि चतुः पञ्च वा बन्धनानि ददाति, तं योऽनुमोदते च स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्तीत्यतो रजोहरणे बन्धनत्रयादधिक बन्धन न दद्यात्, तथा ददतं नानुमोदयेत् ॥ सू० ७२ ॥

सूत्रम्—जे भिक्खू रयहरणं अविहीए बंधइ बंधंतं वा साइज्जइ ।७३।

छाया—यो भिक्षुः रजोहरणमविधिना बध्नाति बध्नन्तं वा स्वदते ॥ सू० ७३ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य. कश्चिद् भिक्षु 'रयहरणं' रजोहरणम् 'अविहीए बंधइ' अविधिना शास्त्रोक्तविध्यतिक्रमेण बध्नाति बन्धन ददाति तथा 'बंधतं वा साइज्जइ' बध्नन्तं वा स्वदते, अविधिना यो रजोहरणे बन्धन ददाति तमनुमोदते वा स प्रायश्चित्तभागी भवति। यस्मात् अविधिबन्धने पूर्वोक्ता दोषा भवन्ति तस्मात्कारणात् श्रमण कथमपि रजोहरणे अविधिबन्धन न दद्यात्, न वा अविधिना बन्धन ददतमन्यमनुमोदयेदिति ॥ सू० ७३ ॥

सूत्रम्—जे भिक्खू रयहरणं कंडुसगबंधेणं बंधइ बंधंतं वा साइज्जइ।

छाया—यो भिक्षु. रजोहरणं कन्दुकबन्धेन बध्नाति बध्नन्तं वा स्वदते ॥ सू०७४॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षुः 'रयहरणं' रजोहरणम् 'कंडुसगबंधेणं' कन्दुकबन्धनेन, कन्दुकमिति बालाना खेलनोपकरणविशेष. 'दडा' 'बोल' इति प्रसिद्धं, तद्बन्धनसदृशबन्धनेन 'बंधइ' बध्नाति, तथा 'बंधतं वा साइज्जइ' बध्नन्तं बन्धनं कुर्वन्तं वा स्वदते अनुमोदते। य श्रमण कन्दुकबन्धनसदृशबन्धनेन रजोहरण बध्नाति तस्य कठिनबन्धनकरणे पुनर्मोचने विलम्बो भवति तेन सूत्रार्थयोर्हानिर्भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति तस्मात् रजोहरणे तादृशं बन्धन न दातव्य, न वा ददतं कमप्यनुमोदयेदिति ॥ सू० ७४ ॥

सूत्रम्—जे भिक्खू रयहरणं वोसट्ठं धरेइ धरेंतं वा साइज्जइ ॥७५।

छाया—यो भिक्षुः रजोहरणं व्युत्सृष्टं धरति धरन्तं वा स्वदते ॥सू० ७५॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रयहरणं' रजोहरणम् 'वोसट्टं' व्युत्सृष्टं स्वस्माद् अतिदूर—सार्द्धहस्तत्रयात् दूरम्, एतावद्दूरे अवस्थितं रजोहरणम् 'धरेइ' धरति—स्थापयति तथा 'धरेंतं वा साइज्जइ' धरन्तं वा स्वदते अनुमोदते। यो हि भिक्षुरतिदूरे रजोहरणं धरति स्थापयति, अथवा रजोहरणमन्तरेणैव गमनागमनं करोति तदा शरीरोपरि उपकरणोपरि वा पिपीलिकादि आगच्छेत् तत् हस्तादिना निवारणेन पिपीलिकादीनां विराधनं भवति, तथा हस्तेन शरीरकण्डूयने वा जीवविराधनासंभवः, तेन संयमविराधना भवति, तथा कदाचिदकस्मात् कोऽपि विषकीटः शरीरोपरि समापतति तदा रजोहरणाभावे आत्मविराधनाया अपि संभवः। यत इमे दोषा भवन्ति तस्मात् रजोहरणस्य दूरे स्थापनं न कुर्यात्, न वा तथाकर्तुरनुमोदनमपि कुर्यादिति ॥ सू० ७५ ॥

## सूत्रम्—जे भिक्खू रयहरणं अणिसिट्ठं धरेइ धरेंतं वा साइज्जइ॥

छाया—यो भिक्षुः रजोहरणमनिसृष्टं धरति धरन्तं वा स्वदते ॥ सू० ७६ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रयहरणं' रजोहरणम् 'अणिसिट्ठं' अनिसृष्टम् यदनेकस्वामिकं वस्तु तदेकेन दीयमानम् अनिसृष्टमिति कथ्यते, एतादृशं रजोहरणम् 'धरेइ' धरति तादृशरजोहरणस्य धारणं करोति तथा 'धरेंतं वा साइज्जइ' धरन्तं वा स्वदते। यो हि श्रमण अनेकस्वामिकमेकेन दीयमानं रजोहरणं धरति तं योऽनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति। तथा सर्वस्वामिनाऽप्रदत्तस्य ग्रहणे इतरस्वामिना कलहादिरपि भवेत् तस्मात्तादृशं रजोहरणं न धारयेत्, न वा धारयन्तमनुमोदयेदिति सर्वस्वामिदत्तं रजोहरणं ग्राह्यमिति भावः॥ सू० ७६ ॥

## सूत्रम्—जे भिक्खू रयहरणं अहिट्ठेइ अहिट्ठंतं वा साइज्जइ ॥७७॥

छाया—यो भिक्षुः रजोहरणं अधितिष्ठति अधितिष्ठन्तं वा स्वदते ॥ सू० ७७॥

चूर्णी—'जे भिक्खू रयहरणं' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रयहरणं' रजोहरणम् 'अहिट्ठेइ' अधितिष्ठति रजोहरणोपरि उपविशति 'अहिट्ठंतं वा साइज्जइ' अधितिष्ठन्तं वा स्वदते। यो हि रजोहरणोपरि उपविशति तमनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति तस्मात् रजोहरणोपरि उपवेशनं न कर्त्तव्यम्, न वा उपविशन्तं श्रमणमनुमोदयेदिति ॥ सू० ७७ ॥

## सूत्रम्—जे भिक्खू रयहरणं उस्सीसमूले ठवेइ ठवेंतं वा साइज्जइ। ७८।

छाया—यो भिक्षुः रजोहरणम् उच्छीर्षमूले स्थापयति स्थापयन्तं वा स्वदते ॥७८॥

चूर्णी—'जे भिक्खू रयहरणं' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रयहरणं' रजोहरणम् 'उस्सीसमूले ठवेइ' उच्छीर्षमूले स्थापयति शयनसमये मस्तकाधोभागे निदध्यात्

रजोहरणोपरि मस्तकं दत्त्वा शयनं करोतीत्यर्थः, 'ठवेंतं वा साइज्जइ' स्थापयन्तं वा स्वदते। यो हि श्रमणः रजोहरणोपरि मस्तकं दत्त्वा शयनं करोति तं श्रमणं यो भिक्षुरनुमोदते स प्रायश्चित्तभागी भवति तस्मात् रजोहरणोपरि मस्तकं दत्त्वा शयनं न कुर्यात्, न वा तदुपरि मस्तकं दत्त्वा शयनं कुर्वतोऽनुमोदनमेव कुर्यादिति ॥ सू० ७८ ॥

## सूत्रम्—जे भिक्खू रयहरणं तुयट्टेइ तुयट्टेंतं वा साइज्जइ ।७९।

छाया—यो भिक्षुः रजोहरणं त्वग्वर्तयति त्वग्वर्तयन्तं वा स्वदते ॥ सू० ७९ ॥

चूर्णी—'जे भिक्खू रयहरणं' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रयहरणं' रजोहरणम् 'तुयट्टेइ' त्वग्वर्तयति रजोहरणोपरि शयानस्तत्रैव त्वग्वर्तनं पार्श्वपरावर्तनं करोति इतस्ततः त्वचः परावर्तनं करोतीत्यर्थः, 'तुयट्टेंतं वा साइज्जइ' त्वग्वर्तयन्तं वा स्वदते अनुमोदते। यो हि श्रमणः रजोहरणोपरि शयनं कृत्वा तदुपरि पार्श्वपरिवर्तनं करोति तं श्रमणं यः श्रमणः अनुमोदते स प्रायश्चित्तभागी भवति, तस्मात् कारणात् रजोहरणोपरि त्वग्वर्तनं न कुर्यात्, न वा त्वग्वर्तयन्तमनुमोदयेदिति ॥ सू० ७९ ॥

## सूत्रम्—तं सेवमाणे आवज्जइ मासियं परिहारट्ठाणं उग्घाइयं ।८०॥

॥ निसीहज्झयणे पंचमो उद्देसो समत्तो ॥

छाया—तत्सेवमानः आपद्यते मासिकं परिहारस्थानमुद्घातिकम् ॥ सू० ८० ॥

निशीथाध्ययने पञ्चम उद्देशकः समाप्तः ॥५॥

चूर्णी—'तं सेवमाणे' इत्यादि। 'तं सेवमाणे' तत् सेवमानः सचित्तवृक्षमूलावस्थानादारभ्य रजोहरणोपरि त्वग्वर्तनपर्यन्तकथितप्रायश्चित्तस्थानेषु मध्ये यत् किमप्येकं प्रायश्चित्तस्थानं प्रतिसेवमानः 'आवज्जइ' आपद्यते प्राप्नोति 'मासियं परिहारट्ठाणं उग्घाइयं' मासिकं परिहारस्थानमुद्घातिकम् लघुमासिकं प्रायश्चित्तं प्राप्नोतीत्यर्थः। अयं भावः—पञ्चमोद्देशके यानि प्रायश्चित्तस्थानानि प्रोक्तानि तेषु एकमनेकं वा प्रायश्चित्तस्थानं यो भिक्षुः सेवते स लघुचातुर्मासिकं प्रायश्चित्तं लभते ॥सू० ८०॥

इति श्री-विश्वविख्यात-जगद्वल्लभ-प्रसिद्धवाचक-पञ्चदशभाषाकलितललितकलापालापक-प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक-वादिमानमर्दक-श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-"जैनशास्त्राचार्य"-पदभूषित-कोल्हापुरराजगुरु-बालब्रह्मचारि-जैनाचार्य-जैनधर्म दिवाकर-पूज्यश्री-घासीलालव्रति-विरचितायां "निशीथसूत्रस्य" चूर्णिभाष्यावचूरिरूपायां व्याख्यायां पञ्चमोद्देशकः समाप्तः ॥५॥



## ॥ षष्ठोद्देशकः ॥

( मातृग्रामप्रकरणम् )

पञ्चमोद्देशकं व्याख्याय साम्प्रतमवसरप्राप्तं षष्ठोद्देशं व्याख्यातुमाह,—तत्र पञ्चमोद्देशकेन सह षष्ठोद्देशकस्य कः सम्बन्धः ? इत्यत्राह भाष्यकारः—'उस्सीसं' इत्यादि ।

भाष्यम्— उस्सीसं पुव्वकहियं, तेण रत्तिं च सुव्वई साहू ।
रत्तीए मोहुदओ होइ जया तस्स पच्छित्तं ॥१॥

छाया—उच्छीर्षं पूर्वं कथितं, तेन रात्रौ च स्वपिति साधुः ।
रात्रौ मोहोदयो भवति यदा तस्य प्रायश्चित्तम् ॥१॥

अवचूरिः— पञ्चमोद्देशकस्यान्तिमसूत्रे रजोहरणेन उच्छीर्षकरणस्य निषिद्धत्वेन प्रतिपादितम् एतावता रात्रौ शयनं कथितं, दिवसे तु साधोः शयनं न कल्पते । उच्छीर्षेण शयने रात्रौ साधोर्यदा मोहोदयो भवेत् तेन स मैथुनप्रतिज्ञया मातृग्रामं—स्त्रियं विज्ञपयेत् तस्यात्र षष्ठोद्देशके प्रायश्चित्तं निरूपयिष्यते, अयमेव पञ्चमोद्देशकेन सह षष्ठोद्देशकस्य सम्बन्धोऽस्ति ॥१॥

अनेन सम्बन्धेनायातस्यास्य षष्ठोद्देशकस्येदमादिसूत्रम्—'जे भिक्खू माउग्गामं' इत्यादि ।

**सूत्रम्—जे भिक्खू माउग्गामं मेहुणवडियाए विण्णवेइ विणवेंतं वा साइज्जइ ॥ सू० १ ॥**

छाया—यो भिक्षुर्मातृग्रामं मैथुनप्रतिज्ञया विज्ञपयति विज्ञपयन्तं वा स्वदते ॥ सू० १ ॥

चूर्णी—'जे भिक्खू' इत्यादि । यः कश्चिद् भिक्षुः—श्रमण श्रमणी वा 'माउग्गामं' मातृग्राम—मातुः समानः ग्रामः इन्द्रियसमुदाय इति मातृग्राम इति षष्ठीतत्पुरुषस्तम् । देशविशेषभाषया 'मातृग्राम' शब्देन स्त्री गृह्यते तेन 'स्त्रियम्' इत्यर्थो बोध्यः, सर्वाः स्त्रियो भिक्षुणा मातृवद् द्रष्टव्या अतोऽत्र मातृग्रामशब्देन निर्देशः कृत इति भावः । 'मेहुणवडियाए' मैथुनप्रतिज्ञया-मैथुनवाञ्छया मिथुनस्य स्त्रीपुरुषस्य कर्म मैथुनम् अब्रह्मचर्यमित्यर्थः, तस्य वाञ्छया स्त्रियम् 'विण्णवेइ' विज्ञपयति—मैथुनार्थं स्त्रियं प्रार्थयतीत्यर्थः 'विण्णवेंतं वा साइज्जइ' विज्ञपयन्तं मैथुनार्थं स्त्रियं प्रार्थयन्तं स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति, तथा प्रार्थयितुः प्रार्थयितारमनुमोदयितुश्चाज्ञाभङ्गादिका दोषा अपि भवन्तीति ॥ सू० १ ॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए हत्थकम्मं करेइ करेंतं वा साइज्जइ ॥ सू० २ ॥**

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया हस्तकर्म करोति कुर्वन्तं वा स्वदते ॥२॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः 'माउग्गामस्स' मातृग्रामस्य स्त्रियाः 'मेहुणवडियाए' मैथुनप्रतिज्ञया मैथुनवाञ्छया 'हत्थकम्मं' हस्तकर्म–हस्तेन संपाद्यमान कर्म क्रिया व्यापारः, तत् करोति स्वयम् तथा 'करेतं वा साइज्जइ' कुर्वन्तं वा स्वदते। यो हि मैथुनेच्छया हस्तकर्म करोति तमनुमोदयति स प्रायश्चित्तमाप्नोति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति। यस्मात् हस्तकर्मकरणेऽनुमोदने चैते दोषा भवन्ति तस्मात्कारणात् स्वयं श्रमणो हस्तकर्म न कुर्यात् न वा हस्तकर्म कारयेत् कुर्वन्तमनुमोदयेत्, चतुर्थमहाव्रतविराधनाया अवश्यम्भावादिति ॥सू० २॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अंगादाणं कट्ठेण वा किलिंचेण वा अंगुलियाए वा सलागाए वा संचालेइ संचालेंतं वा साइज्जइ ॥ सू० ३ ॥

छाया— यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अङ्गादानं काष्ठेन वा किलिञ्चेन वा शलाकया वा संचालयति संचालयन्तं वा स्वदते ॥ सू० ३ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य–स्त्रियाः 'मेहुणवडियाए' मैथुनवाञ्छया 'अंगादाणं' अङ्गादानम्, तत्राङ्गं शरीरं तस्य आदानं प्रसूतिरित्यर्थः, अङ्गादानम्–अङ्गस्योत्पत्तिर्भवति यस्मात् तत् अङ्गादानम्, यद्यपि दाधातुर्दानार्थकस्तथापि धातोरनेकार्थत्वादुपसर्गवत्त्वात् आर्षप्रकरणबलाच्चात्रोत्पत्तिरर्थो भवतीति। अङ्गादानं मेढ्रं स्त्रीपुरुषयोश्चिह्नविशेषमित्यर्थः, एतादृशं स्त्रीणां स्वस्य वा अङ्गादानम् मोहनीयकर्मोदयात् 'कट्ठेण वा' काष्ठेन शिंशपादिदारुदण्डेन वा 'किलिंचेण' वा किलिञ्चेन वा तत्र किलिञ्चो वंशकर्परी, तादृशेन किलिञ्चेन वा 'अंगुलियाए वा' अङ्गुल्या वा 'सलागाए वा' शलाकया वा लौहादिशलाकया वेत्रशलाकया वा 'संचालेइ वा' संचालयति 'संचालेंतं वा साइज्जइ' संचालयन्तं वा स्वदते। यो हि अङ्गादानम् काष्ठादिना संचालयति तं योऽनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्ति ॥ सू० ३ ॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अंगादाणं संवाहेज्ज वा पलिमद्देज्ज वा संवाहेंतं वा पलिमद्देंतं वा साइज्जइ ॥सू० ४॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अङ्गादानं संवाहयेद्वा परिमर्दयेद्वा संवाहयन्तं वा परिमर्दयन्तं वा स्वदते ॥ सू० ४ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य-यस्याः कस्याश्चित् स्त्रियाः 'मेहुणवडियाए' मैथुनप्रतिज्ञया-मैथुनेच्छयेत्यर्थः अंगादाणं' अङ्गादानं 'संवाहेज्ज वा' संबाहयेद्वा 'पलिमद्देज्ज वा' परिमर्दयेद् वा 'संवाहेंतं वा' सबाहयन्त वा एकवार मर्दयन्तम् 'पलिमद्देंतं वा' परिमर्दयन्तं वा अनेकवारं परिमर्दनं कुर्वन्तं वा 'साइज्जइ' स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ४ ॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अंगादाणं तेल्लेण वा घएण वा वसाए वा नवणीएण वा अब्भंगेज्ज वा मक्खेज्ज वा अब्भंगेंतं वा मक्खेंतं वा साइज्जइ ॥ सू० ५ ॥

छाया— यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अङ्गादानं तैलेन वा घृतेन वा वसया वा नवनीतेन वा अभ्यङ्जयेद्वा म्रक्षयेद्वा अभ्यङ्जयन्तं वा म्रक्षयन्त वा स्वदते ॥ सू० ५॥

चूर्णी— 'जे भिक्खू माउग्गामस्स' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षुः श्रमणः 'माउग्गामस्स' मातृग्रामस्य-स्त्रिया 'मेहुणवडियाए' मैथुनवाञ्छया 'अंगादाणं' अङ्गादानम् 'तेल्लेण वा' तैलेन वा तिलसर्षपादिजातेन 'घएण वा' घृतेन वा 'वसाए वा' वसया वा-चर्वीति-लोकप्रसिद्धया 'णवणीएण वा' नवनीतेन वा 'मक्खन' इति लोकप्रसिद्धेन 'अब्भंगेज्ज वा' अभ्यञ्जयेद्वा एकवार तैलादिना मर्दयेत् 'मक्खेज्ज वा' म्रक्षयेद्वा अनेकवारं विशेषतो वा मर्दयेत् 'अब्भंगेंतं वा मक्खेंत वा साइज्जइ' अभ्यञ्जयन्तं वा म्रक्षयन्तं वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० ५ ॥

सूत्रम्–जे भिक्खू माउग्गामस्स मेहुणवडियाए अंगादाणं कक्केण वा लोद्धेण वा पउमचुण्णेण वा सिणाणेण वा ण्हाणेण वा चुण्णेहिं वा वण्णेहिं वा उव्वट्टेइ वा परिवट्टेइ वा उव्वट्टेंतं वा परिवट्टेंतं वा साइज्जइ ॥

छाया— यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अङ्गादान कल्केन वा लोध्रेण वा पद्मचूर्णेन वा स्नपनेन वा स्नानेन वा चूर्णैर्वा वर्णैर्वा उद्वर्तयति वा परिवर्तयति वा उद्वर्तयन्तं वा परिवर्तयन्त वा स्वदते ॥ सू० ६ ॥

चूर्णी— 'जे भिक्खू माउग्गामस्स' इत्यादि । 'जे भिक्खू' य. कश्चिद् भिक्षु· 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनवाञ्छया 'अंगादाणं' अङ्गादानं 'कक्केण वा' कल्केन वा-अनेकद्रव्यसंयोगेन क्रियमाणो वस्तुविशेष·, तेन 'लोद्धेण वा' लोध्रेण वा 'पउमचुण्णेण वा' पद्मचूर्णेन वा 'ण्हाणेणवा' स्नपनेन वा, तत्र स्नपनं पिष्टादिनिर्मितोद्वर्त्तनद्रव्यमिश्रितजलेन सिञ्चनं,

तैलं, 'सिणाणेण वा' स्नानेन वा, तत्र स्नानं-सुगन्धद्रव्यसमुदायनिर्मितवस्तुविशेषमिश्रितजलेन 'साबू' इति लोकप्रसिद्धवस्तुमिश्रितजलेन वा धावनम्, 'चुण्णेहिं वा' चूर्णैर्वा चन्दन चूर्णादिभिः 'वण्णेहिं वा' वर्णकैर्वा सुगन्धचूर्णैरित्यर्थः, एतेषु अन्यतरेण द्रव्येण 'उव्वट्टेइ' उद्वर्तयति एकवारमुद्वर्तनं करोति 'परिवट्टेइ वा' परिवर्तयति अनेकवारमुद्वर्तनं करोति, तथा 'उव्वट्टेंतं वा' उद्वर्तयन्तं वा एकवारमुद्वर्तनं कुर्वन्तं वा 'परिवट्टेंतं वा' परिवर्तयन्तम् अनेकवारमुद्वर्तनं कुर्वन्तं वा 'साइज्जइ' स्वदतेऽनुमोदनं करोति स प्रायश्चित्तभागी भवति। यथा खड्गादिशस्त्रस्य मर्दनेन हस्तस्य छेदो भवति तथैवाङ्गादानस्योद्वर्तनादिकरणेन सयमस्य च्छेदो भवतीति ॥ सू० ६॥

## सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अंगादाणं सीओदगवियडेण वा उसिणोदगवियडेण वा उच्छोलेज्ज वा पधोवेज्ज वा उच्छोलेंतं वा पधोवेंतं वा साइज्जइ ॥ सू० ७॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अङ्गादानं शीतोदकविकटेन वा उष्णोदकविकटेन वा उच्छोलयेद्वा प्रधावेद्वा उच्छोलयन्तं वा प्रधावन्तं वा स्वदते ॥ सू० ७॥

चूर्णी—'जे भिक्खू माउग्गामस्स' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः, 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया 'अंगादाणं' अङ्गादानम् 'सीओदगवियडेण वा' शीतोदकविकटेन वा, तत्र विकटेन व्यपगतजीवेन अचित्तशीतजलेनेत्यर्थः, 'उसिणोदगवियडेण वा' उष्णोदकविकटेन वा अचित्तेन उष्णजलेनेत्यर्थः 'उच्छोलेज्ज वा' उच्छोलयेद्वा एकवारम् 'पधोवेज्ज वा' प्रधावेद्वा अनेकवारम् 'उच्छोलेंतं वा' उच्छोलयन्तं एकवारम् 'पधोएंतं वा' प्रधावन्तं वा अनेकवारं 'साइज्जइ' स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याङ्गाभङ्गादिका दोषाश्चापि भवन्ति। अत्र दृष्टान्तो यथा—कस्यचित् पुरुषस्य नेत्ररोगो जातस्ततः स नेत्रं घृष्ट्वा घृष्ट्वा जलेन वारं वारं प्रक्षालयति तेन तस्य नेत्रं प्रणष्टम्, एवमेवाङ्गादानस्योच्छोलन प्रधावनेन सयमः प्रणश्यतीति ॥ सू० ७॥

## सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अंगादाणं णिच्छल्लेइ णिच्छल्लेंतं वा साइज्जइ ॥ सू० ८॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अङ्गादानं निश्छल्लयति निश्छल्लयन्तं वा स्वदते ॥ सू० ८॥

चूर्णी—'जे भिक्खू माउग्गामस्स' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया 'अंगादाणं' अङ्गादानम् 'णिच्छल्लेइ' निश्छल्लयति छल्लीरहितं करोति, तत्र निश्छल्लनमङ्गादानस्य छल्ल्याः—त्वचोऽपनयनं ततश्चाङ्गादानस्य

त्वचोऽपनयन करोति—अङ्गादानस्य त्वग् अपनीय मणिं निष्कासयतीत्यर्थः 'णिच्छल्लेंतं वा साइज्जइ' निश्छल्लयन्तं वा त्वगपनयनं कुर्वन्तमनुमोदते स प्रायश्चित्तभागी भवति । अत्र दृष्टान्तो यथा—कश्चित् पुरुषः सुखसुप्तस्याऽजगरस्य मुखं स्फाटयति स कुद्धेन तेन निर्गलितो म्रियते, एवमङ्गादानस्य त्वगपनयनं कुर्वतः साधोश्चारित्रं विनश्यतीति ॥ सू० ८ ॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अंगादाणं जिग्घइ जिग्घंतं वा साइज्जइ ॥ सू० ९ ॥**

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अङ्गादानं जिघ्रति जिघ्रन्तं वा स्वदते ॥ सू० ९ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया 'अंगादाणं' अङ्गादानम् 'जिग्घइ' जिघ्रति-नासिकया आघ्रातीत्यर्थः 'जिग्घंत वा साइज्जइ' जिघ्रन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ९ ॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अंगादाणं अन्नयरंसि अचित्तंसि सोयंसि अणुप्पवेसेत्ता सुक्कपोग्गले निग्घाएइ निग्घाएंतं वा साइज्जइ ॥ सू० १० ॥**

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अङ्गादानमन्यतरस्मिन् अचित्ते स्रोतसि अनुप्रवेश्य शुक्रपुद्गलान् निर्घातयति निर्घातयन्त वा स्वदते ॥ सू० १० ॥

चूर्णी—'जे भिक्खू माउग्गामस्स' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया 'अंगादाणं' अङ्गादानम् स्वमेढ्रम् 'अन्नयरंसि' अन्यतरस्मिन् स्रोतस्सु बहुषु मध्ये यस्मिन् कस्मिंश्चिदपि 'अचित्तंसि सोयंसि' अचित्ते निर्जीवे स्रोतसि छिद्रे 'अणुप्पवेसित्ता' अनुप्रवेश्य तत्र प्रविष्टं कृत्वा 'सुक्कपोग्गले' शुक्रपुद्गलान् वीर्यपुद्गलान् 'निग्घाएइ' निर्घातयति—पातयति 'णिग्घाएंतं वा साइज्जइ' निर्घातयन्त वा स्वदते अनुमोदते ॥ सू० १० ॥

**सूत्रम्— जे भिक्खू माउग्गामस्स मेहुणवडियाए अवाउडिं सयं कुज्जा सयं बूया करेंतं वा बूएंतं वा साइज्जइ ॥ सू० ११ ॥**

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अप्रावृतिं स्वयं कुर्यात् स्वयं ब्रूयात् कुर्वन्तं वा ब्रुवन्तं वा स्वदते ॥ सू० ११ ॥

चूर्णी—'जे भिक्खू माउग्गामस्स' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया 'अवाउडिं सयं कुज्जा' अप्रावृतिं वस्त्रा-हरणं नग्नकरणबुद्धया, स्वयं स्वयमेव कुर्यात् यः श्रमणः सुतां स्त्रियं वस्त्ररहिता कुर्यादिति भावः, 'सयं बूया' स्वयं ब्रूयात् नग्नार्थं स्त्रियं कथयेत् मैथुनार्थं प्रार्थनां वा कुर्यात् , तथा 'सयं करेंतं वा सयं बूएंतं वा साइज्जइ' स्वयं स्वयमेव स्त्रिया वस्त्रापहरणं कुर्वन्तं तथा प्रार्थनावचनं ब्रुवन्तं वा श्रमणं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ११ ॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए कलहं कुज्जा कलहं बूया कलहवडियाए बूया कलहवडियाए गच्छइ बूएंतं वा गच्छंतं वा साइज्जइ ॥ सू० १२ ॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया कलहं कुर्यात् कलहं ब्रूयात् कलह-प्रतिज्ञया ब्रूयात् कलहप्रतिज्ञया गच्छति ब्रुवन्तं वा गच्छन्त वा स्वदते ॥ सू० १२ ॥

चूर्णी—'जे भिक्खू माउग्गामस्स' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु 'माउ-ग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया 'कलहं कुज्जा' कलह कुर्यात् मैथुना-स्वीकारे कलहं कामकलहं वा कुर्यात् 'कलहं वा बूया' कलहं वा ब्रूयात् 'यदि त्वं मया सह मैथुनं न सेविष्यसि सदा तव दुःखमुत्पादयिष्यामि' इत्येवंप्रकारकं क्लेशकारि वचनं वदेत् 'कलह-वडियाए बूया' कलहप्रतिज्ञया ब्रूयात्—क्रोधावेशेन वदेत् 'कलहवडियाए गच्छइ' कलहप्रति-ज्ञया कामकलहेच्छया स्त्रीसमीपं गच्छति, तथा 'बूएंतं वा गच्छंतं वा साइज्जइ' ब्रुवन्तं वा गच्छन्तं वा स्वदतेऽनुमोदते, स प्रायश्चित्तभागी भवति ॥ सू० १२ ॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए लेहं लिहइ लेहं लिहावेइ लेहवडियाए वा गच्छइ गच्छंतं वा साइज्जइ ॥ सू० १३ ॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया लेखं लिखति लेखयति लेखप्रतिज्ञया वा गच्छति गच्छन्तं वा स्वदते ॥सू० १३॥

चूर्णी—'जे भिक्खू माउग्गामस्स' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु, 'माउग्गा-मस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया 'लेहं लिहइ' लेखं—प्रेमपत्ररूपं लिखति 'लेहं लिहावेइ' लेखं लेखयति अन्यद्वारा वा लेखं लेखयति 'लेहवडियाए वा गच्छइ' लेखप्रति-ज्ञया—लेखनार्थाय वा बहिर्गच्छति यत्र स्थितेन लेखो निर्विघ्नं लिख्यते एतादृग स्थानं गच्छति, 'गच्छंतं वा साइज्जइ' गच्छन्त वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ।

अत्र शिष्यः पृच्छति-हे गुरो ! भगवता मैथुनसेवनेच्छया साधूनां पत्रलेखनं निषिद्ध तेनाऽन्यकार्यार्थं पत्रलेखनं साधूना कल्पते इति सिद्धम्। आचार्यः प्राह-हे शिष्य ! साधूनां कुत्रापि पत्रादिलेखनं न कल्पते शास्त्रे तस्य निषेधात्। पुनः शिष्यः पृच्छति-हे गुरो ! शास्त्रे तु मैथुनार्थमेव लेखनं प्रतिषिद्ध दृश्यते तदा कथमेवं भवान् कुत्रापि पत्रलेखनं निषेधयति ? । आचार्य प्राह-हे शिष्य ! शास्त्रे मैथुनार्थं यो निषेध कृत तस्योपलक्षणत्वात् सामान्यस्यापि निषेध. सूचित, साधूनां नवकोटे. प्रत्याख्यानात् पत्रादिलिखने नवकोटिविराधनस्यावश्यम्भावात् ॥सू० १३॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए पोसंतं वा पिट्ठंवा सोयंतं वा भल्लायएण उप्पाएइ उप्पाएंतं वा साइज्जइ ॥ सू० १४ ॥**

**छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया पोषान्तं वा पृष्ठान्तं वा स्रोतोऽन्तं वा भल्लातकेन उत्पादयति उत्पादयन्तं वा स्वदते ॥सू० १४॥**

**चूर्णी**—'जे भिक्खू माउग्गामस्स' इत्यादि । 'जे भिक्खू' य. कश्चिद् भिक्षु' 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया 'पोसंतं वा' पोषान्तं वा-सेवनाद् य पुष्यते पुष्टो भवति स पोष, पोषयति मैथुनार्थिन य स पोष. मृगीपद योनिरित्यर्थ, तस्य अन्तम् प्रान्तभागम् 'पिट्ठंतं वा' पृष्ठान्त वा पृष्ठस्य अपानद्वारस्य गुदाया इत्यर्थ अन्तम् भाग 'सोयंतं वा' स्रोतोऽन्त वा तत्र स्रोत -छिद्रविशेष स्त्रिया नाभिकर्णादिकं मैथुनेच्छया 'भल्लायएण' भल्लातकेन-भल्लातकेति औषधिविशेष तेन औषधिविशेषेण-औषधिविशेषलेपेन सौन्दर्यसौगन्ध्यादिकं 'उप्पाएइ' उत्पादयति-करोति 'उप्पाएंतं वा साइज्जइ' उत्पादयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥सू० १४॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए पोसंतं वा पिट्ठंतं वा सोयंतं वा भल्लायएण उप्पाएत्ता सीओदगवियडेण वा उसिणोदगवियडेण वा उच्छोल्लेज्ज वा पधोएज्ज वा उच्छोलेंतं वा पधोएंतं वा साइज्जइ ॥ सू० १५ ॥**

**छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया पोषान्तं वा पृष्ठान्तं वा स्रोतोऽन्त वा भल्लातकेन उत्पाद्य शीतोदकविकटेन वा उष्णोदकविकटेन वा उच्छोलयेद्वा प्रधावेद्वा उच्छोलयन्त वा प्रधावन्तं वा स्वदते ॥सू० १५॥**

**चूर्णी**— 'जे भिक्खू माउग्गामस्स' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया-मैथुनवाञ्छया 'पोसंतं वा' पोषान्तं वा 'पिट्ठंतं वा' पृष्ठान्तं वा 'सोयंतं वा' स्रोतोऽन्तं वा पूर्वनिर्दिष्टस्वरूपम् 'भल्लायएण उप्पाएत्ता'

मल्कातकेन पोषकौषधिविशेषेण सौन्दर्यादिकमुत्पाद्य पुनस्तदपनयनार्थम् 'सीओदगवियडेण वा' शीतोदकविकटेन वा, तत्र विकटेन व्यपगतजीवेनाचित्तेनेत्यर्थः तथा च अचित्तशीतजलेन तथा 'उसिणोदगवियडेण वा' उष्णोदकविकटेन वा—अचित्तोष्णजलेनेत्यर्थः, 'उच्छोलेज्ज वा' उच्छोलयेद्वा एकवारम् 'पधोएज्ज वा' प्रधावेद्वा अनेकवारम् 'उच्छोलेंतं वा पधोएंतं वा साइज्जइ' उच्छोलयन्तं वा प्रधावन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥सू० १५॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए पोसंतं वा पिट्ठंतं वा सोयंतं वा उच्छोलेत्ता पधोवेत्ता अन्नयरेणं आलेवणजाएणं आलिंपेज्ज वा विलिंपेज्ज वा आलिंपंतं वा विलिंपंतं वा साइज्जइ ॥ सू० १६॥

छाया– यो भिक्षुः मातृग्रामस्य मैथुनप्रतिज्ञया पोषान्तं वा पृष्ठान्तं वा स्रोतोऽन्तं वा उच्छोल्य प्रधाव्य अन्यतरेण आलेपनजातेन आलेपयेद् वा विलेपयेद् वा आलेपयन्तं वा विलेपयन्तं वा स्वदते ॥सू० १६॥

चूर्णी – 'जे भिक्खू' इत्यादि । यो भिक्षुः 'माउग्गामस्स' मातृग्रामस्य, 'मेहुणवडियाए' मैथुनप्रतिज्ञया मैथुनेच्छया 'पोसंतं वा पिट्ठंतं वा सोयंतं वा' पोषान्तं पृष्ठान्त स्रोतोऽन्तं वा पूर्वोक्तस्वरूपं 'उच्छोलेत्ता' उच्छोल्य 'पधोवेत्ता' प्रधाव्य प्रक्षाल्य तदनन्तर 'अन्नयरेणं आलेवणजाएणं' अन्यतरेण केनाप्येकेन आलेपनजातेन आलेपनविशेषेण 'आलिंपेज्ज वा' आलेपयेत् एकवारम्, 'विलिंपेज्ज वा' विलेपयेद् वा वारं वारम् । एवं 'आलिंपंतं वा विलिंपंत वा' आलेपयन्तं 'वा' विलेपयन्तं वा 'साइज्जइ' स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥सू० १६॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए पोसंतं वा पिट्ठंतं वा सोयंतं वा उच्छोलेत्ता पधोएत्ता आलिंपेत्ता विलिंपेत्ता तेल्लेण वा घएण वा वसाए वा णवणीएण वा अब्भंगेज्ज वा मक्खेज्ज वा अब्भंगेंतं वा मक्खेंतं वा साइज्जइ ॥ सू० १७ ॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया पोषान्तं वा पृष्ठान्तं वा स्रोतोऽन्तं वा उच्छोल्य प्रधाव्य आलिप्य विलिप्य तैलेन वा घृतेन वा वसया वा नवनीतेन वा अभ्यञ्जयेत् वा म्रक्षयेत् वा अभ्यञ्जयन्तं वा म्रक्षयन्तं वा स्वदते ॥सू० १७॥

चूर्णी—'जे भिक्खू माउग्गामस्स' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया 'पोसंतं वा' पोषान्तं वा 'पिट्ठंतं वा' पृष्ठान्तं वा 'सोयंतं वा' स्रोतोऽन्त वा 'उच्छोलेत्ता–पधोएत्ता' उच्छोल्य प्रधाव्य शीतोष्ण-

जलेन एकवारमनेकवारं वा प्रक्षालनं कृत्वा तदनन्तरम् 'आलिंपेत्ता विलिंपेत्ता' आलिप्य विलिप्य पूर्वोक्तौषधिरूपेण लेपनद्रव्येणैकवारमनेकवारं वा लेपयित्वा तदनन्तरं 'तेल्लेण वा' तैलेन वा 'घएण वा' घृतेन वा 'वसाए वा' वसया वा चर्बीतिलोकप्रसिद्धया 'णवणीएण वा' नवनीतेन वा म्रक्षणेन 'मक्खन' इति प्रसिद्धेन 'अब्भंगेज्ज वा' अभ्यञ्जयेद्वा एकवारं वा अभ्यञ्जनं कुर्यात् 'मक्खेज्ज वा' म्रक्षयेद्वा प्रतिदिनमनेकवार वा तैलादिना अभ्यङ्गं वा कुर्यात् 'अब्भंगेंतं वा मक्खेंतं वा साइज्जइ' अभ्यञ्जयन्तं वा म्रक्षयन्तं वा स्वदते। यो हि श्रमणः स्त्रियाः योन्यादिकं तैलादिना अभ्यञ्जयति मैथुनेच्छया तं योऽनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञा-भङ्गानवस्थामिथ्यात्वसंयमविराधनादिदोषाश्चापि भवन्ति, यस्मादेते दोषा भवन्ति तस्मात्कार-णात् योनाभङ्गं श्रमणस्तैलादिना नाभ्यञ्जयेत् न वा तैलादिना अभ्यङ्गं कुर्वत कथमपि अनुमोदनं कुर्यादिति ॥सू० १७॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए पोसंतं वा पिट्ठंतं वा सोयंतं वा उच्छोलेत्ता पधोएत्ता आलिंपेत्ता विलिंपेत्ता अब्भंगेत्ता मक्खेत्ता अन्नयरेण धूवणजाएण धूवेज्ज वा पधूवेज्ज वा धूवेंतं वा पधूवेंतं वा साइज्जइ ॥ सू० १८॥**

**छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया पोषान्तं वा पृष्ठान्तं वा स्रोतोऽन्तं वा उच्छोल्य प्रधाव्य आलेप्य विलेप्य अभ्यज्य म्रक्षयित्वा अन्यतरेण धूपनजातेन धूपयेद्वा प्रधूपयेद्वा धूपयन्तं वा प्रधूपयन्तं वा स्वदते ॥सू० १८॥**

**चूर्णी**-- 'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृ-ग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया-मैथुनवाञ्छया 'पोसंत वा' पोषान्तं वा 'पिट्ठंतं वा' पृष्ठान्तं वा 'सोयंतं वा' स्रोतोऽन्तं वा 'उच्छोलेत्ता पधोएत्ता' उच्छोल्य प्रधाव्य एकवारमनेकवारं वा शीतोष्णजलेन प्रक्षालनं कृत्वा 'आलिंपेत्ता विलिंपेत्ता' आलेप्य विलेप्य-एकवारमनेकवारं वा लेपनद्रव्येण विलेपनं कृत्वा तदनन्तरम् 'अब्भंगेत्ता मक्खेत्ता' अभ्यज्य म्रक्षयित्वा एकवारमनेकवारं वा तैलघृतवसानवनीतान्यतमेनाऽभ्यञ्जनं कृत्वा 'अन्न-यरेण धूपणजाएणं' अन्यतरेण धूपनजातेन केनाप्येकेन सुगन्धिद्रव्यधूपेन 'धूवेज्ज वा' धूपयेद्वा एकवारं धूपितं कुर्यात् 'पधूवेज्ज वा' प्रधूपयेद्वा अनेकवारं धूपद्रव्यजातेन धूपयेत्, तथा 'धूवेंतं वा पधूवेंतं वा साइज्जइ' धूपयन्तं वा प्रधूपयन्तं वा स्वदते। यो हि भिक्षुः मैथुनसेवनेच्छया स्त्रिया अङ्गादिकं प्रक्षालनलेपनाभ्यञ्जनानन्तरं धूपनद्रव्येण एकवारमनेकवारं वा धूपयति स', तं यो भिक्षुरनु-मोदते सोऽपि च प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्ति। यस्मादेते-

दोषा भवन्ति तस्मात्कारणात् श्रमणः स्त्रीणामङ्गादिकं न धूपयेत् न वा धूपयन्तमन्यं कथमप्यनुमोदयेत् किन्तु शास्त्रमर्यादामाश्रित्यैव सर्वदा तेन संयमाराधनाय प्रयत्नो विधेय इति ॥सू० १८॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए कसिणाइं वत्थाइं धरेइ धरेंतं वा साइज्जइ॥ सू० १९॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया कृत्स्नानि वस्त्राणि धरति धरन्तं वा स्वदते ॥सू० १९॥

चूर्णी—'जे भिक्खू माउग्गामस्स' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया-मैथुनवाञ्छया 'कसिणाइं वत्थाइं' कृत्स्नानि सपूर्णानि अखण्डितानि 'थान' 'ताका' इति प्रसिद्धानि वस्त्राणि 'धरेइ' धरति—अनागतकाले परिभोगार्थं 'कस्याश्चित् स्त्रिया दास्यामि' इति बुद्ध्या 'वा' पार्श्वे स्थापयति 'धरेंतं वा साइज्जइ' धरन्त वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥सू० १९॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अहयाइं वत्थाइं धरेइ धरेंतं वा साइज्जइ ॥सू०२०॥ जे भिक्खू माउग्गामस्स मेहुणवडियाए धोवाइं वत्थाइं धरेइ धरेंतं वा साइज्जइ ॥सू०२१॥ जे भिक्खू माउग्गामस्स मेहुणवडियाए चित्ताइं वत्थाइं धरेइ धरेंतं वा साइज्जइ ॥खू०२२॥ जे भिक्खू माउग्गामस्स मेहुणवडियाए विचित्ताइं वत्थाइं धरेइ धरेंतं वा साइज्जइ ॥सू० २३॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अहतानि वस्त्राणि धरति धरन्तं वा स्वदते ॥सू० २०॥ यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया धौतानि वस्त्राणि धरति धरन्तं वा स्वदते ॥सू० २१॥ यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया चित्राणि वस्त्राणि धरति धरन्तं वा स्वदते ॥सू० २२॥ यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया विचित्राणि वस्त्राणि धरति धरन्त वा स्वदते ॥सू० २३॥

चूर्णी—'जे भिक्खू' इत्यादीनि—अहतवस्त्रसूत्रादारभ्य विचित्रवस्त्रसूत्रपर्यन्तानि चत्वारि सूत्राणि सुगमानि । नवरम्—अहतानि—तन्तूद्गतानि तन्तुवायादानीतानि ॥ सू०२०॥ धौतानि—रजकादिना उज्ज्वलीकृतानि ॥सू०२१॥ चित्राणि—एकतररङ्गरञ्जितानि ॥ सू०२२॥ विचित्राणि—नानारङ्गरञ्जितानि ॥ सू०२३ ॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अप्पणो पाए आमज्जेज्ज वा पमज्जेज्ज वा आमज्जंतं वा पमज्जंतं वा साइज्ज ॥सू० २४॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया आत्मनः पादौ आमार्जयेद्वा प्रमार्जयेद्वा आमार्जयन्तं वा प्रमार्जयन्तं वा स्वदते ॥सू० २४॥

चूर्णी—'जे भिक्खू माउग्गामस्स' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया–मैथुनवाञ्छया 'अप्पणो पाए' आत्मनः स्वस्य पादौ चरणौ 'आमज्जेज्ज वा' आमार्जयेद्वा एकवार वस्त्रादिना 'पमज्जेज्ज वा' प्रमार्जयेद्वा अनेकवारम् 'आमज्जंतं वा पमज्जंतं वा साइज्जइ' आमार्जयन्तं वा प्रमार्जयन्तं वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० २४ ॥

सूत्रम्—एवं तइयउद्देसे जो गमो सो चेव इहंपि मेहुणवडियाए णेयव्वो जाव जे भिक्खू माउग्गामस्स मेहुणवडियाए गामाणुगामं दूइज्जमाणे अप्पणो सीसदुवारियं करेइ करेंतं वा साइज्जइ ॥ सू० २५॥

छाया—एवं तृतीयोद्देशके यो गमः स एव इहापि मैथुनप्रतिज्ञायां ज्ञातव्यः यावत् यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया ग्रामानुग्रामं द्रवन् आत्मनः शीर्षद्वारिकां करोति कुर्वन्तं वा स्वदते ॥ सू० २५॥

चूर्णी—'एवं तइयउद्देसए' इत्यादि। 'एवं तइयउद्देसए' एवं तृतीयोद्देशके 'जो गमो' यो गमः सूत्रप्रकारः 'सो चेव इहंपि मेहुणवडियाए णेयव्वो' स एव गमः इहापि षष्ठोद्देशके मैथुनप्रतिज्ञायामपि ज्ञातव्यः। कियत्पर्यन्तम् ? इत्याह–'जाव' इत्यादि, इतः पादसंवाहनसूत्रादारभ्य शीर्षद्वारिकासूत्रपर्यन्तानि सूत्राणि तृतीयोद्देशकोक्तसूत्रवद् अत्रापि मैथुनप्रतिज्ञया व्याख्येयानि। अत्राह भाष्यकारः—

"पायप्पमज्जणाई, सीसदुवारांत जो गमो तइए।
मेहुणवडियाए पुण, छट्ठुद्देसंमि सो चेव ॥

छाया—पादप्रमार्जनादि, शीर्षद्वारिकान्तं यो गमस्तृतीयोद्देशके।
मैथुनप्रतिज्ञया पुनः षष्ठोद्देशके स एव ॥

अवचूरिः 'पायप्पमज्जणाई' इत्यादि सुगमम् ॥ सू० २५ ॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए खीरं वा दहिं वा णवणीयं वा सप्पिं वा गुलं वा खंडं वा सक्करं वा मच्छंडियं वा अन्नयरं वा पणीयं आहारं आहारेइ आहरंतं वा साइज्जइ ॥सू० २६॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया क्षीरं वा दधि वा नवनीतं वा सर्पि र्वा गुडं वा खण्डं वा शर्करां वा मत्स्यण्डिकां वा अन्यतरं प्रणीतमाहारमाहरति आहरन्तं वा स्वदते ॥सू० २६॥

चूर्णी—'जे भिक्खू माउग्गामस्स' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया मैथुनवाञ्छया 'खीरं वा' क्षीरं वा दुग्धम् गवादीनां दुग्धम् 'दहिं वा' दधि वा 'णवणीयं वा' नवनीतं वा 'मक्खन' इति लोकप्रसिद्धम् 'सप्पिं वा' सर्पिर्घृतं वा 'गुलं वा' गुडं वा 'खंडं वा' खण्डं वा 'खाड' 'चीनी' इति लोकप्रसिद्धम् 'सक्करं वा' शर्करा वा 'बूरा' इति प्रसिद्धाम् 'मच्छंडियं वा' मत्स्यण्डिका वा मिसरीति लोकप्रसिद्धाम् 'अन्नयरं वा पणीयं' अन्यतरं वा प्रणीतम् सरसम् 'आहारं' आहारम् 'आहरेइ' आहरति दुग्धादिविकृतीनां भोजनं करोति । अयं भावः-विवर्णः शरीरदुर्बलः श्रमणः दुग्धादीनां भोजनादुपचितशरीरः सुकुमारशरीरः कामिनीनां कमनीयः स्यामिति बुद्धया दुग्धाद्यन्यतम विकृतीनां भोजनं करोति स, तथा 'आहरेंतं वा साइज्जइ' आहरन्तं वा स्वदते अनुमोदते यः सोऽपि प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्तीति ॥सू० २६॥

## सूत्रम्—तं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ति॥सू० २७॥

छाया—तत् सेवमान आपद्यते चातुर्मासिकं परिहारस्थानमनुद्घातिकमिति ॥२७॥

चूर्णी—'तं सेवमाणे' इत्यादि । 'तं सेवमाणे' तत् सेवमानः षष्ठोद्देशकस्य 'जे भिक्खू माउग्गामस्स मेहुणवडियाए विण्णवेइ विण्णवेंतं वा साइज्जइ' इति प्रथमसूत्रादारभ्य 'जे भिक्खू माउग्गामस्स मेहुणवडियाए खीरं वा' एतत्सूत्रपर्यन्तं कथितं प्रायश्चित्तस्थानं सर्वं, तथा अन्यतममपि प्रायश्चित्तस्थानं सेवमानः तस्य प्रतिसेवनां कुर्वन् भिक्षुः 'आवज्जइ' आपद्यते प्राप्नोति 'चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं' चातुर्मासिकं परिहारस्थानमनुद्घातिकम् गुरुचातुर्मासिकं प्रायश्चित्तमापद्यते इति भावः ॥ सू० २७॥

इति श्री–विश्वविख्यात–जगद्वल्लभ–प्रसिद्धवाचक–पञ्चदशभाषाकलितललितकलापालापक–प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक–वादिमानमर्दक श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त–"जैनशास्त्राचार्य"–पदभूषित–कोल्हापुरराजगुरु–बालब्रह्मचारि–जैनाचार्य–जैनधर्म–दिवाकर–पूज्यश्री–घासीलालव्रति–विरचितायां "निशीथसूत्रस्य" चूर्णिभाष्यावचूरिरूपायां व्याख्यायां षष्ठोद्देशकः समाप्तः ॥६॥



## ॥ सप्तमोद्देशकः ॥

### ( मातृग्रामप्रकरणम् )

व्याख्यातः षष्ठोद्देशकः, सांप्रतमवसरप्राप्तः सप्तमोद्देशको व्याख्यायते, अस्य सप्तमोद्देशकीयादिसूत्रस्य षष्ठोद्देशकान्तिमसूत्रेण सह कः सम्बन्धः ? इति चेद् अत्राह भाष्यकारः—

भाष्यम्—अंतो भूसणमाहारो, बाहिं भूसा उ मालिया ।
इणमो चेव संबंधो, छट्ठेण सत्तमस्स उ ॥

छाया—अन्तर्भूषणमाहारो बाह्यभूषा तु मालिका ।
अयमेव हि सम्बन्धः षष्ठेन सप्तमस्य तु ॥

अवचूरिः—'अंतो भूसणमाहारो' इत्यादि । 'आहार' दुग्धदध्यादिविकृतिपदार्थानामाहारो अन्तर्भूषणम् । मालिका—पुष्पमालादिकं तु बाह्यभूषणं साधूनां प्रतिषिद्धम् , अयमेव सम्बन्धः षष्ठेन षष्ठान्तिमसूत्रेण सह सप्तमोद्देशकादिसूत्रस्य भवतीति । अथ भावः—षष्ठोद्देशकस्योपान्त्यसूत्रे 'जे भिक्खू माउग्गामस्स मेहुणवडियाए खीरं वा' इत्यादिविकृत्याहारस्य प्रतिषेधः कृतः, अत्र तु सप्तमोद्देशकादिसूत्रे मालिकानां प्रतिषेधः क्रियते यतो मा भवतु साधोर्बाह्यभूषणम् इति बाह्याभ्यन्तरभूषणप्रतिषेधस्य समानत्वात् षष्ठोद्देशकानन्तरं सप्तमोद्देशकस्य निरूपणं क्रियते, अयमेव सम्बन्धः पूर्वापरसूत्रयोर्भवति । तदनेन सम्बन्धेनायातस्य सप्तमोद्देशकस्य प्रथमं सूत्रं प्रस्तूयते—'जे भिक्खू' इत्यादि ।

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए तणमालियं वा मुंजमालियं वा वेत्तमालियं वा मयणमालियं वा पिंछमालियं वा दंतमालियं वा सिंगमालियं वा संखमालियं वा हड्डमालियं वा कट्ठमालियं वा पुप्फमालियं वा फलमालियं वा बीयमालियं वा हरियमालियं वा करेइ करेंतं वा साइज्जइ ॥ सू० १ ॥**

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया तृणमालिकां वा मुञ्जमालिकां वा वेत्रमालिकां वा मदनमालिकां वा पिच्छमालिकां वा दन्तमालिकां वा शृङ्गमालिकां वा शङ्खमालिकां वा अस्थिमालिकां वा काष्ठमालिका वा पत्रमालिकां वा पुष्पमालिकां वा फलमालिकां वा बीजमालिकां वा हरितमालिकां वा करोति कुर्वन्तं वा स्वदते ॥सू० १॥

चूर्णी—'जे भिक्खू' यः कश्चिद् भिक्षुर्निरवद्यभिक्षणशीलः श्रमणः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनवाञ्छया 'तणमालियं वा' तृणमालिकां वा वीरणादितृणजनित-

मालां करोति, यथा मथुराया करोति, करोतीत्यग्रिमेण क्रियापदेन सम्बन्ध, तथा **'मुंजमालियं वा'** मुञ्जमालिकां मुंजस्य तन्नामकतृणविशेषस्य मालां करोति यथा द्विजानां व्रतबन्धने क्रियते, तथा **'वेत्तमालियं वा'** वेत्रमालिका वा वेत्र लताविशेष. 'वेत्र' 'नेत्र' इति लोकप्रसिद्धम्, तस्य वेत्रस्य मालां कटककेयूरादिरूपां करोति तथा **'मयणमालियं वा'** मदनमालिकां वा, तत्र मदनं पुष्पविशेष, तस्य मालां करोति तथा **'पिंछमालियं वा'** पिच्छमालिका वा व्रणादिपीडानिवारणार्थं मयूरादिपिच्छैर्मालां करोति **'दंतमालियं वा'** दन्दमालिकां वा-बालस्य दृष्टिदोषनिवारणार्थं हस्त्यादिदन्ताना मालां करोति तथा **'सिंगमालियं वा'** श्रृङ्गमालिका वा-महिष्यादिश्रृङ्गेण माला करोति यथा पारसीय-जातिविशेषे **'संखमालियं वा'** शङ्खमालिकां वा-बालस्य गले धारणार्थं शङ्खस्य मालां करोति **'हड्डमालियं वा'** अस्थिमालिका वा गजादिजीवानाम् 'जरख' इति प्रसिद्धचतुष्पदपशुविशेषस्य वा अस्थ्ना माला करोति **'कट्ठमालियं वा'** काष्ठमालिका वा, तत्र काष्ठस्य तुलस्यादिकाष्ठस्य मालां करोति **'पत्तमालियं वा'** पत्रमालिका वा पत्राणा तगरादिसुगन्धितपत्राणा माला करोति **'पुप्फमालियं वा'** पुष्पमालिका वा, तत्र पुष्पाणा चपकादिवृक्षसमुद्भूताना माला करोति, **'फलमालियं वा'** फलमालिका, तत्र फलाना गुञ्जादिफलाना माला करोति **'बीयमालियं वा'** बीजमालिका वा, तत्र बीजानां रुद्राक्षादीना माला सपादयति **'हरियमालियं वा'** हरितमालिकां वा, तत्र-हरितकायाना पाण्डुप्रभृतिरोगशमनाय 'दूर्वापुनर्नवादीना माला **'करेइ'** करोति स्वयं करोति **'करेंतं वा साइज्जइ'** कुर्वन्त वा स्वदते अनुमोदते तृणमालिकादिक य स्वयं करोति परद्वारा वा कारयति कुर्वन्तं वा अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्ति, यस्मादेते दोषा भवन्ति तस्मात् कारणात् श्रमणो मातृग्रामस्य मैथुनसेवनेच्छया स्वपरशरीरशोभार्थं दृष्टिदोषरोगादिनिवारणार्थं वाऽन्यार्थं तृणादिमाला न स्वय कुर्यात् न परद्वारा कारयेत् न वा कुर्वन्तमन्यमनुमोदयेदिति ॥ सू० १ ॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए तणमालियं वा मुंज मालियं वा वेत्तमालियं वा मयणमालियं वा पिंछमालियं वा दंतमालियं वा सिंगमालियं संखमालियं वा हड्डमालियं वा कट्ठमालियं वा पत्तमालियं वा पुप्फमालियं वा फलमालियं वा बीयमालियं वा हरियमालियं वा धरेइ धरेंतं वा साइज्जइ ॥ सू० २ ॥**

छाया— यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया तृणमालिका वा मुञ्जमालिका वा वेत्र-मालिकां वा मदनमालिकां वा पिच्छमालिकां वा दन्तमालिकां वा शृङ्गमालिकां वा शङ्ख-

मालिकां वा अस्थिमालिकां वा काष्ठमालिकां वा पत्रमालिकां वा पुष्पमालिकां वा फलमालिकां वा बीजमालिकां वा हरितमालिकां वा धरति धरन्तं वा स्वदते ॥सू० २॥

चूर्णी—'जे भिक्खू' इत्यादि । पूर्वोक्ता माला: 'धरेइ' धरति-पार्श्वे स्थापयति, धरन्तं वा स्वदते इति । शेषं पूर्ववत् ॥ सू० २॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए तणमालियं वा मुंजमालियं वा वेत्तमालियं वा मयणमालियं वा पिंछमालियं वा दंतमालियं वा सिंगमालियं वा संखमालियं वा हड्डमालियं वा कट्ठमालियं वा पत्तमालियं वा पुष्फमालियं वा फलमालियं वा बीयमालियं वा हरियमालियं वा पिणद्धेइ पिणद्धेंतं वा साइज्जइ ॥ सू० ३ ॥**

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया तृणमालिकां वा मुञ्जमालिकां वा वेत्रमालिकां वा मदनमालिकां वा पिच्छमालिकां वा दन्तमालिकां वा शृङ्गमालिकां वा शङ्खमालिकां वा अस्थिमालिकां वा काष्ठमालिकां वा पत्रमालिकां वा पुष्पमालिकां वा फलमालिकां वा बीजमालिकां वा हरितमालिका वा पिनह्यति पिनह्यन्तं वा स्वदते ॥सू० ३॥

चूर्णी—'जे भिक्खू' इत्यादि । यो भिक्षु तृणादीनां मालां पूर्वोक्तवस्तुजातनिर्मितां मालां 'पिणद्धेइ' पिनह्यति-कण्ठे धारयति पिनह्यन्त वा स्वदते अनुमोदते । आभिर्मालाभिर्मदीयं शरीरमलंकृतं सुन्दरं भवतु, अलङ्कृतेन सुन्दरेण शरीरेणाहं कामिनीनां प्रियो भविष्यामि तेन सा मम मैथुनेच्छां पूरयिष्यतीति बुद्धया तृणादिमाला य कश्चिद्भिक्षु स्वयं कण्ठे धारयति धारयन्तं चान्यमनुमोदते स प्रायश्चित्तभागी भवति, आज्ञाभङ्गादिदोषांश्च प्राप्नोतीति ॥ सू० ३ ॥

भाष्यम्—तणमाइमालियाणं, करणं धरणं च मेहुणिच्छाए ।
कुज्जा अप्पपरट्ठा, आणाभंगाइ पावेइ ॥

छाया—तृणादिमालिकानां करणं धरण च मैथुनेच्छया ।
कुर्यात् आत्मपरार्थं, आज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः—'तणमाइ' इत्यादि । यो भिक्षु. 'मेहुणवडियाए' मैथुनप्रतिज्ञया मैथुनेच्छया तृणादिमालिकानां करणं सपादनं धरणं स्वशरीरे धारणं च कुर्यात् स आज्ञाभङ्गादिदोषान् आज्ञाभङ्गानवस्थामिथ्यात्वसंयमविराधनात्मविराधनादिदोषान् प्राप्नोति । अयं भाव.—तृणादिमालाकरणे धारणे मालया शरीरविभूषाकरणे च स्वस्य परस्य मोहोदयो जायते, तथा तृणादिमालाकरणे तद्धारणकरणे च सूत्रार्थपठनपाठनसमयस्य व्यर्थनिर्गमनेन सूत्रार्थयोर्हानिर्भवति, तीर्थकरैरनाज्ञप्तं

च । द्रव्यलोलुपैश्चारैः कदाचिद् गृहीतो भवति, मालादि दृष्ट्वा असाधुरयमितिकृत्वा कोट्टपालादिभिः गृहीतो राजदण्डभाग् भवति, कस्मैचिद् वितरणे कस्मैचिद् अदाने च कदाचित् अधिकरणमपि स्यात्, तथा लोके निन्दापि स्यात्, लोका एव वदिष्यन्ति–यत् अहो आश्चर्यमेतत् यत् जैनसाधवो निवृत्तभावसम्पन्ना अपि मालां कुर्वन्ति धारयन्ति च । केचन एव वदिष्यन्ति यत्–एते आत्मानं निवृत्तरागद्वेषं मन्यमाना अपि मालां कुर्वन्ति धारयन्ति चेत्यादिरूपेण क्रमपरम्परया शासनस्य लोकेऽवहेलना स्यात् अतस्तृणमालादीनां करणं धारणं तदनुमोदनं च न कर्तव्यमिति भावः ॥३॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए तणमालियं वा मुंजमालियं वा वेत्तमालियं वा मयणमालियं वा पिंछमालियं वा दंतमालियं वा सिंगमालियं संखमालियं वा हड्डमालियं वा कट्ठमालियं वा पत्तमालियं वा पुप्फमालियं वा फलमालियं वा बीयमालियं वा हरियमालियं वा परिभुंजइ परिभुजंतं वा साइज्जइ ॥ सू० ४॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया तृणमालिकां वा मुञ्जमालिकां वा वेत्रमालिकां वा मदनमालिकां वा पिच्छमालिकां वा दन्तमालिकां वा शृङ्गमालिकां वा शङ्खमालिकां वा अस्थिमालिकां वा काष्ठमालिकां वा पत्रमालिकां वा पुष्पमालिकां वा फलमालिकां वा बीजमालिकां हरितमालिकां वा परिभुङ्क्ते परिभुञ्जानं वा स्वदते ॥सू० ४॥

चूर्णी—'जे भिक्खू' इत्यादि । तृणादिमालिकानां परिभोगं करोति-नानाप्रकारेण तासां स्वकार्यनिमित्तं परिभोगं करोतीति भावः ॥ सू० ४ ॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अयलोहाणि वा तंबलोहाणि वा तउलोहाणि वा सीसगलोहाणि वा रुप्पलोहाणि वा सुवण्णलोहाणि वा करेइ करेंतं वा साइज्जइ ॥ सू० ५॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अयोलोहान् वा ताम्रलोहान् वा त्रपुलोहान् वा सीसकलोहान् वा रूप्यलोहान् वा सुवर्णलोहान् वा करोति कुर्वन्तं वा स्वदते ॥सू० ५॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः **'माउग्गामस्स'** मातृग्रामस्य **'मेहुणवडियाए'** मैथुनप्रतिज्ञया **'अयलोहाणि वा'** अयोलोहान् वा 'लोहाणी'–यत्र लोहशब्दो देशीयः, तदर्थस्तु आकारविशेषस्तान्, तथा च अयसो लोहस्य आकारविशेषान् वा तथा **'तंबलोहाणि वा'** ताम्रलोहान् वा ताम्रस्य धातुविशेषस्य आकारविशेषान् **'तउयलोहाणि वा'**

त्रपुलोहान् वा त्रपु 'जसद' इति लोकप्रसिद्धम् तस्याकारविशेषान् **'सीसगलोहाणि वा'** सीसकलोहान् वा, तत्र सीसक धातुविशेषः 'सीसा' इति प्रसिद्ध तस्य आकारविशेषान् **'रूप्पलोहाणि वा'** रूप्यलोहान् वा, तत्र रूप्यं रजत, तस्य आकारविशेषान् **'सुवण्णलोहाणि वा'** सुवर्णलोहान् वा सुवर्णस्य आकारविशेषान् वा **'करेइ'** करोति मातृग्रामस्य मैथुनसेवनेच्छया लोहादिधातूनामाकारविशेषान् करोति तथा **'करेंतं वा साइज्जइ'** लोहादीनामाकारविशेषान् कुर्वन्तं वा स्वदते स प्रायश्चित्तभागी भवति, लोहादिधातुभिराकारविशेषकरणे अग्न्यारम्भोऽनिवार्यो भवति, तथा तत्र धमनं फूत्करणमप्यावश्यकं तेन षट्कायोपमर्दनं भवति, तत संयमविराधना, वस्त्रशरीरादिदहने आत्मविराधना चावश्यम्भाविनी ततो भिक्षुर्लोहादिधातूनामाकारविशेषं न स्वयं कुर्यात् नापि कुर्वन्तमन्यमनुमोदेत इति भाव ॥सू० ५॥ एव **'धरेइ' 'परिभुंजइ'** इति सूत्रद्वयमपि व्याख्येयम् ॥ सू० ६-७॥

## सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए हाराणि वा अद्धहाराणि वा एगावलीं वा मुत्तावलीं वा कणगावलीं वा रयणावलीं वा कडगाणि वा तुडियाणि वा केऊराणि वा कुंडलाणि वा पट्टाणि वा मउडाणि वा पलंबसुत्ताणि वा सुवण्णसुत्ताणि वा करेइ करेंतं वा साइज्जइ ॥सू०८॥

**छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया हारान् वा अर्द्धहारान् वा एकावलीं वा मुक्तावलीं वा कनकावलीं वा रत्नावलीं वा कटकान् वा त्रुटिकानि वा केयूराणि वा कुण्डलानि वा पट्टानि वा मुकुटानि वा प्रलम्बसूत्राणि वा सुवर्णसूत्राणि वा करोति कुर्वन्तं वा स्वदते ॥सू० ८॥**

**चूर्णी—'जे भिक्खू'** इत्यादि । **'जे भिक्खू'** य· कश्चिद् भिक्षु· **'माउग्गामस्स'** मातृग्रामस्य **'मेहुणवडियाए'** मैथुनप्रतिज्ञया - मैथुनवाञ्छया **'हाराणि वा'** हारान् वा तत्र हारा अष्टादशसरिका, तान् **'अद्धहाराणि वा'** अर्द्धहारान् वा, तत्रार्द्धहारा नवसरिका, तान् **'एगावलीं वा'** एकावलीं वा एकसरिका मालामित्यर्थ **'कणगावलीं वा'** कनकावलीं वा कनकस्य सुवर्णस्यावली माला इति ताम् **'मुत्तावलीं वा'** मुक्तावलीं वा, तत्र मुक्ता गजादिमुक्ताः, तासाम् आवलीमाला ताम् **'रयणावलीं वा'** रत्नावलीं वा, तत्र रत्नानां कर्केतनादीनामावली माला ताम् **'कडगाणि वा'** कटकान् वा, तत्र कटका 'कडा' इतिलोकप्रसिद्धा., तान् कटकान् **'तुडियाणि वा'** त्रुटिकानि वा—हस्ताभरणविशेषान् वा **'केऊराणि वा'** केयूराणि वा 'भुजबंध' इतिलोकप्रसिद्धानि **'कुंडलाणि वा'** कुण्डलानि वा, तत्र कुण्डलानि कर्णाभरणानि तानि **'पट्टाणि वा'** पट्टानि वा, तत्र पट्टानि चतुरङ्गुलसुवर्णपट्टानि तानि **'मउडाणि वा'** मुकुटानि वा शिरोभूषणानि **'पलंबसुत्ताणि वा'**

प्रलम्बसूत्राणि वा सुवर्णनिर्मितानि लम्बायमानानि सूत्राणि तानि 'सुवण्णसुत्ताणि वा' सुवर्णसूत्राणि वा—सुवर्णस्य सूत्रविशेषलक्षणानि 'करेइ' करोति, एतानि हारादिकानि मातृग्रामस्य मैथुनसेवनेच्छया स्वयं सपादयति परद्वारा कारयति वा तथा 'करेंतं वा साइज्जइ' कुर्वन्तं वा स्वदतेऽनुमोदते ॥ सू० ८ ॥

एवं पूर्वोक्तवस्तुविषये 'धरेइ' 'परिभुंजइ' इति सूत्रद्वयमपि पूर्ववद् व्याख्येयम् ॥सू०९-१०॥

मूलम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए आईणाणि वा आईणपाउराणि वा कंबलाणि वा कंबलपाउराणि वा कोयराणि वा कोयरपाउराणि वा गोरमियाणि वा कालमियाणि वा णील-मियाणि वा सामाणि वा महासामाणि वा उट्टाणि वा उट्टलेस्साणि वा वग्घाणि वा विवग्घाणि वा पलवंगाणि वा सहिणाणि वा सहिणकल्लाणि वा खोमाणि वा दुगुल्लाणि वा तिरीडपट्टाणि वा पतुलाणि वा पडलाणि वा चीणाणि वा अंसुयाणि वा कणगकंताणि वा कणगखचियाणि वा कणगचित्ताणि वा कणगविचित्ताणि वा आभरणाणि वा आभरणचित्ताणि वा आभरण-विचित्ताणि वा करेइ करेंतं वा साइज्जइ ॥ सू० ११ ॥

छाया— यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया आजिनानि वा आजिनप्रावरणानि वा कंबलान् वा कम्बलप्रावरणानि वा कोयराणि वा कोयरप्रावरणानि गौरमृगाणि वा कालमृगाणि वा नीलमृगाणि वा श्यामानि वा महाश्यामानि वा उष्ट्राणि वा उष्ट्रलेश्यानि वा व्याघ्राणि वा विव्याघ्राणि वा प्लवङ्गानि वा श्लक्ष्णानि वा श्लक्ष्णकल्यानि वा क्षौमाणि वा दुकूलानि वा तिरीटपट्टानि वा प्रतुलानि वा पटलानि वा चीनानि वा अंशुकानि वा कनककान्तानि वा कनकखचितानि वा कनकचित्राणि वा कनकविचित्राणि वा आभरणानि वा आभरणचित्राणि वा आभरणविचित्राणि वा करोति कुर्वन्तं वा स्वदते ॥ सू० ११ ॥

चूर्णी— 'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चित् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया—मैथुनवाञ्छया 'आईणाणि वा' आजिनानि वा—मृगचर्मवस्त्राणि 'आईणपाउराणि वा' आजिनप्रावरणाणि वा, तत्राजिनं मृगचर्म तस्य प्रावरणाणि—आच्छादनानि यः करोतीत्यग्रिमेण सम्बन्धः, 'कंबलाणि वा' कम्बलान्, तत्र कम्बला ऊर्णादि-निर्मितास्तान् 'कंबलपाउराणि वा' कम्बलप्रावरणानि वा, तत्र कम्बलस्य प्रावरणानि आच्छादनानि तानि यः करोति तथा 'कोयराणि वा' कोयराणि वा, तत्र कोयराणि कोयरदेशनिष्पन्ना वस्त्रविशेषाः

तानि यः करोति 'कोयरपाउराणि वा' कोयरप्रावरणानि वा कोयरस्य वस्त्रविशेषस्य यानि प्रावरणानि आच्छादनानि करोति 'गोरमियाणि वा' गौरमृगाणि वा श्वेतमृगचर्माणि तच्चर्मनिर्मितवस्त्राणीत्यर्थः 'कालमियाणि वा' कालमृगाणि वा–कालमृगचर्माणि, तत्र कालमृग –कृष्णमृगः तस्य यानि चर्माणि तेषां वस्त्राणि यः करोति 'णीलमियाणि वा' नीलमृगाणि वा–नील मृगचर्माणि 'सामाणि वा' श्यामानि वा–श्याममृगचर्माणि 'महासामाणि वा' महाश्यामानि वा–अतिशयितश्याममृगचर्माणि 'उट्टाणि वा' उष्ट्राणि वा उष्ट्रस्य यानि चर्माणि तानि वस्त्ररूपाणि यः करोति 'उट्टलेस्साणि वा' उष्ट्रलेश्यानि वा उष्ट्रचर्मण प्रावरणानि, 'वग्घाणि वा' व्याघ्राणि वा–व्याघ्रसम्बन्धिचर्मवस्त्राणीत्यर्थः, 'विवग्घाणि वा' विव्याघ्राणि वा–विव्याघ्रः 'चित्ता' इति प्रसिद्ध, तत्सम्बन्धिचर्माणि चर्मवस्त्राणि 'पलवंगाणि वा' प्लवङ्गानि वा तत्र प्लवङ्गः–वानरः तस्य चर्माणि 'सहिणाणि वा' सहिनानि वा–श्लक्ष्णानि, तत्र सहिनानि श्लक्ष्णानि श्लक्ष्णवस्त्राणि यः करोति 'सहिणकल्लाणि वा' सहिनकल्यानि तत्र सहिनानि श्लक्ष्णानि कल्लानि स्निग्धानि कोमलानि कोमलत्वलक्षणयुक्तानि वा वस्त्राणि करोति 'दुगुल्लाणि वा' दुकूलानि वा, तत्र दुकूलानि कार्पासिकानि वस्त्राणि 'पडलाणि वा' पटलानि वा 'चीणाणि वा' चीनानि वा चीनदेशोद्भवानि वस्त्राणि 'अंसुयाणि वा' अंशुकानि वा कीटजवस्त्राणि 'रेशम' इति प्रसिद्धवस्तुवस्त्राणि वा 'कणगकंताणि वा' कनककान्तानि वा, तत्र कनक सुवर्ण तत्सदृशकान्तियुक्तानि वस्त्राणि 'कणगखचियाणि वा' कनकखचितानि वा–कनकजटितानि वस्त्राणि 'कणगचित्ताणि वा' कनकचित्राणि वा कनकेन सुवर्णेन चित्रितानि वस्त्राणि 'कणगविचित्ताणि वा' कनकविचित्राणि कनकेन विचित्रप्रकारकाणि वस्त्राणि 'आभरणाणि वा'–आभरणानि अलंकारयुक्त वस्त्राणि 'आभरणचित्ताणि वा' आभरणैरलंकारैश्चित्रितानि 'आभरणविचित्ताणि वा' आभरणविचित्राणि वा विचित्रप्रकारकाभरणैर्मण्डितानि वस्त्राणि, एतादृशानि उपर्युक्तानि चर्मादीना वस्त्राणि यो भिक्षुर्मैथुनसेवनेच्छया 'करेइ' करोति 'करेंतं वा साइज्जइ' कुर्वन्त वा स्वदते ॥ सू० ११ ॥

एवम् पूर्वसूत्रोक्तवस्त्रविषये 'धरेइ' 'परिभुंजइ' इति सूत्रद्वयमपि बोध्यम् ॥१२॥ सू० १३ ॥

## सूत्रम्––जे भिक्खू माउग्गामस्स मेहुणवडियाए इत्थिं अक्खंसि वा उरंसि वा उयरंसि वा थणंसि वा गहाय संचालेइ संचालेंतं वा साइज्जइ ॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया स्त्रियम् अक्षे वा उरसि वा उदरे वा स्तने वा गृहीत्वा संचालयति संचालयन्तं वा स्वदते ॥ सू० १४ ॥

चूर्णी— 'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया–मैथुनवाञ्छया 'इत्थिं' स्त्रियम् 'अक्खंसि वा' अक्षे-

कस्मिंश्चिदिन्द्रियप्रदेशे वा 'उरसि वा' उरसि वा–हृदयप्रदेशे 'उयरंसि वा'–उदरे वा कुक्षिप्रदेशे 'थणंसि' वा' स्तने वा–उपलक्षणात् हस्तादिके वा 'गहाय' गृहीत्वा–स्त्रियोऽक्षादिकं गृहीत्वेत्यर्थः 'संचालेइ' संचालयति इतस्ततः चालयति 'संचालेंतं वा साइज्जइ' संचालयन्तं वा स्वदते। यो हि भिक्षुर्मैथुनसेवनेच्छया स्त्रीणामक्षादिकं गृहीत्वा चालयति चालयन्त वा अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १४ ॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अण्णमण्णस्स पाए आमज्जेज्ज वा पमज्जेज्ज वा आमज्जंतं वा पमज्जंतं वा साइज्जइ।**

**छाया**—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अन्योन्यस्य पादौ आमार्जयेद्वा प्रमार्जयेद्वा आमार्जयन्त वा प्रमार्जयन्त वा स्वदते ॥ सू० १५ ॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया–मैथुनवाञ्छया 'अण्णमण्णस्स' अन्योन्यस्य परस्परम् स्त्री साधो, साधुश्च स्त्रिया 'पाए' पादौ–चरणौ 'आमज्जेज्ज वा' आमार्जयेत् वा एकवारम् 'पमज्जेज्ज वा' प्रमार्जयेद्वा अनेकवारम् 'आमज्जंतं वा' आमार्जयन्तं वा 'पमज्जंतं वा' प्रमार्जयन्तं वा 'साइज्जइ' स्वदतेऽनुमोदते। यो हि भिक्षुर्मैथुनसेवनेच्छया परस्परं चरणौ प्रमार्जयेत् प्रमार्जयन्त वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १५ ॥

**सूत्रम्—एवं तइयउद्देसे जो गमो सो णेयव्वो जाव जे भिक्खू माउग्गामस्स मेहुणवडियाए गामाणुगामं दुइज्जमाणे अण्णमण्णस्स सीसदुवारियं करेइ करेंतं वा साइज्जइ ॥ सू० १६–६७ ॥**

**छाया**—एवं तृतीयोद्देशके यो गमः स ज्ञातव्यो यावत् यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया ग्रामानुग्रामं द्रवन् अन्योन्यस्य शीर्षद्वारिकां करोति कुर्वन्त वा स्वदते इत्यादि ॥ सू० १६–६७ ॥

**चूर्णी** 'एवं तइय' इत्यादि। 'एवं तइयउद्देसे गमो' एवं तृतीयोद्देशके यो गमः आलापकः स अत्रापि मातृग्रामस्य मैथुनप्रतिज्ञया परस्पर पादयोरामर्जनादिसूत्रेषु 'णेयव्वो' ज्ञातव्यः। कियत्पर्यन्तमित्याह–'जाव' इत्यादि। 'जाव' यावत् यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया 'अण्णमण्णस्स पाए आमज्जेज्ज वा' इत्यादि सूत्रादारभ्य 'जे भिक्खू माउग्गामस्स मेहुणवडियाए गामाणुगामं दूइज्जमाणो अण्णमण्णस्स सीसदुवारियं करेइ' एतत्सूत्रपर्यन्तं स गमो ज्ञातव्य इति भाव ॥ सू० १६–६७ ॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अणंतरहियाए पुढवीए णिसीयावेज्ज वा तुयट्टावेज्ज वा णिसीयावेंतं वा तुयट्टावेंतं वा साइज्जइ ॥सू० ६८॥**

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अनन्तरहिताया पृथिव्यां निषीदयेत् वा त्वग्वर्तयेद्वा निषीदयन्तं वा त्वग्वर्तयन्तं वा स्वदते ॥सू० ६८॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चिद् भिक्षु 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया 'अणंतरहियाए पुढवीए' अनन्तरहितायां पृथिव्याम् तत्र अनन्तरहिताया शीतवातादिशस्त्रैरनुपहताया सचित्तायाम्, पृथिव्याम् तथा चैतादृशसचित्त-भूमौ यो भिक्षुर्मैथुनसेवनेच्छया अत्र 'स्त्रियं' इति गम्यते तत स्त्रियमित्यर्थः 'णिसीयावेज्ज वा' निषीदयेद्वा उपवेशयेत् 'तुयट्टावेज्ज वा' त्वग्वर्तयेद्वा—पार्श्वपरिवर्तनं कारयेत् स्वापयेद् वा इत्यर्थ तथा 'णिसीयावेंतं वा' निषीदयन्तं वा उपवेशनं कारयन्तम् 'तुयट्टावेंतं वा' त्वग्वर्तयन्तं वा पार्श्वपरिवर्तनं कारयन्तम् 'साइज्जइ' स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ६८॥

एव पूर्वोक्तसूत्रक्रमेण यो भिक्षुर्मातृग्रामस्य मैथुनेच्छया स्त्रिय 'ससणिद्धाए पुढवीए' सस्निग्धाया—सचित्तजलेन ईषदार्द्राया पृथिव्याम् ॥सू० ६९॥ 'ससरक्खाए पुढवीए' सरजस्कायां सचित्तरजोऽवगुण्ठिताया पृथिव्याम् ॥सू० ७०॥ 'मट्टियाकडाए पुढवीए' मृत्तिकाकृतायां सचित्त मृत्तिकानिर्मितायां पृथिव्याम् ॥सू० ७१॥ 'चित्तमंताए पुढवीए' चित्तवत्यां स्वभावत —सचित्ताया खनिरूपाया पृथिव्याम् ॥सू० ७२॥ 'चित्तमंताए सिलाए' चित्तवत्यां सचित्तायां खनित. सद्यो निष्कासितायां शिलायाम् ॥सू० ७३॥ 'चित्तमंताए लेलुए' चित्तवति सचित्ते लेलुके—लोष्टरूपे पृथिवीखण्डे, एतेषु पूर्वप्रदर्शितेषु स्थानेषु स्त्रियम्, 'निसीयावेज्ज वा निषीदयेत् वा उपवेशयेत् 'तुयट्टावेज्ज वा' त्वग्वर्त्तयेत् वा पार्श्वपरिवर्त्तनं कारयेत् शाययेत् वा तत्र शयन कारयेद्वा, एवं कारयन्तमन्यं वाऽनुमोदयेत् स प्रायश्चित्तभागी भवति ॥ सू० ७४ ॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए कोलावासंसि वा दारुए वा जावपइट्ठिए, सअंडे सपाणे सबीए सहरिए सओसे सउदए सउत्तिंग-पणग-दगमट्टिय-मक्कडासंताणगंसि णिसीयावेज्ज वा तुयट्टावेज्ज वा णिसीयावेंतं वा तुयट्टावेंतं वा साइज्जइ ॥ सू० ७५ ॥**

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञा कोलावासे वा दारुके वा जीवप्रतिष्ठिते साण्डे सप्राणे सबीजे सहरिते सावश्याये सोदके सोत्तिङ्गपनकदकमृत्तिकामर्कट-सन्तानके निषीदयेत् वा त्वग्वर्तयेद्वा निषीदयन्तं वा त्वग्वर्तयन्तं वा स्वदते ॥सू० ७५॥

**चूर्णी**—'जे भिक्खू' इत्यादि । **'जे भिक्खू'** यः कश्चिद् भिक्षुः **'माउग्गामस्स'** मातृग्रामस्य **'मेहुणवडियाए'** मैथुनप्रतिज्ञया मैथुनवाञ्छया **'कोलावासंसि वा'** कोलावासे वा, तत्र कोला - घुणाः काष्ठगताः काष्ठक्षतिकारका जीवविशेषाः 'घुण' इति लोकप्रसिद्धाः, तेषां कोलानां य आवासः स्थानं तत्र वा **'दारुए वा जीवपइट्ठिए'** दारुके वा जीवप्रतिष्ठिते यस्मिन् काष्ठे जीवा विद्यमाना भवेयुः तादृशमत्कुणादिजीवविशिष्टपीठफलकादिके **'सअंडे'** साण्डे पिपीलकाद्यण्डसहिते स्थाने काष्ठे वा **'सपाणे'** सप्राणे क्षुद्रद्वीन्द्रियादिप्राणियुक्तस्थाने **'सबीए'** सबीजे शाल्यादिसचित्तबीजयुक्तस्थाने **'सहरिए'** सहरिते हरितकायसहितस्थाने **'सओसे'** सावश्याये सूक्ष्महिमकणसहितस्थाने **'सउत्तिंग'** सउत्तिङ्गे, उत्तिङ्गका –भूमौ वर्तुलविवरकारिणो गर्दभमुखाकृतयः कीटविशेषाः, यद्वा कीटिकानगरादयः, तैः सहिते स्थाने **'पणग'** पनक –अङ्कुरितो अनङ्कुरितो वा पञ्चवर्णानन्तकायविशेषः **'फुलण'** इति भाषाप्रसिद्धः **'दगमट्टिय'** उदकमृत्तिका सजलपृथिवीकायः **'मक्कडासंताणगसि'** मर्कटसन्तानक लूताजालम्, तस्मिन्, एतेषु पूर्वोक्तघुणादियुक्तस्थानेषु यः श्रमणः स्त्रियं **'णिसीयावेज्ज वा'** निषीदयेत्-उपवेशनं कारयेत्, **'तुयट्टावेज्ज वा'** त्वग्वर्तयेद्वा पार्श्वपरिवर्तनं कारयेत्, तथा **'निसीयावेंतं वा'** निषीदयन्तम् उपवेशयन्तं वा **'तुयट्टावेंतं वा'** त्वग्वर्तयन्तं वा शाययन्तं वा **'साइज्जइ'** स्वदतेऽनुमोदते । यो भिक्षुर्मातृग्रामस्य मैथुनेच्छया सूत्रोक्तस्थानेषु स्त्रियमुपवेशयति शाययति वा, उपवेशयन्तं शाययन्तं वा अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति ॥सू० ७५॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा णिसीयावेज्ज वा तुयट्टावेज्ज वा णिसीयावेंतं वा तुयट्टावेंतं वा साइज्जइ ॥ सू० ७६॥**

छाया-- यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया आगन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा परिव्राजकावसथेषु वा निषीदयेद्वा त्वग्वर्तयेद्वा निषीदयन्तं वा त्वग्वर्तयन्तं वा स्वदते ॥ सू० ७६ ॥

**चूर्णी** - 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः **'माउग्गामस्स'** मातृग्रामस्य **'मेहुणवडियाए'** मैथुनप्रतिज्ञया-मैथुनवाञ्छया **'आगंतागारेसु वा'** आगन्त्रागारेषु वा आगन्तृणाम् आगन्तुकानां गमनागमनसमये विश्रामार्थकारितेषु गृहेषु धर्मशालेतिप्रसिद्धेषु वा **'आरामागारेसु वा'** आरामागारेषु वा क्रीडाकरणाय उपवनगृहेषु **'गाहावइकुलेसु वा'** गाथापतिकुलेषु वा गृहस्थगृहेषु **'परियावसहेसु वा'** परिव्राजकावसथेषु वा तापसनिवासस्थानेषु वा **'णिसीयावेज्ज वा'** निषीदयेत् वा उपवेशयेत् **'तुयट्टावेज्ज वा'** त्वग्वर्तयेद्वा शाययेत् **'णिसीयावेंतं वा** निषीदयन्तं वा **'तुयट्टावेंतं वा'** त्वग्वर्तयन्तं वा शयनं कारयन्तम् **'साइज्जइ'**

स्वदते। यो भिक्षुर्मातृग्रामस्य मैथुनसेवनेच्छया आगन्त्रागारादिषु स्वयमुपविशति स्त्रियं वा उपवेशयति तथा स्वयं शेते स्त्रियं वा शाययति च तमनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्तीति ॥ सू० ७६ ॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा निसीयावेत्ता वा तुयट्टावेत्ता वा असणं वा पाणं वा खाइमं वा साइमं अणुग्घासेज्ज वा अणुपाएज्ज वा अणुग्घासंतं वा अणुपाएंतं वा साइज्जइ॥ सू० ७७ ॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया आगन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा परिव्राजकावसथेषु वा निषद्य वा त्वग्वर्तयित्वा वा अशनं वा पानं वा खाद्यं वा स्वाद्यं वा अनुग्रासयेत् वा अनुपाययेत् वा अनुग्रासयन्त वा अनुपाययन्त वा स्वदते ॥ सू० ७७ ॥

चूर्णी— 'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया-मैथुनवाञ्छया 'आगंतागारेसु वा' आगन्त्रागारेषु वा यत्रागन्तुका गमनागमनसमये विश्राम्यति तादशं गृहमागन्तुकागार धर्मशालेतिलोकप्रविद्ध', तेषु 'आरामागारेसु वा' आरामागारेषु वा क्रीडार्थमागतपुरुषविश्रामार्थोपवनस्थितगृहेषु 'गाहावइकुलेसु वा' गाथापतिकुलेषु वा गृहस्थगृहेषु 'परियावसहेसु वा' परिव्राजकावसथेषु वा तापसानामाश्रमेषु, भिक्षुरेतादृशस्थानेषु स्त्रियम् 'णिसीयावेत्ता' निषद्य-उपवेश्य 'तुयट्टावेत्ता वा' त्वग्वर्तयित्वा वा 'असणं वा' अशनं वा 'पानं वा' पान वा 'खाइमं वा' खाद्यं वा 'साइम वा' स्वाद्यं वा 'अणुग्घासेज्ज वा' अनुग्रासयेद्वा-अनु-पश्चात् स्वग्रासग्रहणानन्तरं स्त्रियं ग्रासयेत् तन्मुखे ग्रासं दद्यात् 'अणुपाएज्ज वा' अनुपाययेद्वा स्वय जलादिकं पीत्वा तदन्तरं स्त्रिय पाययेत् 'अणुग्घासंतं वा' अनुग्रासयन्त वा स्वग्रासानन्तर ग्रासं ददतं वा 'अणुपाएंतं वा' अनुपाययन्तं वा स्वपानानन्तरं पाययन्तं वा 'साइज्जइ' स्वदतेऽनुमोदते। यो भिक्षुरागन्त्रादिगृहेषु मैथुनेच्छया स्त्रियमुपवेद्य शाययित्वा वा स्वयमशनादिकं भुक्त्वा पानीयं वा पीत्वा भोजयन्तं वा पाययन्तं वा अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्तीति ॥सू० ७७॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अंकंसि वा पलियंकंसि वा निसीयावेज्ज वा तुयट्टावेज्ज वा निसीयावेंतं वा तुयट्टावेंतं वा साइज्जइ ॥ सू० ७८॥

**छाया**—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अङ्के वा पर्यङ्के वा निषीदयेत् वा त्वग्वर्तयेत् वा निषीदयन्तं वा त्वग्वर्तयन्तं वा स्वदते ॥ सू० ७८ ॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमण 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया-मैथुनवाञ्छया 'अंकंसि वा' अङ्के वा—स्वकीयोत्सङ्गे 'पलियंकंसि वा' पर्यङ्के वा, तत्र पर्यङ्क 'मच' 'पलंग' इति भाषाप्रसिद्ध, तदुपरि 'णिसीयावेज्ज वा' निषीदयेत वा उपवेशयेत् 'तुयट्टावेज्ज वा' त्वग्वर्तयेत् वा—शयन कारयेत् 'णिसीयावेंतं वा' निषीदयन्त वा उपवेशयन्त वा 'तुयट्टावेंतं वा' त्वग्वर्तयन्तं वा शाययन्तं वा 'साइज्जइ' स्वदते अनुमोदते। यो भिक्षुर्मैथुनसेवनेच्छया स्त्रिय स्वाङ्के पर्यङ्के वा उपवेशयति वा शाययति वा तथा स्वाङ्के उपवेशयन्त वा शाययन्त वा श्रमणमनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति ॥सू० ७९ ॥

**सूत्रम्**—जे भिक्खू माउग्गामस्स मेहुणवडियाए अंकंसि वा पलियंकंसि वा णिसीयावेत्ता वा तुयट्टावेत्ता वा असणं वा पाणं वा खाइमं वा साइमं वा अणुग्घासेज्ज वा अणुपाएज्ज वा अणुग्घासंतं वा अणुपाएंतं वा साइज्जइ ॥ सू० ७९ ॥

**छाया**—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अङ्के वा पर्यङ्के वा निषद्य त्वग्वर्तयित्वा मशनं वा पान वा खाद्य वा स्वाद्य वा अनुग्रासयेद्वा अनुपाययेद्वा अनुग्रासयन्तं वा अनुपाययन्तं वा स्वदते ॥सू० ७९॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया—मैथुनवाञ्छया 'अंकंसि वा' अङ्के वा 'पलियंकंसि वा' पर्यङ्के वा 'णिसीयावेत्ता वा' निषद्य 'तुयट्टावेत्ता वा' त्वग्वर्तयित्वा वा अशनं वा पानं वा खाद्यं वा स्वाद्यं वा 'अणुग्घासेज्ज वा' अनुग्रासयेद्वा 'अणुपाएज्ज वा' अनुपाययेद् वा 'अणुग्घासंतं वा' अनुग्रासयन्तं वा 'अणुपाएंतं वा' अनुपाययन्तं वा अन्यम् 'साइज्जइ' स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गानवस्थामिथ्यात्वसंयमविराधनात्मविराधनादिदोषा भवन्ति ॥ सू० ७९ ॥

**सूत्रम्**—जे भिक्खू माउग्गामस्स मेहुणवडियाए अण्णतरं तेइच्छं आउट्टइ आउट्टंतं वा साइज्जइ ॥ सू० ८० ॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अन्यतमां चिकित्सां आवर्त्तयति आवर्त्तयन्तं वा स्वदते ॥सू० ८०॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया-मैथुनवाञ्छया 'अण्णतरं तेइच्छं' अन्यतमां चिकित्सां, तत्रान्यतमा नाम-चतुर्विधासु चिकित्सासु एकां काञ्चित् चिकित्साम्, ताश्चतस्रो यथा-वातिकी १, पैत्तिकी २, श्लैष्मिकी ३, सांनिपातिकी ४, तासु एकां काञ्चित चिकित्सां रोगोपचार-रूपाम् 'आउट्टइ' आवर्त्तयति कारयति 'आउट्टंतं वा साइज्जइ' आवर्तयन्तं कारयन्तं वा स्वदतेऽनुमोदते सा प्रायश्चित्तभागी भवति ॥ सू० ८० ॥

## सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अमणुन्नाइं पोग्गलाइं नीहरेइ नीहरेंतं वा साइज्जइ ॥ सू० ८१ ॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अमनोज्ञान् पुद्गलान् निर्हरति निर्हरन्तं वा स्वदते ॥सू० ८१॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया-मैथुनवाञ्छया 'अमणुन्नाइं पोग्गलाइं' अमनोज्ञान् पुद्गलान् शरीरस्थान् अशुचिदुर्गन्धिपुद्गलान् 'नीहरेइ' निर्हरति-निष्कासयति 'नीहरेंतं वा साइज्जइ' निर्हरन्तं वा शरीरादिभ्योऽमनोज्ञपुद्गलान् निष्कासयन्त वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ८१ ॥

## जे भिक्खू माउग्गामस्स मेहुणवडियाए मणुन्नाइं पोग्गलाइं उवकिरइ उवकिरंतं वा साइज्जइ ॥ सू० ८२ ॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया मनोज्ञान् पुद्गलान् उपकिरति उपकिरन्तं वा स्वदते ॥सू० ८२॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चित् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया-मैथुनवाञ्छया 'मणुन्नाइं पोग्गलाइं' मनोज्ञान् पुद्गलान् मनस आल्हादजनकान् शरीरोपचयकारकान् वा पुद्गलान् शरीरे 'उवकिरइ' उपकिरति प्रक्षिपति, अयं भावः-स्वशरीरे स्त्रीशरीरे वा स्वकीयवस्त्रे स्त्रीवस्त्रे वा स्ववसतौ स्त्रीवसतौ वा मनोहराणि चन्दनादिसुगन्धिद्रव्याणि प्रक्षिपति येन शरीरादिकं सुगन्धियुक्तं भवति, तथा 'उवकिरंतं वा' उपकिरन्तमन्यं वा 'साइज्जइ' स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ८२ ॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अन्नयरं पसुजायं वा पक्खिजायं वा पायंसि वा पक्खंसि वा पुच्छंसि वा सीसंसि वा गहाय संचालेइ संचालेंतं वा साइज्जइ ॥ सू० ८३ ॥

छाया - यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अन्यतरं पशुजातं वा पक्षिजातं वा पादे वा पक्षे वा पुच्छे वा शीर्षे वा गृहीत्वा संचालयति संचालयन्तं वा स्वदते ॥८३॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया—मैथुनवाञ्छया 'अन्नयरं' अन्यतरं अनेकेषु मध्यात् यं कमप्येकम् 'पसुजायं वा' पशुजातं वा गोमहिषादिकम् 'पक्खिजायं वा' पक्षिजातं वा मयूरादिकम् 'पायंसि वा' पादे वा—पशुपक्ष्यादीनां चरणे वा 'पक्खंसि वा' पक्षे वा—'पुच्छंसि वा' पुच्छे वा 'सीसंसि वा' शिरसि वा 'गहाय' गृहीत्वा 'संचालेइ' संचालयति परिभ्रामयति 'संचालेंतं वा साइज्जइ' संचालयन्तं वा स्वदतेऽनुमोदते । क्रिया मनोविनोदार्थमेव करोतीति तात्पर्यम् । स प्रायश्चित्तभागी भवति ॥ सू० ८३ ॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अन्नयरं पसुजायं वा पक्खिजायं वा सोयंसि कट्ठं वा किलिंचं वा अंगुलियं वा सलागं वा अणुप्पवेसित्ता संचालेइ संचालेंतं वा साइज्जइ ॥ सू० ८४ ॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया पशुजातं वा पक्षिजातं वा स्रोतसि काष्ठं वा किलिंचं वा अङ्गुलिकां वा शलाकां वा अनुप्रवेश्य संचालयति संचालयन्तं वा स्वदते ॥सू० ८४॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया-मैथुनवाञ्छया 'अन्नयरं पसुजायं वा' अन्यतरं पशुजातं वा 'पक्खिजायं वा' पक्षिजातं वा मयूरहंसादिकम् 'सोयंसि' स्रोतसि छिद्रे गुप्ताङ्गे 'कट्ठं वा' काष्ठं वा—काष्ठखण्डम् 'किलिंचं वा' किलिंचं वा, तत्र किलिंचो वंशकर्परी तम् 'अंगुलियं वा' अङ्गुलिकां वा 'सलागं वा' शलाकां वा—लौहादिशलाकाम् 'अणुप्पवेसित्ता' अनुप्रवेश्य 'संचालेइ' संचालयति 'संचालेंतं वा साइज्जइ' संचालयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ८४ ॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अन्नयरं पसुजायं वा पक्खिजायं वा 'अयमित्थि'–त्ति कट्टु आलिंगेज्ज वा परिस्सएज्ज वा परिचुंबेज्ज वा आलिंगंतं वा परिस्सयंतं वा परिचुंबंतं वा साइज्जइ ८५**

**छाया – यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अन्यतरं पशुजात वा पक्षिजातं वा 'इयं स्त्री-'ति कृत्वा आलिङ्गयेद्वा परिष्वजेत् वा परिचुम्बेत् वा आलिङ्गन्तं वा परिष्वजमानं परिचुम्बन्तं वा स्वदते ॥सू०८५॥**

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया—मैथुनवाञ्छया 'अन्नयरं पसुजायं वा' अन्यतरं पशुजातं वा 'पक्खिजायं वा' पक्षिजातं वा 'अयमित्थि'–त्ति कट्टु अयम् पशु पक्षी वा 'स्त्री इति' स्त्रीबुद्धिं तेषु कृत्वा 'आलिंगेज्ज वा' आलिङ्गयेद्वा—आलिङ्गनं कुर्यात् 'परिस्सएज्ज वा' परिष्वजेत वा परिष्वजनं विशेषतः आलिङ्गनम् 'परिचुंबेज्ज वा' परिचुम्बेत वा मुखेन चुम्बनं कुर्यात् 'आलिंगंतं वा' आलिङ्गन्तं वा 'परिस्सयंतं वा' परिष्वजमानं वा 'परिचुंबंतं वा' परिचुम्बन्तं वा 'साइज्जइ' स्वदतेऽनुमोदते। स प्रायश्चित्तभागी भवति ॥ सू० ८५ ॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए असणं वा पाणं वा खाइमं वा साइमं वा देइ देंतं वा साइज्जइ ॥ सू० ८६ ॥**

**छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अशनं वा पान वा खाद्यं वा स्वाद्य वा ददाति ददतं वा स्वदते ॥सू० ८६॥**

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया–मैथुनवाञ्छया अशनं वा पानं वा खाद्य वा स्वाद्यं वा चतुर्विधमाहारजातं स्त्रियै 'देइ' ददाति 'देंतं वा' ददतं वा 'साइज्जइ' स्वदतेऽनुमोदते। य कश्चित् श्रमणो मातृग्रामस्य मैथुनसेवनेच्छया स्त्रियै अशनादिक ददाति दापयति ददतं वा अनुमोदयति स प्रायश्चित्तभागी भवति ॥ सू० ८६ ॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए असणं वा पाणं वा खाइमं वा साइमं वा पडिच्छइ पडिच्छंतं वा साइज्जइ ॥ सू० ८७ ॥**

**छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अशनं वा पानं वा खाद्य वा स्वाद्यं वा प्रतीच्छति प्रतीच्छन्तं वा स्वदते ॥सू० ८७॥**

चूर्णी—'जे भिक्खू' इत्यादि । यो भिक्षुर्मैथुनसेवनेच्छया चतुर्विधमाहारजातं प्रतीच्छति गृह्णाति प्रतीच्छन्तं वा गृह्णन्तं वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० ८७ ॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं वा देइ देंतं वा साइज्जइ ॥ सू० ८८॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया वस्त्रं वा प्रतिग्रहं वा कम्बलं वा पादप्रोञ्छनकं वा ददाति ददतं वा स्वदते ॥सू० ८८॥

चूर्णीः - 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया-मैथुनवाञ्छया 'वत्थं वा' वस्त्रं वा 'पडिग्गहं वा' प्रतिग्रहं वा- पात्रादिकं वा 'कंबलं वा' कम्बलं वा 'पायपुंछणं वा' पादप्रोञ्छनकं वा रजोहरणम् 'देइ' ददाति 'देंतं वा' ददतं वा 'साइज्जइ' स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ८८ ॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं वा पडिच्छइ पडिच्छंतं वा साइज्जइ ॥ सू० ८९॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया वस्त्रं वा प्रतिग्रहं वा कम्बलं वा पादप्रोञ्छनकं वा प्रतीच्छति प्रतीच्छन्तं वा स्वदते ॥सू०८९॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः मैथुनवाञ्छया स्त्रीभ्यः वस्त्रादिकम् 'पडिच्छइ' प्रतीच्छति गृह्णाति 'पडिच्छंतं वा साइज्जइ' प्रतीच्छत वा गृह्णन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ८९ ॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए सज्झायं वाएइ वाएंतं वा साइज्जइ ॥ सू० ९०॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया स्वाध्यायं वाचयति वाचयन्तं वा स्वदते ॥सू० ९०॥

चूर्णी— 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया-मैथुनवाञ्छया 'सज्झायं वाएइ' स्वाध्याय वाचयति, तत्र स्वाध्यायं सूत्रमर्थं तदुभयं वाऽध्यापयति तथा 'वाएंतं वा साइज्जइ' स्वाध्याय वाचयन्तं वा स्वदतेऽनुमोदके स प्रायश्चित्तभागी भवति ॥ सू० ९० ॥

सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए सज्झायं पडिच्छइ पडिच्छंतं वा साइज्जइ ॥ सू० ९१ ॥

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया स्वाध्यायं प्रतीच्छति प्रतीच्छन्तं वा स्वदते ॥ सू० ९१ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया मैथनवाञ्छया 'सज्झायं पडिच्छइ' स्वाध्याय सूत्रार्थरूपं

प्रतीच्छति स्त्रीभ्यः गृह्णीयात् 'पडिच्छंतं वा साइज्जइ' प्रतीच्छन्त गृह्णन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ९१ ॥

**सूत्रम्—जे भिक्खू माउग्गामस्स मेहुणवडियाए अण्णयरेणं इंदिएणं आकारं करेइ करेंतं वा साइज्जइ ॥ सू० ९२ ॥**

छाया—यो भिक्षुर्मातृग्रामस्य मैथुनप्रतिज्ञया अन्यतरेण इन्द्रियेणाकारं करोति कुर्वन्तं वा स्वदते ॥सू० ९२॥

चूर्णी-'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'माउग्गामस्स' मातृग्रामस्य 'मेहुणवडियाए' मैथुनप्रतिज्ञया-मैथुनवाञ्छया 'अण्णयरेणं इंदिएणं' अन्यतरेण केनापि इन्द्रियेण पुरुषस्य स्त्रियो वा इन्द्रियाकारेण स्तनमुखाद्यङ्गोपाङ्गरूप किञ्चिदपि इन्द्रियमाश्रित्येत्यर्थः, स्तनमुखादीनामिति भावः 'आकारं करेइ' आकारं करोति, स्त्रियोऽग्रे हस्तादिना चित्रकर्मणा वा एतादृशमाकारं रचयति चित्रयति वा येन स्त्रियो मनसि राग समुत्पद्येत, शरीर रोमाञ्चितं कम्पायमानं च भवेत्, 'मुखाद्याकारावलोकनेन द्रवीभूता सती स्त्री मामभिलषिष्यति' इति बुद्ध्या स्त्रियोऽग्रे आकारं कुर्यात् चित्रयेद्वा उपलक्षणात् हस्तनेत्रभ्रूप्रभृतिभिर्विकारजनकां चेष्टां वा कुर्यात् 'करेंत वा साइज्जइ' कुर्वन्तमन्यं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥९२॥

**सूत्रम्—तं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥ सू० ९३ ॥**

॥ सत्तमो उद्देसो समत्तो ॥ ७ ॥

छाया—तत् सेवमान आपद्यते चातुर्मासिकं परिहारस्थानमनुद्घातिकम् ॥९३॥

॥ सप्तमोद्देशकः समाप्तः ॥ ७ ॥

चूर्णी—'तं सेवमाणे' इत्यादि। 'तं सेवमाणे' तत् सेवमान तत् उद्देशकस्यादौ तृणमालिकादिकरणादारभ्य उद्देशकान्ते आकारपर्यन्तं यानि प्रायश्चित्तस्थानानि प्रोक्तानि तन्मध्यात् यत् किमप्येकं प्रायश्चित्तस्थानं सेवमान. प्रतिसेवनं कुर्वाण 'आवज्जइ' आपद्यते प्राप्नोति 'चाउम्मासियं' चातुर्मासिकम् 'परिहारट्ठाणं' परिहारस्थानं प्रायश्चित्तस्थानम् 'अणुग्घाइयं' अनुद्घातिकं गुरुकम्। अयभाव.—यः कोऽपि भिक्षुः एतेषु सप्तमोद्देशकोक्तप्रायश्चित्तस्थानेषु मध्यात् यत् किमपि एकम्-अनेकं सर्वं वा प्रायश्चित्तस्थान प्रतिसेवते स गुरुचातुर्मासिकं प्रायश्चित्तं प्राप्नोतीति भावः ॥९३॥

इति श्री-विश्वविख्यात-जगद्वल्लभ-प्रसिद्धवाचक-पञ्चदशभाषाकलितललितकलापालापक-प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक-वादिमानमर्दक-श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-"जैनशास्त्राचार्य"-पदभूषित-कोल्हापुरराजगुरु-बालब्रह्मचारि-जैनाचार्य-जैनधर्मदिवाकर-पूज्यश्री-घासीलालव्रति-विरचितायां "निशीथसूत्रस्य" चूर्णिभाष्यावचूरिरूपायां व्याख्यायां सप्तमोद्देशकः समाप्तः ॥७॥

## ॥ अष्टमोद्देशकः ॥

गतः सप्तमोद्देशकः, अथाष्टम प्रारभ्यते, सप्तमोद्देशकस्यान्तिमसूत्रेण सहास्याष्टमोद्देशकादि-सूत्रस्य कः सम्बन्ध ? इति सम्बन्धप्रतिपादनायाह भाष्यकार.—'पुव्वं खलु' इत्यादि ।

**भाष्यम्**— पुव्वं खलु आगारा, कहिया ते कहिं कइविहा होंति ।
आगंतागाराइसु, विहार-सज्झाय-पभिईओ ॥१॥

**छाया**— पूर्वं खलु आकारा कथितास्ते कुत्र कतिविधा भवन्ति ।
आगन्त्रागारादिषु विहार स्वाध्याय-प्रभृतय ॥२॥

**अवचूरिः**-- पूर्वं सप्तमोद्देशकस्यान्तिमसूत्रे आकारा. कथिता., ते च केषु केषु स्थानेषु भवन्तीति प्रश्ने कथयति—ते आकारा आगन्त्रागारादिषु भवन्ति ते कतिविधा ? इति प्रश्ने कथयति विहार-स्वाध्याय-प्रभृतयो भवन्ति । सप्तमोद्देशकस्यान्ते आकारा. कथितास्तेषां स्थानानि तत्प्रकाराणि चास्मिन् अष्टमोद्देशके प्रदर्शयिष्यन्ते, एष एव सम्बन्ध सप्तमाष्टमोद्देशकगतपूर्वापरसूत्रयोरिति, अनेन सम्बन्धेनायातस्यास्याष्टमोद्देशकस्येदमादिसूत्रम्—'जे भिक्खू आगंतागारेसु वा' इत्यादि ।

**सूत्रम्—जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइ-कुलेसु वा परियावसहेसु वा एगो एगित्थीए सद्धिं विहारं वा करेइ सज्झायं वा करेइ असणं वा पाणं वा खाइमं वा साइमंवा आहारेइ, उच्चारं वा पासवणं वा परिट्ठवेइ, अण्णयरं वा अणारियं निट्ठुरं मेहुणं अस्समणपाओग्गं कहं कहेइ कहेंतं वा साइज्जइ ॥ सू० १ ॥**

छाया—यो भिक्षुरागन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा परिव्राजकावसथेषु वा एक एकया स्त्रिया सार्द्धं विहारं वा करोति, स्वाध्याय वा करोति, अशनं वा पान वा खाद्यं वा स्वाद्य वा आहरति, उच्चार वा प्रस्रवणं वा परिष्ठापयति, अन्यतरां वा अनार्यां निष्ठुरां मैथुनीमश्रमणप्रयोग्यां कथां कथयति कथयन्तं वा स्वदते ॥ सू० १॥

**चूर्णी**—'जे भिक्खू' इत्यादि । य. कश्चिद् भिक्षुः 'आगतागारेसु वा आरामागारेसु वा 'गाहावइकुलेसु वा परियावसहेसु वा' एषामर्थ. सप्तमोद्देशके गत. । एषु स्थानेषु 'एगो एगित्थीए सद्धिं' एक स्वयमेकाकी सन् एकया स्त्रिया सार्द्धम् 'विहारं वा करेइ' विहार वा करोति एक. साधुरेकाकिन्या स्त्रिया श्राविकया श्रमण्या वा सार्द्धम् विहार गमनागमनं ग्रामाद् ग्रामान्तर-गमन वा करोति 'सज्झायं वा करेइ' स्वाध्यायं वा करोति, तत्र स्वाध्याय सूत्रार्थयोरध्ययनं

करोति 'असणं वा पाणं वा खाइमं वा साइमं वा' अशनादिचतुर्विधमाहारं 'आहारेइ' आहरति करोति 'उच्चारं वा पासवणं वा परिट्ठवेइ' उच्चारं वा प्रस्रवणं वा परिष्ठापयति 'अण्णयरं वा अणारियं निट्ठुरं' अन्यतरां वा काञ्चित् अनार्याम् आर्येण सत्पुरुषेणाचरितुमयोग्याम् निन्दितामित्यर्थः निष्ठुराम् अश्लीलाम् 'मेहुणं' मैथुनीं मैथुनसम्बन्धिनीम् 'अस्समणपाओग्गं' अश्रमणप्रायोग्याम् अश्रमणानामसाधुपुरुषाणामुचिता न तु श्रमणानाम्, तादृशीं 'कहं' कथां वाक्यप्रबन्धरूपां कामादिविकारोत्पादिकां कथां–राजकथा–देशकथा–भक्तकथा–स्त्रीकथारूपां चतुर्विधामपि विकथां वा 'कहेइ' कथयति 'कहेंतं वा साइज्जइ' कथयन्तं वा तादृशीं कथां कुर्वन्तं वा स्वदतेऽनुमोदते। यो हि श्रमणः एकाकी आगन्त्रागाराद्यन्यतमस्थाने एकाकिन्या स्त्रिया सार्द्धम् विहार स्वाध्यायमाहारं वा करोति कारयति कुर्वन्तं वाऽन्यमनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति, तस्मात् कारणात् एकाकी श्रमण आगन्त्रागारादिषु एकाकिन्या स्त्रिया सार्द्धम् विहारादिकं न कुर्यात् न कारयेत् न वा कुर्वन्तमनुमोदयेदिति भावः।

अत्राह भाष्यकारः—

भाष्यम्—माया भगिणी दुहिया, सद्धिं एयाहिं नो वसे भिक्खू।
एगंते जइ एवं, किं पुण अन्नाए इत्थीए ॥१॥
सामन्नेण निसिद्धो, थीहिं सद्धिं मुणिस्स संवासो।
किं पुण विहारमाइसु, करेज्ज जं ताहि सह वासं ॥२॥
थीसु कहा पडिसिद्धा कावि य जा धम्मिया पसत्था वा।
किं पुण अणारिया सा, कहिज्जए थीण मज्झम्मि ॥३॥
जो एवं आयरइ, पावइ सो आणभंगमणवत्थं।
मिच्छत्त विराहणं च, तम्हा एए विवज्जेज्जा ॥४॥

छाया—माता भगिनी दुहिता, सार्द्धम् एताभिर्नो वसेद् भिक्षुः।
एकान्ते यद्येवं किं पुनरन्यया स्त्रिया ॥१॥
सामान्येन निषिद्ध स्त्रीभिः सार्द्धं मुनेः संवासः।
किं पुनर्विहारादिषु कुर्याद् यत् ताभिः सह वासम् ॥२॥
स्त्रीषु कथा प्रतिषिद्धा काऽपि च या धार्मिकी प्रशस्ता वा।
किं पुनरनार्या सा कथ्यते स्त्रीणां मध्ये ॥३॥
य एवमाचरति, प्राप्नोति स आज्ञाभङ्गमनवस्थाम्।
मिथ्यात्वं विराधनां च तस्माद् एतान् विवर्जयेत् ॥४॥

अवचूरिः—'माया भगिणी' इत्यादि। माता जन्मदात्री, भगिनी–सहोदरा दुहिता पुत्री एताभिरपि सार्द्धं भिक्षुः श्रमणः एकान्ते नो वसेत् एताभिरपि सह एकान्तवासं न कुर्यात्, यद्येव तर्हि

अन्यया कयाचित् सम्बन्धवर्जितया परिचितया अपरिचितया वा सह कथं वसेत् वासं कुर्यात् , न कदाचिदपि वसेदिति भावः । गृहिणामप्येव निषिद्ध , उक्तञ्चान्यत्रापि—

''मात्रा स्वस्रा दुहित्रा वा, न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो, विद्वांसमपि कर्षति ॥१॥ भा० गा० १॥

**'सामन्नेण'** इत्यादि । **'मुणिस्स'** मुने सामन्येनापि स्त्रीभि सार्द्धं सवासो भगवता निषिद्धस्तर्हि किं पुन. **'विहारमाइसु'** विहारादिषु -आदिपदेन स्वाध्याये आहारे उच्चारादिपरिष्ठापने विशेषतोऽनार्यनिष्ठुरमैथुनाश्रमणप्रायोग्यकथासु यत् ताभि सह वास कुर्यात् , भिक्षूणा कुत्रापि पुरुषसाक्षिणमन्तरेण स्त्रीभि मह सामान्यवार्त्तापि न कल्पते इति भाव ।।भा० गा० २॥

**'थीसु कहा'** इत्यादि । **'थीसु'** स्त्रीषु स्त्रीणा मध्ये काऽपि या धार्मिकी प्रशस्ता वा कथा भवेत् सापि भगवता प्रतिषिद्धा तर्हि किं पुनर्या अनार्या अप्रशस्ता कथा भवेत् सा स्त्रीणा मध्ये कथ्यते, न काचिदपि कथ्यते इति भाव. ।।भा० गा० ३॥

अथैतद्विषये प्रायश्चित्तं प्रदर्श्यते—**'जो एव'** इत्यादि ।

**य** कोऽपि श्रमण· एवमाचरति स्त्रीसहवासकथाकथनादिक करोति स **'आणाभंग'** आज्ञाभङ्ग तीर्थकराज्ञाभङ्गदोषम् , अनवस्थादोष, मिथ्यात्वं, विराधनां,–सयमात्मविराधना प्राप्नोति । तत्र संयमविराधना स्पष्टैव । स्त्रिया सह सवास विहारादिक वा कुर्वन्तमब्रह्मसेवनशङ्कया साधुं मारयेत् राजपुरुषादिना ग्राहयेद् वा, तेनात्मविराधनाऽवश्यम्भाविनी **'तम्हा'** तस्मात् कारणात् एतान् विहारादिकान् स्त्रिया सह **'विवज्जेज्जा'** विवर्जयेत् , भिक्षुर्न कुर्यादिति भाव. ।।भा०गा०४॥

एव प्रथमसूत्रोक्तक्रमेणैव इतोऽग्रे द्वितीयसूत्रादारभ्य नवमसूत्रपर्यन्तमष्टावपि सूत्राणि व्याख्येयानि । तेषु विशेषपदानि व्याख्यायन्ते, तथाहि **'जे भिक्खू उज्जाणंसि वा'** इत्यादि । **'उज्जाणंसि वा'** उद्याने वा, तत्रोद्यानमुपवन यत्र लोका क्रीडार्थं गच्छन्ति **'उज्जाणगिहंसि वा'** उद्यानगृहे वा उद्यानस्थितं क्रीडाकरणाय समागताना पुरुषाणा निवासस्थानम् **'उज्जाणसालंसि वा'** उद्यानशालायां वा उपवनस्थितशालायां 'धर्मशाला' इति लोकप्रसिद्धलक्षणायाम् **'निज्जाणंसि वा'** निर्याणे वा, निर्याणं राज्ञां निर्गमनमार्गे येन मार्गेण राजा निर्गतो भवति, येन राजा गच्छति आगच्छति च तादृशस्थानं, तस्मिन् निर्याणे वा **'निज्जाणगिहंसि वा'** निर्याणगृहे वा राजमार्गस्थितगृहे **'निज्जाणसालंसि वा'** निर्याणशालायां वा राजमार्गस्थितशालाया विहारादिक करोति ॥ सू० २॥

**'जे भिक्खू अट्टंसि वा'** इत्यादि । **'अट्टंसि वा'** अट्टे वा प्रासादप्राकारस्याग्रोभागो **'अट्टालयंसि वा'** अट्टालिकायाम् नगरस्य य प्राकारः तस्यैकदेशो या अट्टालिका तस्यां वा **'चरियंसि वा'**

चरिकायां वा प्राकारस्याधोऽष्टहस्तपरिमितो मार्गः चरिका तस्यां वा 'पागारंसि वा' प्राकारे वा प्रकारोपरि निर्मीयमाणे गृहे वा 'दारंसि वा' द्वारे वा—नगरद्वारे 'गोपुरंसि वा' गोपुरे वा, गोपुर नगरद्वारस्य अग्रद्वारम् , तस्मिन् वा ॥ सू० ३ ॥

'जे भिक्खू दगंसि वा' इत्यादि । 'दगंसि वा' उदके वा जलमध्ये 'दगमग्गंसि वा' उदकमार्गे वा येन पथा जलस्य प्रवाहो वहति तस्मिन् उदकमार्गे 'दगपहंसि वा' उदकपथे वा येन पथा जलमानेतुं गच्छत्यागच्छति च जन. स उदकपथ', तस्मिन् उदकपथे वा 'दगमलंसि वा' उदकमले वा कर्दमसहितमार्गे 'दगतीरंसि वा' उदकतीरे वा उदकस्य समीपदेशे 'दगट्ठाणंसि वा' उदकस्थाने वा यत्र जल तिष्ठति तत्र तडागादिषु ॥ सू० ४ ॥

'जे भिक्खू सुण्णगिहंसि वा' इत्यादि । 'सुण्णगिहंसि वा' शून्यगृहे वा मनुष्यादिवास-रहिते गृहे 'सुण्णसालंसिवा' शून्यशालाया मनुष्यादिरहिताया शालायाम् 'भिन्नगिहंसि वा' भिन्नगृहे वा त्रुटितस्फुटितगृहे 'भिन्नसालंसि वा' भिन्नशालाया वा-त्रुटितस्फुटितशालायां वा 'कूडागारंसि वा' कूटागारे वा, तत्र कूट. पर्वतशिखर तत्सदृशगृहे अधोविशालम् उपर्युपरि संकुचित कूटागारं, तस्मिन् 'कोट्ठागारंसि वा' कोष्ठागारे शालिगोधूमयवाद्यन्नागारे ॥ सू० ५ ॥

'जे भिक्खू तणगिहंसि वा' इत्यादि । 'तणगिहंसि वा' तृणगृहे वा दर्भादितृणसंपादित-गृहे कुटीरे 'झोंपडी' इति लोकप्रसिद्धे 'तणसालंसि वा' तृणशालायां वा दर्भादितृणसंपादितशाला-याम् 'तुसगिहंसि वा' तुषगृहे वा शाल्यादितुषस्थापनगृहे 'तुससालंसि वा' तुषशालायां वा तुषस्थापनाय निर्मिताया शालायाम् 'भुसगिहंसि वा' भुसगृहे वा गोधूमयवादीनां मर्दनेन जाय-मानो 'भूसा' इति लोकप्रसिद्धो वस्तुविशेषः, तादृशो भूसास्थापनाय निर्मिते गृहविशेषे 'भुससालंसि वा' भुसशालाया वा तादृशशालायाम् ॥ सू० ६ ॥

'जे भिक्खू जाणसालंसि वा' इत्यादि । 'जाणसालंसि वा' यानशालायां वा यानम-श्वादिकं तस्य शाला इति यानशाला विशालगृहं शालेत्युच्यते तस्यां यानशालायाम् 'जाणगिहंसि वा' यानगृहे वा अश्वादिगृहे वा 'जुग्गसालंसि वा' युग्यशालायां वा, तत्र युग्यं शकटरथादिकं यत्र स्थाप्यते तादृशशालायाम् 'जुग्गगिहंसि वा' युग्यगृहे वा ॥ सू० ७ ॥

'जे भिक्खू पणियसालंसि वा' इत्यादि । 'पणियसालंसि वा' पण्यशालायां यत्र विक्रेयं भाण्डादिकं विक्रयार्थं स्थापितं भवेत् तादृशगृहं पण्यशालोच्यते तत्र 'पणियगिहंसि वा' पण्यगृहे वा 'कुवियसालंसिवा' कुप्यशालायां वा यत्र लौहादिकं वस्तु स्थापितं भवेत् तादृशं गृहं कुप्यशाला, तत्र 'कुवियगिहंसि वा' कुप्यगृहे वा लौहादिस्थापनगृहे ॥ सू० ८ ॥

'जे भिक्खू गोणसालंसि वा' इत्यादि । 'गोणसालंसि वा' गोवृषभशालायां वा 'गोण-गिहंसि वा' गवां गृहे वा 'महाकुलंसि वा' महाकुले वा तत्र महतां कुलम् महाकुलम् तस्मिन्

**'महागिहंसि वा'** महागृहे वा, एतेषु अष्टसूत्रकथितेषु स्थानेषु य कश्चिद् भिक्षुर्विहार–स्वाध्यायाऽऽहारो–च्चारादिपरिष्ठापनाऽनार्यादिकथाकथनं करोति कुर्वन्तं वा स्वदते स प्रायश्चित्तभागी भवति ॥९॥

अत्राह भाष्यकार·—

**भाष्यम्**—उज्जाणाओ समारब्भ, गोणसालंतसंठिओ ।
विहाराइं करे भिक्खू, आणाभगाइ पावई ॥

**छाया** – उद्यानतः समारभ्य गोशालान्तसंस्थितः ।
विहारादि कुर्याद् भिक्षुः आज्ञाभङ्गादि प्राप्नोति ॥

**अवचूरिः**—**'उज्जाणाओ'** इत्यादि । उद्यानत समारभ्य उद्यानमादौ कृत्वा गोशालापर्यन्तस्थानेषु संस्थित भिक्षु श्रमण एकया स्त्रिया सार्द्धं विहारादिकं विहारमाहारमुच्चारादिपरिष्ठापनमनार्यादिकथाकथनं च कुर्यात् कुर्वन्तमनुमोदयेत् वा स आज्ञाभङ्गादिकान् आज्ञाभङ्गानवस्थामिथ्यात्वसयमविराधनात्मविराधनादिदोषान् प्राप्नोति तस्मात्कारणात् श्रमण· आगन्त्रागारादिषु एकाकिन्या स्त्रिया सार्द्धं विहारादिक न कुर्यात् ॥ सू० ९ ॥

## सूत्रम्—जे भिक्खू राओ वा वियाले वा इत्थीमज्झगए इत्थीसंसत्ते इत्थीपरिवुडे अपरिमाणयाए कहं कहेइ कहेंतं वा साइज्जइ ॥ सू० १० ॥

**छाया**— **यो भिक्षुः रात्रौ वा विकाले वा स्त्रीमध्यगत· स्त्रीसंसक्तः स्त्रीपरिवृतोऽपरिमाणतया कथां कथयति कथयन्तं वा स्वदते ॥ सू० १० ॥**

**चूर्णी**—**'जे भिक्खू'** इत्यादि । य कश्चिद् भिक्षु **'राओ वा'** रात्रौ वा **'वियाले वा'** विकाले वा, तत्र विकाल दिवसावसाने रात्रिप्रागभावे, रात्र्यवसाने दिवसप्रागभावे वर्त्तते, तथा च-रात्रिदिवसयोरन्तरालकालो विकाल·, तस्मिन् विकाले वा **'इत्थिमज्झगए'** स्त्रीमध्यगत. स्त्रीणां मध्ये स्थित स्त्रीसमुदाये स्थित· **'इत्थिसंसत्ते'** स्त्रीससक्त -स्त्रिया सघट्टित· स्त्रिया ऊर्वादिना सस्पृष्ट· तत्स्पर्शयुक्त· **'इत्थिपरिवुडे'** स्त्रीपरिवृत· परि सर्वत समन्तात् स्त्रीभि· परिवृत· यस्य चतुर्दिक्षु स्त्रिय उपविष्टा भवेयु स स्त्रीपरिवृत इति कथ्यते, इत्थंभूत साधु **'अपरिमाणयाए'** अपरिमाणतया परिमाणमतिक्रम्य, परिमाण च एकद्वित्रिचतुपञ्चप्रश्नोत्तररूप भवति तदतिक्रम्य षष्ठं प्रश्नोत्तरमपरिमाणं भवति, एतादृश्या अपरिमाणतया **'कहं'** कथा–धर्मकथाम्–प्रश्नोत्तररूपां वा कथां **'कहेइ'** कथयति **'कहेतं वा साइज्जइ'** कथयन्तं वा स्वदतेऽनुमोदते, स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकार.—

**भाष्यम्**— राओ य वियाले वा, इत्थीमज्झगओ मुणी ।
पमाणमइरेगेण, कहाओ दोसमावहे ॥१॥

छाया— रात्रौ च विकाले वा स्त्रीमध्यगतो मुनिः ।
प्रमाणातिरेकेण, कथातो दोषमावहेत् ॥१॥

अवचूरिः—'राओ य' इत्यादि । 'राओ य' रात्रौ च विकाले वा पूर्वप्रदर्शितरूपे दिवसावसाने रात्र्यवसाने वा स्त्रीमध्यगत स्त्रीसमुदायस्य मध्ये स्थित एवं स्त्रीसंसक्त स्त्रीपरिवृतो मुनिः स्त्रीभ्य पुरुषसाक्षिणमन्तरेण केवलं स्त्रीभ्य 'पमाणमइरेगेण' प्रमाणातिरेकेण स्त्रीणां धर्मविषयकविवादशङ्कादिप्रसगे सति प्रमाणं-एकद्वित्रिचतुःपञ्चप्रश्नोत्तररूपमतिक्रम्य षष्ठादिप्रश्नोत्तररूपां कथा कथयति, 'कहाओ' कथात एतादृशकथाकरणत दोषम्-आज्ञाभङ्गादिरूपं दूषणं आवहेत् प्राप्नुयात् । अत्र कश्चित् शङ्कां करोति—साधूनां मध्ये एकाकिसाधुसमीपे स्त्रीभिर्न गन्तव्यमिति दोषश्रवणात्, स्त्रीमध्ये कथाकरणस्य शास्त्रे निषेधात् स्त्रियो दिवसेऽपि न गच्छन्ति तर्हि रात्रौ विकाले वा तासां गमनं कथ संभवति कथमत्रास्य सूत्रस्यावसर ? तत्र कथ्यते—यदि स्त्रीणां परस्पर धर्मविषये काचित् शङ्का कश्चिद् विवादो वा समुत्तिष्ठेत् तादृशप्रसङ्गे स्त्रीणां रात्र्यादावपि साधुसमीपे गमनसंभव । एतादृशप्रसगे तत्र कञ्चित् पुरुष साक्षिणं कृत्वा दूरत एव एक—द्वि—त्रि—चतु-पञ्च—समाधानैस्तासां शङ्कां विवाद च निराकर्त्तु कल्पते, तदधिकं तु नैव कल्पते, अत एव सूत्रे 'अपरिमाणयाए' इत्युक्तम्, अनेन एकद्व्यादिपरिमाणत. कथने न कश्चिद्दोष इति व्यज्यते, किन्तु स्त्रीमध्यगतादिविशेषणविशिष्टो भूत्वा तु किं दिवा किं रात्रौ किं विकाले वा किं प्रमाणत किमप्रमाणतो वा कथञ्चिदपि कथां कर्त्तुं साधोर्नैव कल्पते इति सूत्रनिष्कर्ष । एव करणे स्त्रीणा पितृभ्रातृपुत्रादिस्वजनानां मनसि शङ्का समुत्पद्यत यत् निर्लज्जो लम्पटोऽसौ साधुर्दृश्यते य स्त्रीणा मध्ये स्थित्वा रात्रौ विकाले चापि अविचार्यैव चिरकाल कथा कथयति, इति कृत्वा ते क्रुध्येरन तत साधु ताडयेत् राजपुरुषैर्ग्राहयेद्वा तेन सयमविराधना आत्मविराधना धर्मस्यावहेलना च भवितुमर्हति । इत्यादिबहुदोषप्रसङ्गात् साधु. स्त्रीमध्यगतो रात्रौ विकाले वा प्रमाणमतिक्रम्य कथा न कुर्यात न कारयेत् कुर्वन्तमन्य वा नानुमोदयेदिति भाष्यगाथार्थ. ॥

सूत्रम्—जे भिक्खू सगणिच्चियाए वा परगणिच्चियाए वा णिग्गंथीए सद्धिं गामाणुगामं दूइज्जमाणे पुरओ गच्छमाणे पिट्ठओ रीयमाणे ओहयमणसंकप्पे चिंतासोयसागरसंपविट्ठे करयलपल्हत्थमुहे अट्टज्झाणोवगए विहारं वा करेइ सज्झायं वा करेइ, असणं वा पाणं वा खाइमं वा साइमं वा आहारेइ, उच्चारं वा पासवणं वा परिट्ठवेइ, अण्णयरं वा अणारियं निट्ठुरं मेहुणं असमणपाओग्गं कहं कहेइ कहेंतं वा साइज्जइ ॥सू०११॥

छाया—यो भिक्षुः स्वगणीयया परगणीयया निर्ग्रन्थ्या सार्द्धं ग्रामानुग्रामं द्रवन् पुरतो गच्छन् पृष्ठतः रीयमाणः (गच्छन्) अपहृतमनःसंकल्पः चिन्ताशोकसागरसंप्रविष्ट करतलप्रन्यस्तमुखः आर्तध्यानोपगतो विहारं वा करोति, स्वाध्यायं वा करोति, अशनं वा पानं वा खाद्य वा स्वाद्यं वा आहरति, उच्चारं वा प्रश्रवण वा परिष्ठापयति, अन्यतरां वा अनार्यां निष्ठुरां मैथुनीमश्रमणप्रायोग्या कथां कथयति कथयन्तं वा स्वदते ॥११॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षुः 'सगणिच्चाए वा' स्वगणीयया—स्वगणसम्बन्धिन्या 'परगणिच्चियाए वा' परगणीयया—परगच्छसम्बन्धिन्या वा 'णिग्गंथीए सद्धिं' निर्ग्रन्थ्या श्रमण्या सार्द्धम् 'गामाणुगाम दूइज्जमाणे' ग्रामानुग्राम द्रवन् एकस्मात् ग्रामात् ग्रामान्तरं प्रति गच्छन् 'पुरओ गच्छमाणे' पुरतो गच्छन्—पुरतो श्रमण्या अग्रे गच्छन् 'पिट्ठओ रीयमाणे' पृष्ठतो रीयमाण—पृष्ठतश्चलन् तद्वियोगात् 'ओहयमणसंकप्पे' अपहतमन-सकल्प., तत्रापहतो विनष्टो मनस सकल्पो विचारो यस्य स तथा उद्भ्रान्तमना इत्यर्थः, 'चिंतासोयसागरसंपविट्ठे' चिन्ताशोकसागरसप्रविष्ट चिन्तासमुद्रे शोकसमुद्रे च प्रविष्ट 'करयलपल्हत्थमुहे' करतलप्रन्यस्तमुख· साध्वीवियोगत स्वहस्ततले स्थापितमुख इत्यर्थ·, 'अट्टज्झाणोवगए' आर्तध्यानोपगत—आर्तध्यानं संप्राप्त इत्यर्थ·, एतादृश· सन् 'विहारं वा करेइ' विहार वा करोति अय भाव—स्वगणसम्बन्धिन्या परगणसम्बन्धिन्या वा श्रमण्या सह मार्गे गच्छन् श्रमणः यदि कदाचित् अग्रे गच्छति दूरं पश्चाद वा श्रमणो भवति, कदाचित् श्रमण. पुरतो भवति साध्वी पश्चात् भवति, कदाचित् श्रमण पश्चाद् भवति श्रमणी अग्रे भवति तदा श्रमणीवियोगात् श्रमणोऽपहृतमन संकल्पो भूत्वा शोकसागरे पतित इवार्तध्यानोपगत सन् विहार करोति, अन्यत्सर्वं पूर्ववद् व्याख्येयम् ॥सू० ११॥

## सूत्रम्—जे भिक्खू णायगं वा अणायगं वा उवासयं वा अणुवासयं वा अंतो उवस्सयस्स अद्धं वा राइं कसिणं वा राइं संवसावेइ संवसावेंतं वा साइज्जइ ॥सू० १२॥

छाया—यो भिक्षुर्ज्ञातकं वा अज्ञातकं वा उपासक वा अनुपासक वा अन्तरुपाश्रयस्यार्द्धां वा रात्रिं कृत्स्नां वा रात्रिं संवासयति संवासयन्तं वा स्वदते ॥सू०१२॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु· 'णायगं वा' ज्ञातकं वा स्वजनं स्वपरिचितं वा 'अणायगं वा' अज्ञातकम्—स्वजनातिरिक्तमपरिचितं वा 'उवासय वा उपासकम्—जिनधर्मोपासकं श्रावकं वा 'अणुवासयं वा' अनुपासकं वा—अन्यमतावलम्बिन वा 'अन्तो उवस्सयस्स' अन्तर्मध्ये उपाश्रयस्य वसतेर्मध्ये इत्यर्थ 'अद्धं वा राइं' अर्द्धां वा रात्रिम्

रात्र्यर्द्धं यावत् 'कसिणं वा राइं' कृत्स्नां संपूर्णाम् यामचतुष्टयरूपां सम्पूर्णां वा रात्रिं यावत् 'संवसावेइ' संवासयति उपाश्रये वासं स्थितिं कारयति, 'अत्र वसतौ संवास कुरु हे आर्य ! इत्येवं वदति 'संवसावेंतं वा साइज्जइ' संवासयन्त वा स्वदते, य खलु स्वजनमस्वजनं वा श्रावकम-श्रावकं वा स्वेन सार्द्धं वसतिमध्ये अर्द्धां वा रात्रिं सम्पूर्णां वा रात्रिं यावत् संवासयति तथा संवासयन्तमन्यमनुमोदते स प्रायश्चित्तभागी भवति, उपाश्रये संवसन् स रात्रिभोजनं करोति, सचित्त-जलं वा पिबति, अन्यं वा आरम्भसमारम्भं करोति, तस्मात्कारणात् ज्ञातकादिकमुपाश्रये न संवासयेत् तस्य संवासने साधोराज्ञाभङ्गादिकाश्चापि दोषाः समापतन्ति ॥ सू० १२॥

अत्राह भाष्यकार —

**भाष्यम्**—णायगमणायगं वा, सावगं वा तहेयरं ।
वसहीए वासए राओ, आणाभंगाइ पावइ ॥

छाया—ज्ञातकमज्ञातकं वा श्रावकं वा तथेतरम् ।
वसतौ वासयेद् रात्रौ, आज्ञाभङ्गादि प्राप्नुयात् ॥

**अवचूरिः**—यो भिक्षु अर्द्धरात्रिं वा सपूर्णरात्रिं वा वसतौ उपाश्रयस्य मध्ये ज्ञातकं स्वकीयज्ञातिजन परिचित वा अज्ञातकं-ज्ञातिभिन्नमपरिचित वा, तथा श्रावकं-जिनधर्मोपासक गृहस्थं वा अनुपासकम् अन्यतीर्थिकं वा स्वोपाश्रये यत्र स्वयं तिष्ठति तत्र वासयति । यदि कश्चित् श्रमणस्य स्वजनोऽस्वजन परिचितोऽपरिचित श्रावकोऽश्रावको वा रात्रौ वस्तु समुपस्थितो भवेत् तं श्रमणो रात्रौ तत्र वासयेत् वासयन्तं वाऽनुमोदते स आज्ञाभङ्गादिकान् दोषान् प्राप्नुयात् ॥

अथ कारणेऽपवादमाह भाष्यकारः—

**भाष्यम्** - दिक्खट्ठं वा दयट्ठं वा पोसहट्ठं समागयं ।
वासेइ रयणिं तस्स, न दोसो किं तु संवरो ॥१॥

छाया - दीक्षार्थं वा दयार्थं वा पौषधार्थं वा समागतम् ।
वासयति रजनीं तस्य न दोषः किन्तु संवरः ॥१॥

**अवचूरिः**—यः कश्चित् श्रमण दीक्षार्थं पौषधार्थं पौषधव्रताचरणार्थं उपलक्षणात् ग्लानादि-निमित्तं समागतं वयं श्रावक वा यदि रात्रौ स्ववसतौ वासयति तदा तस्य रात्रौ वसतिवास-दानेऽपि न कश्चिदोषः प्रत्युत संवर एव भवति, यतः स सवासः सकलसावद्यकर्मपरित्यागगर्भितो भवति तादृशवासस्य संवरसंपादकत्वात्, तस्मात् तादृशस्य वसतिवासो दातव्य एवेति भावः । तमपि स्वसमीपात् षड्हस्तं दूरे सवासयेत् येन गृहस्थस्य शरीरवस्त्रादिना स्वस्य शरीरवस्त्रादेः संघट्टनं न स्यात् । यदि षड्हस्ताभ्यन्तरे तं सवासयति तदा स साधुः प्रायश्चित्तभागी भवति ॥

सूत्रम्—जे भिक्खू णायगं वा अणायगं वा उवासयं वा अणुवासयं वा अंतो उवस्सयस्स अद्धं वा राइं कसिणं वा राइं संवसावेइ तं पडुच्च निक्खमइ वा पविसइ वा निक्खमंतं वा पविसंतं वा साइज्जइ ॥सू०१३॥

छाया—यो भिक्षुर्ज्ञातकं वा अज्ञातकं वा उपासकं वा अनुपासकं वा अंतरुपाश्रयस्य अर्द्धां रात्रिं वा कृत्स्नां रात्रिं वा संवासयति तं प्रतीत्य निष्क्रामति वा प्रविशति वा निष्क्रामन्तं वा प्रविशन्तं वा स्वदते ॥सू० १३॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः ज्ञातकमज्ञातकमुपासकमनुपासकं वा 'अंतो उवस्सयस्स' अन्तरुपाश्रयस्य उपाश्रयमध्ये 'अद्ध वा राइं' अर्द्धां वा रात्रिम् 'कसिणं वा राइं' कृत्स्नां सम्पूर्णां वा रात्रिम् 'संवसावेइ' संवासयति तदनन्तरं 'तं पडुच्च-निक्खमइ वा पविसइ वा' तं प्रतीत्य तं ज्ञातकादिकमाश्रित्य 'अयमत्र स्थितोऽस्ति' इति कृत्वा उच्चारप्रस्रवणार्थम् निष्क्रामति निर्गच्छति ततः परावृत्य प्रविशति वा तथा 'निक्खमंतं वा पविसंतं वा साइज्जइ' निष्क्रामन्तं वा प्रविशन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥१३॥

सूत्रम्—जे भिक्खू तं न पडियाइक्खेइ न पडियाइक्खेंतं वा साइज्जइ ॥सू० १४॥

छाया—यो भिक्षुः तं न प्रत्याचक्षीत न प्रत्याचक्षाणं वा स्वदते ॥सू० १४॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'तं न पडियाइक्खेइ' तं न प्रत्याचक्षीत तं ज्ञातकमज्ञातकमुपासकमनुपासकं वा वसतिमध्ये वसन्तं न प्रत्याचक्षीत न निषेधं कुर्यात् 'भो आर्य ! अत्र मा वस' इत्यादि न कथयेत् तथा 'न पडियाइक्खेंतं वा साइज्जइ' न प्रत्याचक्षाणं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गानवस्थामिथ्यात्वसंयमविराधनादयो दोषा भवन्ति ॥ सू० १४ ॥

सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं समवाएसु वा पिंडनियरेसु वा इंदमहेसु वा खंदमहेसु वा रुद्दमहेसु वा मुगुंदमहेसु वा भूतमहेसु वा जक्खमहेसु वा णागमहेसु वा थूभमहेसु वा चेइयमहेसु वा रुक्खमहेसु वा गिरिमहेसु वा दरिमहेसु वा अगडमहेसु वा तडागमहेसु वा दहमहेसु वा णईमहेसु वा सरमहेसु वा सागरमहेसु वा

**आगरमहेसु वा अण्णयरेसु वा तहप्पगारेसु विरूवरूवेसु महामहेसु असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥१५॥**

**छाया—यो भिक्षु राज्ञः क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानां समवायेषु वा पिण्डनिकरेषु वा इन्द्रमहेषु वा स्कन्दमहेषु वा रुद्रमहेषु वा मुकुन्दमहेषु वा भूतमहेषु वा यक्षमहेषु वा नागमहेषु वा स्तूपमहेषु वा चैत्यमहेषु वा वृक्षमहेषु वा गिरिमहेषु वा दरीमहेषु वा अगडमहेषु वा तडागमहेषु वा ह्रदमहेषु वा नदीमहेषु वा सरोमहेषु वा सागरमहेषु वा आकरमहेषु वा अन्यतरेषु वा तथाप्रकारेषु विरूपरूपेषु महामहेषु अशनं वा पानं वा खाद्यं वा स्वाद्यं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० १५॥**

**चूर्णी**—'जे भिक्खू' इत्यादि । **'जे भिक्खू'** यः कश्चिद् भिक्षुः **'रण्णो'** राज्ञः राजसिंहासने स्थितस्य **'खत्तियाणं'** क्षत्रियाणां क्षत्रियत्वजातिविशिष्टानां ग्रामपतीनाम् **'मुदियाणं'** मुदितानां तत्र मुदिताः जात्या शुद्धाः मातापित्रादिना शुद्धवंशीया इत्यर्थः, तेषाम् **'मुद्धाभिसित्ताणं'** मूर्धाभिषिक्तानाम् , तत्र पितृपितामहादिक्रमेण राज्येऽभिषिक्ता मूर्धाभिषिक्ता युवराजपदेऽभिषिक्ता वा, तेषां मूर्धाभिषिक्तानाम् , अत्रोपलक्षणात्—अमात्य—पुरोहित—ईश्वर—तलवर—माडम्बिक—कौटुम्बिके—भ्य—श्रेष्ठि—सेनापत्या—दीनामपि ग्रहणं कर्त्तव्यम् । राजव्यतिरिक्तानाममात्यादीनामपि वक्ष्यमाणेषु समवायादिषु इन्द्रमहादिषु च साधुरशनादिकं न गृह्णीयादिति सम्बन्धः । तदेव दर्शयति—**'समवाएसु वा'** इत्यादि । **'समवाएसु वा'** समवायेषु वा समानवयस्यसमुदायेषु, यत्र समवयस्का मिलित्वा गोष्ठीभक्तं कुर्वन्ति तादृशेषु समवायेषु **'पिंडनियरेसु वा'** पिण्डनिकरेषु वा, यत्र सपिण्डा (एकमूलपुरुषा) कुटुम्बिनो मिलित्वा पितृपिण्डदानं कुर्वन्ति तत्र, अथवा—पिण्डो नाम दायभक्तं यत्र दायादा मिलित्वा भुञ्जते तस्य निकरेषु दायभक्तसमूहेषु वा, **'इंदमहेसु वा'** इन्द्रमहेषु वा, तत्र इन्द्रो देवराजस्तस्य महः उत्सवः, तथा चेन्द्रं देवराजमुद्दिश्य क्रियमाणेषूत्सवेषु कार्तिकशुक्लप्रतिपदि देवराजोद्देशेन महानुत्सवो भवतीति लोकाचारः, तादृशोत्सवेषु वा **'खंदमहेसु वा'** स्कन्दमहेषु वा—स्कन्दः कार्तिकेयो महादेवपुत्रो देवविशेषः तदुद्देशेन क्रियमाणेषूत्सवेषु वा **'रुद्दमहेसु वा'** रुद्रमहेषु वा—रुद्रमहोत्सवेषु वा, तत्र रुद्रः शिवस्तमुद्दिश्य क्रियमाणेषूत्सवेषु **'मुगुंदमहेसु वा'** मुकुन्दमहेषु वा, तत्र मुकुन्दः कृष्णः तस्योत्सवा मुकुन्दमहाः कृष्णजन्माष्टम्या द्युत्सवाः, तादृशमहोत्सवेषु **'भूतमहेसु वा'** भूतमहेषु वा, तत्र भूतानां व्यन्तरदेवविशेषाणां महा उत्सवा भूतमहाः, यादृशोत्सवेषु भूताः पूज्यन्ते तादृशमहोत्सवेषु **'जक्खमहेसु वा'** यक्षमहेषु वा, तत्र यक्षो व्यन्तरदेवविशेष एव, तस्य महा उत्सवविशेषाः, यत्र महोत्सवे यक्षाः पूज्यन्ते तादृशमहोत्सवेषु **'णागमहेसु वा'** नागमहेषु वा, तत्र नागाः सर्पाः, येषु महोत्सवेषु नागाः पूज्यन्ते नागपञ्चमीतिलोकप्रसिद्धादिमहोत्सवेषु **'थूभमहेसु वा'** स्तूपमहेषु वा-स्तूपानां महोत्सवाः, स्तूपः-स्मृतिस्तम्भः,

कुत्रचित् स्तूपमुद्दिश्यापि लोका उत्सवं कुर्वन्ति तादृशस्तूपमहोत्सवेषु वा **'चेइयमहेसु वा'** चैत्यमहोत्सवेषु वा चैत्यानि नाम मृतकदाहस्थाने क्रियमाणाश्चिह्नविशेषाः श्मशानादिषु निर्मिता भवन्ति, तेषां महोत्सवेषु **'रुक्खमहेसु वा'** वृक्षमहेषु वा कुत्रचित् वृक्षविशेषं वटपिप्पलादिकमुद्दिश्य उत्सवाः क्रियन्ते तेषु **'गिरिमहेसु वा'** गिरिमहेषु वा, तत्र गिरयः पर्वताः, तानुद्दिश्य क्रियमाणा महोत्सवाः पर्वतादिकमुद्दिश्यापि यत्र महोत्सवाः क्रियन्ते तत्र **'दरिमहेसु वा'** दरीमहेषु वा, तत्र दरी-गिरिकन्दरा, तदुद्देशेन क्रियमाणा महोत्सवा दरीमहाः तेषु वा **'अगडमहेसु वा'** अगडमहेषु वा, यत्र कूपसमीपे पशूनां जलपानार्थं गर्तादिकं करोति तादृशगर्तविशेषा अगडा, तेषां महोत्सवेषु **'तडागमहेसु वा'** तडागमहेषु वा, तत्र तडागः सामान्यजलाशयः, तदुद्देशेन क्रियमाणा उत्सवा तडागमहाः, तेषु वा **'दहमहेसु वा'** हृदमहेसु वा, तत्र हृदो नाम अगाधजलाशयः, तदुद्देशेन क्रियमाणा उत्सवा हृदमहाः, तेषु वा, **'णईमहेसु वा'** नदीमहेषु वा–नदीविशेषमुद्दिश्य क्रियमाणेषु महोत्सवेषु **'सरमहेसु वा'** सरोमहेषु वा, तत्र सरः तडागविशेषः तदुद्देशेन क्रियमाणा महोत्सवाः सरोमहाः, तेषु वा **'सागरमहेसु वा'** सागरमहेषु वा–समुद्रमुद्दिश्यक्रियमाणमहोत्सवेषु वा **'आगरमहेसु वा'** आकरमहेषु वा, तत्राकरः सुवर्णादीनामुद्गमस्थानं, तदुद्देशेन क्रियमाणा उत्सवा आकरमहाः, तेषु आकरमहेषु वा **'अण्णयरेसु वा तहप्पगारेसु विरूवरूवेसु महामहेसु'** अन्यतरेषु वा तथाप्रकारेषु पूर्वोक्तमहोत्सवसदृशेषु विरूपरूपेषु नानाप्रकारकेषु महामहेषु अन्यजातीयकेष्वपि जन्मपरिणयनादिमहामहोत्सवेषु जायमानेषु तत्र **'असणं वा ४'** अशनादिकं चतुर्विधमाहारम् उपलक्षणात् वस्त्रपात्रादिकं वा **'पडिग्गाहेइ'** प्रतिगृह्णाति **'पडिग्गाहेंतं वा साइज्जइ'** प्रतिगृह्णन्तं वा स्वदतेऽनुमोदते। यो हि भिक्षुरुपर्युक्तेषु महोत्सवेषु गत्वा राज्ञो मूर्द्धाभिषिक्तादीनां वा अशनादिकं स्वयं गृह्णाति अन्यद्वारा ग्राहयति वा गृह्णन्तं वा अनुमोदते। एतानि महारम्भस्थानानि, अत्र षट्कायोपमर्दनं भवति, एषु स्थानेषु राजादीनां भिक्षाग्रहणे साधोः रसलोलुपता सिध्यति, षट्कायोपमर्दनजन्या दोषा अपि समापद्येरन्, तस्मात् कारणादत्रतो यदि यः साधुरशनादिकं गृह्णाति सोऽवश्य प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गानवस्थादिका दोषा अपि समापद्यन्ते इति भावः॥१५॥

**सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं उत्तरसालंसि वा उत्तरगिहंसि वा रीयमाणाणं असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० १६॥**

छाया—यो भिक्षुः राज्ञः क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानां उत्तरशालायां वा उत्तरगृहेषु वा रीयमाणानाम् अशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० १६॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रण्णो' राज्ञः 'खत्तियाणं' इत्यादि, क्षत्रियादीनाम् पूर्वसूत्रप्रदर्शितस्वरूपाणां 'उत्तरसालंसि वा' उत्तरशालायां वा भ्रमणार्थं निर्मापिता या निजशालातोऽन्या शाला, तस्यां 'उत्तरगिहंसि वा' उत्तरगृहे वा तादृशे गृहे वा 'रीयमाणाण' रीयमाणानाम् तत्र चंक्रमतां भ्रमणं कुर्वताम् 'असण वा' इत्यादि, अशनादिकं चतुर्विधमाहारं 'पडिग्गाहेइ' प्रतिगृह्णाति 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥सू० १६॥

सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं हयसालागयाण वा गयसालागयाण वा मंतसालागयाण वा गुज्झसालागयाण वा रहस्ससालागयाण वा मेहुणसालागयाण वा असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥सू० १७॥

छाया—यो भिक्षु राज्ञः क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानां हयशालागतानां वा गजशालागतानां वा मन्त्रशालागतानां वा गुह्यशालागतानां वा रहस्यशालागतानां वा मैथुनशालागतानां वा अशनं वा पानं वा खाद्य वा स्वाद्य वा प्रतिगृह्णाति प्रतिगृह्णन्त वा स्वदते ॥सू० १७॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु 'रण्णो' इत्यादि, राज्ञः क्षत्रियाणाम् मूर्द्धाभिषिक्तानाम् पूर्वनिर्दिष्टस्वरूपाणाम् 'हयसालागयाण वा' हयशालागतानाम् वा अश्वशालास्थितानाम् 'गयसालागयाण वा' गजशालागतानां वा हस्तिशालास्थितानाम् 'मंतसालागयाण वा' मन्त्रशालागताना वा, यत्र राजादय स्वपुरुषै सह मन्त्रणां करोति तादृशशालास्थितानामित्यर्थ. 'गुज्झसालागयाण वा' गुह्यशालागतानां गुप्तकार्यं यत्र शालायां करोति तादृशशालायां स्थितानाम् 'रहस्ससालागयाण वा' रहस्यशालागतानां वा रहस्यं दण्डविधानादिकार्यं तस्य शालाया स्थितानाम् 'मेहुणसालागयाण वा' मैथुनशालागतानां वा मैथुनसेवनशालास्थितानाम्, हयादिशालास्थिताना राजादीना पार्श्वात् 'असणं वा ४' इत्यादि, अशनादिचतुर्विधमाहारजातं 'पडिग्गाहेइ' प्रतिगृह्णाति—स्वीकरोति स्वीकारयति वा तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥सू० १७॥

सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं सण्णिहिसण्णिचयाओ खीरं वा दहिं वा णवणीयं वा सप्पिं वा तेल्लं वा

**गुलं वा खंडं वा सक्करं वा मच्छंडियं वा भोयणजायं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥सू० १८॥**

छाया – यो भिक्षुः राज्ञः क्षत्रियाणां मुदितानां मूर्द्धाभिषिकानां सन्निधिसंनिचयात् क्षीरं वा दधि वा नवनीतं वा सर्पिर्वा तैलं वा गुडं वा खंडं वा शर्करां वा मत्स्यण्डिकं वा अन्यतरद् वा भोजनजातं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० १८॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रण्णो' इत्यादि–राजादीनां 'सण्णिहिसण्णिचयाओ' सन्निधिसंनिचयात्, तत्र सन्निधिर्नाम दधिदुग्धगुडखंडादिद्रव्यम् तद् द्विविध-विनाशि अविनाशि च, तत्र विनाशिद्रव्यम्—दधिदुग्धनवनीतप्रभृति अल्पकालेन विकृतिसंभवात्, अविनाशिद्रव्यम् घृततैलगुडखण्डशर्करामत्स्यण्डिकप्रभृति बहुकालस्थायित्वात् उक्तञ्च—

ओदणगोरसमादी, विणासिदव्वा उ सण्णिही होंति,

सक्कुलितेल्लघयगुला, अविणासी सचइयदव्वा ॥१॥

छाया–ओदनगोरसादीनि विनाशिद्रव्याणि तु सनिधयो भवन्ति ।

शष्कुलितैलघृतगुडानि, अविनाशीनि सचितद्रव्याणि ॥१॥ इति ।

तस्य–द्विविधस्यापि सनिचय एकत्रीकृतसचयः, तस्मात् संचितात् संचितद्रव्यमध्यात् यत् किमप्येकमनेकंवा वा 'खीरं वा' क्षीरं वा दुग्धं वा 'दहिं वा' दधि वा 'णवणीयं वा' नवनीतं वा म्रक्षणं 'सप्पि वा' सर्पिर्वा घृतम् 'तेल्लं वा' तैलं वा 'गुलं वा' गुडं वा 'खंडं वा' खण्डं वा 'बुरा' इति लोकप्रसिद्धम् 'सक्करं वा' शर्करां वा—खण्डजातिविशेषं 'मच्छंडियं वा' मत्स्यण्डिकं वा मीसरीतिलोकप्रसिद्धम् 'अण्णयरं वा भोयणजायं' अन्यतरद् वा भोजनजातम्, एतदतिरिक्तं वा भोजनजातम् 'पडिग्गाहेइ' प्रतिगृह्णाति 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥सू० १८॥

**सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं उस्सट्ठपिंडं वा संसट्ठपिंडं वा अणाहपिंडं वा किविणपिंडं वा वणीमगपिंडं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥सू० १९॥**

छाया—यो भिक्षुः राज्ञः क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानाम् उत्सृष्टपिण्डं वा संसृष्टपिण्डं वा अनाथपिण्डं वा कृपणपिण्डं वा वनीपकपिण्डं वा प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० १९॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रण्णो' इत्यादि–राजादीनां 'उस्सट्ठपिंडं वा' उत्सृष्टपिण्डं वा काकादिभ्यः प्रक्षेपणाय स्थापितं पिण्डमोदनादिकम्

उत्सृष्टपिण्डमिति कथ्यते तम् **'संसट्ठपिंडं वा'** संसृष्टपिण्डं वा, तत्र भुक्तावशेषमन्नमकिञ्चनेभ्यो दातुं स्थापित संसृष्टान्नम् ससृष्टपिण्डमिति, तम् **'अणाहपिंडं वा'** अनाथपिण्डं वा अनाथेभ्यो दातुं स्थापितं पिण्डम् **'किविणपिंडं वा'** कृपणपिण्डं वा दीनजनार्थस्थापितमोदनादिकम् **'वणीमगपिंडं वा'** वनीपकपिण्ड वा याचकार्थं स्थापितमोदनादिक वनीपकपिण्डमिति कथ्यते, यद्वा वनीपकः सिद्धान्नमात्रोपजीवी, यद्वा वनी—स्वकीयदुरवस्थाप्रदर्शनपूर्वकप्रियालापादिना लभ्यद्रव्यम्, तां वनीं प्राप्नोतीति वनीपकस्तदर्थं स्थापितं पिण्डम्, एतादृशमोदनादिक यो भिक्षु· **'पडिग्गाहेइ'** प्रतिगृह्णाति **'पडिग्गाहेंतं वा साइज्जइ'** प्रतिह्णन्तं वा स्वदतेऽनुमोदते। यो हि भिक्षु राजसम्बन्धि उत्सृष्टमोदनादिकं स्वय गृह्णाति गृह्णन्तं वा अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्ति तस्मात्कारणात् श्रमण उत्सृष्टपिण्डादिकं राजादीनां न गृह्णीयात् न ग्राहयेत् न वा गृह्णन्तमनुमोदयेदिति ॥सू० १९॥

## सूत्रम्—तं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥ सू० २० ॥

॥ णिसीहज्झयणे अट्ठमो उद्देसो समत्तो ॥८॥

छाया—तत्सेवमान आपद्यते चातुर्मासिक परिहारस्थानं अनुद्घातिकम् ॥सू०२०॥

॥ निशीथाध्ययनेऽष्टमोद्देशकः समाप्तः ॥८॥

चूर्णी- **'तं सेवमाणे'** इत्यादि। **'तं सेवमाणे'** तत अष्टमोद्देशकोक्तमेकमनेकं वा प्रायश्चित्तस्थान सेवमान तत्प्रतिसेवनां कुर्वन् भिक्षु **'आवज्जइ'** आपद्यते प्राप्नोति **'चाउम्मासियं'** चातुर्मासिकम् **'परिहारट्ठाणं'** परिहारस्थान प्रायश्चित्तस्थानम् **'अणुग्घाइयं'** अनुद्घातिकम् न विद्यते उद्घातो लघुलक्षणो यस्य तपोविशेषस्य तत् अनुद्घातं, तत् यस्य विद्यते तत् तथाभूतं गुरुमासिकमित्यर्थ.। यो भिक्षु. आगन्त्रागारादिषु एकाकिन्या स्त्रिया सार्द्धं विहारादित आरभ्य वनीपकपिण्डग्रहणपर्यन्तप्रोक्तप्रायश्चित्तस्थानमध्यात् यत् किमप्येकमनेक वा अष्टमोद्देशोक्तं सर्वं वा प्रायश्चित्तस्थानं सेवते स सूत्रोक्तं प्रायश्चित्त प्राप्नोति ॥ सू० २०॥

इति श्री—विश्वविख्यात—जगद्वल्लभ—प्रसिद्धवाचक—पञ्चदशभाषाकलितललितकलापालापक—प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक—वादिमानमर्दक—श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-"जैनशास्त्राचार्य"-पदभूषित—कोल्हापुरराजगुरु—बालब्रह्मचारि—जैनाचार्य—जैनधर्मदिवाकर—पूज्यश्री—घासीलालव्रति—विरचितायां "निशीथसूत्रस्य" चूर्णिभाष्यावचूरिरूपाया व्याख्यायाम् अष्टमोद्देशकः समाप्त. ॥८॥

## ॥ नवमोद्देशकः ॥

व्याख्यातोऽष्टमोद्देशक, सम्प्रति नवम प्रारम्यते, तत्रास्य नवमोद्देशकस्याष्टमोद्देशकान्तिम-सूत्रेण सह क: सम्बन्ध ? इति चेदत्राह भाष्यकार.—

भाष्यम्— पिंडहिगारो राया,-इयाण वुत्तो य अट्ठमुद्देसे ।
रायाइणो य के ते, पिंडो वा कइविहोऽत्थ नवमम्मि ॥

छाया—पिण्डाधिकारो राजादिकाना प्रोक्तश्चाष्टमोद्देशे ।
राजादयश्च के ते, पिण्डो वा कतिविधोऽत्र नवमे ॥

अवचूरि —'पिंडहिगारो' इत्यादि । पूर्वमष्टमोद्देशकस्यान्तिमसूत्रे राजादीना पिण्ड-ग्रहणस्याधिकार प्रोक्त । ते च राजादयः के ? पिण्डो वा कतिविधो भवति ?, एषोऽधिकार. अत्र नवमोद्देशके निरूपयिष्यते, इत्येष सम्बन्धोऽष्टमनवमोद्देशकयोरिति, अनेन सम्बन्धेनायातस्यास्य नवमोद्देशकस्येदमादिसूत्रम्—'जे भिक्खू रायपिंडं' इत्यादि ।

### सूत्रम्—जे भिक्खू रायपिंडं गिण्हइ गिण्हंतं वा साइज्जइ ॥ सू० १॥

छाया—यो भिक्षुः राजपिण्ड गृह्णाति गृह्णन्तं वा स्वदते ॥ सू० १॥

चूर्णी —' 'जे भिक्खू' य कश्चिद् भिक्षु 'रायपिंड गिण्हइ' राजपिण्ड गृह्णाति, अत्रा-मात्यादीना पिण्डोऽपि राजपिण्ड प्रोच्यते । तन्नामानि अष्टमोद्देशके प्रदर्शितानि । पिण्डशब्दे-नात्र चतुर्विधमशनादिक वस्त्रपात्रादिक च गृह्यते, तं गृह्णाति स्वीकरोति तथा 'गिण्हंत वा साइज्जइ' गृह्णन्तं वा स्वदतेऽनुमोदत स प्रायाश्चत्तभागी भवति, यत उपर्युक्तवस्तुप्राप्त्यर्थं राजादीना स्तुत्यादिक कर्तव्य भवेत, तथा राजप्रभृतीना महार्घवस्तुप्राप्तौ मोहोदयोपि अधिकाधिक एव भवति, बहुमूल्यवस्तुग्रहणे परिग्रहदोषा भवन्ति, तथा तादृशवस्तुन स्वसमीपे स्थापने साधु-मर्यादाऽपि खण्डिता स्यात् तेन मर्यादाभङ्गोऽत्रावश्यम्भावी, माधोरसमाधिरपि स्यात् , तथाऽधिक-मूल्यकवस्त्रपात्रादिक स्वसमीपे स्थापयत चौरादिभयमपि स्यात् , तथा वस्त्रपात्रादीनामधिकाधिकस्य लाभे लोभवृद्धिरपि भवत् तेन एषणासमितेरपि विनाश स्यात् , एवं तादृशवस्तूना रक्षणादिकरणे एव समयस्य व्ययात् सूत्रार्थयोरपि हानि स्यात्, संयमविराधनमात्मविराधन च स्यात् , यस्मात् राजपिण्डग्रहणे पूर्वोक्ता एते दोषा भवन्ति तस्मात्कारणात् भिक्षु. कथमपि राजपिण्ड स्वय न गृह्णीयात् , न वा परं ग्राहयेत , न वा गृह्णन्तमनुमोदयेदिति ॥ सू० १॥

### सूत्रम्—जे भिक्खू रायपिंडं भुंजइ भुंजंतं वा साज्जइ ॥ सू० २॥

छाया—यो भिक्षुः राजपिण्डं भुङ्क्ते भुञ्जानं वा स्वदते ॥सू० २॥

चूर्णीः—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रायपिंडं भुंजइ' राजपिण्डं, तत्र राज्ञामुपलक्षणादमात्यादीनां च पिण्डम् अशनादिकं चतुर्विधमाहारजातं, तथा वस्त्रपात्रादिकमष्टप्रकारकं पिण्डम् भुङ्क्ते राजादिपिण्डानामष्टप्रकारकाणामुपभोगं करोति कारयति वा तथा 'भुंजंतं वा साइज्जइ' भुञ्जानं वा स्वदते । यो हि राजादीनामष्टप्रकारकाशनादिपिण्डमध्यात् यत् किमप्यन्यतरं पिण्डमुपभुङ्क्ते तस्यानुमोदनं करोति स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्तीति ॥सू० २॥

## सूत्रम्—जे भिक्खू रायंतेपुरं पविसइ पविसंतं वा साइज्जइ ॥सू० ३॥

छाया—यो भिक्षुः राजान्तःपुरं प्रविशति प्रविशन्तं वा स्वदते ॥सू० ३॥

चूर्णी- 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रायंतेपुरं पविसइ' राजान्तःपुरं प्रविशति, तत्र राज्ञोऽन्तःपुरं राजान्तःपुरम्, तत् त्रिप्रकारकम्-प्राचीनान्तःपुरम्, नवान्तःपुरम् कन्यान्तःपुरं च, तदन्तःपुरं पुनः क्षेत्रेन एकैकं द्विप्रकारकं भवति-स्वस्थाने परस्थाने च, तत्र स्वस्थानं राजगृहं (राजभवन), परस्थानं वसन्तादिसमये उद्यानादिगतम्, तादृशं राजान्तःपुरमशनादिलोभेन वा येन केनापि कारणेन वा प्रविशति, तथा 'पविसंतं वा साइज्जइ' प्रविशन्तं राजान्तःपुरे प्रवेशं कुर्वन्तं श्रमणं स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गाऽनवस्थामिथ्यात्वसंयमविराधनात्मविराधनादयो दोषा भवन्ति । एवं राजद्वारस्थितदण्डधरादिपुरुषकृता अवहेलनाशङ्कादयो दोषाश्च भवन्तीत्यतः कथमपि राजान्तःपुरेषु प्रवेशं न कुर्यात्, न वा अन्यान् श्रमणान् प्रवेशं कारयेत्, न वा अन्यं प्रवेशं कुर्वन्तमनुमोदेत ॥सू० ३॥

## सूत्रम्—जे भिक्खू रायंतेपुरियं वएज्जा "आउसो रायंतेपुरिए णो खलु अम्हं कप्पइ रायंतेपुरे णिक्खमित्तए वा पविसित्तए वा इमं तुमं पडिग्गहं गहाय रायंतेपुराओ असणं वा पाणं वा खाइमं वा साइमं वा अभिहडं आहट्टु दलयाहि" जो तं एवं वयइ वयंतं वा साइज्जइ ॥सू०४॥

छाया— यो भिक्षुः राजान्तःपुरिकां वदेत् 'आयुष्मति ! राजान्तःपुरिके ! नो खलु मम कल्पते राजान्तःपुरे निष्क्रमितुं वा प्रवेष्टुं वा इमं त्वं प्रतिग्रहं गृहीत्वा राजान्तःपुरात् अशनं वा पानं वा खाद्यं वा स्वाद्यं वा अभिहृतमाहृत्य देहि' यः तामेवं वदति वदन्तं वा स्वदते ॥सू० ४॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रायंतेपुरियं वएज्जा' राजान्तःपुरिकां राजान्तःपुररक्षिकां प्रति एवं वक्ष्यमाणप्रकारेण वदेत्-कथयेत् । किं वदेत् ?

तत्राह—'आउसो' इत्यादि। 'आउसो रायंतेपुरिए' हे आयुष्मति! राजान्तःपुरिके! अन्तःपुररक्षिके! 'णो खलु अम्हं कप्पइ' नो खलु मम कल्पते 'रायंतेपुरे' राजान्तःपुरे 'णिक्खमित्तए वा' निष्क्रमितुं वा, तत्र निष्क्रमणं गमनम्, राज्ञामन्त पुरे गमनमस्माकं न कल्पते 'पविसित्तए वा' प्रवेष्टुं वा प्रवेश कर्तुं नो अस्माकं कल्पते तस्मात्कारणात् 'इमं तुमं पडिग्गहं गहाय' इमं त्वं प्रतिग्रहं पात्रं गृहीत्वा पात्रं त्वमेव गृहीत्वा मम तत्र गच्छ, गत्वा च 'रायंतेपुराओ' राजान्त.पुरात् राज्ञोऽन्त पुरात् 'असणं वा०' अशनादिचतुर्विधमाहारम् 'अभिहडं आहट्टु' अभिहृतमाहृत्य अभिमुखमानीय अन्त.पुरात् इहैव मत्समीपमानीय 'दलयाहि' देहि यस्मात् राजान्त-पुरे अस्माकं गमनं न कल्पते तस्मात्कारणात् त्व मम पात्र गृहीत्वा तत्र गत्वा अशनादिकं गृहीत्वा इहैव स्थिताय मह्यं समर्पयेति। 'जो तं एवं वयइ' यः खलु श्रमण एवमुक्तेन प्रकारेण ता राजान्त-पुररक्षिका स्त्रियं राजान्त पुररक्षकपुरुष द्वारपालादिक वा प्रति ब्रूते स, तथा 'वयंतं वा साइज्जइ' एव मुपर्युक्तप्रकारेण अन्तःपुरिकां प्रति वदन्तमन्य वा श्रमण स्वदते अनुमोदते स प्रायश्चित्तभागी भवति। अन्तः—पुरिकासमानीताहारादिग्रहणे बहवो दोषा भवन्ति, तथाहि—गच्छन्ती समागच्छन्ती वा ईर्यासमितिमजानन्ती मार्गे षट्कायविराधना कुर्यात्, अप्रतिलिखिताया भूमौ पात्र स्थापयेत्, अप्रति-लेखितपात्राद् गृह्णीयात्, एषणादोषानभिज्ञा साऽनेषणीयमपि गृह्णीयात्, सघट्टदोषानभिज्ञा सचित्त-संघट्टितमपि गृह्णीयात्, स्खलिता वा भाजन भिन्द्यात्, साधुरूपमुग्धा आहारे वशीकरणादिचूर्णमपि प्रक्षिपेत्, दध्यादिषु विरोधिद्रव्य घृतदुग्धादिकमेकत्र गृह्णीयात्, पात्रबन्ध वा शाकादिना खरण्टित कुर्यात्, इत्याद्यनेके दोषाः समापद्येरन्, तस्मात्कारणात् साधुरन्तःपुरिकया समानीतमाहार नो गृह्णीयात्, नान्यं ग्राहयेत्, गृह्णन्तं वाऽन्यं नानुमोदयेदिति भाव ॥सू० ४॥

**सूत्रम्—जे भिक्खू नो वएज्जा रायंतेपुरिया वएज्जा "आउसंतो समणा! णो खलु तुज्झं कप्पइ रायंतेपुरे निक्खमित्तए वा पविसित्तए वा आहरेयं पडिग्गहं अतो अम्हं रायंतेपुराओ असणं वा पाणं वा खाइमं वा साइमं वा अभिहडं आहट्टु दलयामि" जो तं एवं वयंतिं पडिसुणेइ पडिसुणेंतं वा साइज्जइ ॥सू० ५॥**

छाया—यो भिक्षुर्नो वदेत् राजान्तःपुरिका वदेत्—"आयुष्मन्! श्रमण! नो खलु तव कल्पते राजान्तपुरे निष्क्रमितुं वा प्रवेष्टुं वा आहरेमं प्रतिग्रहं अतोऽहं राजान्त पुरात् अशन वा पानं वा खाद्यं वा स्वाद्यं वा अभिहृतमाहृत्य ददामि" यस्तामेवं वदन्तीं प्रतिशृणोति प्रतिशृण्वन्त वा स्वदते ॥सू० ५॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'नो वएज्जा' नो वदेत् राज्ञोऽन्तःपुरद्वारमुपस्थितो भिक्षुरन्तःपुररक्षिकां प्रति स्वयं नो वदेत्—राजान्त पुरात् अशना

दिकमानीय मह्यं त्वं देहीत्येवं न वदेत् किन्तु साधूनामाचारगोचरं जानन्ती सा 'रायंतेपुरिया वएज्जा' राजान्तःपुरिका एव वदेत्—कथयेत्—अशनादिकाहारजातग्रहणाय समुपस्थितोऽयं श्रमण', अस्यान्तःपुरगमनं न कल्पते इत्यालक्ष्यान्तःपुरिका स्वयं श्रमणमेवं कथयेत्—'आउसंतो समणा' हे आयुष्मन् ! श्रमण ! यत् 'णो खलु तुज्झं कप्पइ' नो खलु तव कल्पते 'रायंतेपुरे निक्खमित्तए वा पविसित्तए वा' राजान्तःपुरे प्रतिनिष्कामितुं निस्सर्तुम् प्रवेष्टुं वा प्रवेशं कर्तुं वा 'आहारेयं पडिग्गहं' आहर देहि इमं प्रतिग्रहं भवदीय पात्रं मह्यं समर्पय, 'अतो अम्हं रायंतेपुराओ' अतोऽह राजान्तःपुरात् 'असणं वा' इत्यादि अशनादिचतुर्विधमाहारं 'अभिहडं आहट्टु' अभिहृतमाहृत्य भवता समीपमानीय भवते 'दलयामि' ददामि 'जो तं एवं वयंतिं पडिसुणेइ' यः कश्चित् श्रमण श्रमणी वा तामन्तःपुरिका एव पूर्वोक्तप्रकारेण वदन्तीं कथयन्तीं प्रतिशृणोति तस्या वचनमङ्गीकरोति तथा 'पडिसुणेंतं वा साइज्जइ' प्रतिशृण्वन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ५॥

सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं दुवारियभत्तं वा पसुभत्तं वा भयगभत्तं वा बलिभत्तं वा कयगभत्तं वा हयभत्तं वा गयभत्तं वा कंतारभत्तं वा दुब्भिक्खभत्तं वा दुक्कालभत्तं वा दमगभत्तं वा गिलाणभत्तं वा वद्दलियाभत्तं वा पाहुणभत्तं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥सू० ६॥

छाया—यो भिक्षुः राज्ञः क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानां दौवारिकभक्तं वा पशुभक्तं वा भृतकभक्तं वा बलिभक्तं वा क्रयकभक्तं वा हयभक्तं वा गजभक्तं वा कान्तारभक्तं वा दुर्भिक्षभक्तं वा दुष्कालभक्तं वा द्रमकभक्तं वा ग्लानभक्तं वा वद्दलिकाभक्तं वा प्राघूर्णभक्तं वा प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० ६॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रण्णो' इत्यादि राजादीनां 'दुवारियभत्तं वा १' दौवारिकभक्तं वा राज्ञां द्वारपालादिकार्थं सम्पादितं यद् भक्तमोदनादिकं तत् प्रतिगृह्णातीत्यग्रिमेण सम्बन्धः 'पसुभत्तं वा २' पशुभक्तं वा राज्ञां पशूनां गवादीनां कृते सम्पादितं यत् भक्तं तत् २, 'भयगभत्तं वा ३' भृतकभक्तं वा—राजादिगृहे कर्मचारिनिमित्तं सपादितं भक्तं वा ३, 'बलिभत्तं वा ४' बलिभक्तं वा-वायसादिनिमित्तं निष्पादितं भक्तं वा ४, 'कयगभत्तं वा ५' क्रयकभक्तं वा-क्रीत्वा समानीतदासदास्यर्थं सम्पादितं भक्तं वा ५, 'हयभत्तं वा ६, हयभक्तं वा अश्वादिकृते सम्पादितं भक्तं वा 'गयभत्तं वा' गजभक्तं वा गजार्थं संपादितं भक्तं वा ७ 'कंतारभत्तं वा ८' कान्तारभक्तं वा' अटवीमुल्लङ्घ्य समागतानामर्थाय अटवीं गमनार्थाय वा यदोदनादिकं

सम्पादित तादृशमोदनादिकं कान्तारभक्तम् ८, 'दुब्भिक्खभत्तं वा ९' दुर्भिक्षभक्तं वा दुर्भिक्षसमये ये अन्नादिक न प्राप्नुवन्ति तदर्थं सम्पादित भक्तं वा दुर्भिक्षभक्तम् ९, 'दुक्कालभत्तं वा' दुष्काळभक्तं वा दुष्कालपीडितेभ्यः संपादित भक्तम्। तत्र एकवार्षिकान्नाद्य-नुत्पत्तिरूप समयो दुर्भिक्षम्, अनेकवार्षिकान्नाद्यनुत्पत्तिरूप समयो दुष्कालशब्देन-कथ्यते, इत्ये-कमनयोर्भेद १०, 'दमगभत्तं वा ११' द्रमकभक्त वा, तत्र द्रमको दरिद्रो भिक्षुक, तदर्थं सम्पादितं भक्तं वा ११, 'गिलाणभत्तं वा १२' ग्लानभक्तं वा, तत्र ग्लानो ज्वरादिदीर्घरोगपीडित, तदर्थं सम्पादितं भक्त ग्लानभक्तम् १२, 'बद्दलियाभत्तं वा १३' बर्दलिकाभक्तं वा, अतिवृष्टिपीडित-जनार्थं सम्पादितमोदनादिकं बर्दलिकाभक्तम् १३, 'पाहुणभत्त वा १४' प्राघूर्णकभक्त वा प्राघूर्णकार्थं सम्पादित प्राघूर्णकभक्तम् १४, एतादृशचतुर्दशप्रकारक राजभवने सम्पादित भक्त 'पडिग्गाहेइ' प्रतिगृह्णाति स्वय स्वीकरोति, अन्यं श्रमणं स्वीकारयति वा, तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्त वा स्वदते स प्रायश्चित्तभागी भवति ॥सू० ६॥

**सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं इमाइं छद्दोसपयाइं अजाणिय अपुच्छिय अगवेसिय परं चउरायपंचरायाओ गाहावइकुलं पिंडवायपडियाए निक्खमइ वा पविसइ वा निक्खमंतं वा पविसंतं वा साइज्जइ तंजहा—कोट्ठागारसालाणि वा भंडागारसालाणि वा पाणसालाणि वा खीरसालाणि वा गंजसालाणि वा महाणससालाणि वा ॥सू० ७॥**

छाया—यो भिक्षु राज्ञ क्षत्रियाणा मुदिताना मूर्द्धाभिषिक्तानामिमानि षड् दोष-पदानि अज्ञात्वा अपृष्ट्वा अगवेषयित्वा पर चतूरात्रपञ्चरात्रात् गाथापतिकुल पिण्डपात-प्रतिज्ञया निष्कामति वा प्रविशति वा निष्क्रामन्त वा प्रविशन्त वा स्वदते, तद्यथा-कोष्ठागारशालानि वा भण्डागारशालानि वा पानशालानि वा क्षीरशालानि वा गञ्ज-शालानि वा महानसशालानि वा ॥सू० ७।

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु 'रण्णो' इत्यादि राजा-दीनां 'इमाइं' इमानि वक्ष्यमाणानि 'छद्दोसपयाइं' षड् दोषपदानि दोषस्थानानि यत्र निष्क्रमणेन प्रवेशेन च श्रमणः प्रायश्चित्तभाग् भवति, तानि दोषपदानि वक्ष्यमाणानि कोष्ठागारादीनि 'अजाणिय' अज्ञात्वा, तत्र तानि वर्त्तन्ते, इति स्वबुद्धया सम्यग् ज्ञानमन्तरेणेत्यर्थं 'अपुच्छिय' अपृष्ट्वा पूर्वदृष्टेषु परेभ्यः पृच्छादिकमकृत्वा 'अगवेसिय' अगवेषयित्वा, अदृष्टेषु गवेषणं यथा—कानि वाऽऽयतनानि ?, कुत्रोमुखानि वा ? कस्मिन् वा स्थाने तानि ? किंचिह्नानि वा तानि ? इत्यादिरूपं गवेषणमकृत्वा

**'परं चउरायपंचरायाओ'** परं चतूरात्रपञ्चरात्रादनन्तरम् तदधिकं वारं वारमित्यर्थः **'गाहावइ-कुलं'** गाथापतिकुलम् , तत्र गाथा-गृहं तस्याधिपतिः स्वामी तत्तत्स्थानाधिपतिः, तस्य कुलं गृहं तत् **'पिंडवायपडियाए'** पिण्डपातप्रतिज्ञया पिण्डस्याशनादिचतुर्विधाहारस्य वस्त्रपात्रकम्बलरजोहरणा-दीनां वा पातः प्राप्तिः तस्य प्रतिज्ञया प्राप्तिवाञ्छया **'निक्खमइ वा'** निष्क्रामति वा निस्सरति तथा **'पविसइ वा'** प्रविशति वा गाथापतिकुले प्रवेशं करोति वा, तथा **'निक्खमंतं वा'** निष्क्रा-मन्त वा निस्सरन्तमन्य श्रमण वा **'पविसंतं वा'** प्रविशन्तं वा अन्यम् **'साइज्जइ'** स्वदतेऽनु-मोदते स प्रायश्चित्तभागी भवति । अथ येषा दोषपदानाम् अज्ञानात् प्रायश्चित्तं भवति तानि कानि तत्राह-**'तंजहा'** इत्यादि, **'तंजहा'** तद्यथा-**'कोट्ठागारसालाणि वा'** कोष्ठागारशालानि वा, तत्र कोष्ठागारं तण्डुलगोधूमचणकव्रीहियवादीना धान्याना स्थापनाय निर्मित **'कोठार'** इति भाषा-प्रसिद्धं कोष्ठागारशालमिति नाम्ना कथ्यते 'शालानि' इति शालशब्दो नपुसकलिङ्गेऽपि वर्त्तते तथा **'भंडागारसालाणि वा'** भाण्डागारशालानि वा, तत्र भाण्डागारशालानि यत्र कूटरत्नस्फटिक-रत्नादिषोडशविधरत्नाना हिरण्यसुवर्णादिभाजनानां वा स्थापनं करोति तानि तथा **'पाणसा लाणि वा'** पानशालानि वा, यत्र मादिरा-सीधु-खण्डमृद्वीकादीना पानकद्रव्याणि स्थाप्यन्ते तानि तथा **'खीरसालाणि वा'** क्षीरशालानि वा, दुग्धदध्यादिद्रव्यस्थापनशालानि **'गंजसालाणि वा'** गञ्जशालानि वा, तत्र गञ्जम्-अनेकोपस्करणसमूहः, तत् स्थापित भवति यत्र तत् गञ्जशालामिति कथ्यते, बहुत्वविवक्षाया तानि **'महाणससालाणि वा'** महानसशालानि वा, यत्र राज्ञामनेकविधा-शनादि पाच्यते तानि महानसशालानि वा, एतानि षड् दोषपदानि तानि अज्ञात्वा अपृष्ट्वा अगवेष-यित्वा यदि साधु निष्क्रामति वा प्रविशति वा तदा प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्तीति । सूत्रे 'चतुरात्रपञ्चरात्रात्परं' इत्युक्तं तस्याय भावः-चतुःपञ्चरात्रपर्यन्तम-परिचितत्वेन साधुप्रवेशः क्षन्तव्यो भवितुमर्हति, तदनन्तरगमने तत्तत्स्थानाधिपतयः कुपिता भवन्ति यदयं साधुर्वारं वार षट्सप्तादिरात्रमपि निष्क्रामति प्रविशति चेति चौर्यलोलुपतादिविषये तेषां मनसि शङ्का समुत्पद्यते अतः-'चतूरात्रपञ्चरात्रात्पर' इत्युक्तम् ॥सू० ७॥

**सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं आगच्छमाणाण वा णिग्गच्छमाणाण वा पयमवि चक्खुदंसणपडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥सू० ८॥**

छाया—यो भिक्षुः राज्ञः क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानामागच्छतां वा निर्गच्छतां वा पदमपि चक्षुर्दर्शनप्रतिज्ञया अभिसंधारयति अभिसन्धारयन्तं वा स्वदते ॥८॥

**चूर्णी**—'**जे भिक्खू**' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षुः '**रण्णो**' इत्यादि राजादीनां '**आगच्छमाणाण वा**' आगच्छतां पदातिसैन्यबलैः सह नगरे प्रवेशं कुर्वताम् '**णिग्गच्छमाणाण वा**' निर्गच्छतां वा नगरान्निर्गत्य कौमुदीक्रीडाद्यर्थमुपवनादौ गमनं कुर्वता परसैन्यमर्दनाय वा गच्छतां '**पयमवि**' पदमपि एकपदन्यासमपि '**चक्खूदसणपडियाए**' चक्षुर्दर्शनप्रतिज्ञया चक्षुषा दर्शनवाञ्छया नगरे आगमनसमये नगरात गमनसमये राजानं द्रष्टुं चक्षुर्दर्शनविषयतां कर्तुं पदमपि एकचरणन्यासमपि '**अभिसंधारेइ**' अभिसन्धारयति गन्तुं मनसि विचारं करोति दर्शनस्य तु का कथा विचारमात्रमपि यदि करोति, अथवा दर्शनार्थमेकपदन्यासमपि गन्तुं विचारयति, तथा '**अभिसंधारेंतं वा साइज्जइ**' अभिसन्धारयन्त वा विचार कुर्वन्तमन्यं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकारः—

**भाष्यम्**—गमणागमणे रण्णो, दंसणमट्ठं पयंपि धारेइ ।
जो भिक्खू सो पावइ, आणाभंगाइए दोसे ॥१॥

**छाया**—गमनागमने राज्ञः, दर्शनार्थे पदमपि धारयति ।
यो भिक्षुः स प्राप्नोति, आज्ञाभङ्गादिकान् दोषान् ॥

**अवचूरि**—'**गमणागमणे**' इत्यादि । '**रण्णो**' राज्ञ सूत्रोक्तप्रसंगात् क्षत्रियाणां मुदितानां राज्याभिषिक्ताना च गमने उपवनसेवनादिनिमित्तं नगराद्बहिर्निस्सरणसमये, आगमने उद्यानादितो नगरप्रवेशसमये दर्शनार्थे तदवलोकनार्थं गन्तु य कश्चिद् भिक्षु पदमपि—एकपदन्यासमपि '**धारेइ**' धारयति करोति, किं बहुना अभिसंधारयति मनसि विचारमपि करोति स आज्ञाभङ्गादिकान् दोषान् '**पावेइ**' प्राप्नोतीति भाष्यगाथार्थः । एवमाज्ञाभङ्गादिनोऽतिरिक्ता अपि आत्मविराधनभद्राभद्रकदोषाश्चापि भवन्ति । तथाहि—यदि राजा भद्रको भवेत् तदा यात्रासमये साधु दृष्ट्वा एवं विचारयति—यत् यात्रासमये दृष्ट साधुरवश्यं मे कल्याण भविष्यति जयो वा, यदि युद्धादौ विजयी भवति तदा आगत्य साधुं सम्मानयतीति सम्मानादिकरणेन साधोर्गर्वो भवति यत् मा राजाऽपि सम्मानयतीति, तथा तुष्टो राजा वस्त्रादिना यदि सत्कारयति तदा स सत्कृतश्च साधु परिग्रही भवति, तत साधुक्रियायां प्रमाद कुर्वन् संयमं विनाशयेत् । अथ यदि राजा चाभद्रस्तदा यात्रासमये साधुं दृष्ट्वा मनसि विचारयति—यात्रासमये दृष्टोऽयं लुञ्चितकेशोऽतोऽवश्यमेव विघ्नो भविष्यतीति गन्तुकामोऽपि निवर्तते, अथ कथमपि गतस्तदा यदि भाग्यवशात् तस्य कोऽपि विघ्नो जात., अथवा युद्धे तस्य पराजयो वा जातस्तदा प्रत्यागत श्रमणेन सह द्वेषं कुर्यात्, प्रद्विष्टश्च राजा भक्तपानौषधभैषज्यादीनां दाननिषेधं नगरे कुर्यात्, उपकरणादिकं वा अपहरेत्, हत्वा चापमानपूर्वकं निर्वासयेदपि, तदनन्तरं श्रमणान्तरस्यापि भक्तपानादिव्यवच्छेदं कुर्यात् तस्मात् राज्ञो दर्शनार्थे विचार-

मपि न कुर्यात्। अथवा यदि स प्रावुर्भावागमनसमये राजानं द्रष्टुं गमिष्यति तदा तत्रैकत्रितजनसमूहे काञ्चिद् विभूषिताङ्गीं वनितां दृष्ट्वा मोहवशो भविष्यति, प्रतिनिवृत्तो मनसा चिरं स्मरन् तामलभमानश्च अन्यामेव काञ्चित् वनितां स्वतीर्थपरतीर्थसम्बन्धिनीं कामयेत्, संयतीमेव वा काञ्चित् कामयेत्, तदभावे हस्तकर्मादिकमेव कुर्यात्, एवं रीत्याऽन्ततः सर्वथा स संयमात् परिभ्रष्टो भविष्यति। अथवा स यदि राजपुत्रः सन् प्रव्रजितोऽस्ति तदा स यदि तादृशं समृद्धिसम्पन्नं राजानं दृष्ट्वा स चिन्तयति—मया एतादृशसमृद्धस्य उपभोगः कर्तव्य इति विचार्य कदाचित् संयमं परित्यज्य स्वकुलं प्रतिगच्छेत्। यस्मात् राजादीनां दर्शने एते पूर्वोक्ता दोषा भवन्ति तस्मात्कारणात् संयतः संयती वा राजादीनां गमनागमनसमये तद्दर्शनस्य विचारं मनसापि न कुर्यात्, न वा विचारं कारयेत्, न वा तादृशं विचारं कुर्वन्तं कमपि श्रमणान्तरमनुमोदयेत्, किन्तु निवृत्तदर्शनकुतूहलो मध्यस्थः शास्त्रप्रणेतृतीर्थंकरादिष्ट धर्मध्यानं कुर्वन् संयमाराधनसंलग्नचित्त एव तिष्ठेत् इति भावः॥ सू० ८॥

सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं इत्थीओ सव्वालंकारविभूसियाओ पयमवि चक्खुदंसणवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० ९॥

छाया - यो भिक्षु राज्ञः क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानां स्त्रियः सर्वालंकारविभूषिता पदमपि चक्षुर्दर्शनप्रतिज्ञया अभिसन्धारयति अभिसन्धारयन्तं वा स्वदते ॥९॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रण्णो' इत्यादि राजादीनां 'इत्थीओ' स्त्रियः 'सव्वालंकारविभूसियाओ' सर्वालङ्कारविभूषिताः अनेकप्रकारकराजकुलोचितवस्त्रभूषणादिभिः सुसज्जिताः स्त्रियः 'चक्खुदंसणवडियाए' चक्षुर्दर्शनप्रतिज्ञया—चक्षुषा दर्शनेच्छया द्रक्ष्यामि राजवनितामितीच्छया 'पयमवि' पदमपि एकमपरं न्यासमपि कर्तुं 'अभिसंधारेइ' अभिसन्धारयति मनसा चिन्तयति तथा 'अभिसंधारेंतं वा साइज्जइ' अभिसन्धारयन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्तीति।

अत्राह भाष्यकारः—

भाष्यम्—इत्थि पासंति जे रण्णो, सव्वालंकारभूसियं।
लभंते णेगदोसे ते, समणा णेत्थ संसओ ॥

छाया—स्त्रियं पश्यन्ति ये राज्ञः सर्वालङ्कारभूषिताम्।
लभन्तेऽनेकदोषान् ते श्रमणा नात्र संशयः ॥

**अवचूरिः—'इत्थिं'** इत्यादि। ये केचित् श्रमणाः भिक्षुकाः राज्ञः प्रसंगात् क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानाम् सम्बन्धिनीं स्त्रियं राजवल्लभां, **कीदृशीम्** ? सर्वालङ्कारविभूषितां स्वच्छ-सुन्दरकमनीयवस्त्राभूषणसज्जितां पश्यन्ति चक्षुर्जनितज्ञानविषयतां कुर्वन्ति ते श्रमणाः अनेकदोषान् **विविधदोषान्** आज्ञाभङ्गादिकान् लभन्ते प्राप्नुवन्ति अत्रैतद्विषये न कोऽपि संशयः, अपि तु तेषां दोषा भवन्त्येवेति, तथाहि—यस्तु भुक्तभोगी पश्चात् श्रमणः संजातः स तादृशीं स्त्रियं दृष्ट्वा विचिन्तयति-ममापि एतादृशी वल्लभा आसीत्, एवं विचारयतस्तस्य कालक्रमेण तत्समये वा उदीरितकामव्यथया जर्जरितशरीरः संयमात् परिभ्रष्टो भवति। यस्तु अभुक्तभोगी स चिन्तयति—एतादृक्स्त्रीसेवने कीदृश आनन्दानुभवो जायेत ? इत्यादिविचारेण विह्वलीभूतः स तादृशीं स्त्रियं दृष्ट्वा संयमात् पतितो भवति, कामविह्वलशरीरो भवन् शासनस्य निन्दको वा भवेत्—किमनेन साध्वाचारेण ? गार्ह-स्थ्यमेव श्रेयस्करमित्यादि वदेत्, तदप्राप्तौ कदाचित् आत्मघातमपि करोति, तेन शासनस्य लघुता भवति। यस्मादेते दोषा भवन्ति तस्मात्कारणात् श्रमणः राजादीनामुपलक्षणात्साधारण-जनानामपि स्त्रियं द्रष्टुं विचारमपि न कुर्यात्, न वाऽन्यान् श्रमणान् स्त्रीदर्शनविषयकविचारमपि कारयेत्, न वा विचारं कुर्वन्तमन्यमनुमोदयेदिति ॥सू० ९॥

## सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं मंसखायाणं वा मच्छखायाणं वा छविखायाणं वा बहिया णिग्गयाणं असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेइ पडिग्गहेंतं वा साइज्जइ ॥ सू० १०॥

**छाया**—यो भिक्षुः राज्ञः क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानां मांसखादकानां वा मत्स्यखादकानां वा छविखादकानां वा बहिर्निर्गतानाम् अशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० १०॥

**चूर्णी—"जे भिक्खू'** इत्यादि। **'जे भिक्खू'** यः कश्चिद् भिक्षुः **'रण्णो'** इत्यादिराजा-दीनां **'मंसखायाणं वा'** मांसखादकानां वा—मांसभक्षकाणां मांसभक्षणनिमित्तं मृगयां कर्त्तुं बहि-र्निर्गतानामिति सर्वत्र सम्बन्धः कार्यः, तेन मांसार्थं वने मृगयाकरणाय ग्रामाद् बहिर्निर्गतानां मांस-खादनार्थमित्यर्थो बोध्यः, एवं **'मच्छखायाणं वा'** मत्स्यखादकानां वा—मत्स्यभक्षकाणां वा—मत्स्य-ग्रहणनिमित्तं नदीह्रदसमुद्रादौ गमनार्थं बहिर्निर्गतानां वा **'छविखायगाणं वा'** छविखादकानां वा, छविः चपलमुद्गादिफलिस्तासाम्—चपलमुद्गादिफलिभक्षणार्थं क्षेत्रे गमनार्थं वा **'बहिया णिग्ग-याणं वा'** तत्तद्वस्तुभक्षणार्थं बहिर्निर्गतानां वा तत्सम्बन्धि **'असणं वा'** इत्यादि अशनादिचतुर्विधमाहार **'पडिग्गाहेइ'** प्रतिगृह्णाति, अयं भावः—राजादयो मांसादिभक्षणेच्छया वनादिप्रदेशेषु समागताः

भवन्ति तत्र स्थितास्ते अशनादिकं चतुर्विधमाहारजातं पाचयन्ति तादृशाऽशनादि तेभ्यो यो भिक्षु-र्गृह्णाति 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १०॥

**सूत्रम्—जे भिक्खू रण्णा खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं अण्णयरं उववूहणियं समीहियं पेहाए तीसे परिसाए अणुट्ठियाए अभिण्णाए अवाच्छिण्णाए जा तं असणं वा ४ पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० ११ ॥**

छाया—यो भिक्षु राज्ञ क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानामन्यतरद् उपबृंहणीयं समीहितं प्रेक्ष्य तस्यां परिषदि अनुत्थितायां अभिन्नायां अव्यवच्छिन्नायां य तद् असनं वा ४ प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० ११॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य. कश्चिद् भिक्षु 'रण्णो' इत्यादि राजादीनां 'अण्णयरं' यत् अन्यतरत् अशनादिषु मध्ये यत् किमप्येकमशनादिकम् 'उववूहणियं' उपबृंहणीयम् शरीरपुष्टिकारकम् मेधेन्द्रियायुष्यादिबलवर्द्धकं च, एवादृशे सति पुनः 'समीहियं' समीहितम् मनोऽभिलषितम् 'पेहाए' प्रेक्ष्य दृष्ट्वा 'तीसे परिसाए' तस्यां यस्या परिषदि सर्वक्षत्रियादिका सस्थिता तस्यां च परिषदि 'अणुट्ठियाए' अनुत्थितायां यावत्पर्यन्तं सभा नोत्थिता तस्यां 'अभिण्णाए' अभिन्नायां यावत्पर्यन्तम् एकोऽपि जनस्ततो निर्गतो न भवति सा अभिन्ना तस्यां 'अव्वोच्छिण्णाए' अव्यवच्छिन्नाया यदा सर्वे विनिर्गता भवन्ति तदा सा व्यवच्छिन्ना, न व्यच्छिन्ना अव्यवच्छिन्ना तस्यां 'जो तं असणं वा ४ पडिग्गाहेइ' य. तद् उपबृंहणीयादि-गुणयुक्तमशनपानखाद्यस्वाद्यं प्रतिगृह्णाति स्वीकरोति 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदते तादृशमशनादिक यो गृह्णाति गृह्णन्तमनुमोदते स प्रायश्चित्तभागी भवति।

अत्राह भाष्यकारः—

भाष्यम्—मेहाइंदिय आऊआईणं जं विवड्ढगं होई ।
उववूहणीयमसणं, रायसहाओ य नो गिण्हे ॥

छाया—मेधेन्द्रियायुरादीनां यत् विवर्धकं भवति ।
उपबृंहणीयमशनं राजसभातश्च नो गृह्णीयात् ॥

अवचूरिः—'मेहा' इत्यादि। तत्र मेधा धारणावती बुद्धिः, कालान्तरे अविस्मरणं धारणा तस्याः, इन्द्रियाणि श्रोत्रादीनि, तेषाम्, आयुश्च जीवनस्थितिरूपं तस्य, उपलक्षणाद् देहस्य च विवर्द्धकं भवति तत् उपबृंहणीयमशनं चतुर्विधं भक्तादिकम् अशनं पान खाद्य स्वाद्यं साधुः राजसभातः,

तस्यामनुत्थितायां तत्सकाशात् 'नो गिण्हे' नो नैव गृह्णीयात्, स्वीकुर्यात्, न वा स्वीकुर्वन्तमन्यमनुमोदयेत्, तद्ग्रहणे आज्ञाभङ्गादि-राजपिण्डग्रहणजन्याद्यनेकदोषसंभवादिति ॥ सू० ११॥

**सूत्रम्—अह पुण एवं जाणेज्जा–'इहज्ज रायखत्तिए परिवुसिए' जे भिक्खू ताए गिहाए ताए पएसाए ताए उवासंतराए विहारं वा करेइ सज्झायं वा करेइ असणं वा पाणं वा, खाइमं वा साइमं वा आहारेइ, उच्चारं वा पासवणं वा परिट्ठवेइ, अण्णयरं वा अणारियं निट्ठुरं अस्समणपाओग्गं कहं कहेइ कहेंतं वा साइज्जइ ॥सू० १२॥**

**छाया**—अथ पुनरेवं जानीयात् "इहाऽद्य राजक्षत्रियः पर्युषितः" यो भिक्षुः तस्मिन् गृहे तस्मिन् प्रदेशे तस्मिन् अवकाशान्तरे विहारं वा करोति स्वाध्यायं वा करोति अशनं वा पानं वा खाद्यं वा स्वाद्यं वा आहरति, उच्चारं वा प्रस्रवणं वा परिष्ठापयति, अन्यतरां वा अनार्याम् निष्ठुराम् अश्रमणप्रायोग्यां कथां कथयति कथयन्तं वा स्वदते ॥सू० १२॥

**चूर्णी**—'अह पुण' इत्यादि । 'अह' अथ अथेत्यय निपातः आनन्तर्यार्थकः, उक्तो हि राजपिण्डः, अथ तदनन्तरम् राजपिण्डकथनानन्तरम् 'पुण' पुनः 'एवं जाणेज्जा' एवं जानीयात् एवं यथावक्ष्यमाणं जानीयात्, किं जानीयात् ? तत्राह–'इहे'–त्यादि, 'इहज्ज रायखत्तिए परिवुसिए' इहाद्य राजक्षत्रियः–क्षत्रियवंशीयो राजा पर्युषितः, तत्र इहास्मिन् भूमिप्रदेशे अद्य वर्तमानदिवसे राजा कुलपरम्परया प्राप्तराज्यश्रीकः क्षत्रियः उपलक्षणात्–मुदितः मूर्द्धाभिषिक्तो वा पर्युषितो निवसन् अस्तीति, अथैवं ज्ञात्वाऽपि 'जे भिक्खू' यः कश्चिद् भिक्षुः 'ताए गिहाए' तस्मिन् गृहे यत्र राजा निवासं करोति तदासन्नगृहस्थगृहे 'ताए पएसाए' तस्मिन् प्रदेशे राजादिनिवासासन्नप्रदेशे यत्र खड्गादिशस्त्राणि स्थापितानि भवेयुस्तत्र 'ताए उवासंतराए' तस्मिन् अवकाशान्तरे तत्पार्श्वस्थशुद्धभूमौ च 'विहारं वा करेइ' विहारं–विहरणं वा करोति 'सज्झायं वा करेइ' स्वाध्यायं वा करोति 'असणं वा' अशनं वा इत्यादि, अशनादिचतुर्विधमाहारं 'आहारेइ' आहरति–आहारं करोति 'उच्चारं वा पासवणं वा परिट्ठवेइ' उच्चारं वा प्रस्रवणं वा परिष्ठापयति 'अण्णयरं वा' अन्यतरां वा 'अणारियं' अनार्याम् सत्पुरुषानाचरणीयाम् 'णिट्ठुरं' निष्ठुराम्–अश्लीलां 'अस्समणपाओग्गं' अश्रमणप्रायोग्याम् असाधुपुरुषयोग्यां 'कहं' कथाम् 'कहेइ' कथयति 'कहेंतं वा साइज्जइ' कथयन्तं वा स्वदते अनुमोदते ।

अत्राह भाष्यकारः—

**भाष्यम्**—राया य जत्थ चिट्ठइ, तत्थत्थेसुं णिसइठाणेसु ।
भिक्खू दोसे पावइ, विहारमाइस्स करणाओ ॥

छाया—राजा च यत्र तिष्ठति, तत्रस्थेषु गृहादिस्थानेषु ।
भिक्षुर्दोषान् प्राप्नोति, विहारादेः करणात् ॥

अवचूरिः—'राया य जत्थ चिट्ठइ' यत्र प्रदेशविशेषे राजक्षत्रियः क्षत्रियवंशाख्यो राजा तिष्ठति 'तत्थत्थेसुं' तत्रस्थेषु तदासन्नस्थितेषु गृहादिस्थानेषु 'विहारमाइस्स करणाओ' विहारादेः, विहारस्य आदिशब्दात् स्वाध्यायस्य आहारस्य उच्चारादिपरिष्ठापनस्य अन्यतरदनार्यभिक्षुराजश्रमणप्रायोग्यकथायाश्च करणात् 'भिक्खू' भिक्षु. श्रमणः श्रमणी वा 'दोसे' दोषान् आज्ञाभङ्गानवस्थादिकान् 'पावइ' प्राप्नोति । य· कोऽपि साधु· राजादिनिवासासन्नगृहादिप्रदेशे विचरेत् स्वाध्यायं कुर्यात् आहारं कुर्यात् उच्चारप्रस्रवण परिष्ठापयेत् शिष्टविगर्हितां काञ्चित् कथां वा कुर्यात्, एवं कारयेत् वा, तथा कुर्वन्तमनुमोदयेत् वा स आज्ञाभङ्गमनवस्थां मिथ्यात्वं संयमविराधनमात्मविराधन च प्राप्नुयात्, एव भद्रकाभद्रककृता अनेके दोषा अपि भवेयुरिति । यस्मात् एते पूर्वोक्ता दोषा भवन्ति तस्मात्कारणात् श्रमण· श्रमणी वा राजादिनिवासासन्नस्थितगृहादौ तत्समीपे वा विहारमारभ्य शिष्टजनानाचरणीयकथापर्यन्तं स्वय न कुर्यात् न वा कारयेत् न वा कुर्वन्तं कमपि अनुमोदयेदिति ॥सू० १२॥

सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं बहिया जत्तासंपट्ठियाणं असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥सू०१३॥

छाया—यो भिक्षु राज्ञ क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानां बहिर्यात्रासंप्रस्थितानाम् अशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० १३॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षुः 'रण्णो' राज्ञ 'खत्तियाणं' क्षत्रियाणाम् 'मुदियाणं' मुदितानाम् 'मुद्धाभिसित्ताणं' मूर्द्धाभिषिक्तानाम् पूर्वोक्तस्वरूपाणां 'बहिया जत्तासंपट्ठियाणं' बहिर्यात्रासंप्रस्थितानां परराजविजयार्थं प्रस्थितानाम्, यदा राजा परराजविजयार्थं गच्छति तदा मङ्गलार्थं भोजन कृत्वा गच्छति तादृशभोजनादित्यर्थः 'असणं वा' अशनं वा 'पाणं वा' पानं वा 'खाइमं वा' खाद्यं वा 'साइमं वा' स्वाद्यं वा 'पडिग्गाहेइ' प्रतिगृह्णाति तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदते । यो हि विजयार्थं प्रस्थितस्य राजादेर्मार्गे माङ्गल्यार्थं निर्मितभोजनादिसामग्रीतोऽशनादिकं स्वीकरोति स्वीकारयति वा, तथा तादृशमशनादिकं स्वीकुर्वन्तमनुमोदयति स प्रायश्चित्तभागी भवति ॥सू०१३॥

सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं बहिया जत्तापडिणियत्ताणं असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥सू० १४॥

छाया—यो भिक्षु राज्ञः क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानां बहिर्यात्राप्रतिनिवृत्तानामशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू०१४

चूर्णी—'जे भिक्खू' इत्यादि। 'यथा पूर्वसूत्रे यात्रार्थं प्रस्थितानां राजादीनामशनादिग्रहणस्य निषेधः कृतस्तथैवात्र यात्रातः प्रतिनिवृत्तानां राजादीनामशनादिग्रहणनिषेधो वक्तव्यः। सूत्रस्याक्षरगमनिका सुगमा ॥ सू० १४॥ एवम् 'नईजत्तासंपट्ठियाणं' नदीना यात्रार्थं संप्रस्थितानां राजादीनामशनादिग्रहणनिषेधसूत्रम् ॥ सू० १५॥ तथा एवमेव 'नईजत्तापडिनियत्ताण' नदीयात्रातः प्रत्यागतानां राजादीनामशनादिग्रहणनिषेधसूत्रम् ॥ सू० १६॥ एवमेव 'गिरिजत्तासंपट्ठियाणं' गिरियात्रार्थं संप्रस्थितानाम्, इति सूत्रम् ॥ सू० १७॥ तथा 'गिरिजत्तापडिनियत्ताणं' गिरियात्रातः प्रतिनिवृत्तानाम्, इति सूत्रम्। एषा सूत्रचतुष्टयी त्रयोदशसूत्रयात्राप्रस्थितसूत्रवदेव व्याख्येया ॥ सू० १८॥

**सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं महाभिसेयंसि वट्टमाणंसि णिक्खमइ वा पविसइ वा णिक्खमंतं वा पविसंतं वा साइज्जइ ॥सू० १९॥**

छाया—यो भिक्षु राज्ञ क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानां महाभिषेके वर्त्तमाने निष्क्रामति वा प्रविशति वा निष्क्रामन्तं वा प्रविशन्तं वा स्वदते ॥सू १९॥

चूर्णी— 'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रण्णो' इत्यादि राजादीनां 'महाभिसेयंसि' महाभिषेके तत्राभिषेकाना मध्ये महान् अभिषेको महाभिषेक, तस्मिन् महाभिषेके 'वट्टमाणंसि' वर्त्तमाने प्रवर्त्तमाने महाभिषेकस्य समये तत्र 'णिक्खमइ वा' निष्क्रामति तत्र गन्तुमुपाश्रयात् निर्गच्छति वा 'पविसइ वा' प्रविशति वा तत्र महाभिषेकस्थाने प्रवेशं कुरुते वा 'णिक्खमंतं वा' निष्क्रामन्तं वा 'पविसंतं वा साइज्जइ' प्रविशन्त वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥सू० १९॥

**सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं इमाओ दस अभिसेयाओ रायहाणीओ उद्दिट्ठाओ गणियाओ वंजियाओ अंतो मासस्स दुक्खुत्तो वा तिक्खुत्तो वा णिक्खमइ वा पविसइ वा णिक्खमंतं वा पविसंतं वा साइज्जइ। तंजहा—चंपा १, महुरा २, वाणारसी ३, सावत्थी ४, साएयं ५, कंपिल्लं ६, कोसंबी ७, मिहिला ८, हत्थिणापुरं ९, रायगिहं वा १० ॥सू० २०॥**

**छाया—यो भिक्षु राज्ञः क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानामिमा दश आभिषेक्याः राजधान्य उद्दिष्टा गणिताः व्यञ्जिता अन्तर्मासस्य द्विकृत्वो वा त्रिकृत्वो वा निष्क्रामति वा प्रविशति वा निष्क्रामन्तं वा प्रविशन्तं वा स्वदते। तद्यथा–चम्पा १, मथुरा २, वाराणसी ३, श्रावस्ती ४, साकेतम् ५, कांपिल्यम् ६, कौशाम्बी ७, मिथिला ८, हस्तिनापुर ९, राजगृहं वा १० ॥ सू० २०॥**

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षुः **'रण्णो'** राज्ञः **'खत्तियाणं'** क्षत्रियाणाम् **'मुदियाणं'** मुदितानाम् **'मुद्धाभिसित्ताणं'** मूर्द्धाभिषिक्तानाम् **'इमाओ'** इमा वक्ष्यमाणाः **'दस अभिसेयाओ'** दश-दशसंख्यकाः आभिषेक्याः अभिषेकयोग्याः अभिषेकार्थमुपयुज्यमाना **'रायहाणीओ'** राजधान्य **'उद्दिट्ठाओ'** उद्दिष्टा कथिताः **'गणियाओ'** गणिता यासां महाभिषेके गणनाऽस्ति, **'वंजियाओ'** व्यञ्जिता नाम्ना प्रसिद्धाः, तत्र **'अंतोमासस्स'** अन्तर्मध्ये मासस्य मासाभ्यन्तरे इत्यर्थः, **'दुक्खुत्तो'** द्विःकृत्वो द्विवारम् **'तिक्खुत्तो'** त्रिःकृत्व त्रिवारम् **'णिक्खमइ वा'** निष्क्रामति वा उपाश्रयात् **'पविसइ वा'** प्रविशति वा उत्सवारम्भे प्रवर्तमाने वा महोत्सवे अन्यस्थानादागत्य तत्र प्रविशतीत्यर्थः तथा **'णिक्खमंतं वा'** निष्क्रामन्तं वा **'पविसंतं वा'** प्रविशन्तं वा **'साइज्जइ'** स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति। अभिषेकयोग्यराजधान्यामुत्सवारम्भे मासाभ्यन्तरे द्विवारं त्रिवारं वा निष्क्रमणं प्रवेशश्च निवारित, तत्राय भावः यत्र उत्सवारम्भो जायते तत्र राजादयस्तत्प्रक्रियासयोजनार्थं प्रथमं गत्वा निवसन्ति, उत्सवे प्रतिनिवृत्ते च तत्रत प्रतिनिवर्त्तन्ते अतः एकवारं निष्क्रमणस्य प्रवेशस्य च निषेधो न कृत, किन्तु द्वित्रिवारस्य निषेध कृत वारं वारं गमने तेषा द्वेषोत्पत्तिसंभवादिति। कास्तादृश्यो राजधान्यो यत्राऽभिषेकः क्रियते? इति जिज्ञासायामाह—**'तंजहा'** इत्यादि। **'तंजहा'** तद्यथा–**'चंपा'** चम्पानाम्नी राजधानी प्रथमा या वासुपूज्यस्य जन्मभूमिः १, **'महुरा'** मथुरानाम्नी राजधानी द्वितीया यत्र हि कृष्णवासुदेवस्य जन्माऽभूत २, **'वाराणसी'** वाराणसी तृतीया या पार्श्वनाथतीर्थंकरस्य जन्मभूमि ३ **'सावत्थी'** श्रावस्तीनाम्नी राजधानी चतुर्थी या संभवतीर्थङ्करस्य जन्मभूमि. ४, **'साएयं'** साकेतमयोध्या पञ्चमी या ऋषभदेवस्य अनन्तनाथस्य रामचन्द्रस्य च जन्मभूमिः ५, **'कंपिल्लं'** काम्पिल्यं षष्ठी राजधानी या विमलनाथतीर्थङ्करस्य जन्मभूमि. ६, **'कोसंबी'** कौशाम्बीनाम्नी सप्तमी राजधानी पद्मप्रभोर्जन्मभूमिः ७, **'मिहिला'** मिथिला अष्टमी राजधानी या मल्लिनाथस्य जन्मभूमि ८, **'हत्थिणापुरं'** हस्तिनापुरं नवमी राजधानी या शान्तिनाथस्य कुन्थुनाथस्य च जन्मभूमिः ९, **'रायगिहं वा'** राजगृहं दशमी राजधानी या मुनिसुव्रतस्वामिनो जन्मभूमिः १०, ता एता दश राजधान्यो नामनिर्देशेन गणिताः कथिताः, एतदतिरिक्ता अपि वासुदेव–बलदेव–चक्रवर्त्यादीना राजधान्यो बहुजनसमाकीर्णा ग्रहीतव्याः, तास्वपि उत्सवप्रसगे मासाभ्यन्तरे द्विवार त्रिवारं वा गमनागमनं

न कर्तव्यम् । एतासु दशसु राजधानीषु तादृशीष्वन्यासु वा मासाभ्यन्तरे यो भिक्षुर्द्विवारं त्रिवारं वा गमनागमनं करोति कारयति वा तथा गमनागमनं कुर्वन्तं वाऽन्यमनुमोदते स प्रायश्चित्त-भागी भवति ।

अत्राह भाष्यकारः—

**भाष्यम्**—चंपाइयं च एयं, पुव्वुत्तं रायहाणिदसगं जं ।
रज्जाभिसेयसमए, दुत्तियवार न गच्छेऽत्थ ॥१॥

**छाया**—चम्पादिकं चैतत् पूर्वोक्तं राजधानीदशकं यत्
राज्याभिषेकसमये, द्वित्रिवारं न गच्छेदत्र ॥१॥

**अवचूरिः**—'चंपाइयं' इत्यादि । एतत् चम्पादिकं राजधानीदशकं दश राजधान्य इत्यर्थः यत् पूर्वोक्तम्, अत्र दशसु राजधानीषु राज्याभिषेकसमये राज्याभिषेकमहोत्सवकाले भिक्षुः श्रमणः श्रमणी वा न गच्छेत् । उत्सवसमये एतासु राजधानीषु एकवारादधिकं द्विवारं त्रिवारं च भिक्षार्थमन्यकार्यार्थं वा गमने साधोर्बहवो दोषा भवन्ति, तथाहि—उत्सवसमये तत्र हयानां गजानां रथानां जनानां च परस्पर संघट्टनरूप संमर्दो भवति तेन तत्रत्यो मार्गोऽवरुद्धः स्यात् ततस्तत्र गमने आत्मविराधनासंभव, तथा तत्र भिक्षाया बहुकालक्षेपो जायते, तेन स्वाध्यायध्यानादिषु व्याघातो भवति, तत्र भिक्षार्थं भ्रमणे लोकापवादोऽप्यवश्यम्भावी—यदयं साधुराहारलोलुप. स्त्र्या-दिदर्शनस्पर्शनलोलुपश्च दृश्यते, इत्यादि । यस्मादेते दोषा भवन्ति तस्मात्कारणात् श्रमणस्तत्र निष्क्र-मणं वा प्रवेशं वा न कुर्यात् न कारयेत् कुर्वन्तं वा नानुमोदयेत् । यद्येवं कुर्यात्तदा स प्राय-श्चित्तभागी भवति, आज्ञाभङ्गादिदोषांश्चापि प्राप्नोतीति भाष्यगाथाभावार्थः ॥२०॥

**सूत्रम्**—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं असणं वा पाणं वा खाइमं वा साइमं वा परस्स नीहडं पडिग्गाहेइ पडि-ग्गाहेंतं वा साइज्जइ । तंजहा—खत्तियाण वा रायाण वा कुरायाण वा रायपेसियाण वा रायवंसियाण व—त्ति ॥सू० २१॥

**छाया**—यो भिक्षुः राज्ञः क्षत्रियाणां मुदितानां मूर्धाभिषिक्तानामशनं वा पानं वा खाद्यं वा स्वाद्यं वा परस्मै निर्हृतं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते तद्यथा-क्षत्रि-येभ्यः वा राजभ्यो वा कुराजेभ्यो वा राजप्रेष्येभ्यो वा राजवंश्येभ्यो वा, इति ॥सू० २१॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'रण्णो' राज्ञः 'खत्तियाणं' क्षत्रियाणाम् 'मुदियाणं' मुदितानाम् 'मुद्धाभिसित्ताणं' मूर्धाभिषिक्तानाम् 'असणं वा पाणं वा खाइमं वा साइमं वा' अशनं पानं खाद्यं स्वाद्यं वा यत् 'परस्स नीहडं' अत्र 'परस्स'

इति चतुर्थ्या रूपम् 'चतुर्थ्याः षष्ठी' इति प्राकृतसूत्रपाठात्, प्राकृते चतुर्थीस्थाने षष्ठ्येव विभक्तिः प्रयुज्यते तत· 'परस्स' 'परस्मै' इतिच्छाया भवति, एवमग्रेऽपि विज्ञेयम्। ततः परस्मै जातावेकवचनं तत· परेभ्य इत्यर्थः, परनिमित्त'नीहडं' निहृतम्—अन्येषां वक्ष्यमाणानां कृते बहि· निस्सारितं तत् 'पडिग्गाहेइ' प्रतिगृह्णाति स्वीकरोति तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति। केभ्य· परेभ्य इति तानेव दर्शयति–'तंजहा' इत्यादि। 'तंजहा' तद्यथा–'खत्तियाण वा' क्षत्रियेभ्यो वा 'रायाण वा' राजभ्यो वा 'कुरायाण वा' कुराजेभ्य.–कुत्सिता राजान कुराजा, तेभ्य. प्रत्यन्तदेशाधिपत्वात् 'रायपेसियाण वा' राजप्रेष्येभ्यो वा, एतेषामेव क्षत्रियादीनां ये प्रेष्या भृत्यास्तेभ्य· 'रायवंसियाण वा' राजवंश्येभ्यो वा एतेषामेव वंशे समुत्पन्नाः पुत्रमातृभ्रातृप्रभृतय, तेषा कृते निस्सारितं चाशनादिकं गृह्णत· श्रमणस्य प्रायश्चित्तं भवति, परजन्यप्रद्वेषान्तरायादौ एतादृशान्नस्यापि राजपिण्डत्वादेव। तथा–परजन्यप्रद्वेषान्तरायादिभ्योऽन्येऽपि बहवो दोषा· संभवन्तीति ॥ सू० २१ ॥

सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं असणं वा पाणं वा खाइमं वा साइमं वा परस्स नीहडं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ। तंजहा-णडाण वा णट्टगाण वा कच्छुयाण वा जल्लाण वा मल्लाण वा मुट्ठियाण वा वेलंबगाण वा कहगाण वा पवगाण वा लासगाण वा खेलयाण वा छत्ताणुयाण वा॥ सू० २२॥

छाया– यो भिक्षु राज्ञ क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानामशनं वा पानं वा खाद्य वा स्वाद्य वा परस्मै निहृतं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते। तद्यथा नटेभ्यो वा नर्त्तकेभ्यो वा कच्छुकेभ्यो वा जल्लेभ्यो वा मल्लेभ्यो वा मौष्टिकेभ्यो वा वेलम्बकेभ्यो वा कथकेभ्यो वा प्लवकेभ्यो वा लासकेभ्यो वा खेलकेभ्यो वा छत्रानुगेभ्यो वा ॥२२॥

चूर्णी— 'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु 'रण्णो' इत्यादि व्याख्या पूर्वसूत्रवत् कर्त्तव्या। अनागतपदानि व्याख्यायन्ते–'णडाण वा' नटेभ्य नाटकादिकर्तृभ्योवा 'णट्टगाण वा' नर्तकेभ्यो वा नृत्यकर्तृभ्य, तत्र नर्तका नृत्यकर्तार, अथवा अन्यान ये नर्तयन्ति तेऽपि नर्तका तेभ्य 'कच्छुयाण वा' कच्छुकानां वा, तत्र कच्छु· रज्जुस्तदुपरि नृत्यकारकाः कच्छुकाः, तेभ्यो वा 'जल्लाण वा' जल्लेभ्यो वा तत्र जल्ला राजस्तुतिपाठका·, अथवा वंशोपरिनर्तका., तेभ्य· 'मल्लाण वा' मल्लेभ्यो वा, तत्र मल्ला—मल्लयुद्धकारका प्रसिद्धा, तेभ्य 'मुट्ठियाण वा' मौष्टिकेभ्यो वा मुष्टिप्रहारका—मुष्टियुद्धकारका·, तेभ्य. 'वेलंबगाण वा' वेलम्बकेभ्यो वा, तत्र

वेलम्बका भाण्डवत् कुचेष्टाकारका', तेभ्य **'कहगाण वा'** कथकेभ्यो वा, कथका' राजसभायां कथाकारकास्तेभ्य' **'पवगाण वा'**, प्लवकेभ्यो वा प्लवका –मर्कटादिवत् कूर्दकास्तेभ्य' **'लासगाण वा'** लासकेभ्यो, वा–लासका. गाथागायका राजयशोगायकास्तेभ्य' **'खेलयाण वा'** खेलकेभ्यो वा लीलाकारकेभ्यः **'छत्ताणुयाण वा'** छत्रानुगेभ्यो वा राजादीना छत्रं गृहीत्वाऽनुगच्छन्ति तेभ्यः छत्रधारकेभ्य इत्यर्थ, एतेषां नटादीनामुद्देशेन राजभवने सपादितमाहारजात यो गृह्णाति गृह्णन्त वा अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २२॥

**सूत्रम्—जे भिक्खू रण्णा खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं असणं वा पाणं वा खाइमं वा साइमं वा परस्स नीहडं पडिग्गाहेइ पडिग्गहेंतं वा साइज्जइ। तं जहा–आसपोसयाण वा हत्थिपोसयाण वा महिसपोसयाण वा वसहपोसयाण वा सीहपोसयाण वा वग्घपोसयाण वा अयपोसयाण वा मिगपोसयाण वा सुणगपोसयाण वा सूयरपोसयाण वा मेंढपोसयाण वा कुक्कुडपोसयाण वा मक्कडपोसयाण वा तित्तिरपोसयाण वा वट्टयपोसयाण वा लावयपोसयाण वा चीरल्लपोसयाण वा हंसपोसयाण वा मयूरपोसयाण वा सुयपोसयाण वा ॥सू० २३॥**

छाया—यो भिक्षुः राज्ञ क्षत्रियाणा मुदितानां मूर्द्धाभिषिक्तानामशन वा पानं वा खाद्य व स्वाद्य व परस्मै निर्हृत प्रतिगृह्णाति प्रतिगृह्णन्त वा स्वदते। तद्यथा–अश्वपोषकेभ्यो वा हस्तिपोषकेभ्यो वा महिषपोषकेभ्या वा वृषभपोषकेभ्यो वा सिंहपोषकेभ्यो वा व्याघ्रपोषकेभ्यो वा अजपोषकेभ्यो वा मृगपोषकेभ्यो वा श्वपोषकेभ्यो वा शूकरपोषकेभ्यो वा मेषपोषकेभ्यो कुक्कुटपोषकेभ्यो वा मर्कटपोषकेभ्यो वा तित्तिरपोषकेभ्यो वा वर्त्तकपोषकेभ्यो वा लावकपोषकेभ्यो वा चिल्लपोषकेभ्यो वा हंसपोषकेभ्यो वा मयूरपोषकेभ्यो वा शुकपोषकेभ्यो वा ॥ सू० २३॥

चूर्णी— इदमपि सूत्रं पूर्ववदेव व्याख्येयम्। अत्र अश्वादिशब्दा' सर्वे प्रसिद्धा एव ते लोकतो ज्ञातव्या' ॥सू०२३॥ एवमनेनैव क्रमेणाग्रेतनानि चत्वारि सूत्राण्यपि व्याख्येयानि, तथाहि -**'आसदमगाण वा हत्थिदमगाण वा'** अश्वदमकेभ्य अश्वदमनकारकेभ्य, हस्तिदमकेभ्य हस्तिदमनकारकेभ्य.० सूत्रम् २४॥ **'आसमद्दगाणं वा हत्थिमद्दगाणं वा'** अश्वमर्दकेभ्य. अश्वानां हस्तादिना मर्दनकारकेभ्यः, हस्तिमर्दकेभ्य हस्तिनां हस्तादिना मर्दनकारकेभ्य ० इति सूत्रम् २५॥ **'आसमट्ठाण वा हत्थिमट्ठाण वा'** अश्वमार्जकेभ्यो वा हस्तिमार्जकेभ्यो वा। अश्वानां हस्तिनां च रजोऽवगुण्ठितशरीरस्य मार्जनकारकेभ्य. रजोनिवारकेभ्यः० इति सूत्रम् २६॥ **'आस-**

**रोहाण वा हत्थिरोहाण वा'** अश्वारोहकेभ्यो वा–अश्वानामारोहणकारकेभ्यः, हस्त्यारोहकेभ्यो वा हस्तिनामारोहणकारकेभ्य.० इति । एतेषां पूर्वोक्तानामश्वदमकादीनां निमित्तं बहिर्निस्सारितं सपादित बा अशनादि साधुर्न गृह्णीयात्, न ग्राहयेत्, गृह्णन्तं वा नानुमोदयेत् । एवं करणे साधुः प्रायश्चितभागी भवति, आज्ञाभङ्गानवस्थादिदोषांश्च प्राप्नोतीति ॥सू० २७॥

**सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्तणं असणं वा पाणं वा खाइमं वा साइमं वा परस्स नीहडं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ । तंजहा–सत्थाहावाण वा संवाहावयाण वा अब्भंगावयाण वा उव्वट्टावयाण पा मज्जावयाण वा भंडावयाण छत्तग्गहाण वा चामरग्गहाण वा हडप्पग्गहाण वा परियट्टग्गहाण वा दीवियग्गहाण वा असिग्गहाण वा धणुग्गहाण वा सत्तिग्गहाण वा कोंतग्गहाण वा हत्थिपत्तग्गहाण वा ॥सू० २८॥**

छाया—यो भिक्षु राज्ञः क्षत्रियाणां मुदितानां मूर्द्धाभिषिक्तानामशनं वा पानं वा खाद्यं वा स्वाद्य वा परस्मै निहृतं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते । तद्यथा–सार्थाह्वकेभ्यो वा संवाहकेभ्यो वा अभ्यञ्जकेभ्यो वा उद्वर्तकेभ्यो वा मज्जकेभ्यो वा मंडकेभ्यो वा छत्रग्रहेभ्यो वा चामरग्रहेभ्यो वा हडप्पग्रहेभ्यो वा परिवर्तग्रहेभ्यो वा दीपिकाग्रहेभ्यो वा असिग्रहेभ्यो वा धनुर्ग्रहेभ्यो वा शक्तिग्रहेभ्यो वा कुन्तग्रहेभ्यो वा हस्तिपत्रग्रहेभ्यो वा ॥ सू० २८ ॥

चूर्णी—'जे भिक्खू' इत्यादि व्याख्या पूर्ववत्, केभ्य परभ्य ! तान् प्रदर्शयति–'तं जहा' इत्यादि । 'तंजहा' तद्यथा–'सत्थाहावाण वा' सार्थाह्वकेभ्यो वा राज्ञा सार्थानि सचिवादिरूपाणि आह्वयन्ति आमन्त्रयन्ति राजसंदेशं वा कथयन्ति ये ते तथा, तानुद्दिश्य सम्पादितं स्थापितम् तथा 'संवाहावयाण वा' संवाहकेभ्यो वा, तत्र शयनकाले राजादीना सवाहनं शरीरादेर्वा सवाहनं 'पगचंपी' इति प्रसिद्धं कुर्वन्ति ये ते, तेभ्य 'अब्भंगावयाण वा' अभ्यञ्जकेभ्यो वा शतपाकसहस्रपाकादितैलेन राजादीनामभ्यञ्जनं 'मालिश' इति प्रसिद्धं कुर्वन्ति ये ते अभ्यञ्जका. तैलाभ्यङ्गकारकाः, तेभ्यः 'उव्वट्टावयाण वा' उद्वर्तकेभ्यो वा, तत्र राजादीनां शरीरे सुगन्धिद्रव्यमिश्रितपिष्टचूर्णादिना उद्वर्तयन्ति 'उबटना' इति प्रसिद्धं कुर्वन्ति ये ते उद्वर्तकाः, तेभ्य. 'मज्जावयाण वा' मज्जकेभ्यो वा, तत्र ये राजादीनां स्नानं कारयन्ति ते मज्जका. तेभ्य., 'मंडावयाण वा' मंडकेभ्यो, वा तत्र मुकुटादिना राजादीन् मण्डयन्ति–मण्डितं कुर्वन्ति अलङ्कुर्वन्ति ये ते मण्डकाः, तेभ्य. 'छत्तग्गहाण वा' छत्रग्रहेभ्यो वा, तत्र ये राजादीनां छत्रं गृह्णन्ति धारयन्ति ये ते छत्रग्रहाः, तेभ्य. 'चामरग्गहाण

**वा'** चामरग्रहेभ्यो वा, तत्र ये चामरं गृह्णन्ति धारयन्ति ते चामरग्रहा, तेभ्य: **'हडप्पग्गहाण वा'** हडप्पग्रहेभ्यो वा, तत्र आभरणस्थापनाय यद् भाण्ड तत् हडप्पं कथ्यते त गृह्णन्ति धारयन्ति ये ते हडप्पग्रहाः, तेभ्यः **'परियट्टग्गहाण वा'** परिवर्तग्रहेभ्यो—परिवर्त परिवर्त्तितवस्त्रादिस्थापनपात्रं मञ्जूषादिरूप', तं गृह्णन्ति धारयन्ति ये ते परिवर्तग्रहा, तेभ्य: **'दीवियग्गहाण वा'** दीपिकाग्रहेभ्यो वा, तत्र राजादीनामग्रे गृहे वा दीपिका 'दीवड' इति प्रसिद्ध, गृह्णन्ति धारयन्ति ये ते दीपिकाग्रहा', तेभ्य. **'असिग्गहाण वा'** असिग्रहेभ्यो वा, तत्रासि: खड्गः, त राजादिखड्ग गृह्णन्ति धारयन्ति ये ते असिग्रहा., तेभ्य: **'धणुग्गहाण वा'** धनुर्ग्रहेभ्यो वा, तत्र धनुश्चाप, तद् गृह्णन्ति ये ते धनुर्ग्रहा, तेभ्य. **'सत्तिग्गहाण वा'** शक्तिग्रहेभ्यो वा, तत्र शक्तिः शस्त्रविशेष, तं गृह्णन्ति ये ते शक्तिग्रहा तेभ्य **"कौंतग्गहाण वा'** कुन्त भल्ल 'भाला' इति लोकप्रसिद्ध, त गृह्णन्ति धारयन्ति ये ते कुन्तग्रहा, तेभ्य. **'हत्थिपत्तग्गहाण वा'** हस्तिपत्रग्रहेभ्यो वा अङ्कुशधारिभ्य., इत्यादिकार्यकारिणा प्रयोजनाय बहिर्निस्सारितं पाचित स्थापित वाऽशनादिक य. स्वीकरोति स्वीकारयति वा स्वीकुर्वन्त श्रमणान्तर योऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २८॥

## सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं असणं वा पाणं वा खाइमं वा साइमं वा परस्स नीहडं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ । तंजहा—वरिसधराण वा कंचुइज्जाण वा दोवारियाण वा दंडारक्खयाण वा ॥ सू० २९ ॥

छाया —यो भिक्षुः राज्ञ क्षत्रियाणा मुदिताना मूर्द्धाभिषिक्तानामशन वा पानं वा खाद्यं वा स्वाद्यं वा परस्मै निर्हृत प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते । तद्यथा-वर्षधरेभ्यो वा कञ्चुकिभ्यो वा दौवारिकेभ्यो वा दण्डारक्षकेभ्यो वा ॥ सू० २९॥

**चूर्णी**—'जे भिक्खू' इत्यादि । स्पष्टम् । नवरम्—तत्र के ते परे तत्राह—**'तंजहा'** इत्यादि, **'तं जहा'** तद्यथा—**'वरिसधराण वा'** वर्षधरेभ्यो वा—वर्षधरा वर्द्धितकीकरणेन नपुंसकीकृता अन्तःपुररक्षका., तेभ्य: **'कंचुइज्जाण वा'** कंचुकिभ्यो वा, तत्र कचुकिनो राज्ञामन्त पुरे निवसन्तो नपुसका एव, तेभ्य. वर्षधरकञ्चुकिनोरय भेद —यत् वर्षधर कृत्रिमनपुसक, कंचुकी तु जन्मजातो नपुंसक इति । **'दोवारियाण वा'** दौवारिकेभ्यो वा द्वारपालेभ्य **'दंडारक्खयाण वा'** दण्डारक्षकेभ्यो वा, दण्डेन आरक्षन्तीति दण्डारक्षका, तेभ्य दण्डेन रक्षाकर्तृभ्य । द्वारपालस्तु केवलं द्वारमेव रक्षति, दण्डारक्षकस्तु यत्र तत्र राज्ञोऽभिमतं कार्यं रक्षतीत्यनयोर्द्वारपालदण्डारक्षकयोर्विशेषः, ततश्च राज्ञां गृहे वर्षधरादीनामुद्देशेन बहिर्निस्सारित पाचितं तदर्थं स्थापित वाऽशनादिकं यो भिक्षुः लोभात् मोहात् स्वादवशाद् वा गृह्णाति गृह्णन्तं वाऽनुमोदते स प्रायश्चित्तभागी भवति ॥सू०२९॥

**सूत्रम्—जे भिक्खू रण्णो खत्तियाणं मुदियाणं मुद्धाभिसित्ताणं असणं वा पाणं वा खाइमं वा साइमं वा परस्स नीहडं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ। तंजहा—खुज्जाणं जाव पारसीणं॥ सू० ३०॥**

छाया– यो भिक्षुः राज्ञः क्षत्रियाणां मुदितानां मुर्द्धाभिषिक्तानामशनं वा पानं वा खाद्यं वा स्वाद्यं वा परस्मै निर्हृतं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते। तद्यथा-कुब्जाभ्यो यावत् पारसीभ्यः ॥३०॥

चूर्णी—'जे भिक्खू' इत्यादि। स्पष्टम्, नवरम्-अथ दासीना निमित्त निर्हृतमशनादि-निषेधे ता दास्यः प्रदर्श्यन्ते–'तंजहा' इत्यादि। 'तंजहा' तद्यथा 'खुज्जाणं वा' कुब्जाभ्यो वा, तत्र कुब्जा शरीरतो वक्रा दास्यः, तासां कृते स्थापितमशनादिकमित्यन्वयः 'जाव' यावत्–यावत्पदेन– 'चिलाइयाणं वा वडभीणं वा बब्बरीणं वा बउसीणं वा जोणियाणं वा पल्हवियाणं वा ईसीणियाण वा धोरुगिणीणं वा लासियाणं वा लकुसियाणं वा दमिलीणं वा सीहलीणं वा आरबीणं वा पुलिंदीणं वा पक्कणीणं वा बहलीणं वा मुरंडीणं वा सबरीणं वा' आसां दासीनां ग्रहणं भवति, तत्र 'चिलाइयाणं वा' किरातिकाभ्यो वा किरातदेशोत्पन्नाभ्यः 'वामणीणं वा' वामनाभ्यो वा ह्रस्वशरीराभ्यः 'वडभीणं वा' वडभीभ्यो वा वक्रार्धकायिकाभ्यो वा 'बब्बरीणं वा' बर्बरीभ्यो वा बर्बरदेशोत्पन्नाभ्यः 'बउसियाणं वा' बकुशिकाभ्यो बकुशदेशोत्पन्नाभ्यः 'जोणियाणं वा' यावनिकाभ्यो वा–यवनदेशोत्पन्नाभ्यः 'पल्हवियाणं वा' पल्हविकाभ्यो वा–पल्हवदेशोत्पन्नाभ्यः 'ईसीणियाणं वा' ईसीनिकाभ्यो वा–ईसीनिकादेशोत्पन्नाभ्यो वा 'धोरुगिणीणं वा' धोरुकिनीभ्यो वा धोरुकदेशोत्पन्नाभ्यः 'लासियाणं वा' लासिकाभ्यो वा लासदेशोत्पन्नाभ्यः 'लउसियाणं वा' लकुशिकाभ्यः लकुशदेशोत्पन्नाभ्यः 'दमिलियाणं वा' द्राविडिकाभ्यो वा द्रविडदेशोत्पन्नाभ्यः 'सीहलीणं वा' सिंहलीभ्यो वा सिंहलदेशोत्पन्नाभ्यः 'आरबीणं वा' आरबीभ्यो वा अरबदेशोत्पन्नाभ्यः 'पुलिंदीणं वा' पुलिन्दीभ्यो वा पुलिन्ददेशोत्पन्नाभ्यः भिल्लजातीयाभ्यो वा 'पक्कणीणं वा' पक्कणीभ्यो वा पक्कणदेशोत्पन्नाभ्यः 'बहलीणं वा' बहलीभ्यो वा बहलदेशोत्पन्नाभ्यः 'मुरंडीणं वा' मुरण्डीभ्यो वा मुरण्डदेशोत्पन्नाभ्यः 'सबरीणं वा' शबरीभ्यो वा शबरदेशोत्पन्नाभ्यः, अथवा शबरः भिल्लविशेषः, तज्जातीयाभ्यः, 'पारसीणं वा' पारसीभ्यो वा पारसदेशोत्पन्नाभ्यः, सर्वा अपि एता दास्य एव ज्ञातव्या। तथा च राजादीनां भवने दासीभ्यः पाचितं स्थापितं च अशनादिकं यो गृह्णाति स्वयं परान् वा ग्राहयति गृह्णन्तं वा अनुमोदते स प्रायश्चित्तभागी भवतीति ॥सू० ३०॥

सूत्रम्—तं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥सू० ३१॥

॥ निसीहज्झयणे नवमो उद्देसो समत्तो ॥९॥

छाया—तत् सेवमान आपद्यते चातुर्मासिकं परिहारस्थानमनुद्घातिकम् ॥सू० ३१॥

॥ निशीथाध्ययने नवम उद्देशः समाप्तः ॥९॥

चूर्णी—'तं सेवमाणे' इत्यादि । 'तं सेवमाणे' तत्सेवमान तत् नवमोद्देशकोक्तं राजपिण्डादारभ्य दासीनिमित्तनिर्हृताशनादिग्रहणपर्यन्तं प्रायश्चित्तस्थान सेवमान तादृशस्थानानां मध्ये यस्य कस्याप्येकस्य अनेकस्य सर्वस्य वा प्रायश्चित्तस्थानस्य प्रतिसेवना कुर्वन् श्रमण श्रमणी वा 'आवज्जइ' आपद्यते प्राप्नोति 'चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं' चातुर्मासिक परिहारस्थानमनुद्घातिकम् गुरुचातुर्मासिकं प्रायश्चित्त प्राप्नोतीति ॥सू० ३१॥

इति श्री–विश्वविख्यात–जगद्वल्लभ–प्रसिद्धवाचक–पञ्चदशभाषाकलितललितकलापालापक–प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक–वादिमानमर्दक–श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-"जैनशास्त्राचार्य"–पदभूषित–कोल्हापुरराजगुरु–बालब्रह्मचारि–जैनाचार्य–जैनधर्मदिवाकर–पूज्यश्री–घासीलालव्रति–विरचितायां "निशीथसूत्रस्य" भाष्यरूपायां व्याख्यायाम् नवमोद्देशकः समाप्तः ॥९॥



## ॥ दशमोद्देशकः ॥

व्याख्यातो नवमोद्देशक', अथ दशमोद्देशक' प्रारभ्यते, अस्य दशमोद्देशकस्य नवमोद्देशकेन सह कः सम्बन्ध इति चेदत्राह भाष्यकार —'रायपिंडं' इत्यादि ।

**भाष्यम्—रायपिंडं च मा भुंजे, तहा दासीनिमित्तगं ।**
**गिद्धो वयइ आगाढ, दसमे तन्निसेहणं ॥१॥**

**छाया—राजपिण्डं च मा भुङ्क्ष्व तथा दासीनिमित्तकं ।**
**गृद्धो वदति आगाढं, दशमे तन्निषेधनम् ॥१॥**

**अवचूरिः**— पूर्वं नवमोद्देशकान्तिमसूत्रे राजपिण्डं दासीनिमित्तकं पिण्डं च न भुञ्जीत इति भगवता निषिद्ध तत आचार्य' शिष्यं कथयति–हे आर्य ! **'रायपिंडं'** राजपिण्डं तथा दासीनिमित्तकं पिण्डं मा भुङ्क्ष्व, एवमुक्त. शिष्य **'गिद्धो'** गृद्ध' राजपिण्डे दासीनां रूपे च मूर्छित' सन् तन्निवारणे कृते आचार्यम् आगाढ–परुष वदतीति दशमेऽस्मिन् उद्देशके तन्निषेधनं तस्य तादृशस्यागाढवचनस्य निषेधनं निवारणं कृतम् । यस्मात् राजादीनामशनादिक विशिष्टं भवति तत्र, तथा राजादीनां दास्य' प्राय' सौन्दर्यशालिन्यो भवन्ति आहारप्रसङ्गाद्दासीभि' सह परिचय-संभवात्तद्रूपे च मूर्च्छितो मोहोदयात्संयमाद् भ्रष्टो भवितुमर्हति तस्मात्कारणाद् राजपिण्डादे-र्निषेधे शिष्य परुष वदेदिति तन्निषेधनमत्र प्रतिपादयिष्यते । एष एव नवमोद्देशकेन सह दशमो-शकस्य सम्बन्ध' । अनेन सम्बन्धेनायातस्यास्य दशमोद्देशकस्येदमादिसूत्रम्—**'जे भिक्खू भदंतं'** इत्यादि ।

### सूत्रम्—जे भिक्खू भदंतं आगाढं वयइ वयंतं वा साइज्जइ ॥सू०१॥

**छाया**—यो भिक्षुर्भदन्तमागाढं वदति वदन्तं वा स्वदते ॥सू० १॥

**चूर्णी—'जे भिक्खू'** इत्यादि । जे भिक्खू य कश्चिद् भिक्षु' **'भदंतं'** भदन्तं 'भदि कल्याणे सुखे च' इति धातो' रूपम् । तेन भदन्तं कल्याणकारकम् आचार्यमुपाध्यायं पर्यायज्येष्ठं च प्रति **'आगाढं'** आगाढम्, तत्र गाढ़ कठोरम् अत्यर्थं गाढमागाढ सरोषवचनम् **'वयइ'** वदति कथयति । यो भिक्षु' राजपिण्डादिषु गृद्ध' आचार्यादिना निवारित आचार्यादिकं अतिशयाधिकं कठोरवचनं वदति तथा **'वयंतं वा साइज्जइ'** वदन्तं वा स्वदते । यो भिक्षुराचार्येण राजपिण्डादिषु निवारित आचार्यादिकं आशातनारूप कठोरवचन वदति तादृशं श्रमणान्तरं यो अनुमोदते च स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकार'—

**भाष्यम्—आगाढं दुविहं वुत्तं, सूयया य असूयया ।**
**तेसिं दोण्ह सरूवं च, णेयं सत्थानुसारओ ॥**

छाया—आगाढं द्विविधं प्रोक्तं सूचया च असूचया।
तयोर्द्वयोः स्वरूपं च ज्ञेयं शास्त्रानुसारतः ॥

अवचूरिः— अत्र तु सूचयति परस्य दोषान् कथयतीति सूचा परदोषाविष्करणम्, असूचा—न सूचा परदोषाविष्करणरूपेति—असूचा। यत्र परस्य दोषा सूच्यन्ते नात्मन—इति सूचा। यत्र परस्य दोषा न सूच्यन्ते स्वात्मन सूच्यन्ते सा-असूचेति भाव, अत्रेदं प्रथममागाढसूत्रम् १, द्वितीयं परुषसूत्रम् २, तृतीयमागाढपरुषमुभयरूपम् ३, तत्र येनोक्तेन स्वपरशरीरे ऊष्मा समुत्पद्यते तदागाढम् १, यत् स्नेहरहितमुपेक्षावचन तत् परुषम् २, यत्र द्वयोरागाढपरुषयोः संयोगो भवेत्तद् आगाढपरुष कथ्यते ३, । एतत् त्रिविधमपि वचनमेकैक सूचाऽसूचाभ्या द्विविधं भवति। तत्र प्रथममागाढवचनं विव्रियते—'आगाढं दुविहं' इत्यादि। तत आगाढम्—आगाढवचनं द्विविधं प्रोक्तम्-सूचया असूचया चेति। एषा सूचा असूचा च सप्तदशप्रकारके वस्तुनि भवति—जातौ १, कुले २, रूपे ३, भाषायाम् ४, धने ५, बले ६, पर्याये ७, यशसि ८, तपसि ९, लाभे १०, सत्वे ११, वयसि १२, बुद्धौ १३, धारणायां १४, उपग्रहे १५, शीले १६, सामाचार्यां च १७। तत्र जातौ सूचा परस्य स्फुटमेव दोषं भाषते नात्मनो दोष वदति यथा जातिविशिष्टेऽपि न त्वं जातिविशिष्टोऽसि अह पुनर्जातिमान्, इत्यादिकथनरूपा जातिविषया सूचा १, असूचा तु यथा भोः! अहं जातिहीनोऽस्मि भवान् जातिमान् तथा च जातिमता सह जातिहीनस्य मे को विरोध ? एषा जातिविषया असूचा, अहं भो ! कुलवान् भवान् कुलहीन इति कुलविषया सूचा। एवम् अह भो ! कुलहीन', कुलपुत्रै सह को विरोधोऽस्माकमिति कुलविषया असूचा २, तथा अहं भो ! रूपवान् भवान् रूपहीनः कुरूपोऽस्तीति रूपविषया सूचा। एवम् अह भो ! रूपहीन' सुरूपदेहवता सह को विरोध ? ३। एवं प्रकारेण भाषादिषु सर्वेषु स्थानेष्वपि सूचा असूचा च भणितव्या, तत्र सूचा परगता, असूचा आत्मगता भवति। तत्र भाषा—वाणी ४, धनम्—हिरण्यसुवर्णरजतादिकम् ५, बलम् औरस' पराक्रम ६, पर्याय प्रव्रज्याकाल ७, यश लोकख्याति' ८, तप' संयमश्चतुर्थभक्तादिर्वा ९, लाभ—आहारोपकरणादिलब्धि १०, सत्त्वम्—आत्मबलम् ११, वय'—अवस्था १२, बुद्धि—औत्पत्तिक्यादि १३, धारणा-दृढस्मृति १४, उपग्रह—बहुबहुविधक्षिप्रा—निश्रितासंदिग्धध्रुवाणामुपकारकरणम् १५, शीलम्-अक्रोधादिप्रकृति १६, सामाचारी—चक्रवालरूपा साधुसामाचारी १७, एतानि सर्वाणि स्थानानि समवलम्ब्य सूचया वाऽथ असूचयाऽऽचार्यादिकं प्रति एकमप्यागाढवचनं न वदेत्, नाप्यन्यं वक्तु प्रेरयेत् वदन्त वा नानुमोदयेत्। यः कोऽप्येवं करोति स प्रायश्चित्तभागी भवति, तस्याज्ञाभङ्गाऽनवस्थादयोऽनेके दोषा भवन्तीति ॥सू१०॥

**सूत्रम्—जे भिक्खू भदंतं फरुसं वयइ वयंतं वा साइज्जइ ॥सू० २॥**

छाया—यो भिक्षुर्भदन्तं परुषं वदति वदन्तं वा स्वदते ॥सू० २॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'भदंतं' भदन्तमाचार्योपाध्यायादिकं पर्यायज्येष्ठं वा 'फरुसं' परुषं कर्कशं कठोरवचनं स्नेहरहितं रूक्षमित्यर्थः वाक्यं 'त्वं व्यवहारं न जानासि' इत्यादिकम् 'वयइ' वदति भाषते 'वयंतं वा साइज्जइ' वदन्तं वा स्वदते । आचार्याय कठोरवचनभाषकं श्रमणमनुमोदते स प्रायश्चित्तभागी भवति ॥सू० २॥

## सूत्रम्—जे भिक्खू भदंतं आगाढं फरुसं वयइ वयंतं वा साइज्जइ ॥

छाया—यो भिक्षुर्भदन्तं आगाढपरुषं वदति वदन्तं वा स्वदते ॥सू० ३॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'भदंतं' भदन्तम् आचार्योपाध्यायपर्यायज्येष्ठादिकं 'आगाढं फरुसं' आगाढं परुषं सूचाऽसूचादिभेदभिन्नं प्रथमसूत्रवर्णितमागाढं तथा परुषं कर्कशं रूक्षं वचनम् 'वयइ' वदति भाषते 'वयंतं वा साइज्जइ' वदन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ३॥

## सूत्रम्- जे भिक्खू भदंतं अण्णयरीए अच्चासायणाए अच्चासाएइ अच्चासाएंतं वा साइज्जइ ॥सू० ४॥

छाया—यो भिक्षुर्भदन्तमन्यतरया अत्याशातनया अत्याशातयति अत्याशातयन्तं वा स्वदते ॥सू० ४॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'भदंतं' भदन्तमाचार्यादिकं पर्यायज्येष्ठं च 'अण्णयरीए' अन्यतरया दशाश्रुतस्कन्धे त्रयस्त्रिंशत्प्रकारा आशातना: कथिताः तासां मध्यात् अन्यतरया यया कयाचिदेकयापि 'अच्चासायणाए' अत्याशातनया तथाऽऽचार्यादिकं प्रति विनयवैयावृत्यादिकरणेन यत् फलं प्राप्यते तत् फलं आशातयति विनाशयतीति आशातना, यद्वा ज्ञानादिगुणा आ—सामस्त्येन शात्यन्ते अपध्वस्यन्ते यया सा तया अन्यतरया आशातनया आचार्यादिकं पर्यायज्येष्ठं च 'अच्चासाएइ' अत्याशातयति तेषामाशातनां करोति 'अच्चासाएंतं वा साइज्जइ' अत्याशातयन्तम् आशातनां कुर्वन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकार —

भाष्यम्—आसायणा चउव्विहा, दव्वखेत्ताइभेयओ ।
एएसिं खलु णाणत्तं, वोच्छं सत्थानुसारओ ॥

दव्वे भोयणमाइसु, खेत्ते गमणाइएसु णायव्वं ।
काले विपज्जओ खलु, भावे मिच्छाइया दोसा ॥

छाया—आशातना चतुर्विधा, द्रव्यक्षेत्रादि- भेदतः ।
एतासां खलु नानात्वं, वक्ष्ये शास्त्रानुसारतः ॥
द्रव्ये भोजनादिषु, क्षेत्रे गमनादिकेषु ज्ञातव्यम् ।
काले विपर्ययः खलु, भावे मिथ्यात्वादिका दोषाः ॥

अवचूरिः—यास्त्रयस्त्रिंशत्प्रकारा दशाश्रुतस्कन्धोक्ता आशातनास्ता द्रव्यक्षेत्रकालभावभेदात् प्रत्येकं चतुर्विधा चतुष्प्रकारा सन्ति, एतासां द्रव्यक्षेत्रादिभेदभिन्नानामाशातनानां नानात्वं भेदोपभेदवर्णनं स्वरूपवर्णनं च शास्त्रानुसारतो यथाशास्त्र यथामति च वक्ष्ये कथयिष्यामि, तत्र द्रव्ये आशातना भोजनादिषु आहारादिषु भवतीति ज्ञायताम्, यथा शैक्षको रात्निकेन सह अशनादिकमाहारजातम् आहरन् तत्र शैक्षक गुरुणा सह भुञ्जानस्तमनापृच्छ्यैव भद्रं भद्रं आहरति, तथा शैक्षको रात्निकेन पर्यायाधिकेन वा सह अशनादिकं प्रतिगृह्य तद् रत्नाधिकमनापृच्छ्यैव यस्मै इच्छति तस्मै ददाति, एवं वस्त्रपात्रादिकेष्वपि विज्ञेयम् १। क्षेत्रे शास्त्रमर्यादामुल्लङ्घ्य विहारे पुरतः पार्श्वतो मार्गतो वा आसन्नतो वा गमनं करोति, एवं स्थित्युपवेशनादिकेष्वपि विज्ञेयम् २। काले विपर्यासो यथा शैक्षको रत्नाधिकस्य रात्रौ विकाले वा आह्वयतो गुरोर्वचनमप्रतिशृण्वन् इव तिष्ठति, नोत्तरं ददाति ३। भावे विपर्यास –यद् यद् गुरुः साधुसमाचारीं सूत्रार्थंतदुभयं वा शिक्षयति तत्तत् न शृणोति, अथवा शृण्वन् अपि अशृण्वन् इव तिष्ठति, अन्यथा वा वदति, अथवा गुरुधर्मकथाया प्रसन्नो न भवति, परुषं वा भाषते इत्यादि ४। तथा द्रव्यत आशातनाकरणे इमे दोषा, तथाहि–यदि गुरुमनापृच्छ्य भुङ्क्ते तदा कदाचित् सचित्तं सदोषमपथ्यमपि च भुञ्जीत, अतिप्रमाणं वा भुञ्जीत तदा अजीर्णं स्यात् वमनादिकं वा भवेत्, इत्यादिका अनेके दोषा भवेयुरिति १। क्षेत्रत आशातनायामिमे दोषाः, तथाहि–गुरोः पुरतः पार्श्वतो मार्गेन आसन्नतश्च गच्छतः शिष्यस्य साधुमर्यादोल्लङ्घिता भवेत्, एषा क्षेत्राशातना २। कालतः अशातना यथा ग्लानो गुरुर्विकाले रात्रौ वा शिष्यमाह्वयति तदा तत्राप्रतिशृण्वतः शिष्यस्य ग्लानविराधनादिदोषा भवन्ति, उपकरणादिविनाशो वा असंयमो वा भवेत्, आचार्यः क्रुद्धोपि भवेत्। तथा शृण्वन् अपि अशृण्वन् इव तिष्ठति तदा अन्यः कश्चित् साधुः कथयेत किं भोः न शृणोषि किमकर्णो बधिरो भवान्, तदा तत्रोत्तरप्रत्युत्तरकरणे परस्परं कलहोपि सम्भवेदिति कालाशातना ३। एवं यो भावाशातनां गुरोः करोति तदा तस्यान्यः शिष्योऽपमानं करोति, श्रुतालाभश्च भवति एवं तस्य लोकेऽपि पराभवो भवति ४। इत्यादयो दोषा भवन्तीति ॥सू० ४॥

सूत्रम्—जे भिक्खू अणंतकायसंजुत्तं आहारं आहारेइ आहारेंतं वा साइज्जइ ॥सू० ५॥

छाया—यो भिक्षुरनन्तकायसंयुक्तमाहारम् आहरति आहरन्तं वा स्वदते ॥ सू० ५॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'अणंतकायसंजुत्तं' अनन्तकायसंयुक्तम्, तत्र अनन्तकाय. पनकशैवालादिः तेन संयुक्तं समिलितम् 'आहारं' आहारम् अशनादिचतुर्विधाहारम् 'आहारेइ' आहरति—पनकशैवालादिमिश्रितमाहारमुपभुङ्क्ते 'आहारेंतं वा साइज्जइ' आहरन्त वा स्वदते। यो हि श्रमण. श्रमणी वा अनन्तकायसंयुक्तमाहारं भुङ्क्ते तमनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ५॥

## सूत्रम्—जे भिक्खू आहाकम्मं भुंजइ भुजंतं वा साइज्जइ ॥ सू०६॥

छाया—यो भिक्षुराधाकर्म भुङ्क्ते भुञ्जानं वा स्वदते ॥सू० ६॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु 'आहाकम्मं' आधाकर्म आधानम् आधा चेतसि साधून् आधाय मनसि निधाय तन्निमित्तं षड्जीवनिकायोपमर्दनादिना कर्म—भक्तादिपाकक्रिया क्रियते तद्योगाद् भक्ताद्यपि आधाकर्म, तादृशमाहार 'भुंजइ' भुङ्क्ते आहरति आधाकर्माहारजातस्य भोजन करोति कारयति वा तथा 'भुंजंतं वा साइज्जइ' भुञ्जानं वा स्वदते। यो हि श्रमण आधाकर्माहारमुपभुङ्क्ते तमनुमोदते स प्रायश्चित्तभागी भवति।

अत्राह भाष्यकार.—

भाष्यम्—संजयं च मणे किच्चा, निप्फाए ओयणाइयं।
छक्कायजीवमद्दणं, आहाकम्मं मुणेहि तं ॥१॥
तं च गिण्हइ जो भिक्खू, असणाइ चउव्विहं।
दायारं णियमप्पाणं, दोसजुत्तं करेइ सो ॥२॥

छाया—संयतं च मनसि कृत्वा निष्पादयेत् ओदनादिकम्।
षट्कायजीवमर्दनं आधाकर्म जानीहि तत् ॥१॥
तच्च गृह्णाति यो भिक्षु अशनादि चतुर्विधम्।
दातारं निजमात्मानं दोषयुक्त करोति सः ॥२॥

अवचूरिः—'संजयं' इत्यादि। 'संजयं' संयत साधुं च मनसि कृत्वा कमपि साधुमुद्दिश्य यत् ओदनादिकं निष्पादयेत्, तद् ओदनादिकं षट्कायजीवमर्दनं षट्कायजीवविराधनया आधाकर्म जानीहि ॥१॥

तच्च तादृशमशनादि चतुर्विधमाहारं यः कोऽपि भिक्षुर्गृह्णाति स दातारम् आधाकर्माहारदायकं, तथा निजमात्मानं च दोषयुक्तं करोति। तथाहि-कस्यापि श्रावकादेर्गृहे कमपि साधुमुद्दिश्य

ओदनाद्यन्नं षड्जीवनिकायोपमर्दनपूर्वकं निष्पादितम्, दाता च विचिन्तयति—इदमोदनाद्यन्नं कस्मैचित् साधवे देयं, तेन दानेन महान् पुण्योदयो भवेत्, इति विचिन्त्य तेनाशनादिना साधुं निमन्त्रयति, साधुश्च तादृशमोदनाद्याहारं गृह्णाति तदा गृह्णतः साधोराज्ञाभङ्गादिदोषा अतिक्रमादयो दोषाश्च, ददतश्च दातुः सदोषाहारदानप्रभवा दोषाश्च समापतन्ति। दातारः श्रावकास्त्रिविधा भवन्ति नालबद्धकाः, मध्यस्थाः, भद्रकाश्च, तत्र कोपि भद्रकः आधाकर्मकमन्नं सम्पाद्य उपाश्रये समागत्य साधवे कथयति--मद्गृहे आगत्याहारं गृहाण, तद्ग्रहणाय साधुः सज्जीभूतो भवतीति अतिक्रमः, श्रावकेण सह गच्छतीति व्यतिक्रमः, श्रावकगृहात् पात्रे गृहीत्वा चाहारमानीय मुखे प्रक्षिपति चर्वति इत्यतिचारः, तदनु गलबिलादधोऽवतारयति तदा तस्यानाचारो भवति, एवं दातृविषयेऽपि आधाकर्माहारादिसंपादनेऽतिक्रमः, निमन्त्रणे व्यतिक्रमः, साधोर्गृहानयनेऽतिचारः, दाने चानाचार इति। तत् आधाकर्मकं त्रिप्रकारकं भवति -आहारे उपकरणे वसतौ च, आधाकर्मकाहारश्च चतुर्विधो भवति -अशनपानखाद्यस्वाद्यभेदा त्, उपधिर्द्विविधः वस्त्रपात्रभेदात्, तत्र वस्त्रे आधाकर्मकं पञ्चप्रकारकं भवति जाङ्गमिकभाङ्गिकादिभेदात्, तत्र जाङ्गमिकं—जङ्गमप्राणिरोमनिष्पन्नं ऊर्णामयं वस्त्रम् १, भाङ्गिकम् अतस्यादिसूत्रनिष्पादितवस्त्रम् २, शाणकं शणनिष्पादितवस्त्रम् ३, पोतकं- कार्पासिकं वस्त्रम् ४, तिरीडपट्टकम्—अर्कतूलादिनिष्पादितवस्त्रम् ५। तस्मिन् तादृशे पञ्चविधे वस्त्रे आधाकर्मकम्। पात्रे चाधाकर्मकं त्रिविधम्—अलाबुकदारुकमृत्तिकापात्रभेदात्। वसत्याधाकर्मकं द्विविधं मूलगुणे आधाकर्म, उत्तरगुणे आधाकर्म च, तत्र श्रमणार्थं गृहादिनिर्माणं मूलगुणे आधाकर्म। निर्मितस्यैव गृहादेः छादनोपलेपनादिकमुत्तरगुणे आधाकर्म इति।

अत्र—आधाकर्मग्रहणाद् अग्रस्था औद्देशिकादयः सर्वेऽपि उद्गमदोषा संग्राह्याः, तत्परिभोगे साधुः प्रायश्चित्तभागी भवति। अत्रोदाहरणं यथा—

पूर्वस्मिन् काले एकः समन्तभद्राचार्यः शिष्यपरिवारपरिवृतो विहरति स्म। स ग्रामानुग्रामं विहरन् कस्मिंश्चिन्नगरे चातुर्मास्यं कर्तुकामो मार्गस्थिते एकस्मिन् लघुग्रामे गन्तुं प्रस्थितः, तत्रतस्तन्नगरमतिदूरं वर्तते। तन्नगरश्रावकाः, आचार्योऽत्रागमनार्थं प्रस्थित इति ज्ञात्वा चिन्तयन्ति यद्—आचार्यश्चातुर्मासावधिकाले अत्रागन्तुमसमर्थो नात्रागमिष्यातीति कृत्वा ते श्रावका आचार्यागमनात् पूर्वमेव मध्यमार्गस्थिते तस्मिन् लघुग्रामे समागत्य निवासं कृतवन्तः। ग्रामानुग्रामपरिपाट्या विहरन् स आचार्यस्तस्मिन् लघुग्रामे संप्राप्तः। तत्रतो विहर्तुकामाय तस्मै ते सर्वे निवेदितवन्तः—भो आचार्या! यस्मिन्नगरे भवन्तो गन्तुकामास्तन्नगरमतिदूरं वरीवर्ति चातुर्मासागमने चाऽल्पीयांस एव दिवसा इति भवद्भिरत्रैव चातुर्मास्यं कर्त्तव्यम्। इति तेषां प्रार्थनां स्वीकृत्याचार्यश्चातुर्मासार्थं तत्रैव स्थितः। पूर्णे चातुर्मासेऽन्यत्र विहृतवान्। ततो जनपदविहारं विहरन् द्वादशवर्षानन्तरं पुनस्तत्रैव लघुग्रामे संप्राप्तः, पश्यति तं ग्रामं समृद्धजनरहितं

पृच्छति च तत्रत्यलोकान्—भो ! समृद्धजनसंकुलोऽयं ग्रामः पूर्वमासीत् सम्प्रति कथमेतादृशः समृद्धजनशून्यो जातः ? लोकाः कथितवन्तः—भो आचार्याः, लघुग्रामेऽत्र भवत्सेवानिमित्त-मेवात्रागत्य ते समृद्धजना निवसिता आसन्, भवद्विहारानन्तर गतवन्तस्ते स्वस्वस्थाने। इति श्रुत्वा—आचार्यश्चिन्तयति—अहो ? अस्माभिरत्राधाकर्मादिदोषदुष्ट आहारादिरवश्यं परिभुक्त-स्तत प्रायश्चित्तस्थानं प्राप्ता वयमिति तद्दोषनिवारणार्थं प्रायश्चित्तं करणीय स्यादिति शिष्य-सहितः स शास्त्रोक्तं प्रायश्चित्त कृतवान्। तस्मात् कारणात् दर्शनार्थमागतानामशनादि साधुभि कदापि कथमपि न ग्रहीतव्यम्, न वाऽन्यं ग्राहयेत्, गृह्णन्तं वाऽन्य श्रमणं नानुमोदयेदिति। सू० ६॥

## सूत्रम्—जे भिक्खू तीतं निमित्तं कहेइ कहेंतं वा साइज्जइ॥ सू०७॥

छाया—यो भिक्षुरतीत निमित्तं कथयति कथयन्तं वा स्वदते ॥ सू० ७॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षु 'तीतं निमित्त' अतीतम् भूतकालिकम् भूतकाले जात सुखदुःखलाभालाभजीवनमरणभेदात् षड्विध निमित्तम् 'कहेइ' कथ-यति लोकाना पुरत प्रकाशयति, अतीतकालिक ज्योतिःशास्त्रोक्तग्रहादिजन्य सामुद्रिकशास्त्रोक्त-रेखादिजन्यं च निमित्त स्वस्य सत्यनिमित्तज्ञातृत्वप्रत्यापनार्थं कथयति—यथा कोऽप्यतीतकाले केनापि स्वस्य शारीरिक—मानसिक-सुखदुःखादिविषयो लाभालाभजीवनमरणादिविषयो वा प्रश्न कृतोऽभूत् तद्विषये तं वदेत्—मया तुभ्य यद् यत् कथित तत्तत्सर्वं सत्यतया त्वयाऽनुभूतम्, इत्यादि-रूपमतीतकालविषयकं निमित्तं प्रकाशयति। तथा 'कहेंतं वा साइज्जइ' कथयन्तं वाऽन्यं श्रमणं स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ७॥

## सूत्रम्—जे भिक्खू पडुप्पण्णं निमित्तं वागरेइ वागरेंतं वा साइज्जइ॥

छाया—यो भिक्षुः प्रत्युत्पन्नं निमित्तं व्याकरोति व्याकुर्वन्त वा स्वदते ॥सू०८॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षु 'पडुप्पन्नं' प्रत्युत्पन्नम् वर्तमानकालिकम् 'निमित्तं' निमित्तं ज्योतिःशास्त्रादिजन्यम्। यथा कोऽपि पृच्छेत्—विदेशस्थि-तोऽमुको मम स्वजन सम्प्रति सुखी दुःखी वाऽस्ति ? लाभवान् अलाभवान् जीवितो मृतो वा ?, तथा अहं संप्रति सुखी दुःखी वाऽस्मि ?, तथा मया अमुकस्य पार्श्वे मज्जन प्रेषित सोऽमुको जनस्तस्य मिलितो न मिलितो वा ? इत्यादिरूपं निमित्तं 'वागरेइ' व्याकरोति प्रकाशयति कथयतीति यावत् 'वागरेंतं वा साइज्जइ' व्याकुर्वन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ८ ॥

## सूत्रम्—जे भिक्खू अणागयं निमित्तं वागरेइ वागरेंतं वा साइ-ज्जइ ॥ सू०९ ॥

छाया—यो भिक्षुरनागतं निमित्तं व्याकरोति व्याकुर्वन्तं वा स्वदते ॥सू० ९॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु 'अणागयं निमित्तं वागरेइ' अनागतं निमित्तं व्याकरोति, तत्र अनागत भविष्यत्कालिकं सुखदु:खलाभालाभजीवन-मरणविषयकं, यथा तवैतावत्कालानन्तर सुखदु खादिकं भविष्यति, लोके सुभिक्ष दुर्भिक्षं वा भविष्यति राज्यपरिवर्तनं युद्धादिकं वा भविष्यति, इत्यादिरूप निमित्तं 'वागरेइ' व्याकरोति कथयति 'वागरेंतं वा साइज्जइ' व्याकुर्वन्तं भविष्यत्कालिकलाभालाभादिकं कथयन्तं प्रकाशयन्तं वा स्वदतेऽनुमोदते, स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकार:—

भाष्यम्—लाभालाभं सुहं दुक्ख, जीवियं मरणं तहा ।
वागरे गिहिमाईणं, संजमत्तविराहओ ॥

छाया—लाभालाभं सुखं दु:खं जीवितं मरणं तथा ।
व्याकुर्याद् गृहस्थादोना संयमात्मविराधक ॥

अवचूरि:—लाभालाभौ सुखदु खे जीवितं तथा मरणम् , एतत षड्वस्तुजातम् अतीता-नागतवर्तमानकालविषयकम् गृहिणा गृहस्थाना श्रावकाणा तथा आदिशब्दात् अन्यतीर्थिकानां वा व्याकुर्यात् कथयेत् स साधु. संयमात्मविराधको भवति । तत्र सयमविराधना निमित्तभाषणे साधु-क्रियाव्यवच्छेदरूपा, आत्मविराधना चाशुभे सपन्ने साधु ताडयेत्, राजपुरुषादिना साधुं ग्राहयेत्, राजादिना वा निगृहीतो भवेत्, इत्यादिका अनेके दोषा', शास्त्रनिषिद्धत्वेनाज्ञाभङ्गादिका दोषाश्च भवेयु' तस्मात्कारणात् श्रमण त्रिकालविषयकं लाभालाभसुखदु:खजीवितमरणादिकं निमित्तं कदाचिदपि न कथयेत् स्वयम्, न वा परद्वारा प्रकाशयेत्, न वा प्रकाशयन्तमनुमोदेत । अत्रैतदुदाहरणम् —

आसीत् मगधदेशे अश्वकर्णो नाम तलवर (कोट्टपाल) स कदाचित् युद्धार्थं गतवान् , ततः कदाचित् तस्य गेहे भिक्षार्थं कश्चित् साधुरागत, तत्पत्न्य पृष्ट.–भो साधो ! मम पति. कदा आगमिष्यति ? साधुना कथितम् श्व समागमिष्यति । तत सा द्वितीयदिवसे कृतश्रृङ्गारा तदा-गमनं प्रतीक्षमाणा तिष्ठति तावत् अश्वकर्ण तलवर' समागत । स कृतश्रृङ्गारां पत्नीमपृच्छत्—कथं त्वं कृतश्रृङ्गारा स्थिता ? तया कथितम्–भवत आगमनसमाचारं ज्ञात्वा, तेन कथितम्–कथं ज्ञात त्वया ? ततस्तया कथितम्–साधुमकाशात् विज्ञाय कृतश्रृङ्गारा स्थिताऽस्मि । तस्मिन्नेवाव-सरे स एव साधु. भिक्षार्थं समागत , असौ तलवरस्तत्परीक्षार्थं त साधुं पृष्टवान् -मम वडवाया उदरे कीदृश गर्भो विद्यते ? साधुर्निमित्तवशादवोचत्–तस्या' गर्भे श्वेततिलको घोटकस्तिष्ठति, इति श्रुत्वा स तलवरस्तत्परिज्ञानार्थं वडवां हतवान्, तादृशमेव गर्भं दृष्ट्वा साश्चर्यो जात. । साधुश्च स्वस-

मक्षं तादृशजीवद्वयवधं दृष्ट्वा आत्मघातं कृतवान्। तलवरपुत्रोऽपि वडवादिवधं दृष्ट्वा तथैवात्मघातं कृतवान्, पुत्रशोकात् तलवरपत्नी अपि मृता, तदनन्तरं कलत्रपुत्रशोकात् तलवरोऽपि स्वशरीरमत्यजत्। एवं निमित्तकथने महान् अनर्थो जायते, अतः साधुः कदापि निमित्तं न प्रकाशयेदिति भावः ॥सू० ९॥

सूत्रम्—जे भिक्खू सेहं विपरिणामेइ सेहं विपरिणामेंतं वा साइज्जइ ॥ सू०१०॥

छाया—यो भिक्षुः शैक्षकं विपरिणमयति शैक्षकं विपरिणमयन्तं वा स्वदते ॥ सू० १०॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'सेहं विप्परिणामेइ' शैक्षं शिष्यं विपरिणमयति अन्यसाधुशिष्यस्य बुद्धिं व्यामोहयति तस्य गुरोर्निन्दाकरणेन स्वगुणोत्कीर्तनादिना च कश्चित् शैक्षकं वदेत्-ममाचार्य एव श्रेष्ठो न तु तव, इत्यादि कथयित्वाऽन्यस्य शैक्षकं विविधैः प्रकारैस्तस्यात्मानं विपरिणमयति पूर्वगुरुविषये तं विगतपरिणामं करोति, अथवा वस्त्रपात्राहारसूत्रार्थादीनां प्रलोभनं दत्त्वा स्वकीयं शिष्यं कर्तुं तन्मतिं व्यामोहयति तथा 'विपरिणामेंतं वा साइज्जइ' विपरिणमयन्तं वा स्वदते अन्यदीयशिष्यस्य बुद्धिव्यामोहं कुर्वन्तं श्रमणं योऽनुमोदते स प्रायश्चित्तभागी भवति।

अत्राह भाष्यकारः—

भाष्यम्—दुविहो विप्परिणामो, पव्वज्जिय अप्पवज्जिए तह य।
एक्केको पुण दुविहो, पुरिसित्थीभेयओ होई ॥

छाया—द्विविधो विपरिणामो, प्रव्रजितेऽप्रव्रजिते तथा च।
एकैकः पुनर्द्विविधः, पुरुषस्त्रीभेदतो भवति ॥

अवचूरिः—विपरिणामः द्विविधः द्विप्रकारको भवति, एको विपरिणामः प्रव्रजिते शैक्षे, तथा च द्वितीयः अप्रव्रजिते शैक्षे। पुनरपि एकैको विपरिणामः द्विविधः पुरुषस्त्रीभेदतो द्विविधो भवति ज्ञातव्यः। द्विविधे परिणामे प्रथमं प्रव्रजितशिष्यविषयं विपरिणामं दर्शयति—यथा कश्चित् साधुरन्यशिष्यं स्थण्डिलादिभूमिमार्गे मिलितं कथयति—तव गुरुर्न श्रेष्ठः, त्वां समीचीनतया न रक्षितुमर्हति, न पाठयति, न वस्त्रपात्राहारादिना त्वां तोषयति, अतस्त्वं मम समीपे आगच्छ, त्वामहं सम्यक्तया पठनपाठनादिना तोषयिष्यामि, इत्यादि कथनेन तन्मतिं व्यामोह्य स्वशिष्यं करोतीति प्रव्रजितशिष्यविषयको विपरिणामः। अप्रव्रजितविषयको विपरिणामश्चेत्थम्—कश्चिद्दीक्षार्थी अमुकस्याचार्यस्य समीपे दीक्षां ग्रहीष्यामीति संप्रधार्य गृहात् प्रस्थितः, मार्गे च कश्चित् द्वितीयः साधु-

मिलितः, स साधुवेषं दृष्ट्वा वन्दनादिकं कृतवान्, ततः साधुराह—कुत्र गच्छसि ? स प्राह अमुकस्याचार्यस्य समीपे दीक्षां ग्रहीतुं गच्छामि, इति श्रुत्वा स साधु तस्य दीक्षार्थिनो मतिं विपरिणमयति, स्वपक्षे कर्तुं भक्तादिदानधर्मकथादिप्रज्ञापनेन तस्य बुद्धेर्विपरिणाम करोति ।

अथ विपरिणामनप्रकारान् प्रदर्शयति भाष्यकार —

भाष्यम्—आहिंडइ अणिसं सो, वयं तु हिंडग अहिंडगा वावि ।
अहवा एगट्ठाणे, ठिओ य सो नो वयं एवं ॥

छाया—आहिण्डतेऽनिशं स वयं तु हिंडका अहिण्डका वापि ।
अथवा एकस्थाने स्थितश्च स नो वयमेवम् ॥

**अवचूरि**——मार्गे मिलित साधुरन्यशिष्य विपरिणमयितु प्रव्रजितं वदति—अहो श्रद्धाशील ! ममाचार्यसमीपमागच्छ, यस्य समीपे त्वं वर्त्तसे स तु अनिशं प्रतिदिनम् आहिण्डते इतस्ततो गमनशीलो विहारं करोति, त्वमपि तेन सहैव गच्छन् सूत्रार्थयोरभ्यासं कदा करिष्यसि गमनागमने एव समयस्य व्ययात् ? वयं तु हिंडकाः मासकल्पविधिना विहरणशीलाः, अथवा अहिण्डका. धर्मोपकारादिगाढागाढकारणमाश्रित्य चातुर्मासकल्पमाश्रित्य च एकस्थानस्थिता अपि भवामः अतो वयं हिण्डका वा अहिण्डका वास्म किन्तु नैकान्ततो हिण्डका अहिण्डका वा । चारित्र मर्यादया व्यवस्थितविहारकारिणो वयं क्रियोद्धारकत्वात्, अतो ममाचार्यसमीपे वसतः तव सूत्रार्थयोरध्ययनं सम्यग्रूपेण भविष्यति, अथवा शिष्याभिप्रायं ज्ञातु स साधुरेवं वदति—अथवा स तु नियतवास. यस्य समीपे त्वं वर्त्तसे स तु एकग्रामनिवासी कूपमण्डूक इव विद्यते न ग्रामान्तरं नगरं वा पश्यति, वयं पुनरनियतवासाश्चातुर्मास वर्जयित्वा, त्वमपि अस्माभि. सह विहरन् नानाप्रकारकग्रामनगरसन्निवेशराजधानीजनपदादिकं पश्यन् अभिज्ञानकुशलो भविष्यसि, एवमस्माभि सह विहरतस्ते दुग्धादिकं च प्रभूतं मिलिष्यति । एवं ममाचार्या निरतिचारा पवित्रा· सुनामधेयाश्च, यस्य समीपे त्वं वर्त्तसे स तु अविविक्तो मूलगुणस्खलिता सारम्भ. सपरिग्रहश्च । न तथा मम पुनराचार्या, ते तु सर्वगुणसम्पन्ना वर्त्तन्ते । पुनश्च स तु अल्पपरिवार. क्रोधशीलः स्वल्पेऽप्यपराधे बहुक्रोध करोति बहुदण्डं च ददाति । तथा ममाचार्या जातिकुलसम्पन्ना. सर्वजनस्य पूजनीया गुणगुरुकाश्च, स तु पुनर्जातिकुलहीनः । अपि च मदीयाचार्या· लब्धिसपन्नास्तत आहारोपकरणवसत्यादिकं सुलभतया प्राप्नुवन्ति, स तु लब्धिरहित., तस्य शिष्या नित्यमाहारोपकरणार्थमटन्तः सूत्रार्थहीना अगीतार्थाश्च, तत्र दीक्षितस्त्वमपि तादृश एव भविष्यसि । तथा अस्माकमाचार्या बहुश्रुता रात्रिन्दिवं वाचनां ददति, तस्य तु नमस्कारमन्त्रप्रतिक्रमणादिष्वपि सन्देह एव, अस्माकं

पुनराचार्या अर्थधारिणः शास्त्रार्थं शिष्येभ्यः प्रयच्छन्ति शिष्यपरिवारैर्युक्ताः, स तु पुनरगीतार्थः तस्य समीपे एकाकिना त्वया स्थातव्य भवेत् शिष्यादिपरिवाररहितत्वात् तस्य। अस्माकं पुनराचार्या राजेश्वरतलवरादिभिर्महाजनैः सर्वदैव सम्मानिता भवन्ति, तं पुनर्न कोऽपि जनो जानाति, न वा सत्करोति मायादियुतो हिण्डमानो लोकैरनादृतश्च । अस्माकमाचार्याः महाजनानां नेतार, स तु एकाकी, नास्ति तस्य कोऽपि जनो यस्य स नेता स्यात्। अस्माकं पुनराचार्या बालवृद्धशैक्षदुर्बलग्लानादीना संग्रहोपग्रहकुशला., स तु पुनर्नकिञ्चिदपि जानाति। अस्माकमाचार्या धर्मकथा राजादिपर्षदायामपि कथयितु समर्थाः, स तु पुनर्वा चनाशक्तिविकल परवादिपरिषदि एकमप्यक्षरमुत्तर दातुमसमर्थ —एकमप्यक्षरं ज्ञातुमसमर्थ, एवं विविधै प्रकारैर्विपरिणमयतीति ।

अथ अप्रव्रजितविषये प्रकारान् प्रदर्शयति—अथवा कश्चित् शैक्ष प्रव्रज्याग्रहणार्थममुकम् आचार्यं मनसि सप्रधार्य गच्छन् मार्गे कश्चित् साधुर्मिलितः तं पृच्छति भो आर्य! ममामुकः आचार्य कुत्रचित् दृष्ट श्रुतो वा भवता ? स साधुर्वदति तावता किं प्रयोजन ते विद्यते ? शैक्षको वदति प्रव्रजितुकामोऽस्मि तेषां समीपे। तदा स साधुर्दृष्टाचार्योऽपि वदति—न मया स आचार्यो दृष्ट, श्रुतोऽपि वदति न मया श्रुत., अथवा स्वदेशस्थेऽपि आचार्ये वदति—स तु आचार्यो विदेश गत.। अथवा अग्लानेपि वदति स तु ग्लान । अथवा वदति—यो हि तस्य समीपे प्रव्रजति स अवश्यमेव ग्लानो भवति, अथवा य. तस्य समीपे प्रव्रजति स नित्य ग्लानवैयावृत्ये व्यापृतो भवति । अथवा एवं वदति—स तु आचार्यो मन्दधर्मा किं त्वमपि मन्दधर्मा भवितुमिच्छसि ? किं ते मन्दधर्मेण सह सगत्या ? । अथवा एवं वदति-स अल्पश्रुत त्वं च ग्रहणधारणसमर्थ तस्य समीपे गत्वा किं करिष्यसि ?, अथवा एवं वदति—स मनोवाक्कायैर्गर्हां करोति, अथवा ज्ञाने दर्शने चरणे च गर्हां करोति। एव विविधै. प्रकारै. प्रव्रजितुकामं तं विपरिणमयति ।

यो हि भिक्षुरुपर्युक्तप्रकारेण परशैक्षकं विपरिणामयति विपरिणमयन्तं वा अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १० ॥

## सूत्रम्—जेभिक्खू सेहं अवहरइ अवहरेंतं वा साइज्जइ ॥सू०११॥

**छाया—यो भिक्षुः शैक्षकमपहरति अपहरन्तं वा स्वदते ॥ सू० ११ ॥**

**चूर्णी—**'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'सेहं' शैक्षकम्, तत्र सूत्रमर्थं साधुसमाचारीं वा शिक्षयितु योग्य. शैक्षकः शिष्यः तं शैक्षकम् 'अवहरइ' अपहरति तस्यापहारं

करोति, अयं भावः—कोपि साधुः श्रमणान्तरशिष्यस्य वस्त्रपात्रादिलोभेन प्रकारान्तरेण वाऽपहारं करोति कारयति वा तथा 'अवहरेंतं वा साइज्जइ' अपहरन्तं श्रमणान्तरस्य यः शिष्यः तस्यापहारं कुर्वन्तं श्रमणान्तरम् अनुमोदते स प्रायश्चित्तभागी भवति । कथं पुनः शैक्षकस्यापहारो भवतीति चेदुच्यते—कश्चित श्रमणः नवदीक्षितशिष्यं गृहीत्वा प्रस्थितः कुत्रापि ग्रामे भिक्षाकाले संप्राप्ते तं शिष्यं वसतौ स्थापयित्वा भिक्षार्थं स्वयं गतवान् तदा तत्रान्यः कोऽपि श्रमणः संज्ञादिभूमिं गतस्तं दृष्ट्वा तदपहरणबुद्ध्या तत्समीपं गच्छति । ततः साधुवेषं तं दृष्ट्वा स शिष्यः तस्य वन्दनं करोति ततः स श्रमणः पृच्छति—कस्त्वम् ? कस्मात्स्थानादागतोऽसि ? कुत्र वा गन्तुमिच्छसि ?, एवं साधुना पृष्टो शिष्यो वदति—अमुकेन साधुना प्रव्राजितोऽस्मि मे गुरुर्भिक्षार्थं ग्रामे गतः, तेनात्र स्थातुमाज्ञप्तः स्थितोऽस्मि, तदा स साधुर्वदति—किमर्थमत्र स्थितोऽसि मया सार्द्धमागच्छ अशनवस्त्रपात्रादिना त्वां तोषयिष्यामि, इत्यादि नाना विधप्रलोभनवाक्यैस्तं प्रतार्यापहरति स्वसमीपे नयति । तदा स प्रायश्चित्तभागी भवति ॥ सू० ११॥

## सूत्रम्—जे भिक्खू दिसं विप्परिणामेइ विपरिणामेंतं साइज्जइ सू०॥

छाया—यो भिक्षुः दिशं विपरिणमयति विपरिणमयन्तं वा स्वदते ॥सू० १२॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'दिसं विप्परिणामेइ' दिशम् दिशति उपदिशति धर्ममिति दिशः, स श्रमणानां द्विविधः आचार्यं उपाध्यायश्च, श्रमणीनां च स त्रिविधः—आचार्यः उपाध्यायः प्रवर्तनीचेति, तं तथाविधं दिशं द्विविधं त्रिविधं वा श्रमणः श्रमणी वा 'विप्परिणामेइ' विपरिणमयति आचार्यादेर्बुद्धिव्यामोहं करोति, तथाहि—कश्चित् श्रमणः स्वस्याचार्यं कथयति—भो गुरो ! नायं गच्छः समीचीनः यतोऽत्राल्पाः श्रावकाः, तेऽपि दरिद्राः कृपणाश्च, नात्राहारवस्त्रपात्रादि सुलभं, अमुको गच्छः समीचीनः, यत्र बहवः श्रावकाः, ते पुनर्धनसमृद्धा उदाराश्च तेन तत्राहारवस्त्रापात्रादि सुलभं, इत्यादि कथयित्वाऽऽचार्यस्य तद्गच्छसम्बन्धिपरिणामं शिथिलीकरोतीति । अथवा दिशमाचार्यं विपरिणामयतीति तस्मिन् दोषविशेषं समारोप्य परावर्त्तयति आचार्यपरिवर्त्तनं करोति, पूर्वाचार्यं मुक्त्वाऽन्याचार्यपार्श्वे गच्छति । कथमित्याह— नायं मादृशस्याधीतश्रुतस्यानधीतश्रुतोऽयमाचार्यादित्वेन योग्यः, अथवा—अयमपरिणतवयस्कः, अहं तु परिणतवयस्कः, इत्याद्याक्षेपमवलम्ब्याचार्यादिकं मुक्त्वाऽन्यमाचार्यादिकं सेवते । तथा 'दिसं विपरिणामेंतं वा साइज्जइ' दिशं विपरिणमयन्तं परावर्त्तयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकारः—

भाष्यम्—अन्नगच्छस्स रागेण, गुरुं विप्परिणामए ।
पुव्वगच्छस्स दोसे जो, कहित्ता दोसवं भवे ॥

छाया – अन्यगच्छस्य रागेण गुरुंविप्परिणमयेत् ।
पूर्वगच्छस्य दोषान् यः कथयित्वा दोषवान् भवेत् ॥

अवचूरि–'अन्नगच्छस्स' ' इत्यादि । यः कश्चित् श्रमणः अन्यगच्छस्य गच्छान्तरस्य रागेण तद्रागभावेन पूर्वगच्छस्य दोषान् कथयित्वा गुरुं स्वस्याचार्यादिकं विपरिणमयति–व्यामोहयति आचार्यस्य चित्तविकृतिं करोति तथाहि–भो गुरो ! नायं गच्छ समीचीन' इत्यादिचूर्णिप्रोक्तप्रकारेण कथयित्वा गुरोस्तदगच्छसम्बन्धिपरिणामं शिथिलीकरोति स दोषवान् आज्ञाभङ्गादिदोषभागी भवतीति ।

अथवा विपरिणमयतीति आचार्यं परिवर्तयति स्वाचार्ये दोषान् प्रदर्श्यान्यमाचार्यं करोतीत्यर्थविषयेऽप्याह भाष्यकार'–

भाष्यम्–रागेण य दोसेण य, दिसं विप्परिणामए ।
तस्स दोसे भणित्ता जो, आणाभंगाइ पावइ ॥

छाया–रागेण च द्वेषेण च दिशं विपरिणमयति ।
तस्य दोषान् भणित्वा यः आज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः–य कश्चित् श्रमण श्रमणी वा रागेण आचार्यान्तरानुरागेण वा द्वेषेण पूर्वाचार्यगतद्वेषेण वा तस्य पूर्वाचार्यस्य दोषान् भणित्वा कथयित्वा दिशं स्वाचार्यं विपरिणमयति परिवर्त्तयति परावर्तनं करोति अन्याचार्यपार्श्वे, गच्छतीति भाव, परावर्त्तनं कारयति वा कुर्वन्तं वा अनुमोदते स आज्ञाभङ्गादिदोष प्राप्नोति । तत्र विपरिणमनप्रकारस्तु एवम्–कोऽपि शिष्य आचार्यादिकं प्रत्येव वदति- यस्याचार्यस्य समीपेऽहं प्रव्रजित. स तु अल्पवयस्क' अहं च वृद्ध., तस्मात् एष आचार्यशिष्यसम्बन्धो न सम्यग् घटते कथमहं पुत्रसमानस्यास्याचार्यस्य शिष्यो भूत्वा तिष्ठामि ?, कथं वा अल्पवयस आचार्यस्य विनयवैयावृत्यादिकं करोमि ? किं वा मम स्वजनादिवर्गो जानाति ?, अथवा असौ आचार्य' अपरिपक्वबुद्धिस्तेन स अकर्तव्यमपि कार्यं कदाचित् करिष्यति । एवं सद्भूतमसद्भूतं वा दोषं वदेत् । अथाऽयमकुलीनो मदीयो गुरुरहं च कुलीन, मेधावी चाहं स तु दुर्मेधा । अहं धनाढ्य' सन् प्रव्रजित, स तु अकिंचनो दरिद्रः प्रव्रजित, अहं बुद्धिमान् स तु अबुद्धि, अबुद्धे कुतो लब्धिरिति नासौ लब्धिमान्, अथवा पूर्वोक्तप्रकारेणैव स्वकीयमाचार्यं निन्दति, यस्य पार्श्वे गन्तुमिच्छति त च प्रशंसते, यथा–अयं न पूर्वोक्तगुणवान् स तु पूर्वोक्तप्रभूतगुणवान् वर्तते, इत्यादिप्रकारेण य' कश्चित् श्रमणः स्वकीयाचार्यस्य दोषान् सद्भूतानसद्भूतान् वा प्रकाशयित्वा अन्यस्याचार्यस्य च गुणान् प्रदर्श्य भूतपूर्वमाचार्यं त्यक्त्वाऽन्यमाचार्यं परिसेवते स प्रायश्चित्तभागी भवति । तस्याज्ञाभङ्गादिका दोषा भवन्तीति ॥सू० १२॥

## सूत्रम्–जे भिक्खू दिसं अवहरइ अवहरंतं वा साइज्जइ ॥ सू०१३॥

छाया—यो भिक्षुर्दिशमपहरति अपहरन्त वा स्वदते । सू० १३॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु श्रमण श्रमणी वा 'दिसं' दिशमाचार्यम् 'अवहरइ' अपहरति–पूर्वसूत्रोक्तप्रकारेण नानाविधवाक्यप्रबन्ध कथयित्वाऽन्यगच्छे नयति तथा 'अवहरंतं वा साइज्जइ' अपहरन्तम् अन्यगच्छे नयन्त स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकार —

भाष्यम्—रागेण दोसेण दिसावहारं, करेइ वा कारइ जो य भिक्खू ।
आणाणवत्थाइ विराहण च, मिच्छत्तदोसं समुवेइ सोऽत्थ ॥

छाया—रागेण द्वेषेण दिशापहार करोति वा कारयति यश्च भिक्षुः ।
आज्ञानवस्थादि विराधन च मिथ्यात्वदोष समुपैति सोऽत्र ॥

अवचूरि—य कश्चित् श्रमण श्रमणी वा रागेण–अन्यगच्छरागेण द्वेषेण–स्वगच्छे समुत्पन्नद्वेषेण वा दिशापहारं–आचार्यादेरपहारम्–अन्यगच्छे नयनरूप करोति, अथवा अन्यद्वारा कारयति तदा सोऽत्र विषये आज्ञाभङ्गानवस्थादिदोषान् सयमात्मविराधना मिथ्यात्वदोष च समुपैति प्राप्नोति । शिष्य आचार्यं नानाविधवाक्यै प्रतार्यान्यगच्छे नयति तदा भूतपूर्वगच्छ आचार्यरहितो भवति तेन तद्गच्छे धर्मोपदेशकाभावात् धर्मे लोकाना ग्लानिर्हानिश्च भवति, गच्छस्य निराधारकरणे तीर्थकराज्ञाभङ्गो भवेत्, त दृष्ट्वाऽन्योऽप्येवं करोति, त दृष्ट्वा चान्य, एवमनवस्थादोष समापद्यते । गच्छविराधना च भवति धर्महान्या सयमविराधनाऽवश्यम्भाविनी, आचार्यापहारे कारणभूत शिष्यं विज्ञाय गच्छवासिनो लोकास्त ताडयेयुरपीत्यात्मविराधनासंभव, गच्छनिन्दाया मिथ्यात्वदोषमपि स भजते, इत्याद्यनेके दोषा संभवन्ति ततो दिशापहारं न कुर्यात् नापि कारयेत् कुर्वन्तं वा नानुमोदयेदिति भाव ॥१३॥

## सूत्रम्—जे भिक्खू बहियावासियं आएसं परं तिरायाओ अविफालेत्ता संवसावेइ संवसावेंतं वा साइज्जइ ॥ सू० १४॥

छाया—यो भिक्षुर्बहिर्वासिकमादेशं पर त्रिरात्रात् अविस्फाल्य संवासयति संवासयन्तं वा स्वदते ॥सू०१४॥

चूर्णीः—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद भिक्षु श्रमणः श्रमणी वा 'बहियावासियं' बहिर्वासिक बहि स्वगच्छाद् बहिर्वस्तुं शीलं यस्य स बहिर्वासी स एव बहिर्वासिकस्तम् अन्यगच्छवासिन 'आएसं' आदेशम् आगत सन् आदेशमाज्ञा करोति स आदेश. प्राघूर्णक. साधुस्तमादेशं 'अविफालेत्ता' अविस्फाल्य अप्रकटय्य तदागमनकारणमपृष्ट्वेत्यर्थ. यथा हे भदन्त ! त्वं किंनिमित्तमत्रागतोऽसि ?, त्वमस्माकमज्ञातोऽसि ?, कीदृग्गच्छवासी त्वम् कुत आगत ?

कुत्र गमनकामोऽसि ? इत्येवमपृष्ट्वा **'परं तिरायाओ'** परं त्रिरात्रात् रात्रित्रयादनन्तरम् रात्रित्रयात् परतश्चतुर्थादिदिने **'संवसावेइ'** सवासयति स्ववसतौ वासयति निवासं ददाति तथा **'संवसावेंतं वा साइज्जइ'** सवासयन्त वा स्वदते विस्फालनामकृत्वा रात्रित्रयात् परतश्चतुर्थादिदिनेऽपि वास वासयन्तं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति। अज्ञातकुलशील वसतिवासं ददाति तदा कदाचित् स चौरो मुनिवेषधारी भवेत्, लम्पटो लुण्टको वा भवेत्, चौर्यं कृत्वा राजपुरुषादि-भयात् स्वात्मरक्षार्थं साधुवसतौ समागतो वा भवेत्, इत्यादिसंभवादेकरात्रमपि न सवासयेत्। त्रिरात्रात् परमिति यत् कथित तत्रैव ज्ञातव्यम्–कोऽपि साधु. मार्गविस्मृत्या स्वसाधर्मिसंघात् पृथग्भूतो भवेत्, ग्लानादिवैयावृत्यार्थं गुरुणा प्रेषित एकाकी तत्र गन्तुकामो भवेत्, इत्यादि–कारणवशात् समागतो भवेत् तदा त दिवसत्रयं यावत् वास दद्यात्। एतादृशमपि त्रिरात्रात्परं न सवासयेत्। चतुर्थादिदिने वासदानात् बहुदोषसभव शिष्यापहरणादिकलङ्कश्चापि समापततीति।

अत्राह भाष्यकार.—

भाष्यम्—पाहूणगं ससमीवे, आगयं जो न पुच्छइ।
तिरायाओ परं वासे, आणाभंगाइ पावइ॥

छाया—**प्राघूर्णकं स्वसमीपे, आगत जो न पृच्छति।**
**त्रिरात्रात् परतः वासयेत् आज्ञाभङ्गादि प्राप्नोति॥**

**अवचूरिः**—य. कोऽपि साधु. अन्यगच्छात् स्वसमीप समागतं प्राघूर्णकं अन्यगच्छवा-सिनं साधुं यो न पृच्छति य. साधुस्तस्य परिचयादिकं न पृच्छति किन्तु अपृष्ट्वैव त्रिरात्रात् परतः रात्रित्रयादनन्तर स्ववसतौ वासयेत् तदा स श्रमण. आज्ञाभङ्गादिदोषभागी भवतीत्यर्थ.। अपृष्ट्वा यदि वासयति तदा इमे दोषा भवन्ति तथाहि—कदाचित् स तेन साधुवेषेण उपद्रवकारकः कश्चित् समागतो भवेत्, वस्त्रादिलोभात् कश्चित् लुण्टको वंचको वा समागतो भवेत्, स्वपक्षपरपक्षाद् वा चौर्यं कर्तुं चौरो वा समागतो भवेत्, मैथुनसेवनार्थं कश्चित् मैथुनार्थी वा समागतो भवेत्, राज्ञा वा अपकारं कृत्वा समागतो भवेत्, आचार्यस्य मारणाय केनचित् प्रेषितो घातको वा भवेत्, अतः सर्वं सम्यक् पृष्ट्वा यदि योग्योऽयमिति जानीयात् तदा वासो देयो नो चेत् वासो न देय इति। अपृष्टः पृष्टो वा यदि एव वदति तदा तस्य रात्रित्रय यावत् वासो देय., तथाहि—भवन्तमेवोपसं-पत्तु समागतोऽस्मि, अपराधस्यालोचना गृहीतुं समागतोऽस्मि, कुलगणसघकार्येण वा समागतो-ऽस्मि, अशिवादिकारणैर्वा समागतोऽस्मि, सूत्रार्थजातनिमित्तेन वा समागतोऽस्मि, एवमादिकथने वासयेत्। सकारणागमनेऽपि तद्गुरोराज्ञा विना रात्रित्रयात् परतो न सवासयेदिति भाव.।.सू१४॥

**सूत्रम्—जे भिक्खू साहिगरणं अविओसमियपाहुडं अकडपायच्छित्तं परं तिरायाओ विप्फालिय अविप्फालिय संभुंजइ संभुंजंतं वा साइज्जइ ॥सू० १५॥**

**छाया—यो भिक्षुः साधिकरणमव्युपशामितप्राभृतमकृतप्रायश्चित्तं परं त्रिरात्रात् विस्फाल्य अविस्फाल्य संभुङ्क्ते संभुञ्जानं वा स्वदते ॥सू० १५ ॥**

**चूर्णी**—'**जे भिक्खू**' इत्यादि । '**जे भिक्खू**' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा '**साहिगरणं**' अधिकरणेन-कषायभावेन सहितो युक्तः साधिकरणः, तम् साधिकरणम् '**अविओसमियपाहुडं**' अव्युपशामितप्राभृतम् त्रि विविधैर्मनोवाक्कायैः करणकारणानुमोदनैश्च त्रिविधमधिकरणं त्रिविधत्रिविधैः उपशामितं स्वापराधस्वीकारपूर्वकं क्षामितं प्राभृतं कलहो येन स व्युपशामितप्राभृतः, न तथेति अव्युपशामितप्राभृतः कलहव्युपशामनारहित इत्यर्थस्तम्-'**अकडपायच्छित्तं**' अकृतप्रायश्चित्तम् अकृतं कृते च कलहे यत् प्रायश्चित्तमापद्यते तत् न कृतं न गृहीतं येन स अकृतप्रायश्चित्तस्तम् '**विप्फालिय**' विस्फाल्य-पृष्ट्वा कलहकरणविषये तद्व्युपशामनाया करणाकरणे, तत्प्रायश्चित्तस्य ग्रहणाग्रहणे च आपृच्छ्य '**अविप्फालिय**' अविस्फाल्य पूर्वोक्तविषयमनापृच्छ्य वा पृच्छामन्तरेणेत्यर्थः '**परं तिरायाओ**' परं त्रिरात्रात् रात्रित्रयात् परतः '**संभुंजइ**' तेन सह एकस्मिन् मण्डले समुद्दिशते चतुर्विधाहारजातस्योपभोगं करोति कारयति वा तथा '**संभुंजंतं वा साइज्जइ**' संभुञ्जानं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकारः—

**भाष्यम्—साहिगरणो य दुविहो, सपक्ख-परपक्ख-भेयओ होइ ।**
**इक्किको पुण दुविहो गच्छगओ गच्छनिग्गओ वावि ॥**

**छाया—साधिकरणो द्विविधः, स्वपक्ष-परपक्ष-भेदतो भवति ।**
**एकैकः पुनर्द्विविधः गच्छगतो गच्छनिर्गतो वापि ॥**

**अवचूरिः**—साधिकरणः अधि-अधिकं साधुमर्यादातिरिक्तं करणम् अधिकरणं कलहकरणमित्यर्थः, तेन अधिकरणेन कलहेन सह वर्तते यः स साधिकरणः कलहविशिष्टः साधुः स स्वपक्ष-परपक्षभेदतो द्विविधो भवति-स्वपक्षगतः साधिकरणः, परपक्षगतः साधिकरणश्चेति । तत्र स्वपक्षगत इति स्वगच्छसाधुः परपक्षगत इति परगच्छसाधुः । अथवा स्वपक्षे साधिकरणः साधुना सह कलहकरणशीलः, परपक्षे साधिकरणः गृहस्थेन सह कलहकरणशील इति । अयमेकैको द्विविधः गच्छगतः, अथवा गच्छनिर्गतश्च । तथाहि—तदिदमधिकरणम् सचित्ताचित्तमिश्रवस्तु प्रतीत्य जायते, तथाहि—कस्यचित् कोऽपि शिष्यो जातः, तं दृष्ट्वा अन्यः स्वगच्छवासी साधुर्वदति—अयं मम शिष्य-

तया पूर्वं प्रतिपन्नः कथं भवान् एनं शिष्यमकरोत् यदा मालवे विहरन्नासीत्तदा मया एष प्रतिबोधितः तस्मात् ममाय भावी शिष्य इति । एवं क्रमेणोभयो कलहो जायते अयं स्वपक्षे साधिकरणः । एवंप्रकारेणाचित्ते वस्त्रपात्रकम्बलाद्युपकरणविषयेऽपि अधिकरणं समुत्पद्यते । एवं सचित्ताचित्तमिश्रवस्त्रसहितशिष्यादौ कलहो जायते । एवं कोऽपि स्वगच्छगत साधु स्वाध्याय करोति तदा अपर आगत्य कथयति- कथं त्वं न्यूनमधिकं वा स्वाध्याय करोषि उत्सूत्रं वा प्ररूपयसि ? इत्यादिक्रमेणाधिकरणं समुत्पद्यते, अयमपि स्वपक्षगतः साधिकरण इति । एवं परगच्छगतसाधिकरणविषयेऽपि शिष्यविषये वस्त्रपात्रादिविषये स्वाध्यायादिविषये च ज्ञातव्यम् । अयमेकैको गच्छगतो गच्छनिर्गतो वा साधिकरणो द्विविधो भवति तद्विषयेऽप्यधिकरणत्वं स्वयमूहनीयम् । एवं कोऽपि साधुरधिकरणमुत्पादितवान् पुनश्च तदधिकरणं न व्यवशामितं न क्षामितं किन्तु अनुपशाम्य स यदागच्छेत् तत्रत्य साधुर्यदि अव्युपशामितकलहम् अकृतप्रायश्चित्तं च स्वसमीपे स्थापयति तथा तेन सह आहारं करोति कारयति कुर्वन्तं वा अनुमोदते स प्रायश्चित्तभागी भवति ॥सू० १५॥

## सूत्रम्—जे भिक्खू उग्घाइयं अणुग्घाइयं वयइ वयंतं वा साइज्जइ ॥

छाया — यो भिक्षुरुद्घातिकमनुद्घातिकं वदति वदन्तं वा स्वदते ॥सू० १६॥

चूर्णी- 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'उग्घाइयं' उद्घातिकं-लघुप्रायश्चित्तम् 'अणुग्घाइयं' अनुद्घातिकं गुरुप्रायश्चित्तम् 'वयइ' वदति-प्ररूपयति, यस्य कस्यचित् श्रमणस्य लघुप्रायश्चित्तमायाति तस्मै गुरुकं प्रायश्चित्तं वदति प्ररूपयति, एवं लघुकं प्रायश्चित्तवन्तं गुरुकं प्रायश्चित्तं वदति प्ररूपयति, तथा 'वयंतं वा साइज्जइ' वदन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवतीति ॥ सू० १६॥ एवम् 'अणुग्घाइयं उग्घाइयं वयइ' इति सूत्रम् । गुरुप्रायश्चित्तयोग्याय श्रमणाय लघुकं प्रायश्चित्तं प्ररूपयतीति ॥सू० १७॥ अनेनैव प्रकारेण 'उग्घाइयं अणुग्घाइयं देइ' लघुप्रायश्चित्तयोग्याय श्रमणाय गुरुप्रायश्चित्तं ददाति--आरोपयतीति ॥सू० १८॥ तथा 'अणुग्घाइयं उग्घाइयं देइ' गुरुप्रायश्चित्तयोग्याय लघुप्रायश्चित्तं ददाति-आरोपयतीति । एवं सप्तदशसूत्रात् एकोनविंशतिसूत्रपर्यन्तानि त्रीणि सूत्राणि षोडशसूत्रवद् व्याख्येयानीति ॥ सू० १९॥

अत्राह भाष्यकार --

भाष्यम्— उग्घायमणुग्घायं, वाणुग्घायं पुणो य उग्घायं ।
एवं जो विवरीयं, वए दए पावए दोसे ॥

छाया—उद्घातमनुद्घातं वानुद्घातं पुनश्च उद्घातम् ।
एवं यो विपर्यस्तं वदेद् दद्यात् प्राप्नुयात् दोषान् ॥

**अवचूरिः**—यः कश्चित् भिक्षुः उद्घातं लघुमासिकं प्रायश्चित्तसेविनम् अनुद्घातं गुरुमासिकं प्रायश्चित्तं वदेत् प्ररूपयेत् तथा दद्यात् आरोपयेत् । एवमनुद्घात गुरुमासिकप्रायश्चित्त सेविनम् उद्घात लघुमासिकं वदेत् प्ररूपयेत् तथा दद्यात् आरोपयेत् । यो हि श्रमण एवं विपरीतं लघुमासिकप्रायश्चित्तस्याधिकारी तं गुरुमासिक प्रायश्चित्तं वदेत् प्ररूपयेत् दद्यात् आरोपयेच्च, तथा यो गुरुमासिकप्रायश्चित्तस्य अधिकारी त लघुमासिक प्रायश्चित्त प्ररूपयेद् आरोपयेद्वा स श्रमणः दोषान् आज्ञाभङ्गानवस्थामिथ्यात्वविराधनारूपान् प्राप्नुयात् । तथाहि एवं वैपरीत्येन प्ररूपणे च स तीर्थकराणामाज्ञाभङ्गं करोति, तथा अन्यथाप्ररूपणायामारोपणाया च कृतायामनवस्थापि स्यात्, तथा विपरीतप्ररूपणाया कृताया मिथ्यात्वमपि स्यात् यथा एतत् , तथा अन्यदपि सर्वमसत्यमिति । एवमल्पप्रायश्चित्तस्य कथने दाने च चारित्रस्य शुद्धिर्न स्यात्, अधिके च प्रायश्चित्ते दत्ते साधोः पीडा स्यात् एव द्विविधा विराधनाऽपि स्यात् । यस्मात् एते दोषास्तस्मात् कारणात् अविपरीतमेव वदेत् दद्यादपि, न तु विपरीतं प्रायश्चित्त वदेत् दद्याद्वा । एवं योऽप्रायश्चित्ते प्रायश्चित्त ददाति, तथा अल्पाऽपराधेऽधिकं प्रायश्चित्त ददाति, अधिकापराधे चाल्प प्रायश्चित्त ददाति स श्रुतचारित्रधर्मस्याशातना करोति, तथा सम्यग्ज्ञानदर्शनचारित्रतपोलक्षणमोक्षमार्गस्य विराधना करोति । तत्र धर्मो द्विप्रकारक श्रुतलक्षण चारित्रलक्षणश्च, तत्र अधिकं प्रायश्चित्तं प्ररूपयन् ददन् श्रुतधर्म विराधयति, न्यून प्रायश्चित्तं च वदन् आरोपयंश्च चारित्रलक्षणं धर्मं विराधयति । ज्ञानदर्शनचारित्रतपोलक्षण चतुष्प्रकारको मोक्षमार्ग विपरीतरूपेण प्रायश्चित्तं ददता आरोपयता विराधित कृतो भवेत् । अत्रायं विवेक –आचार्यो यदि स्वपरंपरोपदेशेन लघुक गुरुकं, गुरुकं वा लघुकं प्रायश्चित्तं वदति ददाति वा तदा स शुद्ध , अन्यथा तु अशुद्ध सन् प्रायश्चित्तभागी भवति । अथवा–आचार्यो बहुश्रुतत्वेन तत्पार्श्वे य कश्चित् शिष्यश्चतुर्थादितपश्चरणेऽपि धृतिसंहननबलिको भवेत् स लघुप्रायश्चित्तदाने वदेत् -'किं ममैतेनाऽल्पेन प्रायश्चित्तेन ' तदाऽन्यदपि उद्घातिकेऽनुद्घातिकमपि दद्यात्, न तत्र दोष । यदि प्रायश्चित्ताधिकारी शिष्य उभयत. धृत्या सहनेन च दुर्बलो भवेत् त तादृश धृतिसंहननदुर्बलं ज्ञात्वा गुरुप्रायश्चित्तेऽपि लघुप्रायश्चित्तं दद्यात् येन स वोढुं शक्नोति तादृशं लघुप्रायश्चित्तमपि दद्यात् । तथा धृतिसंहननयोर्मध्ये एकतरेण बलिको भवेत् तदा तस्मै तदनुरूप प्रायश्चित्त दद्यात् । तथा य आचार्यादिग्लानादिवैयावृत्त्यकरणे अभ्युद्यतो भवेत् तस्मै सानुग्रह प्रायश्चित्त दद्यात्, उक्तञ्च -'**वेयावच्चकराणं होइ अणुग्घाएवि उग्घाय**' वैयावृत्यकरेभ्यो भवति अनुद्घातेऽपि उद्घातम्, इति वचनात् । यस्मात् प्रायश्चित्तस्य विपर्ययकरणे पूर्वोक्ता एते दोषा भवन्ति तस्मात् कारणात् श्रमण. लघुप्रायश्चित्तस्थाने गुरुकं प्रायश्चित्तं तथा गुरुप्रायश्चित्तस्थाने च लघुकं प्रायश्चित्तं न वदेत् न दद्यात्, न वा वदन्तं ददतं वा अनुमोदयेत् ॥सू० १९॥

सूत्रम्—जे भिक्खू उग्घाइयं सोच्चा णच्चा संभुंजइ संभुंजंतं वा साइज्जइ ॥ सू० २० ॥

छाया—यो भिक्षुरुद्घातिकं श्रुत्वा ज्ञात्वा च संभुङ्क्ते संभुञ्जानं वा स्वदते ॥

चूर्णी— 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु श्रमण श्रमणी वा 'उग्घाइयं' उद्घातिक लघुप्रायश्चित्तधारिणम्, तत्र उद्घातिकं नाम यत् सान्तर वहति, अयं साधुर्लघुमासिक प्रायश्चित्त वहति इति 'सोच्चा' श्रुत्वा अन्यसकाशात् 'णच्चा' ज्ञात्वा स्वयमेव सद्यो ज्ञात्वा कारणोपपत्तितो वा ज्ञात्वा–'संभुंजइ' संभुङ्क्ते 'अयं लघुक प्रायश्चित्त वहति' इति श्रुत्वा ज्ञात्वाऽपि तेन श्रमणेन सह एकत्र मण्डल्या माहारमाहरति तथा 'संभुंजंतं वा साइज्जइ' संभुञ्जानं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवतीति ॥सू० २०॥

सूत्रम्—जे भिक्खू उग्घाइय हेउं सोच्चा णच्चा संभुंजइ संभुंजंतं वा साइज्जइ ॥ सू० २१॥

छाया—यो भिक्षुरुद्घातिकहेतु श्रुत्वा ज्ञात्वा संभुङ्क्ते संभुञ्जानं वा स्वदते ॥

चूर्णी— 'जे भिक्खू' इत्यादि । जे भिक्खू' यः कश्चिद् भिक्षु श्रमण श्रमणी वा 'उग्घाइयहेउं' उद्घातिकहेतु–उद्घातिक नाम यत् प्रायश्चित्त सान्तरमुह्यते लघुप्रायश्चित्तमित्यर्थ, तस्य हेतु कारणम्, अस्य साधोर्लघुप्रायश्चित्तसेवनस्य कारण वर्त्तते, इत्येवं कारणम्, अथवा प्रायश्चित्तापन्नस्य यावत्प्रायश्चित्तमनासेवितं भवेत्तावत् हेतुरुच्यते, स द्विधा उह्यते शुद्धितपसा परिहारतपसा वा, त तादृश हेतुम् 'सोच्चा' श्रुत्वा अन्यसकाशात् तथा 'णच्चा' ज्ञात्वा स्वयमेव तत्कारण विज्ञाय अयं लघुमासिकप्रायश्चित्तहेतुभानिति अन्यसाधुसकाशात् श्रुत्वा स्वयमेव वा बुद्धिद्वारा विज्ञायापि तेन सह एकत्रमण्डल्याम् 'संभुंजइ' संभुङ्क्ते 'संभुंजतं वा साइज्जइ' संभुञ्जान वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० २१॥

सूत्रम्—जे भिक्खू उग्घाइयसंकप्पं सोच्चा णच्चा संभुंजइ संभुंजंतं वा साइज्जइ ॥ सू० २२ ॥

छाया—यो भिक्षुरुद्घातिकसंकल्पं श्रुत्वा ज्ञात्वा संभुङ्क्ते संभुञ्जानं वा स्वदते ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु श्रमण श्रमणी वा 'उग्घाइयसंकप्पं' उद्घातिकसंकल्पम्–उद्घातिकप्रायश्चित्तसंकल्पवन्तं यथा- 'अहमुद्घातिकप्रायश्चित्तं ग्रहीष्यामी'–ति स्वविषयकं संकल्पम्, अथवा गुरुणा कथितो भवेत् यत् तवैतत् प्रायश्चित्तं दास्यामी'–ति गुरुविषयकसंकल्पम्, अयमपि द्विधा उह्यते शुद्धतपसा परिहारतपसा

वा, तं तादृशं संकल्पं 'सोच्चा नच्चा' श्रुत्वा ज्ञात्वा वा पूर्ववत् पुनरपि–'संभुंजइ' सभुङ्क्ते तेन सह एकमण्डल्यामाहारादिक करोति 'संभुजंतं वा साइज्जइ' सभुञ्जान वा स्वदतेऽनुमोदते, यो हि लघुमासिकप्रायश्चित्तसेवी प्रायश्चित्त कृत्वा शुद्धो न जात· तन्मध्ये एव तेन सह भोजनादिकं करोति तमनुमोदते स प्रायश्चित्तभागी भवतीति ॥ सू० २२॥

**सूत्रम्—जे भिक्खू उग्घाइयं उग्घाइयहेउं वा उग्घाइयसंकल्पं वा सोच्चा णच्चा संभुंजइ संभुंजंतं वा साइज्जइ ॥ सू० २३॥**

**छाया––यो भिक्षुरुद्घातिकमुद्घातिकहेतु वा उद्घातिकसंकल्प वा श्रुत्वा ज्ञात्वा संभुङ्क्ते सभुञ्जानं वा स्वदते ॥ सू० २३ ॥**

**चूर्णी**—'जे भिक्खू इत्यादि । एतत्सूत्रम् उद्घातिको–द्घातिकहेतु- द्घातिकसकल्पेति त्रिविषयमिश्रं वर्तते । व्याख्या पूर्ववत् कर्त्तव्येति ॥सू० २३॥

एवम्–'जे भिक्खू' अणुग्घाइयं सोच्चा' ॥ सू० २४॥ 'अणुग्घाइयहेउं सोच्चा' ॥ सू०२५॥ 'अणुग्घाइयसंकप्प सोच्चा' ॥सू० २६॥ 'अणुग्घाइयं-अणुग्घाइयहेउं' अणुग्घाइयसंकप्पं सोच्चा' इति त्रिविषयमिश्र चेति चत्वारि सूत्राणि पूर्ववदेव व्याख्येयानीति ॥सू० २७॥ अनेनैव प्रकारेण–'जे भिक्खू उग्घाइयं वा अणुग्घाइय वा सोच्चा' ॥सू० २८॥ 'उग्घाइयहेउं वा अणुग्घाइयहेउं वा सोच्चा'० ॥सू० २९॥ 'उग्घाइयसंकप्पं वा अणुग्घाइयसंकप्पं वा सोच्चा० ॥सू० ३०॥ 'उग्घाइयं वा अणुग्घाइय वा, उग्घाइयहेउं वा अणुग्घाइयहेउं वा, उग्घाइयसंकप्पं वा अणुग्घाइयसंकप्पं वा सोच्चा'
एतानि चत्वारि सूत्राणि पूर्ववदेव व्याख्येयानि ॥सू० ३१॥

अत्राह भाष्यकार·—

भाष्यम्— उग्घाइयऽणुग्घाइयपयदुगं जो मुणी य अहिकिच्चा ।
तव्विसयं हेउं तह, संकप्पं इय दुगं च सव्वेयं ॥१॥
सोच्चा णच्चा भुंजइ, तेणं सह एगमंडलीमज्झे ।
सो पावइ मिच्छत्त, आणाभंगाइदोसे य ॥२॥

छाया––उद्घातिकानुद्घातिकपदद्विक यो मुनिश्च अधिकृत्य ।
तद्विषय हेतु तथा संकल्पमिति द्विकं च सर्वमेतत् ॥१॥
श्रुत्वा ज्ञात्वा भुङ्क्ते, तेन सह एकमण्डलीमध्ये ।
स प्राप्नोति मिथ्यात्वम् आज्ञाभङ्गादिदोषांश्च ॥२॥

**अवचूरिः**—'उग्घाइय'० इत्यादि । यो मुनि· उद्घातिकमनुद्घातिकं चेति पदद्वयमधिकृत्य तदधिकारमाश्रित्य तद्विषयं हेतुम् उद्घातिकहेतुमनुद्घातिकहेतु च, तथा तद्विषयं

संकल्पम्—उद्घातिकसंकल्पमनुद्घातिकसंकल्पं चेति द्विकं च, एवं द्वादशसूत्रीकथितं सर्वमेतत् श्रुत्वाऽन्यसकाशात्, स्वयं वा ज्ञात्वाऽपि तेन तादृशेन मुनिना सह मण्डलीमध्ये एकस्यां मण्डल्यां स्थित्वा भुङ्क्ते अशनादिचतुर्विधाहारं करोति, उपलक्षणात् वस्त्रपात्रादीनामादान-प्रदानं वा करोति स मिथ्यात्वमाज्ञाभङ्गादिदोषांश्च प्राप्नोतीति भाष्यगाथाद्वयार्थः ॥१॥२॥

सूत्रम्—जे भिक्खू उग्गयवित्तिए अणत्थमियमणसंकप्पे संथडिए णिव्वितिगिच्छासमावण्णेणं अप्पाणेणं असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेत्ता संभुंजइ संभुंजंतं वा साइज्जइ, अह पुण एवं जाणेज्जा अणुग्गए सूरिए अत्थमिए वा से जं च मुहंसि वा जं च पाणिंसि वा जं च पडिग्गहंसि वा तं च विगिंचिय विसोहिय तं परिट्ठावेमाणे णाइक्कमइ, जो तं भुंजइ भुंजंतं वा साइज्जइ ॥सू० ३२॥

छाया यो भिक्षुरुद्गतवृत्तिकः अनस्तमितमनःसंकल्पः संस्तृतो निर्विचिकित्सासमापन्नेनात्मना अशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्य संभुङ्क्ते संभुञ्जानं वा स्वदते, अथ पुनरेवं जानीयात्—अनुद्गतः सूर्यः अस्तमितो वा अथ यच्च मुखे वा यच्च पाणौ वा यच्च प्रतिग्रहे वा तं च विविच्य विशोध्य तं परिष्ठापयन् नातिक्रामति, यस्तं भुङ्क्ते भुञ्जानं वा स्वदते ॥सू० ३२॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चित् भिक्षुः श्रमणः श्रमणी वा 'उग्गयवित्तिए' उद्गतवृत्तिकः उद्गते सूर्ये वृत्तिर्वर्तनं शरीरयात्रार्थं संयमयात्रार्थं च व्यवहारो यस्य स उद्गतवृत्तिकः उद्गते एव सूर्ये आहारविहारादिसकलसाधुक्रियाकारकः 'अणत्थमियमणसंकप्पे' अनस्तमितमनःसंकल्पः—अनस्तमिते अस्तं न गते सूर्ये एव मनः-संकल्पः आहारविहारादिविषयको मनोविचारो यस्य स अनस्तमितमनःसंकल्पः सूर्यास्तात्पूर्वमेव सकलसाधुक्रियाकरणशीलमनोविचारवान् 'संथडिए' संस्तृतः धृतिबलसंहननादिना समर्थः अध्वप्रतिपन्नः क्षपकः ग्लानो वा न भवेदिति भावः, एतादृशो भिक्षुः 'णिव्वितिगिच्छा-समावन्नेणं अप्पाणेणं' निर्विचिकित्सासमापन्नेन आत्मना, विचिकित्सा—संदेहः, न विचिकित्सा निर्विचिकित्सा—सूर्योदितास्तमनविषयकसन्देहराहित्यं, तां समापन्नेन प्राप्तेन सूर्यस्य अनुद्गतत्वास्तमितत्वसन्देहराहित्येन आत्मना उद्गते सूर्ये अनस्तमिते वा सूर्ये यदि 'असणं वा ४ ।' अशनादिचतुर्विधमाहारं 'पडिग्गाहित्ता' प्रतिगृह्य यदा 'संभुंजइ' संभुङ्क्ते 'संभुंजंतं वा साइज्जइ' संभुञ्जानं वा स्वदते अनुमोदते तदा स भिक्षुः 'अहपुण' अथ पुनः अथ शब्दो विषयान्तरसूचकस्तेन आहारं कर्तुं प्रारब्धस्तत्समये पुनः 'एवं जाणेज्जा' एवं जानीयात्

अन्यकथनेन स्वबुद्धया वा निश्चिनुयात्, किं जानीयादित्याह-'अणुग्गए सूरिए' अनुद्गतः सूर्यः साम्प्रत सूर्यो नोदित 'अत्थमिए वा' अस्तमित अस्तगतो वा सूर्य इति, 'से' अथ तदनन्तरं 'जं च मुहंसि वा' यच्चाशनादि मुखे क्षिप्त वर्तते 'जं च पाणिंसि वा' यच्चाशनादि पाणौ हस्ते वर्तन भोक्तु हस्ते गृहीत भवेत, 'जं च पडिग्गहंसि वा' यच्चाशनादि प्रतिग्रहे पात्रे वर्तते 'तं' तत् सकलमशनादिकं 'विगिंचिय' विविच्य तत्रैव विमुच्य 'विसोहिय' विशोध्य मुख हस्त पात्र च निरवयव लेपराहित्य कृत्वा 'तं' तत् यत्पात्रे स्थित तद् अशनादिकं 'परिट्ठवेमाणे' परिष्ठापयन् भिक्षु 'नाइक्कमइ' नातिक्रामति तीर्थंकराज्ञां नोल्लङ्घयति, आज्ञाया आराधक एव स न तु विराधक इति भाव 'जो तं भुंजइ-भुंजंतं वा साइज्जइ' य कोपि साधुर्यदि अन्यकथनेन स्वबुद्धया वा सूर्यस्यानुद्गमनाऽस्तमने निश्चिते सत्यपि अशनादिचतुर्विधमाहार भुङ्क्ते भोजयति भुञ्जान वा स्वदते स प्रायश्चित्तभागी भवतीति ॥ सू० ३२॥

**सूत्रम्—जे भिक्खू उग्गयवित्तिए अणत्थमियमणसंकप्पे संथडिए वितिगिच्छासमावण्णेणं अप्पाणेणं असणं वा ४ जाव जो तं भुंजइ भुंजंतं वा साइज्जइ ॥सू० ३३॥**

छाया—यो भिक्षुः उद्गतवृत्तिकोऽनस्तमितमनःसंकल्पो संस्तृतो विचिकित्सासमापन्नेनात्मना अशनं वा ४ यावत् यस्त भुङ्क्ते भुञ्जान वा स्वदते ॥ सू० ३३॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चित् भिक्षु श्रमण श्रमणी वा उद्गतवृत्तिकः अनस्तमितमनःसंकल्प पूर्वव्याख्यातस्वरूप स 'संथडिए' संस्तृत धृतिबल-सहननसंपन्नः 'वितिगिच्छासमावन्नेणं अप्पाणेणं' विचिकित्सा सूर्यस्योद्गमनविषयक सूर्यो नास्तंगतः इत्येवंविषयक संदेह' अभ्रच्छन्नादिवशात् ता विचिकित्सा समापन्नेनात्मना 'उद्गत सूर्यः, नास्त गतो वा सूर्य', इत्येव दातृकथनेन 'असणं वा ४' अशनादिचतुर्विधमाहारं प्रतिगृह्य भुङ्क्ते भुञ्जानं वा स्वदते तदा अथ पुन आहारास्वादसमये एव जानीयात् निश्चिनुयात्-'नोदित' सूर्य अस्तमितो वा सूर्य' इति अन्यजनकथनेन स्वबुद्धया वा निश्चिते सत्यपि योऽशनादिक भुङ्क्ते भोजयति हस्तपात्रमुखगतमशनादि विविच्य विशोध्य न परिष्ठापयति तदा सोऽवश्यं प्रायश्चित्तभागी भवतीति भाव। अक्षरगमनिका स्पष्टेति ॥सू० ३३॥

पूर्वसूत्रद्वय-'संथडिए, निव्वितिगिच्छासमावन्नेण अप्पाणेण' तथा-'संथडिए वितिगिच्छासमावन्नेणं अप्पाणेण' इति पदद्वयमाश्रित्य प्रोक्तम्। साम्प्रतम् 'असंथडिए' इति पदेन सह 'निव्वितिगिच्छासमावन्नेणं अप्पाणेणं' इति, तथा 'वितिगिच्छासमावन्नेणं अप्पाणेणं इति च पदद्वय सयोज्य सूत्रद्वयं प्रोच्यते-'जे भिक्खू' उग्गयवित्तिए' इत्यादि।

सूत्रम्—जे भिक्खू उग्गयवित्तिए अणत्थमियमणसंकप्पे असंथडिए निव्वितिगिच्छासमावन्नेणं अप्पाणेणं असणं वा ४ जाव जो तं भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ३४॥

छाया—यो भिक्षुः उद्गतवृत्तिक अनस्तमितमनःसंकल्प असंस्तृत निर्विचिकित्सासमापन्नेन आत्मना अशनं वा ४ यावत् यस्तं भुङ्क्ते भुञ्जानं वा स्वदते ॥सू० ३४॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षु श्रमणः श्रमणी वा उद्गतवृत्तिकादिविशेषणविशिष्ट स 'असंथडिए' असंस्तृत अध्वप्रतिपन्नतपोग्लानत्वादिकारणात् धृतिबलादिरहित 'निव्वितिगिच्छासमावन्नेणं अप्पाणेणं' निर्विचिकित्सा सूर्यस्योदगमनानस्तमनशङ्काराहित्य, ता समापन्नेन आत्मना सन्देहरहितेनात्मना अशनादिकं गृहीत्वा भुङ्क्ते किन्तु भोक्तुं प्रवृत्ते सति यदि जानीयात् 'सूर्यो नोदित, अस्तं वा गत' इत्येवं निश्चये सत्यपि यो भुङ्क्ते न तदशनादिकं परिष्ठापयति स प्रायश्चित्तभागी भवतीति भाव ॥सू० ३४॥

सूत्रम्—जे भिक्खू उग्गयवित्तिए अणत्थमियमणसंकप्पे असंथडिए वितिगिच्छासमावण्णेणं अप्पाणेणं असणं वा ४ जाव जो तं भुंजइ भुंजंतं वा साइज्जइ ॥सू० ३५॥

छाया—यो भिक्षु उद्गतवृत्तिकः अनस्तमितमनःसंकल्प असंस्तृत विचिकित्सासमापन्नेन आत्मना अशन वा ४ यावत् यस्तं भुङ्क्ते भुञ्जानं वा स्वदते ॥सू० ३५॥

चूर्णी—'जे भिक्खू' इत्यादि। व्याख्या पूर्ववदेव, नवरम्–'असंथडिए' असंस्तृतः असमर्थः यः कोऽपि मुनिर्दूरक्षेत्राद् विहृत्यागमनेन श्रान्त, मासक्षपणस्य पारणकदिवसत्वेन ग्लानत्वमापन्न', रोगादिना ग्लानत्वमापन्नो वा भवेत्, इत्यादिकारणैर्धृतिबलवर्जित 'वितिगिच्छासमावण्णेणं अप्पाणेणं' विचिकित्सा–सूर्यस्योदयमभव सप्रति अभ्रच्छन्नादिकमाश्रित्यैवं दृश्यते, अथवा–अस्तं न गत इति सभव, इत्येवंरूपा, ता समापन्नेण आत्मना 'उदित' सूर्यो नास्तं गतो वा सूर्य.' इति दातृवचनेन अशनादिकं गृहीत्वा भुङ्क्ते भोक्तुं प्रारभते अथ तत्समये सूर्यस्यानुद्गमनास्तमनयोर्निश्चये सति यो भुङ्क्ते न परिष्ठापयति तदा स प्रायश्चित्तभागी भवतीति भाव. ॥सू० ३५॥

अत्र भाष्यकारो गाथात्रयमाह—

भाष्यम्—उग्गयवित्ती भिक्खू, होइ य जो अणत्थमियसंकप्पो।
संथडिओ सो दुविहो, णिव्वितिगिच्छो य वितिगिच्छो ॥१॥

एमेवाऽसंथडिओ, सो विय दुविहो भवेज्ज पुव्वंव ।
सो गेण्हिय असणाई, तं परिभोत्तुं समारद्धो ॥२॥
जाणिय अनुग्गमं तह, अत्थमण चेव जइ य सूरस्स ।
भुंजइ जइ असणाई, पावेइ य आणभंगाई ॥३॥

छाया—उद्गतवृत्तिर्भिक्षुर्भवति च य अनस्तमितसंकल्प ।
संस्तृतः स द्विविधो निर्विचिकित्सश्च विचिकित्स ॥१॥
एवमेवाऽसंस्तृतः सोऽपि च द्विविधो भवेत् पूर्ववत् ।
स गृहीत्वाऽशनादि तत् परिभोक्तुं समारब्ध. ॥२॥
ज्ञात्वाऽनुद्गम तथा अस्तमनं चैव यदि च सूर्यस्य ।
भुङ्क्ते यदि अशनादि, प्राप्नोति च आज्ञाभङ्गादि ॥३॥

**अवचूरिः**- **'उग्गयवित्ती'** इत्यादि । उद्गता वृत्ति उद्गते एव सूर्ये वृत्ति वर्त्तनं प्रतिलेखनाहारविहारादीना यस्य स तथा, एतादृश, तथा पुन अनस्तमितसंकल्प सूर्यास्तात्पूर्वमेव साधुक्रियाकरणे एव संकल्प मनोभावो यस्य स तथा, एतादृशो भिक्षु, स संस्तृतासंस्तृत भेदेन द्विविधो भवति तत्र संस्तृत धृतिबलादिसपन्न, असंस्तृत –धृतिबलादिरहित । स एकैको द्विविध –निर्विचिकित्सविचिकित्सभेदात, तत्र निर्विचिकित्स - सूर्यस्योद्गमे अनस्तमने च शङ्का-वर्जित, विचिकित्स उद्गमनाऽनस्तमनविषये शङ्काशील, एते चत्वारोऽपि अशनादि चतुर्विधाहार गृहीत्वा तत् परिभोक्तु समारभन्ते तत्समये 'नोदित सूर्य अस्तमितो वा सूर्य' इति निश्चये तन्न भुञ्जाना सन्त आज्ञां तीर्थकराज्ञा नातिक्राम्यन्ति, एते भुञ्जानास्तीर्थकराज्ञाया विराधका एव नत्वाराधका इत्यर्थ, 'सूर्य उदित', नास्तमितो वा' इत्यादिरूपदात्रादिवचनप्रामाण्यमाश्रित्य गृहीतमशनादि भुञ्जानाना दोष प्रतिपादयति–'जाणिय' इत्यादि, यदि सूर्यस्यानुदगमनमस्तमनं च ज्ञात्वा अन्यसकाशात् स्वबुद्धया वा परिज्ञाय सूर्यो नोद्गित अस्तमितो वा इति निश्चयेन ज्ञाते सति यदि गृहीतमशनादि भुञ्जते किन्तु यदि यत् मुखे हस्ते पात्रे वा तिष्ठति तत् त्यक्त्वा मुख-हस्तपात्रादिकं निरवयव कृत्वा न परिष्ठापयन्ति तदा ते आज्ञाभङ्गादिदोषान् प्राप्नुवन्ति, इति भाष्यगाथात्रयार्थ. ॥१-२-३॥ सू० ३५॥

**सूत्रम्—जे भिक्खू राओ वा वियाले वा सपाणं सभोयणं उग्गालं आगच्छेज्जा तं विगिंचमाणे वा विसोहेमाणे वा णाइक्कमइ तं उग्गिलित्ता पच्चोगिलमाणे राइभोयणपडिसेवणपत्ते, जो तं पच्चोगिलइ पच्चोगिलंतं वा साइज्जइ ॥सू० ३६॥**

छाया— यो भिक्षुः रात्रौ वा विकाले वा सपानः सभोजन उद्गार आगच्छेत् तं विविंचन् वा विशोधयन् वा नातिक्रामति, तम् उद्गीर्य प्रत्यवगिलन् रात्रिभोजन-प्रतिसेवनाप्राप्तः यस्तं प्रत्यवगिलति प्रत्यवगिलन्त वा स्वदते ॥ सू०३६ ॥

चूर्णी— 'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'राओ वा' रात्रौ वा 'वियाले वा' विकाले वा सन्ध्यासमये सूर्योदयात्प्राग् वा तस्य श्रमणस्य 'सपाणे' सपानः—पान जल तेन सहित सपान 'सभोयणे वा' सभोजनो वा यद् भोजन भुक्तमोद-नादिकं तेन सहितः सभोजनः, उपलक्षणाद् उभयप्रकारो वा 'उग्गाले' उद्गार 'डकार' इति लोकप्रसिद्ध स आगच्छेत् मुखमध्ये आगच्छेत् 'तं विगिंचमाणे' त सजलं सभोजनमुद्गारम् विविचन् परित्यजन् मुखाद् -बहिर्निष्कासयन् 'विसोहेमाणे' विशोधयन् मुखस्य स्वच्छतां वस्त्रा-दिना सपादयन् श्रमण श्रमणी वा 'नाइक्कमइ' नातिकामति नोल्लंघयति तीर्थंकरस्याज्ञाम् 'रात्रौ न भोक्तव्यमित्याकारक यदस्ति तस्यातिक्रमणं न करोति सपानसभोजनोद्गारस्य मुखात् निष्काशनात मुखस्य विशुद्धिकरणाच्चेत्यर्थ 'तं' तम् अथ यदि स श्रमणो रात्रौ विकाले वा समागत सपानं सभोजनमुद्गारम् 'उग्गिलित्ता पच्चोगिलमाणे' उद्गीर्य प्रत्यवगिलन् यदि त सपानं सभोजनमुद्गारं मुखाद्बहिर्न निःसारयति किन्तु पुनः तदुद्गारस्थ जलं भोजनं च गलादधः कुर्वन् स 'राइभोयणपडिसेवणपत्ते' रात्रिभोजनप्रतिसेवनाप्राप्तः रात्रिभोजनजनितदोष-युक्तो भवति अतो यदि 'जो तं पच्चोगिलइ पच्चोगिलंतं वा साइज्जइ' यः कोऽपि श्रमण. श्रमणी वा तदुद्गारस्थ जलं भोजनं प्रत्यवगिलति गलादधः करोति तथा प्रत्यवगिलन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवतीति ॥ सू ३६॥

## सूत्रम्—जे भिक्खू गिलाणं सोच्चा णच्चा ण गवेसइ ण गवे-संतं वा साइज्जइ ॥ सू०३७॥

छाया—यो भिक्षुः ग्लानं श्रुत्वा ज्ञात्वा न गवेषयति न गवेषयन्त वा स्वदते ॥सू.३७॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य, कश्चिद् भिक्षु श्रमण. श्रमणी वा 'गिलाणं' ग्लानम् तत्र यस्य रोगेण आतङ्केन वा शरीरं क्षीणं भवति शरीरस्य क्षयो वा भवति स ग्लानः, तादृशं ग्लान सरोगातङ्कम् समानसामाचारीकं स्वगच्छीयं वा श्रमण 'सोच्चा' श्रुत्वा अन्यमुखात् 'णच्चा' ज्ञात्वा स्वयमेव वा ज्ञानविषयीकृत्य 'ण गवेसइ' न गवेषयति नान्वेष-यति तथा 'ण गवेसंतं वा साइज्जइ' न गवेषयन्तं वा स्वदते अनुमोदते। यो भिक्षुः स्वग्रामे स्वोपाश्रये परग्रामे परोपाश्रये वा स्वगच्छीय परगच्छीयो वा समानसामाचारीकः अमुकः श्रमणो ग्लानो जात इति परेभ्यः श्रुत्वा स्वयमेव वा ज्ञात्वा तस्य गवेषणं तत्स्थितेर्जिज्ञासारूपं तद्वैयावृ-

स्यरूपं वा न करोति, तथा गवेषणमकुर्वन्तं वा श्रमणमनुमोदते स प्रायश्चित्तभागी भवति। तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्ति अतो ग्लानं श्रमणमवश्यमेव गवेषयेत् न तस्योपेक्षा कर्तव्येति भाव'।

अत्राह भाष्यकार —

**भाष्यम्**— सगामे परगामे वा, सोच्चा जाणिय संठियं ।
गिलाण नो गवेसेइ, आणाभंगाइ पावइ ॥

छाया—**स्वग्रामे परग्रामे वा, श्रुत्वा ज्ञात्वा संस्थितम् ।**
**ग्लानं नो गवेषयति, आज्ञाभङ्गादि प्राप्नोति ॥**

**अवचूरिः**— य श्रमण स्वग्रामे-स्ववसतौ अन्यवसतौ वा परग्रामे यत्र स्वय स्थितस्ततोऽन्यग्रामे वा संस्थित ग्लानम् समानसामाचारीकं साधु श्रुत्वा—अमुकत्र साधु रोगातङ्केन दु खी जात इति लोकेभ्य श्रुत्वा स्वयमेव ज्ञात्वा वा तं यदि श्रमण श्रमणी वा नो गवेषयति तस्य रोगातङ्कादिस्थितेर्जिज्ञासा शुश्रूषा च न करोति स श्रमण आज्ञाभङ्गादिकान दोषान् प्राप्नोति। यो हि श्रमण स्वग्रामे स्ववसतौ परवसतौ वा परग्रामे वा ग्लान श्रमणं न गवेषयति न गवेषयन्त वा अनुमोदते स प्रायश्चिभागी भवति। यतो हि रोगातङ्कादिना दु खितो ग्लान आसन्नस्थेन साधुना अगवेषितो मनसि परिताप प्राप्नोति तज्जन्यप्रायश्चित्तस्य स भागी भवतीति भाव ॥ सू० ३७॥

## सूत्रम्—जे भिक्खू गिलाणं सोच्चा णच्चा उम्मग्गं वा पडिपहं वा गच्छइ गच्छंतं वा साइज्जइ ॥सू०३८॥

छाया यो भिक्षुर्ग्लानं श्रुत्वा ज्ञात्वा उन्मार्गं प्रतिपथं वा गच्छति गच्छन्त वा स्वदते वा ॥सू० ३८॥

**चूर्णी**—'जे भिक्खू' इत्यादि। **'जे भिक्खू'** य कश्चिद् भिक्षु श्रमण' श्रमणी वा **'गिलाणं'** ग्लानं रोगातङ्काक्रान्त **'सोच्चा णच्चा'** श्रुत्वा अन्यसकाशात् ज्ञात्वा स्वयमेव वा यदि **'उम्मग्गं वा'** उन्मार्गं वा-ग्लानस्थानमार्गादन्य मार्गं **'पडिपहं वा'** प्रतिपथं वा गच्छति यत्र मार्गे ग्लान स्थितस्ततो विपरीतं पन्थान यथा स यदि पूर्वदिशाया स्थितो भवेत्तदा स्वयं पश्चिमदिशाया गच्छति रोगातङ्कादिना ग्लायमानो यत्र वर्तते तत्र यदि गमिष्यामि तदा तस्य सेवादिकमवश्यकर्तव्यतया समापतेदितिबुद्ध्या यत्र स विद्यते तस्मिन् मार्गे न गच्छति किन्तु तत्प्रतिकूलमार्गेण गमन करोति येन ग्लानस्य वैयावृत्त्य न कर्तव्यं स्यात, तथा **'गच्छंतं वा साइज्जइ'** उन्मार्गे प्रतिपथं वा गच्छन्त श्रमणान्तरं स्वदते अनुमोदते स प्रायश्चित्तभागी

भवति । यतो रोगावस्थायामुपसर्गावस्थायां चक्षुरादीन्द्रियविकलतावस्थायां ग्लानस्य साधोर्विन-यवैयावृत्यादिना सरक्षणकरणमावश्यकम् , अन्यथा रुग्णः साधुर्मनसि दुःखित सन् संयमात् परि-भ्रष्टो भवेत् , तथा असरक्षितावस्थायां तं दृष्ट्वा लोका शासनस्य निन्दां करिष्यन्ति तेन प्रवच-नस्य लघुता स्यात् , तथा अन्यवैराग्यवता गृहस्थानां तस्य ग्लानस्य तादृशीं दुरवस्थां दृष्ट्वा मनसि वैराग्यमपि हीयेत, ते विचारयिष्यन्ति यत् किमनया प्रव्रज्यया यत्त्रैतादृशं दुःख भवति, न कोऽपि वैयावृत्त्यं करोतीति विनयमार्गोऽपि लुप्येत तस्मात् कारणात् श्रमणः ग्लानं साधु श्रुत्वा ज्ञात्वा कथमपि नोन्मार्गे न वा प्रतिपथं गच्छेत , न वा प्रतिपथं गच्छन्तमनुमोदयेत् किन्तु ग्लानस्य वैयावृत्यमवश्यमेव कर्तव्यमिति ।

अत्राह भाष्यकार.—

भाष्यम्—सोच्चा गिलाणं उम्मग्गं, गच्छे पडिपहं जइ ।
जो समणो पावई सो, आणाभंगाइयं तया ॥

छाया— श्रुत्वा ग्लानमुन्मार्गे गच्छेत् प्रतिपथं यदि ।
यः श्रमण प्राप्नोति स आज्ञाभङ्गादिकं तदा ॥

अवचूरिः—यस्तु श्रमणो भिक्षु ग्लानं रोगातङ्केन प्रक्षीयमाणदेहम् श्रमणं श्रुत्वा उन्मार्गं प्रतिपथं वा गच्छेत् , यत्र ग्लान साधुर्विद्यते तत्र न गच्छति किन्तु उन्मार्गेण विपरीतमार्गेण याति, तत्राटव्यादिमार्गेण गमनम् उन्मार्गगमनम् , विपरीतमार्गेण गमनं प्रतिपथगमनम् , एवं गमनं करोति, यथा येन पथा आगत तेनैव पथा प्रतिनिवर्तते तस्माद्वा मार्गात् मार्गान्तरेण संक्रामति, एवं कुर्वन् श्रमण. प्रायश्चित्तभागी भवतीति । कथं पुनरेव स उन्मार्गादिना गच्छति ग्लानसमीपं नाग-च्छति ? तत्रोच्यते—ग्लान साधु श्रुत्वा स मनसि एवं विचारयति—यद्यहं ग्लानेन दृष्ट तदा यदि ग्लानस्य वैयावृत्य न करिष्यामि तदा अधार्मिकोऽयमिति लोको मां गणयिष्यति, अथवा यदि तस्य ग्लानस्य वैयावृत्यं करिष्यामि तदा तत्रैव व्यापृतस्य मे सर्वं स्वकीयं कार्यं विनष्ट भविष्यतीत्यादि कारणवशात्स तत्र न गच्छतीति । तथा ग्लानो यत् दुःख प्राप्नोति तन्निष्पन्नमपि प्रायश्चित्तं तस्य भवति । तस्मात् श्रुत्वा ग्लानं मार्गे वा गच्छता ग्राम वा प्रविशता भिक्षार्थं वा अटता साधुना तत्क्षणादेव त्वरितं ग्लानसमीपे गन्तव्यमिति । यथा भ्रमर कुसुमिताम्रवण दृष्ट्वा वनान्तरं विहाय तं प्रति शीघ्रं गच्छति, एव साधुना धर्मवृक्षाश्रयणार्थं वैयावृत्यकरणाय तत्रावश्यं गन्तव्यमेव, एवं करणेन साधर्मिकवात्सल्यं कृत भवेत् , तथा स्वस्य कर्मनिर्जरा च सपद्येत तस्मात् यो ग्लान-समीपे तदुपचारार्थं गच्छति स शुद्धः, यस्तु न गच्छति तस्य प्रायश्चित्तं भवति । तत्रायं पृच्छा-क्रम , तथाहि-यत्र ग्रामे उपाश्रये वा ग्लानस्तिष्ठति तत्र गत्वा प्रष्टव्यम्—कोऽत्र ग्लानमुपचरति, अथवा अस्य किमुपचरितमिति प्रष्टव्यम् । साधूनामियं मर्यादा यत् ग्लानस्यानुवर्तनं कर्तव्यमिति,

एवं तत्र ग्लानसमीपं गत्वा तत्रत्यो य आचार्यस्तं प्रति वदेत्—हे भदन्त ! आज्ञापय किमहं करोमि वैयावृत्ये स्वात्मानं नियोजयामि अहमनेनैवाभिप्रायेणागतोऽस्मि यद् ग्लानं परिचरिष्यामि, ग्लानस्य वैयावृत्ये ये संलग्नाः साधवस्तान् भक्तपानादिभिर्वैयावृत्यं करिष्यामीति । एवं कुर्वतः श्रमणस्य तीर्थंकराज्ञाया आराधना कृता भवति । एवं कथिते यदि आचार्यः कथयति–यत् अमुकं कार्यं कुरु, तदा तत्रत्यं सर्वं कार्यमाचार्याज्ञया कर्तव्यम् । औषधभक्तपानादिना वैयावृत्यं कर्तव्यं यावत् स साधुर्नीरुजो भवेत् । तस्मात् साधुना अवश्यमेव ग्लानस्य समीपे गन्तव्यम् । यस्तु श्रमणो ग्लानं श्रुत्वा तत्र झटिति न गच्छति उन्मार्गेण प्रतिपथेन वा गच्छति स तीर्थकरस्याज्ञाया विराधको भवन् प्रायश्चित्तभागी भवतीति ॥३८॥

**सूत्रम्—जे भिक्खू गिलाणवेयावच्चे अब्भुट्ठिए गिलाणपाउग्गे दव्वजाए अलभमाणे जो तं ण पडियाइक्खइ ण पडियाइक्खंतं वा साइज्जइ ॥ सू० ३९॥**

**छाया—यो भिक्षुर्ग्लानवैयावृत्ये अभ्युत्थितो ग्लानप्रायोग्यं द्रव्यजातमलभमानो यस्तं न प्रत्याचक्षते न प्रत्याचक्षाणं वा स्वदते ॥सू० ३९॥**

**चूर्णी—**'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चित् भिक्षुः श्रमणः श्रमणी वा **'गिलाणवेयावच्चे'** ग्लानवैयावृत्ये, तत्र रोगातङ्कादिना ग्लानस्य साधोः वैयावृत्यं औषधभैषज्यान्नपानादिना सेवाकरणे **'अब्भुट्ठिए'** अभ्युत्थितः समुद्यतः सेवाकरणार्थं कृतप्रयत्नो जातो यदि **'गिलाणपाउग्गे'** ग्लानप्रायोग्यम् ग्लानस्य प्रायोग्यमनुकूलं प्रासुकमाहारमौषधादिकं वा **'दव्वजाए'** द्रव्यजातम्—तदनुकूलवस्तुविशेषम् **'अलभमाणे'** अलभमानः अप्राप्नुवन् **'जो तं ण पडियाइक्खइ'** यो ग्लानसेवाकारकः साधुः ग्लानसाधर्म्यमौषधमशनादिकं च आनेतुं कृतप्रयत्नोऽपि तादृशद्रव्यजातम् अन्तरायबलादलभमानो यदि श्रमणान्तरं प्रति आचार्यं प्रति वा रोगिणं प्रति वा न प्रत्याचक्षते न कथयति तथा **'ण पडियाइक्खंतं वा साइज्जइ'** न प्रत्याचक्षाणं वा स्वदते अनुमोदते । यो हि भिक्षुर्ग्लानस्य श्रमणस्य वैयावृत्ये नियुक्तो ग्लानस्य प्रायोग्यं औषधभैषज्यान्नपानादिकमानेतुं प्रयत्नं करोति तत्र यदि तादृशं प्रासुकमौषधादिकं तेन न लब्धम् तदा आगत्याचार्यं प्रति अन्यस्मै साधवे वा ग्लानाय वा कथयितव्यं यत् औषधादिकं लाभान्तरायकर्मणा मया न लब्धमिति । एवं न कथयति स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्तीति ।

अत्राह भाष्यकारः—

**भाष्यम्—**वेयावच्चे गिलाणस्स, वावडो समणो जइ ।
दव्वजायं अलब्भंतो, गुरुणो तं निवेयए ॥

छाया — वैयावृत्ये ग्लानस्य व्यापृतः श्रमणो यदि ।
द्रव्यजातमलभमानो गुरवे तं निवेदयेत् ॥

अवचूरिः — श्रमणो भिक्षुः ग्लानस्य रोगातङ्कादिना पीड्यमानदेहस्य वैयावृत्ये सेवाकर्मणि नियुक्तः ग्लानार्थं द्रव्यादिजातम् प्रासुकमौषधं भक्तं पानं वा अन्वेषयन् तं यदि न लभते तदा प्रत्यागत्य 'ग्लानार्थं प्रासुकमौषधादिकं नाहं लब्धवा'—नित्येवप्रकारेण गुरवे आचार्याय गच्छनायकाय ग्लानाय अन्यस्मै साधवे वा अवश्यमेव कथयेत् । यदि कदाचित् स पुनरागतो न कथयति तदा तस्य प्रायश्चित्त भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्ति । तत्र द्रव्यजातपदेन प्रासुकं भक्तपानादिकम्, तथा रोगिणे यादृशमुपयुक्तमौषधादिकं भवति तादृशमौषधादिकम्, पथ्यं भोजनम्, संस्तारकवस्त्रादिकं च गृह्यते । यदि प्रत्यागत साधुर्न कथयति तत्रेमे दोषा भवन्ति तद्यथा—अमुकेन औषधेन तस्य ग्लानस्य रोगनिवृत्तिर्भविष्यति परन्तु तेन नानीतं न वा कथितम्, यदि कथितं भवेत् तदा अन्य कोऽपि श्रमण तदर्थं प्रयत्नं कुर्यात् । तदकरणात् ग्लानस्यागाढपरितापो भवेत्, महद्दुःख जायेत, ग्लानस्य मूर्छापि भवेत्, एवं कदाचित् प्राणवियोगोऽपि सभवेत्, यस्मादेते दोषा संभवन्ति तस्मात् कारणात् ग्लानस्य वैयावृत्ये नियुक्तो भिक्षुर्यदि ग्लानार्थमौषधादिकं न प्राप्नोति तदा अवश्यमेवागत्य गुरवे श्रमणान्तराय वा निवेदनीयं, नतु तत्रालस्यं कर्तव्यमिति ॥सू० ३९॥

## सूत्रम्—जे भिक्खू गिलाणवेयावच्चे अब्भुट्ठिए सएण लाभेण असंथरमाणे जो तस्स न पडितप्पइ न पडितप्पंतं वा साइज्जइ ॥ सू०४०॥

छाया—यो भिक्षुर्ग्लानवैयावृत्ये अभ्युत्थितः स्वकेन लाभेनासंस्तरन् यः तस्य न परितप्यते न परितप्यमानं वा स्वदते ॥सू० ४०॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'गिलाणवेयावच्चे' ग्लानवैयावृत्ये, तत्र ग्लानस्य रोगातङ्कादिना पीडितस्य श्रमणस्य वैयावृत्ये सेवाकर्मणि 'अब्भुट्ठिए' अभ्युत्थित समुद्यतः, तेन वन्दनादिकार्यवशाद् वेलातिक्रमेऽल्पं लब्धं भवेत्, तादृशेन 'सएण लाभेण' स्वकेन स्वकृतोद्यमजनितेन लाभेन 'असंथरमाणे' असंस्तरन् पर्याप्ततामलभमानः एतावताऽल्पेन वस्तुजातेन प्राप्तेन ग्लानस्य किं भविष्यतीत्येवं पर्याप्तमप्राप्नुवन् 'जो तस्स न पडितप्पइ' यस्तस्य तद्विषयस्य ग्लानविषयस्य वा न परितप्यते उपसर्गबलादत्र पश्चात्तापार्थो गृह्यते, पश्चात्तापं न करोति 'ण पडितप्पतं वा साइज्जइ' न परितप्यमानं वा पश्चात्तापमकुर्वन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ।

ग्लानस्य वैयावृत्यकरणे कीदृशः साधुर्नियोक्तव्यः ? एवंविधे प्रश्ने भाष्यकारः प्राह—

भाष्यम्—खंतिखमो मद्दविओ, असढोऽचवलो य लद्धिसंपण्णो।
दक्खा अनिद्द सुभरो, हिययग्गाही अपरितंतो ॥१॥
सुत्तत्थअपडिबद्धो, निज्जरपेही जिइंदिओ दंतो।
कोऊहलविप्पमुक्को, अणाणुकारी सउच्छाहो ॥२॥
उस्सग्गववायविऊ, सद्दहगो एरिसो य जो होइ।
आउरवेयावच्चे, निउंजए त च आयरिओ ॥३॥

छाया—क्षान्तिक्षम मार्दविक अशठ अचपलश्च लब्धिसंपन्नः।
दक्षः अनिद्रः सुभर हृदयग्राही च अपरितान्तः॥१॥
सूत्रार्थाप्रतिबद्ध निर्जराप्रेक्षी जितेन्द्रियः दान्तः।
कौतूहलविप्रमुक्तः अननुकारी सोत्साहः।
उत्सर्गापवादवित् श्रद्धक ईदृशश्च यो भवति।
आतुरवैयावृत्ये नियोजयेत् त च आचार्यः ॥३॥

अवचूरिः - 'खंतिखमो' क्षान्तिक्षम क्षान्त्या क्षमया क्षमते महते न तु असमर्थतया यः स क्षान्तिक्षमः, एतादृश क्षान्तिक्षमं श्रमण ग्लानस्य वैयावृत्ये नियोजयेत् इत्यग्रेण सम्बन्धः, तथा मार्दविकः, तत्र माननिग्रहकारी मार्दविक मृदुतागुणसम्पन्न, तथा अशठः, तत्र मायाशीलः शठः न शठोऽशठः मायानिग्रहकारी सरलचित्त इत्यर्थ, अचपलः—चाञ्चल्यरहित, तथा लब्धिसम्पन्नः—आहारादिगवेषण विलक्षणशक्तिसम्पन्न, लब्धि—लभ्यवस्तुन परिश्रममन्तरेण लाभः, तादृशशक्तिसम्पन्न इत्यर्थ, तथा दक्षः—ग्लानस्य कार्यकरणे चतुर, तथा अनिद्रः—आलस्यरहितः, सुभरः—सु—सुष्ठुतया भरति पोषयति अल्पेन बहुकेन वा समयोचितेन आहारादिना ग्लानस्य पोषणं करोति य स तथा, अथवा आत्मना अन्यद्वारा वा ग्लानस्य कार्यसाधक, तथा हृदयग्राही—तत्र य ग्लानस्य चित्तरञ्जक, तेन सह हृदयगमवार्त्तानुमोदनपूर्वकमपथ्यनिवारको यः स हृदयग्राही, अपरितान्तः—सुचिरकालमपि ग्लानस्य वैयावृत्य कुर्वन् उद्विग्नो न भवति यः स तथा ॥१॥ तथा सूत्रार्थाऽप्रतिबद्धः—सूत्रार्थे प्रतिबन्धरहित सम्यक्सूत्रार्थज्ञाता गृहीतसूत्रार्थ इत्यर्थ, तथा निर्जराप्रेक्षी—कर्मनिर्जरार्थी निर्जरार्थमेव वैयावृत्यकारी, जितेन्द्रियः—यो हि इष्टानिष्टविषये रागद्वेष न प्राप्नोति स जितेन्द्रिय', दान्तः—इच्छाया मनसश्च दमनकर्त्ता, कौतूहलविप्रमुक्तः—यस्मिन् कस्मिन् विषये कौतुकवर्जित', अननुकारी—अनु-पश्चात् न कारयतीति अननुकारी 'अहमस्य वैयावृत्य करोमि अतोऽयमपि अनु—पश्चात् मम वैयावृत्य करिष्यती'—ति अनुकरणवर्जित कृतप्रतिकृतिवाञ्छारहित इत्यर्थः, तथा सोत्साहः—वैयावृत्ये उत्साहशीलः,

न कदापि मनोमालिन्यं करोति य. स ॥२॥ तथा-**उत्सर्गापवादवित्** -यथासमयमुत्सर्गमार्गस्यापवादमार्गस्य च सम्यग् ज्ञाता, ग्लानकार्ये कदा कस्मिन् विषये उत्सर्गमार्गः, कदा कस्मिन् विषये चापवादमार्ग स्वीकरणीय, इत्यस्य सम्यक्तया ज्ञानवान्, **श्रद्धकः**-ग्लाने श्रद्धाशील., एतादृश· पूर्वोक्तगुणविशिष्टो यो भवति तम् आचार्य. आतुरवैयावृत्त्ये ग्लानसेवायां नियोजयेत् स्थापयेत् ॥३॥ इति भाष्यगाथात्रयार्थ ॥ सू० ४०॥

## सूत्रम्—जे भिक्खू पढमपाउसंसि गामाणुगामं दूइज्जइ दूइज्जंतं वा साइज्जइ ॥ सू० ४१॥

छाया--यो भिक्षु प्रथमप्रावृषि ग्रामानुग्राम द्रवति द्रवन्तं वा स्वदते ॥सू० १४॥

चूर्णी--'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु. श्रमण. श्रमणी वा '**पढमपाउसंसि**' प्रथमप्रावृषि, तत्र प्रावृट्शब्देन आषाढ-श्रावणमासौ गृह्येते तत्र तयो र्मासयोर्द्वयोर्मध्ये प्रथम प्रावृट्काल आषाढमास', तस्मिन् प्रथमे प्रावृट्काले आषाढमासे अथवा षण्णामपि ऋतूनां मध्ये प्रथम प्रावृट्कालो भवति तेन कारणेन प्रथम प्रावृट्काल कथ्यते, तत्र प्रथमप्रावृट्काले य श्रमण '**गामाणुगामं दूइज्जइ**' ग्रामानुग्रामं द्रवति एकस्मात् ग्रामात् ग्रामान्तरं प्रति गच्छति तथा '**दूइज्जंतं वा साइज्जइ**' ग्रामानुग्राम द्रवन्तं गच्छन्त यथा शिशिरहेमन्तादिमध्ये ग्रामानुग्रामं प्रति द्रवति तथा प्रथमप्रावृट्काले य द्रवति तमनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ४१॥

## सूत्रम्—जे भिक्खू वासावासं पज्जोसवियंसि गामाणुगामं दूइज्जइ दूइज्जंतं वा साइज्जइ ॥ सू० ४२॥

छाया—यो भिक्षुर्वर्षावासं पर्युषिते ग्रामानुग्रामं द्रवति द्रवन्तं वा स्वदते ॥सू०४२॥

चूर्णी—'जे भिक्खू' इत्याद । 'जे भिक्खू' यः कश्चिद् भिक्षु श्रमणः श्रमणी वा '**वासावास पज्जोसवियंसि**' वर्षावास पर्युषिते सति वर्षावासनिवासकरणानन्तर आषाढ-शुक्लपौर्णमास्या. प्रतिक्रमणे कृत सतीत्यर्थ. '**गामाणुगामं दूइज्जइ**' ग्रामानुग्रामम् एकस्मात् ग्रामात् ग्रामान्तर प्रति द्रवति गच्छति विहारं करोतीत्यर्थः तथा '**दूइज्जत वा साइज्जइ**' द्रवन्त वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति संयमात्मविराधनासद्भावात् । विशेषजिज्ञासुजनार्थं भाष्यकारोऽतिदेशमाह —

**भाष्यम्**—आयारस्स य बीए, सुयखंधे तस्स तइय अज्झयणे ।
तस्सवि पढमुद्देसे, तत्थ वि पुण आदिसुत्ते य ॥१॥
इरियाए जं भणियं, दसमुद्देसंमि तं निरवसेसं ।
वासावासविहारे, एत्थ निसीहे मुणेयव्व ॥२॥

छाया – आचारस्य च द्वितीये श्रुतस्कन्धे तस्य तृतीयेऽध्ययने ।
तस्यापि प्रथमोद्देशे, तत्रापि पुनरादिसूत्रे च ॥१॥
ईर्यायां (ईर्याध्ययने) यद् भणितं, दशमोद्देशे तत् निरवशेषम् ।
वर्षावासविहारे, अत्र निशीथे ज्ञातव्यम् ॥२॥

**अवचूरिः** आचाराङ्गसूत्रस्य द्वितीयश्रुतस्कन्धे तदधिकृत्य तृतीयाध्ययने आदितो द्वादशाध्ययने तत्रापि प्रथमोद्देशके तत्रापि आदिसूत्रे ईर्यायामिति ईर्याध्ययने यत्कथितं तन्निरवशेषं वर्षावासविषये अत्र निशीथसूत्रे दशमोद्देशे ज्ञातव्यम् । तत्राचाराङ्गसूत्रप्रकरणं यथा– "अब्भुवगए खलु वासावासे अभिप्पवुट्ठे बहवे पाणा अभिसंभूया बहवे बीया अहुणुब्भिण्णा, अंतरा से मग्गा बहुपाणा बहुबीया जाव संताणगा अण्णोक्कंता पंथा, नो विन्नाया मग्गा सेव णच्चा णो गामाणुगामं दूइज्जेज्जा तओ संजयामेव वासावासं उवल्लिएज्जा" । अभ्युपगते खलु वर्षावासे अभिप्रवृष्टे बहवः प्राणा अभिसंभूता, बहूनि बीजानि अधुनोद्भिन्नानि, अन्तरा तस्य मार्गा बहुप्राणा बहुबीजा यावत् संतानकाः अनुक्रान्ताः पन्थानः नो विज्ञाता मार्गा, तदेव ज्ञात्वा नो ग्रामानुग्रामं द्रवेत् । ततः संयत एव वर्षावासं उपलीयेत, इति च्छाया। वर्षाकाले ग्रामानुग्रामविहारे संयमात्मविराधना दर्श्यते–वर्षाकाले समायाते बहवो वनस्पतिकाया प्रादुर्भवन्ति, मार्गाश्च पिच्छला सकर्दमा भवन्ति, तथा मार्गोपरि वनस्पतीनामुत्पादात्तत्र मार्गा अपि सम्यग् न ज्ञायन्ते अतो वर्षाकाले साधुर्न विहारं कुर्यात्, न वा कुर्वन्तमनुमोदयेत् किन्तु एकस्मिन् ग्रामे चातुर्मास्यं निवस्य श्रुतचारित्रलक्षणं धर्मं समाराधयेदिति भावः। (आचाराङ्ग० श्रुत० २ ईर्याख्यमध्ययनम् ३ सूत्रम् १) संयमविराधनमात्मविराधनं च, तत्र संयमविराधनमित्थम्–अक्षुण्णा अमर्दिता जलप्रवहणेन पृथिवी खण्डिता भवति ततश्च पृथिवी सचित्ता भवति तत्र विहारं कुर्वतो वनस्पतिकायिकानां पृथिवीकायिकानां च विराधना भवति, एवं जलं द्विविधं वर्षोदकम् भूम्युदकं च, तत्र चलन् अप्कायिकजीवानामपि विराधनं भवति । तथा वर्षाकाले कुन्थुप्रभृतिका अनेके त्रसा जीवा प्रादुर्भवन्ति इति वर्षाकाले विहारे कृते सति सूक्ष्मत्वाददृश्यमाना एते कुन्थुप्रभृतिका जीवा विराधिता भवन्ति, इत्थं तद्विराधनेन संयमोपघातो भवतीति संयमविराधनम्। आत्मविराधनं चेत्थम्–वर्षाकाले यदि विहारं करोति तदा वृष्ट्या शरीरं प्लावितं स्यात्, एवं वर्षणात् मार्गः पिच्छलो भवति तत्र चलनेन कदाचित् पतनमपि संभवेदिति ततोऽपि आत्मविराधनं भवति, तस्मात् कारणात् चातुर्मासे श्रमणो ग्रामानुग्रामं न विहरेत् न वा विहरन्तमनुमोदयेत् ॥सू० ४२॥

सूत्रम्—जे भिक्खू अपज्जोसवणाए पज्जोसवेइ पज्जोसवेंतं वा साइज्जइ ॥ सू० ४३॥

छाया—यो भिक्षुरपर्युषणायां पर्युषति पर्युषन्तं वा स्वदते ।सू० ४३॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा **'अपज्जोसवणाए'** अपर्युषणायाम् अपर्युषणाकाले, अत्र 'ऊष' उष' इति धातुद्वयम्, तेन **'पर्यूषणा'** **'पर्युषणा'** इति द्वयमपि रूपं सिद्ध्यतीति पर्युषणस्य सांवत्सरिकस्य यः कालः प्रतिनियतः चातुर्मासीप्रतिक्रमणानन्तरं पञ्चाशत्तमे दिवसे संवत्सरीप्रतिक्रमणं कर्त्तव्यम्, इत्येवंरूपः कालः, तस्य कालस्याप्राप्तावेव तदतिक्रमणे वा **'पज्जोसवेइ'** पर्युषति—पर्युषणां करोति कारयति वा सांवत्सरिकम् प्रतिक्रमणं चतुर्थभक्तक्षमापनादिकं च करोति, तथा **'पज्जोसवेंतं वा साइज्जइ'** पर्युषन्तं वा अप्राप्तेऽतिक्रान्ते वा पर्युषणाकाले सावत्सरिकप्रतिक्रमणं पर्युषणामूलकतपःप्रभृतिकं वा कुर्वन्तं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तस्याज्ञाभङ्गादिका दोषा भवन्तीति ॥सू०४३॥

## सूत्रम्—जे भिक्खू पज्जोसवणाए ण पज्जोसवेइ ण पज्जोसवेंतं वा साइज्जइ ॥ सू० ४४॥

छाया—यो भिक्षुः पर्युषणायां न पर्युषति, न पर्युषन्तं वा स्वदते ।सू० ४४।

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा **'पज्जोसवणाए'** पर्युषणायां पर्युषणकाले चातुर्मासिकप्रतिक्रमणानन्तरं पञ्चाशत्तमदिवसरूपे प्राप्तेऽपि **'ण पज्जोसवेइ'** न पर्युषति शास्त्रोक्तप्रकारेण पर्युषणं न करोति, न वा कारयति तथा **'ण पज्जोसवेंतं वा साइज्जइ'** न पर्युषन्तं वा स्वदते सांवत्सरिककाले प्राप्तेऽपि सांवत्सरिकप्रतिक्रमणं यो न करोति न कारयति वा तमनुमोदते यः स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्ति तस्मात् पर्युषणकाले पर्युषणकृत्यं न परित्यजेत्।

अत्राह भाष्यकार—

भाष्यम्—पत्ते पज्जोसणाकाले, जो न पज्जोसवे मुणी।
अपत्ते वा अईए वा, कुणइ दोसभा भवे ॥

छाया—प्राप्ते पर्युषणाकाले, यो न पर्युषेद् मुनिः।
अप्राप्ते वा अतीते वा, कुरुते दोषभाग् भवेत् ॥

**अवचूरिः**—यः श्रमणः श्रमणी वा पर्युषणाकाले प्राप्ते समुपस्थिते संवत्सरीकाले पर्युषणां सावत्सरिककृत्यं क्षमापनादिकं न कुरुते सांवत्सरीसमये तन्निमित्तकधर्मध्यानादिकं न करोति तथा पर्युषणाकाले अप्राप्ते अनागते अतीते व्यतीते वा चातुर्मासिकप्रतिक्रमणानन्तरं पञ्चाशत्तमदिवसरूपे समये यः सांवत्सरिकप्रयुक्तधर्मध्यानादिकं कुरुते स दोषभाग् भवेत्, तस्य गुरुचातुर्मासिकं प्रायश्चित्तं भवति, तथा तस्य आज्ञाभङ्गानवस्थामिथ्यात्वसंयमविराधनात्म-

विराधनादयो दोषा भवन्ति तस्मात् श्रमण· श्रमणी वा पर्युषणाकाले पर्युषणं कुर्यात्, तथा अप्राप्ते काले अतिक्रान्ते वा पर्युषणाकाले पर्युषणं न कुर्यात् न वा कारयेत् न वा कुर्वन्तं कमप्य नुमोदयेत् । उक्तं च समवायाङ्गसूत्रस्य तृतीयसमवाये–"**समणे भगवं महावीरे वासाणं सवी-सइराइमासे वइक्कंते सत्तरिएहिं राईदिएहिं सेसेहिं वासावासं पज्जोसवेइ**" श्रमणो भग-वान् महावीरो वर्षाणा सविंशतिरात्रिमासे व्यतिक्रान्ते सप्तत्या रात्रिदिवेषु शेषेषु वर्षावासं पर्युषति । वर्षाकालस्य विंशतिरात्रिन्दिवोत्तरे मासात्मककाले व्यतिक्रान्ते सति, तथा सप्तति-रात्रिन्दिवेषु शेषेषु पर्युषणां पर्युपास्ते सांवत्सरिकप्रतिक्रमणं करोति कृतवानिति प्रकरणार्थ, एतावता ज्ञायते यत् उपर्युक्तसमये सांवत्सरिकप्रतिक्रमण कर्तव्य न पूर्वं न वा पश्चात् करणीय· तथाकरणे सूत्रोक्तप्रायश्चित्तप्रसंगात्, इति ॥ सू० ४४॥

**सूत्रम्—जे भिक्खू पज्जोसवणाए गोलोमाइंपि बालाइं उवा-इणावेइ उवाइणावेंतं वा साज्जइ ॥सू० ४५॥**

**छाया—यो भिक्षुः पर्युषणायां गोलोमानपि बालान् उपाददाति उपाददत वा स्वदते ॥सू० ४५॥**

चूर्णी—'**जे भिक्खू**' इत्यादि । '**जे भिक्खू**' य· कश्चिद् भिक्षु श्रमण श्रमणी वा '**पज्जोसवणाए**' पर्युषणाया पर्युषणादिवसे '**गोलोमाइंपि बालाइं**' गोलोमानपि गोलोमप्रमि-तानपि बालान् यावत्प्रमाणकाणि गवां रोमाणि केशा भवन्ति तावत्प्रमाणकान् अपि केशान् मस्तके '**उवाइणावेइ**' उपाददाति स्वीकरोति धारयतीत्यर्थ तथा '**उवाइणावेंत वा साइज्जइ**' उपाददत धारयन्त वा स्वदते अनुमोदते सांवत्सरिकप्रतिक्रमणसमये स्वशिरसि गोकेशप्रमाणा-नपि केशान् न धारयेत् किमुत ततो दीर्घान् केशान् किन्तु तत्समये केशलुञ्चन कृत्वैव तत्समये प्रतिक्रमण कर्तव्यम्, अत्र यो व्यतिक्रम करोति केशलुञ्चनमकृत्वा सांवत्सरिकप्रति क्रमणं करोति कुर्वन्तं वा अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि जायन्ते इति ।

अत्राह भाष्यकार·—

**भाष्यम** पज्जोसवणाकाले, गोलोमप्पमाणमेत्तकेसेवि ।
जे भिक्खु जइ ठावइ, आणाभंगाइ पावेइ ॥

**छाया** पर्युषणाकाले गोलोमप्रमाणमात्रकेशानपि ।
यो भिक्षुर्यदि स्थापयति आज्ञाभङ्गादि प्राप्नोति ॥

**अवचूरिः**—यो भिक्षु श्रमण श्रमणी वा पर्युषणाकाले सांवत्सरिकप्रतिक्रमणसमये मस्तकादिगतान् केशान् गोलोमप्रमाणमात्रानपि गवा केशप्रमाणकानपि अपि–शब्दात् किमुत

ततो दीर्घान् गोलोमप्रमाणमात्रादधिकान् स्थापयति मस्तकोपरि धारयति केशलुञ्चनं न करोति स भिक्षुः आज्ञाभङ्गादिकान् दोषान् आज्ञाभङ्गानवस्थामिथ्यात्वसयमविराधनात्मविराधनादोषान् प्राप्नोति, तथा सकेशमस्तकोपरि कदाचित् जलादिपतने अपूकायिकजीवानां विराधनेन संयमविनाश, तथा प्रवृद्धकेशेषु यूकालिक्षादयोऽपि संमूर्छिता सन्तो विराधिता भवेयुः इति शिरस खर्जने यूकालिक्षादीना विनाशेन सयमविनाश, तथा अतिशयेन कण्डूयने कदाचिदात्मविराधनमपि सभवेत तस्मात् कारणात साधुः वर्षाकाले पर्युषणायामवश्यमेव केशान् लुञ्चयेत्, पर्युषणां नैवातिक्रामेत् । यदि तरुणो बलवान् भवेत तदा उत्कर्षतश्चतुर्मासानन्तरमवश्यमेव केशलुञ्चनं कुर्यात्, स्थविरस्याप्येवमेव उत्कर्षत षण्मासानन्तरमिति ॥सू० ४५॥

## सूत्रम्—जे भिक्खू पज्जोसवणाए इत्तरियंपि आहारमाहारेइ आहारेंतं वा साइज्जइ ॥सू० ४६॥

**छाया—यो भिक्षु पर्युषणायामित्वरिकमपि आहारमाहरति आहरन्तं वा स्वदते ॥**

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा **'पज्जोसवणाए'** पर्युषणाया सांवत्सरिकप्रतिक्रमणदिवसे भाद्रपदशुक्लपञ्चम्याम् **'इत्तरियंपि'** इत्वरिकमपि अल्पमपि **'आहार'** आहारम् अशनपानखादिमस्वादिमरूप चतुर्विधाहारमध्यात् यत् किमप्येकमल्पप्रमाणकमपि आहारजातम सिक्थमात्रमपि, जलस्य बिन्दुमात्रमपि **'आहारेइ'** आहरति—आहारस्योपभोगं करोति कारयति वा तथा **'आहारेंतं वा साइज्जइ'** आहरन्त—पर्युषणादिवसे अल्पप्रमाणमपि अशनादिकमुपभुञ्जानं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकार —

**भाष्यम्—इत्तरियंपि य असणं, पज्जोसवणाए आहरे जो उ।**
**सो पावइ पच्छित्तं, आणाभंगाइदोसे य ॥**

**छाया—इत्वरिकमप्यशन पर्युषणाया आहरेद् यस्तु।**
**स प्राप्नोति प्रायश्चित्तमाज्ञाभङ्गादिदोषांश्च ॥**

**अवचूरिः**—यो भिक्षुः श्रमण श्रमणी वा पर्युषणाया सांवत्सरिकप्रतिक्रमणदिवसे इत्वरिकमपि, तत्र इत्वरं—स्तोकमल्पमपि अशन चतुर्विधमाहार आहरति स भिक्षु प्रायश्चित्तं प्राप्नोति, तथा आज्ञाभङ्गादिदोषांश्च प्राप्नोति लभते चातुर्मासिक गुरुप्रायश्चित्तमपि तस्य भवतीति तस्मात् कारणात् श्रमण श्रमणी वा सांवत्सरिकप्रतिक्रमणदिवसे स्तोकमप्याहारं न स्वयमाहरेत् न वा परानाहारयेत् न वा आहरन्तमनुमोदयेत किन्तु या सामाचारी साधूना ताम् अवलम्ब्यैव धर्मध्यानादिकं कुर्यादिति ॥सू० ४६॥

**सूत्रम्—जे भिक्खू अण्णउत्थिएण वा गारत्थिएण वा पज्जोसवेइ पज्जोसवेंतं वा साइज्जइ ॥ सू० ४७॥**

**छाया—**यो भिक्षुरन्ययूथिकेन वा गृहस्थेन वा पर्युषयति पर्युषयन्त वा स्वदते ॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा **'अण्णउत्थिएण वा'** अन्ययूथिकेन-परतीर्थिकेन **'गारत्थिएण वा'** गृहस्थेन वा सह स्थित्वा **'पज्जोसवेइ'** पर्युषयति सांवत्सरिकप्रतिक्रमणं करोति कारयति **'पज्जोसवेंतं वा साइज्जइ'** पर्युषयन्तं वा स्वदते अन्यतीर्थिकैर्गृहस्थैश्च सह पर्युषणाप्रतिक्रमणं कुर्वन्तं कारयन्तमनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ४७॥

**सूत्रम्—जे भिक्खू पढमसमोसरणुद्देसे पत्ताइं वा चीवराइं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० ४८॥**

**छाया—**यो भिक्षुः प्रथमसमवसरणोद्देशे पात्राणि वा चीवराणि वा प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० ४८॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा **'पढमसमोसरणुद्देसे'** प्रथमसमवसरणोद्देशे प्राथमिकसमवसरणमध्ये इत्यर्थः, तत्र समवसरणं त्रिविधं वर्षाकालिकं हेमन्तकालिकं ग्रीष्मकालिकं च, तत्र वर्षाकालिकसमवसरणे चातुर्मास्ये **'पत्ताइं'** पात्राणि **'चीवराइं'** चीवराणि वस्त्राणि **'पडिग्गाहेइ'** प्रतिगृह्णाति स्वीकरोति तथा **'पडिग्गाहेंतं वा साइज्जइ'** प्रतिगृह्णन्तं वर्षाकालिकप्रतिक्रमणानन्तरं यो भिक्षुः गृहस्थेभ्यो वस्त्रपात्रादिकं स्वीकरोति तथा स्वीकुर्वन्तं वा अनुमोदते स प्रायश्चित्तभागी भवति, परन्तु वस्त्रपात्रसहितशिष्यग्रहणं तु कल्पते एवेति सूत्रार्थः ।

अत्राह भाष्यकारः-

**भाष्यम्** आईमि समोसरणे, वत्थं पायं व जो पडिग्गाहे ।
सो पावज्जा णियय आणा-अणवत्थ मिच्छत्तं ॥

**छाया** आद्ये समवसरणे वस्त्रं पात्रं च यः प्रतिगृह्णीयात् ।
स प्राप्नुयान्नियत आज्ञानवस्थामिथ्यात्वम् ॥

**अवचूरिः** यो भिक्षुः श्रमणः श्रमणी वा आद्ये प्रथमे समवसरणे वर्षाकालिकप्रतिक्रमणानन्तरं चातुर्मासे प्रारब्धे सति तथा चतुर्मासमाप्ते पूर्वं वस्त्रं पात्रं साधूनां योग्यम् प्रतिगृह्णीयात् स्वीकुर्यात् तथा स्वीकुर्वन्तमनुमोदते स नियतं निश्चितं आज्ञाभङ्गदोषं प्राप्नुयात् तीर्थकरस्याज्ञामतिक्रामतीत्यर्थः तथा अनवस्थादोषं मिथ्यात्वं च प्राप्नुयात् लोके मिथ्यात्वं जनयति यथा वदति तथा न करोति इति साधुत्वविराधनं संयमात्मविराधनं च प्राप्नुयात् ॥सू० ४८॥

सूत्रम्--तं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥ सू० ४९॥

॥ णिसीहज्झयणे दसमो उद्देसो समत्तो ॥ १०॥

छाया - तत् सेवमान आपद्यते चातुर्मासिक परिहारस्थानमनुद्घातिकम् ॥सू० ४९॥

॥ इति निशीथाध्ययने दशमोद्देशकः समाप्तः ॥१०॥

चूर्णी - 'तं सेवमाणे' इत्यादि । 'तं' तत् उद्देशकस्यादित आचार्यस्याऽऽगाढवचनादारभ्य दशमोद्देशकस्य चरमभागे 'पढमसमोसरणोद्देसे' इति सूत्रपर्यन्त कथितम् वर्षाकालस्य प्रतिक्रमणानन्तर वस्त्रपात्रादिग्रहणान्त प्रायश्चित्तस्थानं 'सेवमाणे' सेवमान तन्मध्याद् एकस्य सर्वस्य वा प्रायश्चित्तस्थानस्य प्रतिसेवना कुर्वन् श्रमण श्रमणी वा 'आवज्जइ' आपद्यते प्राप्नोति 'चाउम्मासिय परिहारट्ठाण अणुग्घाइयं' चातुर्मासिक परिहारस्थानमनुद्घातिकं गुरुकं गुरु-चातुर्मासिकं प्रायश्चित्त लभते इति । अयं भाव दशमोद्देशकोक्तप्रायश्चित्तस्थानेषु मध्यात् यत् किमप्येकं सर्वं वा दोषस्थानमासेवमानस्य गुरुचातुर्मासिक प्रायश्चित्त भवतीति ॥सू० ४९॥

इति श्री--विश्वविख्यात--जगद्वल्लभ--प्रसिद्धवाचक--पञ्चदशभाषाकलितललितकलापालापक--प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक--वादिमानमर्दक--श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-"जैनशास्त्राचार्य"-पदभूषित--कोल्हापुरराजगुरु -बालब्रह्मचारि--जैनाचार्य--जैन-धर्मदिवाकर--पूज्यश्री--घासीलालव्रति--विरचितायां "निशीथसूत्रस्य" चूर्णिभाष्यावचूरिरूपायां व्याख्यायाम् दशमोद्देशक समाप्त. ॥१०॥



## ॥ एकादशोद्देशकः ॥

व्याख्यातो दशमोद्देशक, अथैकादशो व्याख्यायते, तत्र–दशमोद्देशकान्तिमसूत्रस्य एकादशोद्देशकस्यादिसूत्रेण सह क सम्बन्ध इति चेदत्राह भाष्यकार —

**भाष्यम्**—दसमांतिमसुत्ते य, निसिद्धो चीवरग्गहो ।
एगारसादसुत्ते उ, पायग्गहो पवुच्चइ ॥१॥

छाया—दशमान्तिमसूत्रे च, निषिद्ध श्चीवरग्रह. ।
एकादशादिसूत्रे तु पात्रग्रह प्रोच्यते ॥१।

**अवचूरिः**—दशमान्तिमसूत्रे तु दशमोद्देशकस्यान्तिमे चरमे सूत्रे चीवरयाचनं चीवरस्य वस्त्रस्य याचन ग्रहणं च निषिद्धम्. अत्र तु एकादशोद्देशकस्यादिसूत्रे प्रथमसूत्रे पात्रस्य लोहादिपात्रस्य निषेध प्रोच्यते–अयमेव सम्बन्ध दशमैकादशोद्देशकसूत्रयोर्भवति तदनेन सम्बन्धेनायातस्यास्य एकादशोद्देशकीयप्रथमसूत्रस्य व्याख्यानं प्रस्तूयते–'जे भिक्खू' इत्यादि ।

**सूत्रम्—जे भिक्खू अयपायाणि वा तंबपायाणि वा तउयपायाणि वा सीसगपायाणि वा कंसपायाणि वा रुप्पपायाणि वा सुवण्णपायाणि वा जायरूवपायाणि वा मणिपायाणि वा कणगपायाणि वा दंतपायाणि वा सिंगपायाणि वा चम्मपायाणि वा चेलपायाणि वा अंकपायाणि वा संखपायाणि वा वइरपायाणि वा करेइ करेतं वा साइज्जइ ॥सू० १॥**

छाया—यो भिक्षुरय पात्राणि वा ताम्रपात्राणि वा त्रपुकपात्राणि वा शीशकपात्राणि वा कांस्यपात्राणि वा रूप्यपात्राणि वा सुवर्णपात्राणि वा जातरूपपात्राणि वा मणिपात्राणि वा कनकपात्राणि वा दन्तपात्राणि वा शृङ्गपात्राणि वा चर्मपात्राणि वा चेलपात्राणि वा अंकपात्राणि वा शङ्खपात्राणि वा वज्रपात्राणि वा करोति कुर्वन्त वा स्वदते ।सू० १।

**चूर्णी**—'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा '**अयपायाणि वा**' अयःपात्राणि, तत्र अयो–लोह' तस्य पात्राणि जलानयनाय भिक्षानयनाय वा एतादृशानि अय पात्राणि करोति इत्यग्रिमेण क्रियापदेनान्वय '**तंबपायाणि वा**' ताम्रपात्राणि वा तत्र ताम्रं प्रसिद्धं, तस्य पात्राणि वा '**तउयपायात्राणि वा**' त्रपुकपात्राणि वा तत्र त्रपु 'रांगा कलै' इति लोकप्रसिद्ध तस्य पात्राणि वा '**सीसगपायाणि वा**' शीशकपात्राणि वा शीशक '**सीसा**' इति प्रसिद्धं, तस्य पात्राणि '**कंसपायाणि वा**' कांस्यपात्राणि वा, तत्र कांस्य 'कांसा' इति लोकप्रसिद्ध, तस्य पात्राणि

वा 'रुप्पपायाणि वा' रूप्यपात्राणि वा, तत्र रूप्यं रजतं तस्य पात्राणि वा 'सुवण्णपायाणि वा' सुवर्णपात्राणि वा 'जायरूवपायाणि वा' जातरूपपात्राणि वा, तत्र जातरूपं सुवर्णविशेष., तस्य पात्राणि वा, 'मणिपायाणि वा' मणिपात्राणि वा तत्र मणि' कर्केतनादि., तस्य पात्राणि वा 'कणग पायाणि वा' कनकपात्राणि वा सुवर्णविशेषस्यपात्राणि वा 'दंतपायाणि वा' दन्तपात्राणि वा हस्तिदन्तादिकस्य पात्राणि वा 'सिंगपायाणि वा' शृङ्गपात्राणि वा, तत्र शृङ्ग खड्गिमृगमहिषादीनां तस्य पात्राणि वा 'चम्मपायाणि वा' चर्मपात्राणि वा, तत्र चर्म मृगादीना, तस्य पात्राणि वा 'चेल-पायाणि वा' चैलपात्राणि वा तत्र चैल कार्पासिक घनीभूतवस्त्रं यस्मिन् जलादिवस्तु स्थापयितु शक्यते, तस्य पात्राणि वा 'अंकपायाणि वा' अङ्कपात्राणि वा स्फटिकपात्राणि वा 'संखपायाणि वा' शङ्खपात्राणि वा तत्र शङ्खो लोकप्रसिद्ध तस्य पात्राणि वा 'वइरपायाणि वा' वज्रपात्राणि वा, तत्र वज्र—हीरक तस्य पात्राणि उपलक्षणात् साम्प्रतकालीनप्लाष्टिकादिपात्राणि, एतेषु लोहादिषु मध्यात् अन्यतमस्यापि पात्राणि य 'करेइ' करोति स्वयमेव निर्माति सपादयति 'करेंतं वा साइज्जइ' एता-दृशपात्राणि कुर्वन्तं श्रमणान्तर स्वदते अनुमोदते । यो हि श्रमण' श्रमणी वा लोहादीना पात्राणि स्वयमेव करोति कुर्वन्त वा अनुमोदते स प्रायश्चित्तभागी भवति ॥सू० १॥

## सूत्रम्—एवं धरेइ धरेंतं वा साइज्जइ ॥सू० २॥

छाया– एव धरति धरन्तं वा स्वदते ॥सू० २॥

चूर्णी—एव पूर्वोक्तप्रकारेण अय. प्रभृतिक पात्राणि यो 'धरेइ' धरति—अन्यकृतानि पार्श्वे स्थापयति 'धरेंतं वा साइज्जइ' धरन्त वा पार्श्वे स्थापयन्तं वा स्वदते अनुमोदते स प्राय-श्चित्तभागी भवति ॥सू० २॥

## सूत्रम्—एवं परिभुंजइ परिभुंजंतं वा साइज्जइ ॥सू० ३॥

छाया -एवं परिभुङ्क्ते परिभुञ्जान वा स्वदते ॥सू० ३॥

चूर्णी—एवं पूर्वोक्तलोहादिपात्राणि परिभुङ्क्ते लोहादिपात्राणामुपभोग करोति परिभु-ञ्जानं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ३॥

## सूत्रम्—जे भिक्खू अयबंधाणि वा जाव वइरबंधाणि वा करेइ करेंतं वा साइज्जइ ॥सू० ४॥

छाया—यो भिक्षुरयोबन्धानि वा यावत् वज्रबन्धानि वा करोति कुर्वन्त वा स्वदते ॥सू० ४॥

चूर्णी—'जे भिक्खू' इत्यादि । अयोबन्धनादारभ्य यावत् वज्रबन्धनानि दवरकरूपाणि करोति कुर्वन्त वा स्वदते अनुमोदते उपलक्षणात् साम्प्रतकालीनप्लाष्टिकादिबन्धननिषेधोऽपि विज्ञेयः ॥सू० ४॥

सूत्रम्—एवं-धरेइ धरेंतं वा साइज्जइ ॥सू० ५॥

छाया—एवं धरति धरन्तं वा स्वदते ॥सू० ५॥

चूर्णी—लौहबन्धनयुक्तपात्राणि वा यावत् अन्येन कृतानि लोहादिबन्धनानि वस्त्रबन्धनानि वस्त्रबन्धनयुक्तपात्राणि वा पार्श्वे धरति स्थापयति धरन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ५॥

सूत्रम्—एवं परिभुंजइ परिभुंजंतं वा साइज्जइ ॥सू० ६॥

छाया—एवं परिभुङ्क्ते परिभुञ्जानं वा स्वदते ॥सू० ६॥

चूर्णी—लोहादिबन्धनाना लोहादिबन्धनयुक्तपात्राणां वा उपभोगं करोति कुर्वन्तं वा स्वदते त्तभागी भवति ॥सू० ६॥

सूत्रम्—जे भिक्खू परं अद्धजोयणमेराओ पायवडियाए गच्छइ गच्छंतं वा साइज्जइ ॥ सू० ७ ॥

छाया यो भिक्षुः परमर्द्धयोजनमर्यादात् पात्रप्रतिज्ञया गच्छति गच्छन्तं वा स्वदते ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'परं' परमधिकम् 'अद्धजोयणमेराओ' अर्द्धयोजनमर्यादात्, तत्र क्रोशचतुष्टयं योजनं भवति तदर्द्धं क्रोशद्वयं, तस्य मर्यादा अवधिः, तथा च क्रोशद्वयप्रमाणादधिकं 'पायवडियाए' पात्रप्रतिज्ञया पात्रग्रहणवाञ्छया उपलक्षणात् वस्त्रपीठफलकादिपद्यादीनां ग्रहणवाञ्छया 'गच्छइ' गच्छति 'गच्छंतं वा साइज्जइ' गच्छन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकारः—

भाष्यम्—परमद्धजोयणाओ, वसमाणो चेव नवसु खेत्तेसु ।
पायं जो य गवेसेइ, आणाभंगाइ पावेइ ॥

छाया परमर्द्धयोजनतो वसन् एव नवसु क्षेत्रेषु ।
पात्रं यश्च गवेषयति, आज्ञाभङ्गादि प्राप्नोति ॥

अवचूरि यः कश्चित् भिक्षुः श्रमणः श्रमणी वा नवसु क्षेत्रेषु ऋतुबद्धकाले अष्टसु क्षेत्रेषु तथा वर्षावासे एकस्मिन् क्षेत्रे मिलित्वा नवसु क्षेत्रेषु वसन् अर्द्धयोजनात् परंपरतः अर्द्धयोजनाद् दूरे यदि पात्रादिकं गवेषयति अन्वेषयति पात्रादीनां याचनार्थं गच्छति स आज्ञाभङ्गादिदोषान् प्राप्नोति, तस्य मर्यादाभङ्गकर्तुः श्रमणस्य श्रमण्याश्च आज्ञाभङ्गादिदोषा भवन्ति, यस्मात्

कारणादेते दोषा तस्मात् कारणात् श्रमण श्रमणी वा अर्द्धयोजनात् परतो गत्वा पात्रादीनां याचन न कुर्यात् न वा याचनं कारयेत् न वा याचमानं श्रमणमनुमोदेत ॥सू० ७॥

**सूत्रम्—जे भिक्खू परं अद्धजोयणमेराओ सपायपहंसि पायं अभिहडं आहट्टु दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ॥**

छाया यो भिक्षु परमर्द्धयोजनमर्यादातः सापायपथि पात्रमभिहृतमाहृत्य दीयमान प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० ८॥

चूर्णी 'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा 'परमद्धजोयणमेराओ' परमर्द्धयोजनमर्यादात 'सपायपहंसि' सापायपथि सविघ्ने मार्गे सति सापाये मार्गे विद्यमाने सति इत्यर्थ तत्रापायो विघ्न तेन सहितो मार्ग चौरश्वापदसजलमहानदी वनस्पतिरूपोऽपायस्तेन सहित तस्मिन तादृशे मार्गे सति कश्चित् श्रावक 'पायं' पात्र यत् 'अभिहडं आहट्टु दिज्जमाणं' अभिहृतमाहृत्य साधुवमतौ आनीय दीयमान तत 'पडिग्गाहेइ' प्रतिगृह्णाति, यदि मार्गे सापायो भवेत तत्र गत्वा साधु पात्रादिकमानेतुं न शक्नोति तदवस्थायां यदि कोऽपि श्रावक ग्रामान्तरात् अर्द्धयोजनादधिकक्षेत्रत आनीय साधोरभिमुखं कश्चित् पात्रादिकं साधवे ददाति तं तादृशं पात्रादिकं साधु प्रतिगृह्णाति तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति इति । अत्र संयमात्मविराधनाऽवश्यम्भाविनी, यथा—साध्वर्थं समुखमानीय पात्रादिग्रहणेऽप्कायहरितकायादिसंमर्दजन्या संयमविराधना, सापायमार्गेणागच्छन् दाता श्वापदादिना घातितो मारितो वा भवेत् तेन तस्य स्वजनादि साधु ताडयेदित्यादिनाऽऽत्मविराधना भवेदतो नैतादृश पात्रादिक साधुर्गृह्णीयादिति भाव ॥सू० ८॥

**सूत्रम्—जे भिक्खू धम्मस्स अवन्नं वयइ वयंतं वा साइज्जइ ॥**

छाया यो भिक्षुर्धर्मस्यावर्णं वदति वदन्त वा स्वदते ॥सू० ९॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा धम्मस्स' धर्मस्य श्रुतचारित्रलक्षणस्य 'अवण्णं' अवर्णम् अवर्णवादम् , तत्र वर्ण प्रशसनं स्तुतिरित्यर्थ न वर्णोऽवर्ण निन्दनं तम् 'वयइ' वदति प्रकाशयति लोकाना पुरत धर्मस्य निन्दा करोति तथा 'वदंतं वा साइज्जइ' वदन्त वा स्वदते अनुमोदते, यो हि श्रमण. श्रमणी वा श्रुतचारित्रलक्षणधर्मस्यावर्णवाद वदति वदन्त वा अनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकार'—

**भाष्यम्** - धम्मो य दुविहो वुत्तो, सुयचारित्तलक्खणो ।
तस्सावण्णो दुहा होइ, तं वए दोसभा भवे ॥१॥

छाया—धर्मश्च द्विविध उक्तः, श्रुतचारित्रलक्षण ।
तस्याऽवर्णो द्विधा भवति, तं वदेत् दोषभाग् भवेत् ॥१॥

**अवचूरिः**—धर्म नरकपातादिदुर्गतिसकाशात धारक, स द्विविधो द्विप्रकारको भवति श्रुतचारित्रभेदात्, तत्र एक श्रुतधर्म अपर खलु चारित्रधर्मश्च, तत्र श्रुतधर्म आगमलक्षण, स पुनर्द्विविध सूत्रे अर्थे च। चारित्रधर्मस्तु श्रमणधर्म, अयं च चारित्रधर्मोऽपि द्विविधो भवति, अगारधर्मः देशतश्चारित्रभावात्, अनगारधर्मश्च, पुनश्चाय प्रत्येक द्विविध-मूलगुणलक्षण उत्तरगुणलक्षणश्च, तस्यैवप्रकारस्य धर्मस्यावर्णवादो द्विधा द्विप्रकारको भवति देशतोऽवर्णवाद. सर्वतोऽवर्णवादश्च। तं तादृशमवर्णवाद यदि श्रमण श्रमणी वा वदेत वदन्तं वा स्वदते स दोषभाग् भवेत्, दोषाश्चआज्ञा भङ्गानवस्थामिथ्यात्वादिकास्तेषा स भाजन भवतीति भाव। यस्मात कारणात् श्रुतचारित्रलक्षणधर्मस्यावर्णवादकरणे पूर्वोक्ता दोषा भवन्ति तस्मात कारणात श्रमण श्रमणी वा धर्मस्यावर्ण न स्वय वदेत न वा वादयेत न वा धर्मस्यावर्ण वदन्त श्रमणान्तरं कथमप्यनुमोदयेत् ॥ सू० ९ ॥

## सूत्रम्—जे भिक्खू अधम्मस्स वण्णं वयइ वयंतं वा साइज्जइ ॥१०॥

छाया—यो भिक्षुरधर्मस्य वर्णं वदति वदन्त वा स्वदते ॥सू० १०॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा **'अधम्मस्स'** अधर्मस्य हिंसादिलक्षणस्य **'वण्णं'** वर्ण-प्रशंसन यश कीर्ति वा 'वयइ' वदति—कथयति लोकाना पुरतो हिंसादिलक्षणधर्मस्य प्रशसा करोति तथा **'वयंतं वा साइज्जइ'** वदन्त वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, अधर्मस्य प्रशसन तदनुमोदनजन्यक्रियादोषसद्भावात् ॥ सू० १०॥

## सूत्रम्—जे भिक्खू अण्णउत्थियस्स वा गारत्थियस्स वा पाए आमज्जेज्ज वा पमज्जेज्ज वा आमज्जंतं वा पमज्जंतं वा साइज्जइ ॥ सू० ११॥

छाया—यो भिक्षुरन्ययूथिकस्य वा गृहस्थस्य वा पादौ आमार्जयेत् वा प्रमार्जयेत् वा आमार्जयन्त वा प्रमार्जयन्तं वा स्वदते ॥सू० ११॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा **'अण्णउत्थियस्स'** अन्ययूथिकस्य अन्यतीर्थिकस्य तापसादे **'गारत्थियस्स वा'** गृहस्थस्य श्रावकादेर्वा **'पाए'** पादौ चरणौ **'आमज्जेज्ज वा'** आमार्जयेद् वा एकवार रजोहरणेन वस्त्रेण वा प्रमार्जन कुर्यात् **'पमज्जेज्ज वा'** प्रमार्जयेत् अनेकवारम् **'आमज्जंतं वा पमज्जंतं वा**

साइज्जइ' आमार्जयन्तमेकवारमेकदिनं वा प्रमार्जयन्तमनेकवारं प्रतिदिनं वा प्रमाजनं कुर्वन्तं श्रमणं स्वदते अनुमोदते। यो हि श्रमणः श्रमणी वा अन्ययूथिकस्य श्रावकादेर्वा चरणयोरेकवार-मनेकवार वा रजोहरणादिना प्रमार्जन करोति तथा प्रमार्जयन्तमनुमोदते स प्रायश्चित्तभागी भवति ।।सू० ११ ।।

सूत्रम्—एवं तइयउद्देसगमो णेयव्वो णवरं अण्णउत्थियस्स वा गारत्थियस्स वा अभिलावो जाव जे भिक्खू गामाणुगामं दूइज्जमाणे अण्णउत्थियस्स वा गारत्थियस्स वा सीसदुवारियं करेइ करेंतं वा साइज्जइ ।।सू० १२-६३।।

छाया - एव तृतीयोद्देशकगमो ज्ञातव्य नवरम् अन्ययूथिकस्य वा गृहस्थस्य वा अभिलापो यावत् यो भिक्षु. ग्रामानुग्रामं द्रवन् अन्ययूथिकस्य वा गृहस्थस्य वा शीर्षद्वारिका करोति कुर्वन्तं वा स्वदते ।।सू० १२-६३।।

चूर्णी—एवमुपर्युक्तप्रकारेण तृतीयोद्देशकस्य गम' प्रकारः स अत्रापि एकादशोद्देशकेऽपि ज्ञातव्य, नवरम्-विशेषोऽय यदत्र 'अन्ययूथिकस्य वा गृहस्थस्य वा' इत्येव प्रकारक अभिलाप सूत्रोच्चारणप्रकारो वक्तव्य, कियत्पर्यन्त तृतीयोद्देशकगमो ज्ञातव्य' ? अत्राह— 'जाव' इत्यादि। 'जाव' यावत्पर्यन्तं शीर्षद्वारिकासूत्रम् पादामर्जनसूत्रादारभ्य त्रिषष्टितम-शीर्षदुवारिकासूत्रपर्यन्तसूत्राणि अत्रापि एकादशोद्देशके वक्तव्यानीति भाव ।।१२-६३।।

सूत्रम्—जे भिक्खू अप्पाणं बीहावेइ बीहावेंतं वा साइज्जइ ।।

छाया—यो भिक्षुरात्मानं भापयति भापयन्त वा स्वदते ।।सू० ६४।।

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु श्रमणः श्रमणी वा 'अप्पाणं' स्वकमेव 'बीहावेइ' भापयति भयार्त करोति 'बीहावेंतं वा साइज्जइ' भापयन्तं वा स्वदतेऽनुमोदवते ।।सू० ६४।।

सूत्रम्—जे भिक्खू परं बीहावेइ बीहावेंतं वा साइज्जइ ।।सू० ६५।।

छाया—यो भिक्षु परं भापयति भापयन्त वा स्वदते ।।सू० ६५।।

चूर्णी—'जे भिक्खू इत्यादि। 'जे भिक्खू' य' कश्चित् भिक्षु श्रमण. श्रमणी वा

'परं' पर स्वस्मादन्यम् 'बीहावेइ' भापयति परस्मै भयं समुत्पादयति तथा 'बीहावेंतं वा साइज्जइ' भापयन्तं भय समुत्पादयन्तमन्य वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकारः—

भाष्यम्— भयं चउव्विहं वुत्तं, दिव्वमाणुसतेरियं ।
आकम्हियं च एक्केक्कं, संतासंतं पुणो दुहा ॥१॥

छाया— भयं चतुर्विधं प्रोक्तं, दिव्यमानुषतैरश्चम् ।
आकस्मिकं च एकैकं सदसत् पुनर्द्विधा ॥१॥

अवचूरिः—भयं चतुर्विध चतुःप्रकारकं भवति तथाहि—दिव्यं—देवसम्बन्धि, मानुषं मनुष्यसम्बन्धि, तैरश्चं—तिर्यकूसम्बन्धि, तत्र पिशाचादिव्यन्तरजनित भय दिव्यम्, स्तेनादिभिर्जायमानं भयं मानुषं, तथा पृथिव्यप्तेजोवायुवनस्पतिसिंहादिभ्यो जायमानं भय तैरश्चम्, तथा चतुर्थं भयमाकस्मिकं निर्हेतुकम् । एकैकं भय पुनरपि द्विप्रकारकं भवति सत्—विद्यमानम्, असत्—अविद्यमानं, भयं द्विविधं सद्रूपेण असद्रूपेण च, तत्र पिशाचस्तेनजलादिसिंहादिकेषु समुपस्थितेषु दृष्टेषु च यद् भय समुत्पद्यते तत्सद्रूपं भयम्, यद् एतेपु अदृष्टेष्वपि भय जायते तत् असद्रूपं भयम् । आकस्मिकम्—अकस्माद् भयम् आत्मसमुत्थ मोहनीयभयप्रकृत्युदयात् यद् अविद्यमानं सत् समुत्पद्यते तदाकस्मिकं भयम्, इदं भयकारणसकल्पिताभिप्रायोत्पन्नं भवतीति । अत्र शिष्य प्राह—भो गुरो ! शास्त्रे तु इहलोकादिकं सप्तविधं भय कथितं, तद्यथा—इहलोकभयम् १, परलोकभयम् २, आदानभयम् ३, आजीविकाभयम् ४, अकस्माद्भयम् ५, मरणभयम् ६, अश्लोकभय चेति । तत्कथमत्र चतुर्विधमेव भय प्रतिपाद्यते ? इति। एवं शिष्येण पृष्ट आचार्यः प्राह—भो शिष्य ! यद्यपि सप्तप्रकारक भयं तथापि सप्तानामपि चतुर्ष्वेवान्तर्भावसंभवादत्र चतुर्विधं प्रोक्तम्, तथाहि—इहलोकभयं मनुष्यभये समाविष्ट भवति १, परलोकभयं देवभये तिर्यग्भये च समाविशति २, आदानभयमाजीविकाभय मरणभयम् अश्लोकभयं चेति भयचतुष्टयमपि दिव्यमानुषतैरश्चरूपे भयत्रये यथायथ समाविष्टं भवति ६, यत आदानेन हस्तस्थितेन वस्तुना भयं 'हस्तगत मे वस्तु देवमनुजतिर्यञ्चो मा हियेरन्' इत्येवं रूप भयमादानभयम्, तथा आजीविका नाम वृत्ति, सा च वृत्तिर्देवमनुजतिर्यगधीना, तथा मरणं प्राणपरित्यागः, तदपि दिव्यमनुजतिर्यग्भवावस्थितस्यैव भवति, अकस्मात्कारणात् दिव्यादिभ्यस्त्रिभ्य एव मरणभय भवति ६, अश्लोकभयमपि दिव्यमनुजतिर्यक्ष्वेव सभवति ७, तस्मात्कारणात् भयचतुष्टये सप्तानामपि भयाना समावेशो भवति । तथा च राक्षसपिशाचादिजन्यं भय दिव्यभयम् १, स्तेनादिकभयं मनुजभयम् २- उदकादिसिंहादिभयं तिर्यग्भयम् ३, मोहनीयप्रकृत्युदयजन्यमात्मसमुत्थमाकस्मिकभयम् ४, अस्माच्चतुर्विधभयमध्यादन्यतमभयेन स्वात्मानं परं वा तदुभयं च भापयति

स प्रायश्चित्तभागी भवति। तत्रात्मानं परं च भापयन् स्वात्मानं परं च नापेक्षते बिभ्यन् स्वयं परो वा क्षिप्तचित्तो भवेत् ग्लानत्वं च भवेत् भीतो वा भूतेन गृहीत इव भवेत् ग्रहगृहीतो वाऽन्यं भापयति। एवं संयमविराधनं कदाचिदात्मविराधनं चापि प्राप्नुयात् तस्मात्कारणात् न स्वात्मानं तथा परं च भापयेदिति ॥सू० ६५॥

## सूत्रम्—जे भिक्खू अप्पाणं विम्हावेइ विम्हावेंतं वा साइज्जइ ॥६६॥

**छाया—यो भिक्षुरात्मान विस्मापयति विस्मापयन्तं वा स्वदते ॥सू० ६६॥**

**चूर्णी**—'**जे भिक्खू**' इत्यादि। '**जे भिक्खू**' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा '**अप्पाणं**' आत्मानं–स्वात्मानम् '**विम्हावेइ**' विस्मापयति, तत्र विस्मयोत्पादनं विस्मापनम् आश्चर्यसमुत्पादनमित्यर्थ, '**विम्हावेंतं वा साइज्जइ**' विस्मापयन्तं वा स्वदते अनुमोदते। यो हि स्वात्मानं विस्मापयति विस्मापयन्तं वा अन्यमनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ६६॥

## सूत्रम्—जे भिक्खू परं विम्हावेइ विम्हावेंतं वा साइज्जइ ॥सू० ६७॥

**छाया—यो भिक्षु परं विस्मापयति विस्मापयन्तं वा स्वदते ॥सू० ६७॥**

**चूर्णी**—'**जे भिक्खू**' इत्यादि। '**जे भिक्खू**' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'पर' **परं**-स्वस्मादन्यम् जनम् '**विम्हावेइ**' विस्मापयति तत्र विस्मापनमाश्चर्यं जनयति '**विम्हावेंतं वा साइज्जइ**' विस्मापयन्तं वा स्वदते, यो हि अन्यजनस्य आश्चर्यकारिवाक्यादिना आश्चर्यमुत्पादयति तं यो अनुमोदने स प्रायश्चित्तभागी भवति।

अत्राह भाष्यकारः—

**भाष्यम्**— विम्हावणं उ दुविहं, अभूयपुव्वं च भूयपुव्वं च।
तव-इंदजाल-विज्जा-निमित्त-वयणाइहिं चेव ॥

**छाया—विस्मापनं तु द्विविधम् अभूतपूर्वं च भूतपूर्वं च।
तप-इन्द्रजाल-विद्या-निमित्त-वचनादिभिश्चैव ॥**

**अवचूरिः**— षट्षष्ठीसूत्रे सप्तषष्ठीसूत्रे च यत् विस्मापनं कथितम् तत् द्विविधं द्विप्रकारकं भवति एकमभूतपूर्वं, द्वितीय भूतपूर्वं, तत्र यादृशमाश्चर्यं पूर्वं कदाचिदपि नाभूत् तद् अभूतपूर्वम्, यत्पूर्वं कदाचिद् अभूत् तादृशं भूतपूर्वम्, एतत् द्विप्रकारकमपि विस्मापनम् तपआदिना तपसा तपोलब्ध्या भवति, इन्द्रजालेन विस्मयकारिप्रयोगप्रतिपादकशास्त्रेण, विद्यया दृष्टिबन्धादिरूपया मंत्रादिविशेषेण वा विस्मापनं भवति, तथा निमित्तवचनेनापि अतीतानागतवर्तमानसम्बन्धिनिमित्तवचनेन, आदिशब्दात् अन्तर्द्धानादिना पादलेपनादिप्रयोगेण वा, एभिः कारणैः विस्मापनं भवति,

तद् अभूतपूर्वं भूतपूर्वं च विस्मापनं भवति । तत्र यद् विस्मापन विद्यामन्त्रेन्द्रजालिकादिप्रयोगरूपम् आत्मना अकृतपूर्वम्, अन्येन वा क्रियमाणं न दृष्ट न श्रुत वा तद् अभूतपूर्वं विस्मापनं कथ्यते । एतद्विपरीत यत् स्वय कृत परेण वा क्रियमाणं दृष्ट श्रुत वा तादृशं विस्मापनं भूतपूर्वं कथ्यते । एतादृशं विस्मापनं स्वस्य परस्य वा यो भिक्षु· करोति कारयति वा कुर्वन्त वा अनुमोदते स प्रायश्चित्तभागी भवति । तथा एतादृशविस्मापनेन हर्षातिरेकात् आश्चर्यातिरेकाद्वा कदाचित् स्वयमेव विक्षिप्तचित्तो भवेत् ततः स विक्षिप्तचित्तेन चान्यै महाधिकरणं करोति, अधिकरणे च जाते सूत्रार्थयोर्हानिः संयमात्मविराधना च स्यात्, तथा परो वा कदाचित् तादृशमाश्चर्यादिक दृष्ट्वा श्रुत्वा च विक्षिप्तचित्तो भवेत् तत्रापि एते दोषा भवेयु । असद्भूते च विस्मापने माया-करणं मृषावादोऽपि भवेत् । यस्मादेते दोषा विस्मापने भवन्ति तस्मात्कारणात् श्रमण. श्रमणी वा कदाचिदपि स्वात्मानं वा पर वा न विस्मापयेदिति भाव ॥सू० ६७॥

## सूत्रम्—जे भिक्खू अप्पणं विप्पारियासेइ विप्परियासंतं वा साइज्जइ ॥सू० ६८॥

**छाया—यो भिक्षुरात्मानं विपर्यासयति विपर्यासयन्त वा स्वदते ॥सू० ६८॥**

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु. श्रमण श्रमणी वा 'अप्पाणं' आत्मानं स्वात्मानम् 'विप्परियासेइ' विपर्यासयति, तत्र विपर्यासो विपर्ययकरण, यो द्रव्यादिभावो येन प्रकारेण स्थित· त भावम् अन्यथा प्रकारान्तरेण मनसा भणति क्रियायां वा परिणमयति, यथा जीवमजीवं प्ररूपयति, अजीव जीव प्ररूपयति धर्ममधर्म प्ररूपयति, अधर्मं धर्ममित्यादि । अन्यस्य वा पुरत प्ररूपयति, तथा 'विप्परियासंतं वा साइज्जइ' विपर्यास-यन्त वा स्वदते, यो हि अन्यथा स्थितस्य भावस्य प्रकारान्तरेण प्रज्ञापनादिक करोति त योऽनु-मोदते स प्रायश्चित्तभागी भवति ॥सू० ६८॥

## सूत्रम्—जे भिक्खू परं विपरियासेइ विपरियासंतं वा साइ-ज्जइ ॥ सू० ६९॥

**छाया—यो भिक्षुः पर विपर्यासयति विपर्यासयन्तं वा स्वदते ॥सू० ६९॥**

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चिद भिक्षु. श्रमण. श्रमणी वा 'परं' पर–स्वस्मादन्य श्रमणं श्रावक वा 'विपरियासेइ' विपर्यासयति अन्यथास्थितस्य द्रव्यादि-भावस्य प्रकारान्तरेण प्ररूपणां करोति तथा 'विपरियासंतं वा साइज्जइ' विपर्यासयन्त वा स्वदते । स प्रायश्चित्तभागी भवति ॥

अत्राह भाष्यकारः---

भाष्यम्---जंरूवो जो भावो, भवेज्ज णियओ य अण्णहा सो उ।
भण्णइ किज्जइ लोए, विप्परियासो इमो होइ ।।१।।

छाया---यद्रूपो यो भावो भवेत् नियतश्च अन्यथा स तु।
भण्यते क्रियते लोके, विपर्यास अयं भवति ।।१।।

अवचूरिः---लोके यद्रूपो यादृशो भावो नियत निश्चितो भवति स तु अन्यथा भण्यते, एतावदेव न किन्तु क्रियतेऽपि च अयं विपर्यासो भवतीति विपर्यासलक्षणम् ।।१।।

अथ विपर्यासस्य भेदान् उदाहरणांश्च दर्शयति भाष्यकार---

भाष्यम्--दव्वे खेत्त काले, भावे य चउव्विहो विवज्जासो।
कमसो वोच्छं तेसिं, णाणत्तं सत्थभासाए ।।१।।
दव्वे असोगमाई, खेत्ते णगराइयं मुणेयव्वं।
काले ओगाढाई, भावे पुण निव्वुयाई य ।।२।।

छाया---द्रव्ये क्षेत्रे काले, भावे च चतुर्विधो विपर्यासः।
क्रमशो वक्ष्ये तेषां, नानात्वं शास्त्रभाषया ।।२।।
द्रव्ये अशोकादि, क्षेत्रे नगरादिकं ज्ञातव्यम्।
काले आगाढादि, भावे पुनर्निर्वृतादि च ।।३।

अवचूरिः---योऽयं सूत्रद्वये विपर्यास. कथित स द्रव्यक्षेत्रकालभावभेदेन- चतुविधः चतु प्रकारको भवति। एषा द्रव्यक्षेत्रादिभेदभिन्नाना विपर्यासाना नानात्व क्रमश आनुपूर्व्या शास्त्रभाषया शास्त्रोक्तभाषाविधिना वक्ष्ये कथयिष्यामि। तत्र द्रव्ये विपर्यासो यथा-अजानता पृच्छकेन पृष्टे किमपि अशोकादिकं वृक्ष प्रति निम्बादिकथनम्, निम्बादिक प्रति अशोकादिकथनम् १। क्षेत्रे विपर्यास --हस्तिशीर्षनगरस्य हस्तिनागपुरत्वेन कथनम्, अथवा तद्विपरीतकथनम् २, काले विपर्यास--आगाढं--प्राप्त पौरुष्यादिकाल प्रति अनागाढमप्राप्तं कालं कथयति, तद्विपरीतं वा कथयति ३, भावे विपर्यास --स्वकर्मनिर्वृत निर्वृतत्वेन दर्शयति, परं निर्वृतमपि अनिर्वृत प्रकाशयति। एव तपस्विनमतपस्विनम्, अतपस्विन तपस्विनं कथयतीत्यादि। एवमादिशब्दात् क्षमादि--विषयेऽपि भावा ज्ञातव्या ४, एवं य कश्चिद् भिक्षुश्चतुर्विधेन विपर्यासेन एतादृशेन अन्येन वा केनापि विपर्यासेन आत्मानं पर वा विपर्यासयति विपर्यासयन्तं वा अनुमोदते स प्रायश्चित्तभागी भवति ।। सू० ६९।।

## सूत्रम्---जे भिक्खू मुहवण्णं करेइ करेंतं वा साइज्जइ ।।सू० ७०।।

छाया---यो भिक्षुर्मुखवर्णं करोति कुर्वन्तं वा स्वदते ।। सू० ७० ।।

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा '**मुहवण्णं**' मुखवर्णम्–मुखमिति प्रवेशः आदरणम् जिनप्रणीतादन्यवस्तुनः स्वीकरणमित्यर्थः तस्य वर्णो वर्णनं प्रशंसनं '**करेइ**' करोति, कारयति '**करेंतं**' कुर्वन्तं जिनोक्तविपरीतवस्तुनः प्रशंसां कुर्वन्तमन्यं '**साइज्जइ**' स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ७०॥

अत्राह भाष्यकारः—

**भाष्यम्**– मुहवण्णं तं चउहा, दव्वे खेत्ते य काल भावे य ।
तेसिं चउण्ह वोच्छं, णाणत्तं आणुपुव्वीए ॥१॥
दव्वे कुसत्थमाई, खेत्ते गंगाइ काल उवरागो ।
भावे कुधम्ममाई, तेसिं वण्णं न कायव्वं ॥२॥

छाया—मुखवर्णं तच्चतुर्धा द्रव्ये क्षेत्रे च काले भावे च ।
तेषां चतुर्णां वक्ष्ये नानात्वमानुपूर्व्या ॥१॥
द्रव्ये कुशास्त्रादि, क्षेत्रे गङ्गादि काले उपरागः ।
भावे कुधर्मादि तेषां वर्णं न कर्त्तव्यम् ॥२॥

**अवचूरिः**—मुखवर्णं–जिनप्रणीतान्यस्वीकारप्रशंसनं द्रव्यक्षेत्रकालभावभेदात् चतुर्धा–चतुर्विधं भवति, तेषां चतुर्णामपि नानात्वं भेदान् आनुपूर्व्या–अनुक्रमेण वक्ष्ये कथयिष्यामि ॥१॥ तथाहि- द्रव्ये द्रव्यतः कुशास्त्रादि, शाक्य–कपिले–श्वरवादिप्रभृतीनां शास्त्रं, मन्दिरनिर्माणजिनप्रतिमातत्प्रतिष्ठापनादि वा उपलक्षणात् कुमार्गस्य ग्रहणं भवति, स च त्रिशतत्रिषष्टिपाषण्डिनां शास्त्र वा १, क्षेत्रे क्षेत्रतः गङ्गादि–गङ्गाप्रयागप्रभासादितीर्थक्षेत्रम् । अथवा–शत्रुञ्जय–गिरनारादितीर्थक्षेत्रम् २, काले–कालतः उपरागादि, तत्र–उपरागश्चन्द्रसूर्यग्रहणं तद्विषयकः समयः ३, भावे–भावतः कुधर्मादि–चान्द्रायणादिकुव्रतगोभूमिसुवर्णदानादिकुदानप्रभृति ४ । एतेषां पूर्वोक्तानां प्रशंसनं न कर्त्तव्यम् । यः कोऽपि भिक्षुरेषां प्रशंसनं करोति कारयति कुर्वन्तं वा परमनुमोदते स प्रायश्चित्तभागी भवति, तस्य आज्ञाभङ्गानवस्थामिथ्यात्वादयोऽनेके दोषा भवन्तीति सप्ततितमसूत्रस्य भाष्यगाथाद्वयार्थः ॥सू० ७०॥

## सूत्रम्—जे भिक्खू वेरज्जविरुद्धरज्जंसि सज्जो गमणं सज्जो आगमणं सज्जे गमणागमणं करेइ करेंतं वा साइज्जइ ॥ सू० ७१॥

छाया—यो भिक्षुः वैराज्यविरुद्धराज्ये सद्यो गमनं सद्य आगमनं सद्यो गमनागमनं करोति कुर्वन्तं वा स्वदते ॥सू० ७१॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा '**वेरज्जविरुद्धरज्जंसि**' वैराज्यविरुद्धराज्ये यत्र द्वयोः राज्ञोः परस्परं वैरभावः समुत्पन्नः, तथा द्वयोः राज्ञोः परस्परं गमनागमनं निषिद्धं तत् वैराज्यविरुद्धराज्यमिति कथ्यते । अथवा यत्र राज्ये पूर्वपुरुष-

परम्परागतं वैरं भवति तत् वैराज्यम्, अथवा यस्य राज्ञो राज्ये कोट्टपालादयो विरज्यन्ति विरोधं कुर्वन्ति तत् वैराज्यम्, अथवा विगतो राजा मृतः प्रवासितो वा तद् वैराज्यमिति कथ्यते, विरुद्धस्य राज्ञो राज्यं विरुद्धराज्यम् एतादृशं यत्र भवति तद् वैराज्यविरुद्धराज्यं कथ्यते, तस्मिन् वैराज्यविरुद्धराज्ये **'सज्जो गमणं'** सद्यो गमनम्, वर्तमानकाले यत्र नगरे द्वयो राज्ञो विरोधो जायते युद्धादिप्रवर्त्तन-शङ्का वा प्रवर्त्तते, तत्र गमनं करोति, यत्र वा युद्ध भविष्यति अभूत् वा तत्रापि यो गमन करोति **'सज्जो आगमणं'** सद्य आगमनम् **'सज्जो गमणागमणं करेइ'** सद्य गमनागमनं करोति, तथा **'करेंत वा साइज्जइ'** कुर्वन्त वा स्वदते, यो हि भिक्षुर्विगतराजनि विरुद्धराज्ये वा गमन करोति आगमनं वा गमनागमनं वा करोति कुर्वन्तमन्य श्रमणं वा अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ७१॥

## सूत्रम्—जे भिक्खू दियाभोयणस्स अवण्णं वयइ वयंतं वा साइ-ज्जइ ॥ सू० ७२॥

**छाया—यो भिक्षुर्दिवाभोजनस्य अवर्णं वदति वदन्तं वा स्वदते ॥ सू० ७२॥**

चूर्णी—'जे भिक्खू' इत्यादि । **'जे भिक्खू'** य. कश्चिद् भिक्षु श्रमणः श्रमणी वा **'दियाभोयणस्स'** दिवाभोजनस्य दिवसे भोजनकरणस्य **'अवण्णं'** अवर्णं निन्दाम् **'वयइ'** वदति कथयति लोकेभ्य प्ररूपयति कथाप्रसगे लोकानां पुरत दिवसभोजनस्य निन्दां करोति तथा **'वयंतं वा साइज्जइ'** दिवाभोजनस्यावर्णं वदन्तं वा भाषमाणं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ७२॥

## सूत्रम्—जे भिक्खू राइभोयणस्स वण्णं वयइ वयंतं वा साइज्जइ ॥७३॥

**छाया—यो भिक्षु रात्रिभोजनस्य वर्णं वदति वदन्तं वा स्वदते ॥सू० ७३॥**

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु. श्रमणः श्रमणी वा **'राइभोयणस्स'** रात्रिभोजनस्य **'वण्णं'** वर्णं प्रशसाम् **'वयइ'** वदति कथयति रात्रिभोजने नास्ति कोऽपि दोष प्रत्युत गुणो भवतीत्येवंप्रकारेण लोकाना पुरतो यो रात्रिभोजनस्य प्रशंसां करोति तथा **'वयंतं वा साइज्जइ'** वदन्तं लोकाना पुरतो रात्रिभोजनस्य प्रशंसा कुर्वन्तं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ७३॥

## सूत्रम्—जे भिक्खू दिया असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेत्ता दिया भुंजइ दिया भुंजंतं वा साइज्जइ ॥ सू० ७४ ॥

**छाया—यो भिक्षुर्दिवा अशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्य दिवा भुङ्क्ते दिवा भुञ्जानं वा स्वदते ॥ सू० ७४॥**

चूर्णी--'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'दिया' दिवा–दिवसे 'असणं वा पाणं वा खाइमं साइमं वा' अशनादिचतुर्विधाहारम् 'पडिग्गा-हेत्ता' प्रतिगृह्य 'दिया भुंजइ' दिवा भुङ्क्ते–दिवसे गृहीत्वा दिवसे एव कालातिक्रमेण रात्रौ सरथाप्य द्वितीयदिवसे वा भुङ्क्ते तथा 'दिया भुंजंतं वा साइज्जइ' एवं प्रकारेण दिवा भुञ्जानं वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० ७४॥

**सूत्रम्—जे भिक्खू दिवा असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेत्ता रत्तिं भुंजइ रत्तिं भुंजंतं वा साइज्जइ ॥सू० ७५॥**

छाया—यो भिक्षुर्दिवा अशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्य रात्रौ भुङ्क्ते रात्रौ भुञ्जानं वा स्वदते ॥ सू० ७५॥

चूर्णी --'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'दिया' दिवा - दिवसे 'असणं वा ४' अशनादिचतुर्विधाहारम् 'पडिग्गाहेत्ता' प्रतिगृह्य 'रत्तिं भुंजइ' रात्रौ सूर्येऽस्तगते भुङ्क्ते 'रत्तिं भुंजंतं वा साइज्जइ' रात्रौ भुञ्जानं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ७५॥

**सूत्रम्—जे भिक्खू रत्तिं असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेत्ता दिया भुंजइ दिया भुंजंतं वा साइज्जइ ॥ सू० ७६॥**

छाया— यो भिक्षुः रात्रौ अशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्य दिवा भुङ्क्ते दिवा भुञ्जानं वा स्वदते स प्रायश्चित्तभागी ॥ सू० ७६॥

चूर्णी— 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'रत्तिं' रात्रौ सूर्योदयात्पूर्वं 'असणं वा ४' अशनं वा–अशनादि चतुर्विधमाहारं 'पडिग्गाहित्ता' प्रतिगृह्य रात्रौ सूर्योदयात्पूर्वम् अशनादिकं चतुर्विधमाहारजातमानाय 'दिया भुंजइ' दिवा भुङ्क्ते 'दिया भुंजंतं वा साइज्जइ' दिवा भुञ्जानं वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० ७६॥

**सूत्रम्—जे भिक्खू रत्तिं असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेत्ता रत्तिं भुंजइ रत्तिं भुंजंतं वा साइज्जइ ॥सू० ७७॥**

छाया—यो भिक्षुः रात्रौ अशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्य रात्रौ भुङ्क्ते रात्रौ भुञ्जानं वा स्वदते ॥ सू० ७७॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'रत्तिं' रात्रौ उदयास्तात्पूर्वपश्चात् 'असणं वा ४' अशनं वा ४ 'पडिग्गाहेत्ता' प्रतिगृह्य 'रत्तिं भुंजइ' रात्रौ उदयास्तात्पूर्वपश्चादेव भुङ्क्ते 'रत्तिं भुंजंतं वा साइज्जइ' रात्रौ भुञ्जानं वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० ७७॥

**सूत्रम्—जे भिक्खू असणं वा पाणं वा खाइमं वा साइमं वा परिवासेइ परिवासेंतं वा साइज्जइ ॥ सू० ७८॥**

छाया—**यो भिक्षुः अशनं वा पानं वा खाद्यं वा स्वाद्यं वा परिवासयति परिवासयन्तं वा स्वदते ॥सू० ७८॥**

चूर्णी—**'जे भिक्खू'** इत्यादि। **'जे भिक्खू'** यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा **'असणं वा४'** अशनं वा ४ अशनादिचतुर्विधाहारम् **'परिवासेइ'** परिवासयति सस्थापयति सुन्दरमिदमशनादि आगामिदिने भोक्ष्यामीति रात्रौ स्थापयित्वा पर्युषितं करोति **'परिवासेंतं वा साइज्जइ'** परिवासयन्तं वा स्वदते ॥ सू० ७८॥

**सूत्रम्—जे भिक्खू परिवासियस्स असणस्स वा पाणस्स वा खाइमस्स वा साइमस्स वा तयप्पमाणं वा भूइप्पमाणं वा बिंदुप्पमाणं वा आहारं आहारेइ आहारेंतं वा साइज्जइ ॥ सू०७९॥**

छाया—**यो भिक्षुः परिवासितस्य अशनस्य वा पानस्य वा खाद्यस्य वा स्वाद्यस्य वा त्वचाप्रमाणं वा भूतिप्रमाणं वा बिन्दुप्रमाणं वा आहारमाहरति आहरन्तं वा स्वदते ॥ सू० ७९॥**

चूर्णी—**'जे भिक्खू'** इत्यादि। **'जे भिक्खू'** यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा **'परिवासियस्स'** परिवासितस्य पर्युषितस्य दिवसे भुक्तावशेषस्य रात्रौ स्थापितस्य **'असणस्स वा'** अशनस्य वा **'पाणस्स वा'** पानस्य वा **'खाइमस्स वा'** खाद्यस्य वा **'साइमस्स वा'** स्वाद्यस्य वा **'तयप्पमाणं वा'** त्वचाप्रमाणं वा—त्वचा तनुतरा भवतीति त्वचाप्रमाणं अल्पप्रमाणमित्यर्थः **'भूइप्पमाणं वा'** भूतिप्रमाणं वा भूतिः—रक्षा—भस्म तत्प्रमाणं भस्मरजःकणप्रमाणं स्वल्पमात्रमपीत्यर्थ **'बिंदुप्पमाणं वा'** बिन्दुप्रमाणं वा जलादेर्बिन्दुप्रमाणं वा **'आहारं आहारेइ'** आहारमाहरति रात्रौ स्थापिताशनादे स्वल्पमपि भागमाहरति भुङ्क्ते तथा **'आहारेंतं वा साइज्जइ'** आहरन्तम्—अल्पमात्रस्याप्यशनादेर्भागस्योपभोगं कुर्वन्त स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ७९॥

**सूत्रम्—जे भिक्खू मंसाइयं वा मच्छाइयं वा मंसखलं वा मच्छखलं वा आहेणं वा पहेणं वा संमेलं वा हिंगोलं वा अन्नयरं वा तहप्पगारं विरूवरूवं वा हीरमाणं पेहाए ताए आसाए ताए पिवासाए तं रयणिं अण्णत्थ उवाइणावेइ उवाइणावेंतं वा साइज्जइ ॥ सू० ८०॥**

**छाया**—यो भिक्षुर्मांसादिकं वा मत्स्यादिकं वा मांसखलं वा मत्स्यखलं वा आहेणं वा प्रहेणं वा संमेलं वा हिंगोलं वा अन्यतरद् वा तथाप्रकारं विरूपरूपं ह्रियमाणं प्रेक्ष्य तया आशया तया पिपासया तां रजनीमन्यत्र उपातिक्रामति उपातिक्रामन्तं वा स्वदते ॥ सू० ८०॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा **'मंसाइयं वा'** मांसादिकं वा यस्मिन् भोजने आदौ मांसं ददाति पश्चात् ओदनादिकं ददाति तत् मांसादिकं कथ्यते **'मच्छाइयं वा'** मत्स्यादिकं वा यस्मिन् भोजने आदौ मत्स्यं ददाति अन्ते ओदनादिकं तत् मत्स्यादिकं भोजनम् **'मंसखलं वा'** मांसखलं वा यत्र स्थाने मांसः शोष्यते तत् मांसखलम् **'मच्छखलं वा'** मत्स्यखलं वा यत्र स्थाने मत्स्या शोष्यन्ते तत् मत्स्यखलं वा **'आहेणं वा पहेणं वा'** आहेणं वा प्रहेणं वा भोजनगृहात् यद् आनीयते तत् आहेणम्, भोजनगृहात् यद् अन्यत्र नीयते तत् प्रहेणम्, यद्वा वधूगृहात् वरगृहे यत् नीयते तत् आहेणं, यत् वरगृहात् वधूगृहे नीयते तत् प्रहेणम् **'समेलं वा'** विवाहादौ यत् भक्तादिकं निर्मीयते तत् संमेलम् **'हिंगोलं वा'** यत् मृतभक्तं तत् हिंगोलम् **'अण्णयरं वा तहप्पगारं'** अन्यतरद् वा तथाप्रकारम्, तत्रान्यतरत् कथितातिरिक्तं तथाप्रकारं कथितसदृशम् **'विरूवरूवं'** विरूपरूपमनेकप्रकारकम् **'हीरमाणं'** ह्रियमाणम् गृहात् उद्यानादिषु भोजनार्थम् नीयमानम्, अथवा एकस्माद् ग्रामाद् ग्रामान्तरं प्रति नीयमानं मांसादियुक्तभोजनम् **'पेहाए'** प्रेक्ष्य-दृष्ट्वा **'ताए आसाए'** तन्मांसादिकं लप्स्ये इति तल्लाभेच्छया **'ताए पिवासाए'** तया पिपासया तस्य मांसादियुक्ताहारस्य पिपासया तृष्णया अभिलाषयेत्यर्थ ओदनादीनामशितुमिच्छा आशा, द्राक्षापानकादीनां पातुमिच्छा पिपासा, तया आशया पिपासया वा **'तं रयणिं अण्णत्थ उवाइणावेइ'** तां रजनीम् अन्यत्र तद्ग्रहणेच्छाया शय्यातर वसतितोऽन्यवसतौ गत्वा रात्रिम् उपातिक्रामति उल्लङ्घयति **'उवाइणावेंतं वा साइज्जइ'** उपातिक्रामन्तं वा उल्लङ्घयन्तं वा अनुमोदते स प्रायश्चित्तभागी भवति ।

ननु—**'एवं खलु चउहिं ठाणेहिं जीवा णेयरित्ताए कम्मं पकरेंति णेरइयत्ताए कम्मं पकरेत्ता णेरइएसु उववज्जंति, 'तं जहा'—महारंभयाए महापरिग्गहाए पंचिंदियवहेणं कुणिमाहारेणं''** इत्यादिना यद्यपि मांसभक्षणं मद्यपानं च सूत्रेषु सर्वथैव निषिद्धं तत् कथमत्रैवं प्रतिपाद्यते? इति चेदाह—कश्चित् मांसभक्षककुलोत्पन्नो दीक्षितो जात इति तस्य कदाचिदेवप्रकारिकाऽभिलाषा जातिस्वभावात् संभवेत् इति संभाव्य तस्य शास्त्रे निषेधः कृतः ॥ सू० ८०॥

## सूत्रम्—जे भिक्खू निवेयणपिंडं भुंजइ भुंजंतं वा साइज्जइ ॥८१॥

**छाया**—यो भिक्षुर्निवेदनपिण्डं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ८१॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'णिवेयणपिंडं' निवेदनपिण्डम् देवयक्षव्यन्तरनिवेदनाय प्रस्तुतभक्तादिकं तत् निवेदन-पिण्डम् 'भुंजइ' भुङ्क्ते देवतार्थं यत् पिण्डं स्थापितं तादृशं निवेदनपिण्डं यो भिक्षुरुपभुङ्क्ते तथा 'भुंजंतं वा साइज्जइ' भुञ्जानं वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० ८१॥

## सूत्रम्—जे भिक्खू अहाछंदं पसंसइ पसंसंतं वा साइज्जइ ॥ सू०८२॥

छाया—यो भिक्षुर्यथाछन्दं प्रशंसति प्रशंसन्तं वा स्वदते ॥सू० ८२॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'अहाछंदं' यथाछन्दं, तत्र छन्दोऽभिप्रायः, तेन यथा येन प्रकारेण स्वस्याभिप्रायस्तदनुसारेण प्ररूपयति करोति स यथाछन्द प्रोच्यते, तं 'पसंसइ' प्रशसते तस्य प्रशंसां करोति कारयति 'पसंसंतं वा' प्रशंसन्तमन्यं वा 'साइज्जइ' स्वदते स प्रायश्चित्तभागी भवति ॥

अत्राह भाष्यकारः—

भाष्यम्—जहछंदत्तं दुविहं, परूवणे तह भवेज्ज चरणे य ।
पडिलेहाइसु पढमं, बीयं पुण साहुकिरियासु ॥१॥

छाया—यथाछन्दत्वं द्विविधं प्ररूपणे तथा भवेत् चरणे च ।
प्रतिलेखादिषु प्रथमं, द्वितीयं पुनः साधुक्रियासु ॥१॥

अवचूरिः—साधोर्यथाछन्दत्वं द्विविधं भवति, तत्र एकं प्ररूपणे प्ररूपणाविषये, द्वितीयं चरणे चारित्रविषये च । तत्र प्ररूपणे यथाछन्दत्वं यथा–वस्त्रपात्रादीनां नित्यं प्रतिलेखना न कर्त्तव्या किं तत्र निरन्तरं जीवाः परिवसन्ति येन नित्यमेव प्रतिलेखना क्रियते, द्वित्रादिदिवस-व्यवधानेन करणे न कोऽपि दोषः । रजोहरणदशिकाः (रजोहरणफलिका) ऊर्णादिकर्कशस्पर्शसूत्रैः किमर्थं क्रियन्ते, क्षौमिकादिमृदुस्पर्शसूत्रैः किं न क्रियन्ते ? कोऽत्र दोषः ?, इत्यादि प्ररूपणम् १। चरणे यथाछन्दत्वं यथा–अस्मदार्थं सम्पादितमशनादि ग्रहीतव्यं येन यथारुचि भोजनं लभ्यते तेन सुखमाराधनं सुकरं भवति, केऽत्राधाकर्मादिदोषाः समापतन्ति, एवं साधुनिमित्तसंपा-दिताऽशनादिग्रहणरूपं यथाछन्दत्वम्, यथा–शय्यातरपिण्डादानम्, गृहिपात्रग्रहणं, निर्ग्रन्थ्या सह वसनम्, इत्यादिसाधुक्रियासु चरणविषयकं यथाछन्दत्वं भवति । इत्याद्याचरणवन्तं यथा-छन्दं साधुं न प्रशंसेत्, न वा प्रशंसां कुर्वन्तमन्यमनुमोदेत । यस्तस्य प्रशंसां करोति तथा प्रशंस-न्तमनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ८२॥

## सूत्रम्—जे भिक्खू आहछंदं वंदइ वंदंतं वा साइज्जइ ॥ सू० ८३॥

छाया—यो भिक्षुर्यथाछन्दं वन्दते वन्दमानं वा स्वदते ॥सू० ८३॥

**चूर्णी**— 'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'अहाछंदं' यथाछन्दम् पूर्वोक्तप्रकारकं 'वंदइ' वन्दते नमस्कारादिकं करोति कारयति वा 'वंदंतं वा साइज्जइ' यथाछन्द वन्दमानं नमस्कारादिकं तथा तदीयगुणोत्कीर्तनादिकं च कुर्वाणं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ८३॥

**सूत्रम्**—जे भिक्खू णायगं वा अणायगं वा उवासगं वा अणुवासगं वा अणलं पव्वावेइ पव्वावेंतं वा साइज्जइ ॥ सू० ८४॥

छाया— यो भिक्षुर्ज्ञातकं वा अज्ञातकं वा उपासकं वा अनुपासकं वा अनलं प्रव्राजयति प्रव्राजयन्तं वा स्वदते ॥सू० ८४॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चिद् भिक्षु· श्रमणः श्रमणी वा 'णायगं वा' ज्ञातकं वा 'अणायगं वा' अज्ञातकं वा, तत्र ज्ञातक स्वजन पितृपुत्रपौत्रदौहित्रभ्रातृप्रभृति', अज्ञातकः अस्वजन स्वजनभिन्न , अथवा ज्ञातक. प्रज्ञायमान परिचित· ससारावस्थाया. प्रव्रज्यावस्थाया वा, अज्ञातकोऽज्ञायमान· अपरिचित, एतादृशम् तथा 'उवासगं वा' उपासकं श्रावकं वा 'अणुवासगं वा' अनुपासकं वा श्रावकभिन्नमन्यतीर्थिकं वा 'अणलं' अनलं तत्राल पर्याप्त. न अलमिति अनलम् अपर्याप्तम्—प्रव्रज्यायोग्यगुणरहितम् अयोग्यमित्यर्थ य प्रव्राजनस्य योग्यो न भवति तादृशम् 'पव्वावेइ' प्रव्राजयति दीक्षयति तथा 'पव्वावेंतं वा साइज्जइ' प्रव्राजयन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ८४॥

**सूत्रम्**—जे भिक्खू णायगं वा अणायगं वा उवासगं वा अणुवासगं वा अणलं उवट्ठावेइ उवट्ठावेंतं वा साइज्जइ ॥ सू० ८५॥

छाया—यो भिक्षुर्ज्ञातकं वा अज्ञातकं वा उपासकं वा अनुपासकं वा अनलमुपस्थापयति उपस्थापयन्तं वा स्वदते ॥सू० ८५॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु. श्रमण· श्रमणी वा 'णायगं वा' ज्ञातकं परिचितं स्वजनं पुत्रभ्रातृप्रभृतिकम् 'अणायगं वा' अज्ञातकमपरिचितं स्वजनभिन्नं वा तथा 'उवासगं वा' उपासकं वा श्रावकं साध्वाराधकं 'अणुवासगं वा' अनुपासकं श्रावकभिन्नमन्यतीर्थिकं वा 'अणलं' अनलमपर्याप्तमयोग्यमित्यर्थ 'उवट्ठावेइ' उपस्थापयति—त्यक्तमहाव्रत पुनर्महाव्रते आरोपयति छेदोपस्थापनीयचारित्रं ददाति 'उवट्ठावेंतं वा साइज्जइ' उपस्थापयन्त वा स्वदते स प्रायश्चित्तभागी भवति ॥सू०८५॥

**सूत्रम्**—जे भिक्खू णायगेण वा अणायगेण उवासएण वा अणुवासएण वा अणलेण वेयावच्चं कारावेइ कारावेंतं वा साइज्जइ ॥ सू०८६॥

छाया—यो भिक्षुर्ज्ञातकेन वा अज्ञातकेन वा उपासकेन वा अनुपासकेन वा अनलेन वैयावृत्यं कारयति कारयन्तं वा स्वदते ॥सू० ८६॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'णायगेण वा' ज्ञातकेन वा-स्वजनेन वा 'अणायगेण वा' अज्ञातकेन अस्वजनेनाऽपरिचितेन वा तथा 'उवासगेण वा' उपासकेन श्रावकेण आराधितश्रुतचारित्रलक्षणधर्मेण इत्यर्थः 'अणुवासगेण वा' अनुपासकेन श्रावकभिन्नेन परतीर्थिकेनेत्यर्थः 'अणलेण' अनलेन अयोग्येन उपलक्षणाद् योग्येनापि केनचिदपि गृहस्थेन स्वकीयम् 'वेयावच्चं' वैयावृत्यं सेवाशुश्रूषादिलक्षणम् 'कारावेइ' कारयति 'कारावेंतं वा साइज्जइ' कारयन्त वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० ८६॥

## सूत्रम्—जे भिक्खू सचेले सचेलगाणं मज्झे संवसइ संवसंतं वा साइज्जइ ॥ सू० ८७॥

छाया—यो भिक्षुः सचेलः सचेलिकानां मध्ये संवसति संवसन्तं वा स्वदते ॥८७॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः 'सचेले' सचैलः, तत्र चेलं वस्त्रं तद्वान् सचेलः स्थविरकल्पीत्यर्थः 'सचेलगाणं' सचेलकानां स्थविरकल्पिकानां भिन्नसामाचारीकाणाम् 'मज्झे' मध्ये 'संवसइ' संवसति निवासं करोति 'संवसंतं वा साइज्जइ' संवसन्तं वा स्वदते, यो हि सचेलः स्थविरकल्पी श्रमणः सचेलकानां भिन्नसामाचारीक स्थविरकल्पिसंयतानां मध्ये निवासं करोति तमनुमोदते स प्रायश्चित्तभागी भवति । भिन्नसामाचारीकसंयतैः सह वासं कुर्वतोऽनेकप्रकारकदोषसंभवात्, अतो न तैः। सह कदाचिदपि संवासो विधेय इति ॥ सू० ८७॥

## सूत्रम्—जे भिक्खू सचेले अचेलगाणं मज्झे संवसइ संवसंतं वा साइज्जइ ॥सू० ८८॥

छाया—यो भिक्षुः सचेलोऽचेलकानां मध्ये संवसति संवसन्तं वा स्वदते ॥८८॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'सचेले' सचेलः-स्थविरकल्पिक इत्यर्थः 'अचेलगाणं' अचेलकाना जिनकल्पिकानाम् 'मज्झे' मध्ये 'संवसइ' संवसति निवासं करोति 'संवसंतं वा साइज्जइ' संवसन्तं अचेलकानां मध्ये निवासं कुर्वन्तं सचेलं स्वदते अनुमोदते, यो हि स्थविरकल्पी जिनकल्पिकानां मध्ये निवास करोति कुर्वन्तं वा अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ८८॥

## सूत्रम्—जे भिक्खू अचेले सचेलगाणं मज्झे संवसइ संवसंतं वा साइज्जइ ॥ सू० ८९॥

छाया—यो भिक्षुरचेल सचेलकानां मध्ये संवसति संवसन्तं वा स्वदते ॥८९॥

चूर्णीः—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु 'अचेले' अचेली जिनकल्पी. 'सचेलगाणं मज्झे' सचेलकानां स्थविरकल्गिकाना मध्ये समुदाये 'संवसइ' संवसति निवास करोति 'संवसंतं व, साइज्जइ' सवसन्त वा सचेलकाना समुदाये निवासं कुर्वन्तं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू०८९॥

सूत्रम्—जे भिक्खू अचेले अचेलगाणं मज्झे संवसइ संवसंतं वा साइज्जइ ॥सू० ९०॥

छाया—यो भिक्षुरचेलोऽचेलकानां मध्ये संवसति संवसन्त वा स्वदते ॥सू० ९०॥

चूर्णीः—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण 'अचेले' अचेल.–जिनकल्पिक· 'अचेलगाण' अचेलकाना जिनकल्पिकानाम् 'मज्झे' मध्ये 'संवसइ' संवसति–निवासं करोति 'संवसतं वा साइज्जइ' सवसन्तं निवास कुर्वन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति जिनकल्पिकस्य एकाकविहारविधानात्। यतो जिनकल्पिका. परस्य सहायता नेच्छंति–एकान्तवासस्यैव तेषा शास्त्रसिद्धत्वात्, एतादृशस्थितौ यदि जिनकल्पिको जिनकल्पिकानां मध्ये निवसति तदा तीर्थकृतामाज्ञा विराधिता भवति, अतो जिनकल्पिकः साधु जिनकल्पिकानां मध्ये न वसेत् न वा वसतमनुमोदेत शास्त्रमर्यादाभङ्गप्रसङ्गात् ॥ सू०९०॥

सूत्रम्—जे भिक्खू परिवसियं पिप्पलिं वा पिप्पलिचुण्णं वा सिंगवेरं वा सिंगवेरचुण्णं वा बिलं वा लोणं उब्भियं वा लोणं आहारेइ आहारेंतं वा साइज्जइ ॥सू० ९१॥

छाया—यो भिक्षुः पर्युषितां पिप्पलिं वा पिप्पलिचूर्णं वा शृङ्गवेर वा शृङ्गवेरचूर्णं वा बिलं वा लवणम् उद्भिदं वा लवणम् आहरति आहरन्तं वा स्वदते ॥ सू० ९१॥

चूर्णी 'जे भिक्खू' इत्यादि। 'जे भिक्खू' य. कश्चिद् भिक्षु श्रमणः श्रमणी वा 'परिवसियं' पर्युषितम्, तत्र 'परिवसिय' नाम रात्रौ स्थापित यत् तत् तादृशीम् 'पिप्पलिं वा' पिप्पलिं वा अचित्तपाचितपिप्पलीम् 'पिप्पलिचुण्णं वा' लघुपिप्पलीचूर्णं वा 'सिंगवेरं वा' शृङ्गवेरं वा शुष्कमाद्रकं सुंठीति लोकप्रसिद्धम् 'सिंगवेरचुण्णं वा' शृङ्गवेरचूर्णं वा सुंठीचूर्णं वा 'बिलं वा लोणं' बिलं वा लवणम् यत्र देशे लवणो न प्रादुर्भवति तत्रोषरमृत्तिका पाचयित्वा लवण. संपाद्यते तादृशं लवणं बिललवणमिति कथ्यते 'उब्भियं वा लोणं' उद्भिदं वा लवणम्, तत्र उद्भिद्लवणः स्वय जायमानो यथा सैन्धवः, य. स्वस्वभावत एव सजातस्तम्। एवमादिकं पर्युषितं

तिफल्यादिकं यः श्रमणः श्रमणी वा 'आहारेइ' आहरति पर्युषितशष्कुल्यादीनाम् उपभोगं करोति तथा 'आहारेंतं वा साइज्जइ' आहरन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥सू०९१॥

सूत्रम्—जे भिक्खू गिरिपडणाणि वा मरुपडणाणि वा भिगुपडणाणि वा तरुपडणाणि वा गिरिपक्खंदणाणि वा मरुपक्खंदणाणि भिगुपक्खंणाणि वा तरुपक्खंदणाणि वा जलप्पवेसाणि वा जलणपवेसाणि वा जलपक्खंदणाणि वा जलणपक्खंदणाणि वा विसभक्खणाणि वा सत्थोपाडणाणि वा वलयमरणाणि वा वसट्टाणि वा तब्भवमरणाणि वा अंतोसल्लमरणाणि वा वेहायसाणि वा गिद्धपट्ठाणि वा जाव अण्णयराणि वा तहप्पगाराणि वा बालमरणाणि पसंसइ पसंसंतं वा साइज्जइ ॥ सू० ९२॥

छाया—यो भिक्षुः गिरिपतनानि वा १, मरुपतनानि वा २, भृगुपतनानि वा ३, तरुपतनानि वा ४, गिरिप्रस्कन्दनानि वा ५, मरुप्रस्कन्दनानि वा ६, भृगुप्रस्कन्दनानि ७, तरुप्रस्कन्दनानि वा ८, जलप्रवेशनानि वा ९, ज्वलनप्रवेशनानि वा १०, जलप्रस्कन्दनानि वा ११, ज्वलनप्रस्कन्दनानि वा १२, विषभक्षणानि वा १३, शस्त्रोत्पातनानि वा १४, वलयमरणानि वा १५ वशार्तमरणानि वा १६, तद्भवमरणानि वा १७, अन्तःशल्यमरणानि वा १८, वैहायसानि वा १९, गृद्धस्पृष्टानि वा २० यावद् अन्यतराणि वा तथाप्रकाराणि वा बालमरणानि प्रशंसति प्रशंसन्तं वा स्वदते ।सू० ९२॥

चूर्णीः—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमण श्रमणी वा 'गिरिपडणाणि वा' गिरिपतनानि वा—पर्वताग्रात् पतनानि, मरणप्रसङ्गात् गिरिपतनमरणानी त्यर्थः, एवमग्रेऽपि, 'मरुपडणाणि वा' मरुपतनानि वा मरौ ऊषरभूमौ धूलीपुञ्जे वा पतनम् मरुपतनम्, मरौ ऊषरभूमौ शरीरपातनं, यद्वा यत्रत पतनं दृश्यते तद् गिरिपतनम्, अदृश्यमानं पतनं मरुपतनम्, तानि, 'भिगुपडणाणि वा' भृगुपतनानि वा—नदीतटादितः गर्तादितो वा पतनं भृगुपतनं, तानि, 'तरुपडणाणि वा' तरुपतनानि वा—तरुशाखामवलम्ब्य पतनं तरुपतनम् तानि, 'गिरिपक्खंदणाणि वा' गिरिप्रस्कन्दनानि वा—प्रस्कन्दन—गिरित उल्लुप्य पतनं, तानि, पतनप्रस्कन्दनयोरयं भेदः—पतनं सामान्यतो लुठनम्, प्रस्कन्दनमुल्लुप्य—कूर्दयित्वा पतनमिति । 'मरुपक्खंदणाणि वा' मरुप्रस्कन्दनानि वा—ऊषरभूमौ धूलिपुञ्जे वा उत्प्लुत्य पतनानि 'भिगुपक्खंदणाणि वा' भृगुप्रस्कन्दनानि वा—नदीतटादिषु गर्तादिषु अदृश्यमानस्थाने वा उत्प्लुत्य पतनानि, 'तरुपक्खंदणाणि वा' तरुप्रस्कन्दनानि वा वृक्षत उत्प्लुत्य पतनानि, 'जलप्पवेसणाणि वा' जलप्रवेशनानि वा नदीकूपतडागादिषु प्रवेशनानि 'जलणप्पवेसणाणि वा' ज्वलनप्रवेशनानि वा

ज्वलने—अग्नौ प्रवेशनानि **'जलपक्खंदणाणि वा'** जलप्रस्कन्दनानि वा जले उत्प्लुत्य पतनानि वा **'जलणपक्खदणाणि वा'** ज्वलने वन्हौ उत्प्लुत्य पतनानि **'विसभक्खणाणि वा'** विषभक्षणानि वा **'सत्थोपाडणाणि वा'** शस्त्रोत्पातनानि वा उच्चस्थानात् शरीरे शस्त्रस्य खड्गादे पातनानि **'वलयमरणाणि वा'** वलयमरणानि वा, तत्र संयमयोगेषु हीनसत्त्वतया वलनं वलयः संयमान्निवर्त्तनं, तेन कारणेन अकामतया मरणानि, यद्वा वलयः वस्त्ररज्ज्वादिपाशेन गलस्य वेष्टनं, तेन मरणं, तानि गले रज्ज्वादिकं बद्ध्वा मरणानि वलयमरणानि, **'वसट्टमरणाणि वा'** वशार्त्तमरणानि वा इन्द्रियविषयेषु रूपरसादिषु वशवर्त्तितया आर्त्तस्य दुःखितस्य मरणानि, **'तब्भवमरणाणि वा'** तद्भवमरणानि वा, तद्भवमरणं नाम यस्मिन् मनुष्यादिभवे वर्तते तस्यैव भवस्य हेतुषु वर्तमानः आयुः कर्म बद्ध्वा पुनः तत्रैव भवे उत्पत्तुकामस्य यन्मरणं तत् तद्भवमरणमिति कथ्यते तानि—निदानपूर्वकं मरणानीत्यर्थः **'अंतोसल्लमरणाणि वा'** अन्तःशल्यमरणानि वा, शल्यं द्विविधं द्रव्यशल्यं भावशल्यं च, तत्र द्रव्यशल्यं बाणाग्रभागादिरूपम्, तस्य नेहाधिकारः, भावशल्यं मूलोत्तरगुणसंलग्नदोषानालोचने पश्चात्तापरूपम्, अस्यात्राधिकारः, मायानिदानादिशल्यं वा, तद् अन्तः—अन्तःकरणे भवेत् तद् अन्तःशल्यं, तेन मरणानि, **'वेहायसाणि वा'** वैहायसानि वा विहायसि आकाशे भवं वैहायसं वृक्षशाखादिषु आत्मनः उद्बन्धनं, तानि मरणानि, **'गिद्धपट्ठाणि वा'** गृद्धस्पृष्टानि वा—गृध्रैराममांसभक्षकैः पक्षिविशेषैः, अथवा गृद्धैः मांसलुब्धकैः शृगालादिभिः स्पृष्टस्य विदारितस्य, अथवा करिकरभरासभादिशरीरान्तर्गतत्वेन यन्मरणं तानि गृध्रस्पृष्टानि गृद्धपृष्ठानि वा मरणानि, अथवा गृध्रैर्भक्षितपृष्ठस्य यन्मरणं तद् गृध्रपृष्ठमरणमिति तानि, एतानि विंशतिसंख्यकानि, तथा **'जाव अण्णयराणि वा तहप्पगाराणि वा बालमरणाणि'** यावत् अन्यतराणि वा तथाप्रकाराणि वा बालमरणानि **'पसंसइ'** प्रशंसति तेषां प्रशंसां करोति तथा **'पसंसंतं वा साइज्जइ'** प्रशंसन्तं प्रशंसां कुर्वन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥

अत्राह भाष्यकारः—

**भाष्यम्**—बालमरणाणि वीसइ, अन्नाणि य तारिसाणि मरणाणि ।
जो य पसंसइ पावइ, मिच्छाथेज्जाइबहुदोसे ॥

**छाया**—बालमरणानि विंशतिं, अन्यानि च तादृशानि मरणानि ।
यश्च प्रशंसति प्राप्नोति, मिथ्यास्थैर्यादिबहुदोषान् ॥

**अवचूरिः**—यः कश्चित् श्रमणो भिक्षुकः श्रमणी वा यथा तथा येन केनचित् प्रकारेण लोभात् मोहात् प्रकारान्तरेण वा बालमरणानि गिरिपतनादिकादारभ्य गृध्रपृष्ठमरणपर्यन्तानि विंशतिप्रकारकाणि अन्यानि वा तादृशानि मरणानि बालमरणानि तन्मध्यात् यत् किमप्येकं

मरणं प्रशंसति तेषा प्रशसा करोति कुर्वन्तं वा अनुमोदते स परस्मिन् आत्मनि वा मिथ्यात्व-स्थिरीकरणादिबहुदोषान् प्राप्नोति, यथा लोका एवं विचारयन्ति यत् इमे साधवः सर्वथा सुस्थितात्मनः ते ईमे गिरिपतनादिकं मरणं प्रशंसन्ति अतो निश्चितमेतत् गिरिपतनादिकं मरणं श्रेयस्करमतोऽवश्यमेव करणीयम् नास्ति एतादृशमरणकरणे कोपि दोष., एव प्रकारेण मिथ्यात्वमेव स्थिरीकृत भवति । तथा एव कुर्वन्तो आज्ञाभङ्गादिकाननेकान् दोषानपि लभेरन् । एवम् बालमरणस्य प्रशसाकरणे शैक्षकः परिषहपराभूत. विंशतिमरणाना मध्यादेकतरमपि मरणं प्रतिपद्येत तदा निर्दयता समापद्यते, तेन तद्विराधनाजन्यं प्रायश्चित्तं प्राप्नुयात् तस्मात् बालमरणानि न प्रशंसेत् । एषु विंशतिविधेषु मरणेषु वैहायसं गृध्रपृष्ठ चेति मरणद्वयमागमज्ञा-जीवदयाचारित्रपतनादिकारणे समुत्पन्ने प्रशसन्ति. तथाहि—यथा केनापि हिंसकपुरुषेण गृहीतो भवेत् स यदि तं जीवहिंसायाप्रे रयति, अथवा मैथुनार्थिन्या कामिन्या गृहीतो भवेत् सा यदि तं मैथुनसेवनार्थं प्रेरयति एतादृश्या स्थितौ अगतिकगतिक सन् वैहायसं मरणं समाद्रियते तदा तत्तस्य मरण प्रशसनीयं भवेत् । तथा धृतिबलसपन्नो मुनिर्गृध्रपृष्ठमरणं करोतीति साधोराचरणीयत्वेन गृध्रपृष्ठमरणमपि प्रशसनीयमेव भवति तेनैतद्द्वयमपि मरणं कारणे प्रशसायोग्य भवति । सूत्रे यो निषेध.स तु स्वाभिभूतमरणविषयको विज्ञेय इति विवेक ॥ सू० ९२॥

**सूत्रम्—तं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥ सू० ९३ ॥**

**॥ निसीहज्झयणे एगारसोद्देसो समत्तो ॥११॥**

**छाया—तत् सेवमान आपद्यते चातुर्मासिकं परिहारस्थानमनुद्घातिकम् ॥सू० ९३॥**

**॥ इति निशीथाध्ययने एकादशोद्देशकः समाप्तः ॥११॥**

**चूर्णी**—'**तं सेवमाणे**' इत्यादि । '**तं सेवमाणे**' तत् सेवमान '**अयपायाणि वा**' इत्यारभ्य '**बालमरणाणि पसंसइ**' इति पर्यन्तप्रायश्चित्तस्थानानां मध्यादेकस्यापि कस्यचित्प्रायश्चित्तस्थानस्य प्रतिसेवना कुर्वन् श्रमण श्रमणी वा '**आवज्जइ**' आपद्यते प्राप्नोति '**चाउम्मासियं**' चातुर्मासिकम् '**परिहारट्ठाणं**' परिहारस्थानं प्रायश्चित्तम् '**अणुग्घाइयं**' अनुद्घातिकम् गुरुकम् प्रायश्चित्तं लभते इति ॥ सू० ९३॥

इति श्री—विश्वविख्यात—जगद्वल्लभ—प्रसिद्धवाचक—पञ्चदशभाषाकलितललितकलापालापक—प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक—वादिमानमर्दक—श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-"**जैनशास्त्राचार्य**"—पदभूषित—कोल्हापुरराजगुरु-बालब्रह्मचारि—जैनाचार्य—जैनधर्मदिवाकर—पूज्यश्री—घासीलालव्रति—विरचितायां "**निशीथसूत्रस्य**" चूर्णिभाष्यावचूरिरूपायां व्याख्यायाम् एकादशोद्देशकः समाप्त.॥११॥

## ॥ द्वादशोद्देशकः ॥

व्याख्यात एकादशोद्देशक, साम्प्रतमवसरप्राप्तो द्वादशोद्देशक व्याख्यायते, तत्र–एकादशोद्देशकस्यान्तिम सूत्रेण सह द्वादशोद्देशकस्यादिसूत्रस्य क सम्बन्ध इति चेदत्राह भाष्यकारः—

**भाष्यम्**— मरणपसंसा नो चे, कप्पइ भिक्खुस्स तं कहं काउं ।
बद्धस्स होज्ज मरण, कत्थइ तस्स य निसेहोऽत्थ ॥१॥

छाया— मरणप्रशंसा नो चेत् कल्पते भिक्षो तत् कथं कर्तुम् ।
बद्धस्य भवेन्मरणं, कथ्यते तस्य च निषेधोऽत्र ॥१॥

**अवचूरिः**— गिरिपतनादिकं बालमरणं प्राणातिपात इति कृत्वा यदि तस्य प्रशंसन न कल्पते तदा तत् मरणं कर्तुं कथ कल्पते ? तत् सुत्तरा नैव कल्पते, तच्च मरणं बद्धस्य भवेत् इत्यतोऽत्र द्वादशोद्देशके तस्य बन्धस्य निषेध कथ्यते, एष एव एकादशोद्देशकेन सहास्य द्वादशोद्देशकस्य सम्बन्ध. । अनेन सम्बन्धेनायातस्यास्य द्वादशोद्देशकस्येदमादिसूत्रम्— '**जे भिक्खू कोलुणवडियाए**' इत्यादि ।

**सूत्रम्— जे भिक्खू कोलुणवडियाए अण्णयरं तसपाणजाइं तणपासएण वा मुंजपासएण वा कट्ठपासएण वा चम्मपासएण वा वेत्तपासएण वा सुत्तपासएण वा रज्जुपासएण वा बंधइ बंधंतं वा साइज्जइ ॥ सू० १॥**

छाया— यो भिक्षु कारुण्यप्रतिज्ञया अन्यतरां त्रसप्राणजातिं तृणपाशकेन वा मुञ्जपाशकेन वा काष्ठपाशकेन वा चर्मपाशकेन वा वेत्रपाशकेन वा सूत्रपाशकेन वा रज्जुपाशकेन वा बध्नाति बध्नन्त वा स्वदते ॥सू० १॥

**चूर्णी**— '**जे भिक्खू**' इत्यादि । '**जे भिक्खू**' य. कश्चिद् भिक्षु श्रमण श्रमणी वा '**कोलुणवडियाए**' कारुण्यप्रतिज्ञया–करुणाबुद्ध्या, तत्र करुणाया भाव कारुण्य तस्य प्रतिज्ञेति वाञ्छा कारुण्यप्रतिज्ञा, तया शय्यातरकरुणाबुद्ध्या यदि बुभुक्षितो वत्स स्वेच्छया दुग्धं पास्यति तदा दोहनसमये गृहस्थस्याल्प दुग्ध मिलिष्यति ततो गृहस्थस्याधिकं दुग्ध भवतु इति गृहस्थस्य प्रसन्नतार्थं, तथा यदि गृहस्थ प्रसन्नो भविष्यति तदा मह्यं अन्यस्मै वा साधवे प्रभूतमशनादि वसत्यादिकं च दास्यतीति गृहस्थानुग्रहार्थं '**अण्णयरं तसपाणजाइं**' अन्यतरां त्रसप्राणजातिं गोमहिष्यजाप्रभृतिरूपां '**तणपासएण**' तृणपाशकेन वा, तत्र तृणो दर्भादि. तस्य पाशको बन्धनम्, तेन तृणबन्धनेन बध्नातीत्यग्रेण सम्बन्ध । '**मुंजपासएण वा**' मुञ्जपाशकेन वा, तत्र मुञ्जो नाम तृणविशेषः तस्य पाशकेन बन्धनेनेत्यर्थ., '**कट्ठपासएण वा**' काष्ठपाशकेन वा काष्ठबन्धनेनेत्यर्थः '**चम्मपासएण वा**' चर्मपाशकेन वा मृगादिचर्मबन्धनेन '**वेत्तपासएण वा**' वेत्रपाशकेन वा, तत्र वेत्रो

नाम लताविशेषः 'नेतर' 'बेत' इति लोकप्रसिद्ध', तस्य बन्धनेन **'सुत्तपासएण वा'** सूत्रपाशकेन वा कार्पासादिकसूत्रबन्धनेनेत्यर्थः, **'रज्जुपासएण वा'** रज्जुपाशकेन वा, तत्र रज्जु' शणादिनिर्मिता तद्बन्धनेनेत्यर्थ· **'बंधइ'** बध्नाति यः खलु श्रमण. श्रमणी वा शय्यातरप्रसन्नताबुद्धया तृणाद्यन्यतमबन्धनेन त्रसप्राणिजात बध्नाति बन्धने क्षिपति तथा **'बंधंतं वा साइज्जइ'** बध्नन्तं वा स्वदते, अनुमोदते स प्रायश्चित्तभागी भवति, बन्धनकरणे प्राणातिपातस्य संभवात् अतो भिक्षु. कस्यापि प्राणिजातस्य शय्यातरप्रसन्नताबुद्धया तृणाद्यन्यतमबन्धनेन न बन्धनं कुर्यात् न वा बन्धनं कारयेत् न वा बध्नन्तमनुमोदेत ॥ सू० १॥

## सूत्रम्—जे भिक्खू कोलुणवडियाए अण्णयरं तसपाणजाइं तणपासएण वा मुंजपासएण वा कट्ठपासएण वा चम्मपासएण वा वेत्तपासएण वा सुत्तपासएण वा रज्जुपासएण वा बद्धेल्लगं मुंचइ मुंचंतं वा साइज्जइ॥

**छाया —यो भिक्षुः कारुण्यप्रतिज्ञया अन्यतरां त्रसप्राणजातिं तृणपाशकेन वा मुञ्जपाशकेन वा काष्ठपाशकेन वा चर्मपाशकेन वा वेत्रपासकेन वा सूत्रपाशकेन वा रज्जुपाशकेन वा बद्धं मुञ्चति मुञ्चन्तं वा स्वदते ॥ सू० २॥**

**चूर्णी**—'जे भिक्खू' इत्यादि । **'जे भिक्खू'** य. कश्चिद् भिक्षु. श्रमण श्रमणी वा **'कोलुणवडियाए'** कारुण्यप्रतिज्ञया गृहस्थानुकंपयेत्यादि सर्वं पूर्ववद् व्याख्येयम्, नवरम् **'बद्धेल्लगं'** बद्ध सन्तं गोमहिष्यजादिकं शय्यातरानुपस्थितौ वनगमनवेलाया तत्प्रसन्नार्थम् **'मुंचइ'** मुञ्चति बन्धनमुक्त करोति **'मुंचंत वा साइज्जइ'** मुञ्चन्त वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकार —

**भाष्यम्—सिज्जायरपसत्थं, बंधए मुंचए पसू ।**
**दोसभाई भवे भिक्खू, न दोसो अणुकंपणे ॥**

**छाया—शय्यातरप्रसन्नार्थं बध्नाति मुञ्चति पशून् ।**
**दोषभागी भवेद् भिक्षुः, न दोषोऽनुकम्पने ॥**

**अवचूरिः**—यः साधुः शय्यातरप्रसन्नार्थं शय्यातरस्य प्रसन्नतानिमित्तं **'पसू'** पशून् गोवत्सादीन् **'बंधए'** बध्नाति तथा **'मुंचए'** मुञ्चति स भिक्षु **'दोसभाई'** दोषभागी आज्ञाभङ्गादिदोषभाग् **'भवे'** भवेत्, किन्तु **'अणुकंपणे'** अनुकम्पने अनुकम्पायां **'दोसो न'** दोषो न भवति, पशोरनुकम्पया अन्याद्युपद्रवे तस्य बंधने मोचने वा साधुर्दोषभाग् न भवतीत्यर्थ· । अत्रायं विवेक.—गृहस्थप्रसन्नार्थं बध्नाति मुञ्चति यथा—गोमहिष्यादिर्वनात् घास चरित्वा समा-

गतो भवेत् तदा साधुर्गृहस्थस्य प्रसन्नतानिमित्तं तद्वशीकरणार्थं च तं स्वाभिमुखीकरणार्थं बध्नाति,, एवं प्रातर्वनगमनवेलायां मुञ्चति च, स चैवं विचारयति यदत्र गृहस्थोऽनुपस्थितः पशुश्च वनादागतः, एनं यदि न बध्नामि तदाऽयमन्यत्र गमिष्यति चोरो हरिष्यति तदा गृहस्थस्य महती हानिर्भविष्यतीत्यादि, तथा यदि वाटके गौर्महिषी वा निर्बन्धना स्थास्यति तदा वत्सो दुग्धं पास्यति तेन गृहस्थस्य दुग्धमल्पं भविष्यति तेन तस्य दुग्धहानिर्भविष्यति तेन कुपितो गृहस्थो मह्यमशनादि न दास्यति वसतितो वा निष्कासयिष्यतीति बध्नाति, एवं प्रातर्वनगमनसमये गृहस्थानुपस्थितौ मुञ्चति च एवं तत्करुणया तद्भयेन वा गोमहिष्यादिकं बध्नाति मुञ्चति च तदा स प्रायश्चित्तभागी भवति, एतद् गृहस्थकार्यमिति संयमात्मविराधनावश्यम्भाविनी यथा--एवं करणे साधोर्गृहस्थानुचरता तत्किंकरता च भवति, तेन संयमे महान् दोष आपद्येतेति संयमविराधना स्पष्टा। तथा पशोर्बन्धने यदि पशवः स्वचरणादिना साधुं हन्ति तेन पीडितो भवेत् म्रियेत वेति आत्मविराधनाऽवश्यम्भाविनीति संयमात्मविराधना स्पष्टा। तथा भाष्ये यत् कथितम्--'न दोसो अणुकंपणे' इति, अस्यायं विवेकः--पशुबन्धनस्थाने यदि सर्पादयो घातकप्राणिनः संचरन्ति तदा तद्दंशनादिसंभवः, कूपे गर्तादौ वा पशुः पतेत् गृहस्थश्चानुपस्थितो वर्त्तते इति तद्रक्षाबुद्ध्या परिस्थित्यनुसारेण पशोर्बन्धनं मोचनं चावश्यकं भवेत्, अथवा पशुगृहं वह्निना प्रज्वलितं प्रज्वलनशङ्का वा तत्र भवेत् तदा गृहस्थानुपस्थितौ तद्रक्षणार्थं पशोर्बन्धनं मोचनं चावश्यकमिति तत्र पशोर्बन्धने मोचने च साधोर्न कोऽपि दोषः, एवमकरणे प्राणिवधजन्यपापभागी भवति "अहिंसा परमो धर्मः" इति जैनसिद्धान्तोऽपि विलीनो भवेत्, अत एतादृशावस्थायां साधुः पशोर्बन्धनं मोचनं च करोति तदा न कोऽपि दोष इति ॥ सू० २॥

## सूत्रम्—जे भिक्खू अभिक्खणं अभिक्खणं पच्चक्खाणं भंजइ भंजंतं वा साइज्जइ ॥ सू० ३॥

छाया —यो भिक्षुरभीक्ष्णमभीक्ष्णं प्रत्याख्यानं भनक्ति भञ्जन्तं वा स्वदते। सू० ३॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'अभिक्खणं अभिक्खणं' अभीक्ष्णमभीक्ष्णं वारंवारम् 'पच्चक्खाणं' प्रत्याख्यानं नमोक्कारपौरुष्यादिप्रत्याख्यानम् 'भंजइ' भनक्ति त्रोटयति 'भंजंतं वा साइज्जइ' भञ्जन्तं त्रोटयन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति, अन्योऽपि दोषो भवति—यथाऽयं नमस्कारादिप्रत्याख्यानं भनक्ति तथा मूलगुणप्रत्याख्यानस्यापि भङ्गं करिष्यति, एवम् अगीतार्थानां गृहस्थानां च अविश्वासं जनयति, तथा प्रत्याख्यानभञ्जने लोकः साधूनामवर्णवादं करिष्यति, एवं प्रत्याख्यानभङ्गकरणे प्रत्याख्यानधर्मे श्रमणधर्मे वा

अदृढत्वं जायेत, तथा अन्यं परिभ्रयिष्यति करिष्यति चान्यमिति माया स्यात्, अन्यं भाषते अन्यं करोतीति मृषावादोऽपि भवेत्, एवं करणे सूत्रार्थपौरुषीणा विनाशोऽपि भवेत्, इत्यादयो बहवो दोषा भवन्ति तस्मात्कारणात् प्रत्याख्यानस्य भङ्गं न कुर्यात् न वा प्रत्याख्यानभङ्गं कुर्वन्तमनुमोदेत ॥सू० ३॥

**सूत्रम्—जे भिक्खू परित्तकायसंजुत्तं आहारं आहारेइ आहारेंतं वा साइज्जइ ॥ सू० ४ ॥**

**छाया—यो भिक्षुः परीतकायसंयुक्तमाहारमाहरति आहरन्तं वा स्वदते ॥४॥**

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् निर भिक्षु' श्रमण श्रमणी वा '**परित्तकायसजुत्तं**' परीत्तकायसयुक्तं, तत्र परीतकाय'—वनस्पतिकाय' साधारणप्रत्येकेति-द्विविधो वनस्पतिकाय, तेन सचित्तवनस्पतिकायेन सयुक्तं समिलितम् आहारम्—अशनपान-खाद्यस्वाद्यात्मकचतुर्विधमाहारम् '**आहारेइ**' आहरति भुङ्क्ते तथा '**आहारेंतं वा साइज्जइ**' आहरन्तम् सचित्तवनस्पतिकायसंयुक्तमशनादिकं भुञ्जानं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ४॥

**सूत्रम्—जे भिक्खू सलोमाइं चम्माइं धरेइ धरेंतं वा साइज्जइ ॥**

**छाया—यो भिक्षुः सलोमानि चर्माणि धरति धरन्तं वा स्वदते ॥सू० ५॥**

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चित् भिक्षु' श्रमणः श्रमणी वा '**सलोमाइं**' सलोमानि—रोमयुक्तानीत्यर्थ '**चम्माइं**' चर्माणि मृगादीनाम् '**धरेइ**' धरति स्वसमीपे उपभोगाय स्थापयति तत्रोपविशति तत्र निषीदति तत्र त्वग्वर्तनं च करोति, तथा '**धरेंतं वा साइज्जइ**' धरन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति तेषा दुष्प्रतिलेख्यत्वात् । देशविशेषे हिमबाहुल्यादिकारणवशाच्चर्मधारणमावश्यकं भवेत्ततस्तद्विषयकोऽयं निषेध इति विवेकः ॥ सू० ५॥

**सूत्रम्—जे भिक्खू तणपीढगं वा पलालपीढगं छगणपीढगं वेत्तपीढगं वा परवत्थेणोच्छन्नं अहिट्ठेइ अहिट्ठेंतं वा साइज्जइ ॥ सू० ६ ॥**

**छाया—यो भिक्षुः तृणपीठकं वा पलालपीठकं वा छगण (गोमय) पीठकं वा वेत्र-पीठकं वा परवस्त्रेणावच्छन्नमधितिष्ठति अधितिष्ठन्तं वा स्वदते ॥सू० ६॥**

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमण श्रमणी वा '**तणपीढगं वा** तृणपीठकं वा, तत्र तृणो दर्भादिकः, तस्य पीठमित्यर्थ. तृणमयमासनमिति यावत्

**'पलालपीढगं वा'** पलालपीठकं वा पलालमयं पीठकम् **'छगणपीढगं वा'** छगणपीठकं गोमय-पीठकं वा **'वेत्तपीढगं वा'** वेत्रपीठकं वा, तत्र वेत्रं नाम लताविशेष: तेन संपादितं फलकादिकं वेत्रपीठकम्, एतादृशं पीठफलकादिम् **'परवत्थेणोच्छन्नं'** परवस्त्रेणावच्छन्नम्, तत्र परो गृहस्थ: श्रावकोऽश्रावको वा तस्य यद् वस्त्रम् तेन आच्छादितं पीठफलकादिकं यो भिक्षुः **'अहिट्ठेइ'** अधितिष्ठति तदुपर्युपविशति शेते त्वग्वर्तन वा करोति कारयति वा परम् स तथा **'अहिट्ठेंतं वा साइज्जइ'** अधितिष्ठन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति गृहस्थवस्त्रोपभोगदोषप्रसङ्गात् ॥ सू० ६॥

## सूत्रम्—जे भिक्खू णिग्गंथीणं संघाडिं अण्णउत्थिएण वा गारत्थिएण वा सिव्वावेइ सिव्वावेंतं वा साइज्जइ ॥ सू० ७॥

**छाया—यो भिक्षुर्निर्ग्रन्थीनां संघाटीम् अन्ययूथिकेन वा गृहस्थेन वा सीवयति सीवयन्तं वा स्वदते ॥सू० ७॥**

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चित् भिक्षु श्रमण: आचार्य उपाध्यायादिको वा **'णिग्गंथीण'** निर्ग्रन्थीनां श्रमणीनाम् **'संघाडिं'** संघाटीम्—शाटिकाम् उपलक्षणत्वात् कञ्चुक्यादिकं किमपि उपकरणम् **'अण्णउत्थिएण वा'** अन्ययूथिकेन वा अन्यतीर्थिकेन साधुना **'गारत्थिएण वा'** गृहस्थेन वा—श्रावकादिना **'सिव्वावेइ'** सीवयति—संधापयति तथा **'सिव्वावेंतं वा साइज्जइ'** सीवयन्तं संधापयन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति संयमविराधना आत्मविराधना च भवति। यथा—निर्ग्रन्थी कार्यकरणेन सा प्रसन्ना मोहग्रस्ता वा साधुं स्त्रीमोहे पातयतीत्यादिकारणात् संयमविराधना। मोहग्रस्ता सा साधोरुपरि वशीकरण-चूर्णादिप्रयोग वा करोति तेन ग्रहगृहीतो वा भवेदित्यात्मविराधना। लोके उड्डाहो वा भवेत् यदयं निर्ग्रन्थीमोहमोहितो वर्तते अवश्यमनया सहास्य कोऽपि गोप्य संबन्धो विद्यते येन निर्ग्रन्थ्या वस्त्रसीवनादिकं गृहस्थादिना कारयतीति साधुना निर्ग्रन्थीसंघाट्या: सीवनं न कारयितव्यमिति भाव: ॥सू० ७॥

## सूत्रम्—जे भिक्खू पुढवीकायस्स वा आउकायस्स वा अगणिकायस्स वा वाउकायस्स वा वणस्सइकायस्स वा कलमायमवि समारभइ समारभंतं वा साइज्जइ ॥सू० ८॥

**छाया—यो भिक्षु पृथिवीकायस्य वा अप्कायस्य वा अग्निकायस्य वा वायुकायस्य वा वनस्पतिकायस्य वा कलायमात्रमपि समारभते समारभमाणं वा स्वदते ॥८॥**

**चूर्णी** 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा **'पुढवीकायस्स वा'** पृथिवीकायस्य वा पृथिवीकायिकजीवस्येत्यर्थः एवमप्तेजोवायुवनस्पतिकायस्य वा **'कलमायमवि'** कलायमात्रमपि, तत्र कलायो वृत्तधान्यविशेषः तावन्मात्रप्रमाणकमपि स्तोकप्रमाणमपि **'समारभइ'** समारभते पृथिवीकायिकादिजीवस्य अल्पमात्रमपि विराधनां करोति तथा **'समारभंतं वा साइज्जइ'** समारभमाणं वा पृथिवीकायिकादिजीवानाम् अल्पमात्रमपि विराधना कुर्वन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ८॥

## सूत्रम्—जे भिक्खू सचित्तरुक्खं दूरूहइ दूरूहंतं वा साइज्जइ ॥ ९॥

छाया—यो भिक्षुः सचित्तवृक्षं दूरोहति दूरोहन्तं वा स्वदते ॥सू० ९॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा **'सचित्तरुक्खं'** सचित्तवृक्षम् **'दूरूहइ'** दूरोहति सचित्तवृक्षोपरि आरोहण करोति तथा **'दूरूहंतं वा साइज्जइ'** दूरोहन्तं वा स्वदते, य सचित्तवृक्षोपरि आरोहणं करोति तदुपरि चरणौ वा स्थापयति तमनुमोदते स प्रायश्चित्तभागी भवति । तत्र सचित्तवृक्षा त्रिप्रकारका भवन्ति सङ्ख्येयजीववन्त यथा तालादिवृक्षा, असङ्ख्येयजीववन्तो यथा आम्रादिवृक्षाः, अनन्तजीववन्तो यथा थोहरादिका, एषा मध्ये कस्यापि वृक्षस्योपरि आरोहणं कुर्वत पादं वा स्थापयत आज्ञाभङ्गादिका दोषा भवन्तीति ॥ सू० ९॥

## सूत्रम्–जे भिक्खू गिहिमत्ते भुंजइ भुंजंतं वा साइज्जइ॥ सू० १०॥

छाया—यो भिक्षुः गृहिमात्रके भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० १०॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु श्रमणः श्रमणी वा **'गिहिमत्ते'** गृहिमात्रके गृहस्थस्य श्रावकादे मात्रके भाजने स्थाल्यादाविर्थ **'भुंजइ'** भुङ्क्ते अशनादिकचतुर्विधमाहारजातमुपभुङ्क्ते उपलक्षणाद् जलादि वा स्थापयति, तथा **'भुंजंतं वा साइज्जइ'** अशनादिकचतुर्विधमाहारजातं भुञ्जान श्रमण स्वदते अनुमोदते स प्रायश्चित्तभागी भवति । तत्र गृहस्थमात्रकं द्विविधम् त्रसजीवदेहनिष्पन्नम् स्थावरजीवदेहनिष्पन्नं च, तत्र हस्तिदन्तादिनिर्मितं पात्रं त्रसजीवदेहनिर्मितमिति कथ्यते सुवर्णरजतताम्रकांस्यादिनिर्मितं पात्रं स्थावरजीवदेहनिर्मितं धातुपात्रम् । तथा भोजनस्योपलक्षणत्वात् वस्त्रादिप्रक्षालनार्थमपि गृहस्थस्य पात्रं न ग्रहीतव्यमिति । तत्र य गृहस्थः स पूर्वमेव श्रमणार्थं पात्रं प्रक्षाल्य स्थापयेत् इति पुराकर्मदोषः, पश्चादपि श्रमणप्रतिनिवृत्ते पात्र प्रक्षालयतीति पश्चात्कर्मदोषः । एवमादयो बहवो दोषा भवन्ति तस्मात् कारणात् श्रमणः श्रमणी वा गृहस्थस्य पात्रे स्थाल्यादौ न कदाचिदपि स्वयं भुञ्जीत न वा परं भोजयेत् भुञ्जन्तं नानुमोदेत ॥सू० १०॥

## सूत्रम्—जे भिक्खू गिहिवत्थं परिहेइ परिहेंतं वा साइज्जइ ॥ सू० ११॥

**छाया**—यो भिक्षुः गृहिवस्त्रं परिदधाति परिदधन्तं वा स्वदते ॥सू० ११॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु श्रमणः श्रमणी वा **'गिहिवत्थं'** गृहस्थवस्त्रं गृहस्थेन परिभृत वस्त्रम् **'परिहेइ'** परिदधाति श्रावकादिवस्त्रस्य परिधानं करोति कारयति वा तथा **'परिहेंतं वा साइज्जइ'** परिदधन्त वा स्वदते स प्रायश्चित्तभागी भवति। पात्रग्रहणे ये पुराकर्मपश्चात्कर्मादिदोषा' कथितास्ते दोषा इहापि ज्ञातव्या. ॥सू० ११॥

## सूत्रम्—जे भिक्खू गिहिनिसेज्जं वाहेइ वाहेंतं वा साइज्जइ ॥१२॥

**छाया**—यो भिक्षुर्गृहिनिषद्यां वहति वहन्तं वा स्वदते ॥सू० १२॥

**चूर्णिः**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु. श्रमण. श्रमणी वा **'गिहिनिसेज्जं'** गृहिनिषद्याम्, तत्र गृहिणो गृहस्थस्य निषद्या–आसन पर्यङ्कादि यत्र उपविश्यते तादृशीं निषद्याम् **'वाहेइ'** वहति–निषीदति गृहस्थस्य निषद्योपरि समुपविशति। **'वाहेंतं वा साइज्जइ'** वहन्तं वा स्वदते, उपविशन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति। अयं भाव'–भिक्षाचर्यादिप्रसङ्गेन गृहिगृह गत श्रमण गृहस्थस्य पर्यङ्कादौ समुपविश्य वार्तालाप कुर्यात् धर्मकथादिकं वा श्रावयेत् तदा गृहस्थप्रायोग्यासने समुपविष्टस्य ब्रह्मचर्यभङ्गप्रसङ्ग भुक्तभोगानां स्मरणसंभवात्। तथा लोकाना साधुब्रह्मचर्ये शङ्कापि प्रादुर्भवेत् कथमय श्रमणो भूत्वापि गृहस्थासने समुपविष्ट ? एवम् अनेकेषां चित्ते अनेकप्रकारिका शङ्का प्रादुर्भूता स्यात् तस्मात्कारणात् श्रमण श्रमणी वा गृहस्थस्यासने कदापि नोपविशेत न वा समुपविशन्तमनुमोदेत ॥ सू० १२॥

## सूत्रम्—जे भिक्खू गिहितेइच्छं करेइ करेंतं वा साइज्जइ ॥ सू० १३॥

**छाया**—यो भिक्षुर्गृहिचिकित्सां करोति कुर्वन्तं वा स्वदते ॥ सू०१३॥

**चूर्णिः**—'जे भिक्खू' इत्यादि 'जे भिक्खू' य कश्चिद् भिक्षुः श्रमण श्रमणी वा **'गिहितेइच्छं'** गृहिचिकित्सां, तत्र गृही गृहस्थ ,,तस्य चिकित्सा रोगप्रतीकारलक्षणा ताम् **'करेइ'** करोति, यो भिक्षुर्गृहस्थस्य वमनविरेचनपानादिप्रकारै रोगस्य ज्वरादे विषूचिकादेर्वा प्रतीकारमौषधाद्युपचारं करोति तथा **'करेंतं वा साइज्जइ'** कुर्वन्त वा स्वदते स प्रायश्चितभागी भवति ॥ सू० १३॥

## सूत्रम्—जे भिक्खू पुरेकम्मकडेण हत्थेण वा मत्तेण वा दव्वीए वा भायणेण वा असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० १४॥

छाया—यो भिक्षुः पुराकर्मकृतेन हस्तेन वा मात्रकेण वा दर्व्या वा भाजनेन वा अशनं वा पानं वा खाद्य वा स्वाद्य वा प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० १४॥

चूर्णिः—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'पुरेकम्मकडेण' पुराकर्मकृतेन 'हत्थेण' हस्तेन, हस्तादीनां सचित्तजलादिना दानात्पूर्वं प्रक्षालनादिकरणं पुराकर्म तादृशपुराकर्मयुक्तेन हस्तेनेत्यर्थः 'मत्तेण वा' मात्रकेण पुराकर्मकृतपात्रेणेत्यर्थः 'दव्वीए वा' दर्व्या वा पुराकर्मयुक्तया दर्व्या 'कडछी' इति भाषाप्रसिद्धया 'भायणेण वा' भाजनेन पुराकर्मयुक्तेन भाजनेन स्थाल्यादिनेत्यर्थः 'असणं वा पाणं वा खाइमं वा साइमं वा' अशनादिचतुर्विधमाहारं 'पडिग्गाहेइ' प्रतिगृह्णाति स्वीकरोति तथा 'पडिग्गाहेतं वा साइज्जइ' प्रतिगृह्णन्त वा स्वीकुर्वन्त वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकार.

भाष्यम्—कह होइ पुरेकम्मं, साहुनिमित्त च किज्जए पुव्वं ।
दाणाओ पत्तहत्था,-ईणं जं धावणप्पभिई ॥१॥

छाया—कथं भवति पुराकर्म, साधुनिमित्तं च क्रियते पूर्वम् ।
दानात् पात्रहस्तादीनां यत् धावनप्रभृति ॥१॥

अवचूरिः—अत्र शिष्यः पृच्छति-हे गुरो ! पुराकर्म कथं भवति कीदृशं कथं च पुराकर्म भवतीति । गुरुराह शृणु हे शिष्य ! यत् साधुनिमित्तं साधवे वस्तुदानमाश्रित्य दानात् पूर्वं पात्रहस्तादीना, तत्र पात्रस्य संसृष्टस्य पिष्टादिना खरण्टितस्याशुद्धस्य वा तादृशयोर्हस्तयोर्वा आदिशब्दात् दर्व्यादीनां धावनप्रभृति धावनादिकं क्रियते तत् पुराकर्म कथ्यते । यथा गृहस्थगृहे भिक्षार्थं साधुरायात तत्समये पात्रं दातव्यवस्तुनो विरुद्धपदार्थेन खरण्टितमार्द्रं वा जलेन भवेत् अन्यद्वा पात्र नोपस्थितं भवेत् तदवस्थायां भिक्षादानात्पूर्वं तत् पात्रं गृहस्थः सचित्तजलेन प्रक्षालयति धूलिवस्त्रादिना वाऽऽर्द्रं पात्र शुष्कं करोति, एवं हस्तविषयेऽपि करोति तदा तत् पुराकर्म भवति, सचित्तजलादिजन्यारम्भदोषसद्भावात्, तादृशेन हस्तादिना दीयमानमशनादि साधुर्न गृह्णीयात् न वा तादृशमशनादि गृह्णन्तमनुमोदेत, एवं करणे साधुः प्रायश्चित्तभागी भवति भगवदाज्ञाभङ्गादिदोषप्रसङ्गादिति ॥ सू० ४॥

सूत्रम्—जे भिक्खू गिहत्थाण वा अण्णतित्थियाण वा सीओदगपरिभोगेण हत्थेण वा मत्तेण वा दव्वीए वा भायणेण वा असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू०१५॥

छाया—यो भिक्षुर्गृहस्थाना वा अन्यतीर्थिकाना वा शीतोदकपरिभोगेन हस्तेन वा मात्रकेण वा दर्व्या वा भाजनेन वा अशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्णाति प्रतिगृह्णन्त वा स्वदते ॥सू० १५॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा 'गिहत्थाण वा' गृहस्थाना वा, तत्र गृहस्था श्रोत्रियब्राह्मणादिका शुचिवादिन तेषां गृहस्थाना श्रोत्रियब्राह्मणाना तथा 'अण्णतित्थियाण वा' अन्यतीर्थिकाना वा, तत्रान्यतीर्थिका परिव्राजकादय, तेषामन्यतीर्थिकाना परिव्राजकतापसादीना 'सीओदगपरिभोगेण' शीतोदकपरिभोगेन, शीतोदकस्य परिभोग नित्यमार्द्रतारूपो यस्य स शीतोदकपरिभोग. निरन्तरशीतोदकार्द्रतायुक्त इत्यर्थ, तेन हस्तेन 'मत्तेण वा' मात्रकेण वा पात्रविशेषेण 'दव्वीए वा' दर्व्या, काष्ठमय्या 'चाटु' इति प्रसिद्धया 'भायणेण वा' भाजनेन वा सचित्तशीतोदकप्रक्षालितभाजनेन वा 'असणं वा ४' अशनादिचतुर्विधमाहारं 'पडिग्गाहेइ' प्रतिगृह्णाति स्वीकरोति तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्त वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति। शुचिवादिश्रोत्रिया ब्राह्मणा गृहस्था परिव्राजकादयो वा, न च प्राय पात्रादि काष्ठमयमेव रक्षन्ति, निरन्तरशीतोदकार्द्रस्य अन्तो जललेपत्वेन तदार्द्रता न निर्गच्छति, हस्तावपि ते वार वारं धावन्ति तत स्तावपि प्राय आर्द्रौ एव लभ्येते ततस्तादृशहस्तादिना यदि साधुरशनादि गृह्णाति तदनन्तरं ते शीतजलेन तानि हस्तपात्रादीनि अवश्यमेव प्रक्षालयिष्यन्ति ततस्तद्गतलेपस्य परिहारदु शक्यत्वेन बहुना सचित्तजलेन वारं वार प्रक्षालन करिष्यन्ति तेन साधो पश्चात्कर्मदोष समापद्येत, तथाऽत्र पुराकर्मदोषोऽपि समापद्येत यतस्ते भिक्षादानात पूर्वमपि हस्तादि प्रक्षालयन्ति, तस्मात पश्चात्कर्मपुराकर्मेति दोषद्वयसंभवात् तादृशगृहस्थादीना हस्तादिना साधुरशनादि चतुर्विधमाहार न गृह्णीयात्, गृह्णन्त चान्यं नानुमोदयेत ॥सू० १५॥

सूत्रम्—जे भिक्खू कट्ठकम्माणि वा पोत्थकम्माणि वा चित्तकम्माणि वा लेप्पकम्माणि वा दंतकम्माणि वा मणिकम्माणि वा सेलकम्माणि वा गंथिमाणि वा वेढिमाणि वा पूरिमाणि वा संघाइमाणि वा पत्तच्छेज्जाणि वा विविहाणि वा वेहिमाणि वा चक्खुदंसणवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० १६॥

छाया—यो भिक्षुः काष्ठकर्माणि वा पुस्तकर्माणि वा चित्रकर्माणि वा लेप्यकर्माणि वा दन्तकर्माणि वा मणिकर्माणि वा शैलकर्माणि वा ग्रन्थिमानि वा वेष्टिमाणि वा पूरिमाणि वा संघातिमानि वा पत्रच्छेद्यानि वा विविधानि वा वेधिमानि वा चक्षुर्दर्शनप्रतिज्ञया अभिसन्धारयति अभिसन्धारयन्तं वा स्वदते ॥ सू० १६॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'कट्ठकम्माणि वा' काष्ठकर्माणि वा काष्ठनिर्मितप्रतिकृतिपुत्तलिकाविशेषलक्षणानि 'चित्तकम्माणि वा' चित्रकर्माणि वा-चित्रलिखितपुत्तलिकारूपाणि 'पोत्थकम्माणि वा' पुस्तकर्माणि वा-पुस्तकरूपाणि वस्त्रखण्डनिर्मितपुत्तलिकादिलक्षणानि वा 'लेप्पकम्माणि वा' लेप्यकर्माणि वा लेपनादिना निर्मितपुत्तलिकादिरूपाणि 'दंतकम्माणि वा' दन्तकर्माणि वा हस्तिदन्तादिनिर्मितवस्तूनि 'मणिकम्माणि वा' मणिकर्माणि वा चन्द्रकान्तमण्यादिनिर्मितानि वस्तूनि 'सेलकम्माणि वा' शैलकर्माणि वा प्रस्तरखण्डे चित्रितानि रूपाणि 'गंथिमाणि वा' ग्रन्थिमानि वा ग्रन्थिनिर्मितपुत्तलिकादीनि 'वेढिमाणि वा' वेष्टिमानि वा वस्त्रादिभिर्वेष्टनं कृत्वा निर्मितानि वस्तूनि 'पूरिमाणि वा' पूरिमाणि वा तण्डुलादि पूरयित्वा निर्मितानि स्वस्तिकादीनि 'संघाइमाणि वा' संघातिमानि अनेकवस्त्रखण्डान् संयोज्य कृतानि 'पत्तच्छेज्जाणि वा' पत्रछेद्यानि वा कदल्यादीनां पत्राणि छित्वा निर्मितानि पुत्तलिकादीनि भ्रमरादिवत् छिद्राणि कृत्वा चित्रितानि 'विविहाणि वा' विविधानि-अनेकप्रकाराणि वा 'वेहिमाणि वा' वैधिकानि वा पत्रकाष्ठादिवेधनेन निर्मितानि 'कोरणी' इति भाषाप्रसिद्धकर्मणा कृतानि, एतानि पूर्वोक्तानि सर्वाणि 'चक्खुदंसणवडियाए' चक्षुर्दर्शनप्रतिज्ञया चक्षुषा दर्शनेच्छया 'अभिसंधारेइ' अभिसंधारयति चक्षुषा द्रष्टुं मनसि धारयति निश्चयं करोति। तथा 'अभिसंधारेंतं वा साइज्जइ' अभिसन्धारयन्तं वा स्वदते अनुमोदते, यो हि श्रमणः काष्ठकर्मादीनि द्रष्टुं निश्चयं करोति तथा निश्चयं कुर्वन्तं योऽनुमोदते स प्रायश्चित्तभागी भवति ॥सू० १६॥

सूत्रम्—जे भिक्खू वप्पाणि वा फलिहाणि वा उप्पलानि वा पल्ललाणि वा उज्झराणि वा निज्झराणि वा वावीणि वा पोक्खरिणी वा दीहियाणि वा गुंजालियाणि वा सराणि वा सरपंतियाणि वा सरसरपंतियाणि वा चक्खुदंसणवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥सू० १७॥

छाया—यो भिक्षुः वप्रान् वा परिखा वा उत्पलानि वा पल्वलानि वा उज्झरान् वा निर्झरान् वा वापीर्वा पुष्करिणीर्वा दीर्घिका वा गुंजालिका वा सरांसि वा सरपंक्तीर्वा सरःसरःपंक्तीर्वा चक्षुर्दर्शनप्रतिज्ञया अभिसंधारयति अभिसंधारयन्तं वा स्वदते ॥

चूर्णी--'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'वप्पाणि वा' वप्रान् क्षेत्राणि वा 'फलिहाणि वा' परिखा वा-खातविशेषान् 'उप्पलाणि वा' उत्पलानि वा उत्पलस्थानभूतान् जलाशयविशेषान् 'पल्ललाणि वा' पल्वलानि वा, तत्र पल्वलानि क्षुद्रजलाशयास्तानि 'उज्झराणि वा' उज्झरान् वा—उपरितः पतज्जलप्रवाहान् वा 'निज्झराणि वा' निर्झरान् वा

**पर्वतेषु** भूमित उद्गच्छज्जलप्रवाहस्थानानि **'वावीणि वा'** वापीर्वा वाप्यः प्रसिद्धास्ताः, **'पोक्खरिणी वा'** पुष्करिणीर्वा--कमलोत्पत्तिस्थानजलाशयविशेषान् लघुतडागान् वा **'दीहियाणि वा'** दीर्घिका वा चतुष्कोणा वापी· **'गुंजालिया वा'** गुञ्जालिका वा वापीविशेषान् वा, **'सराणि वा'** सरांसि वा—तडागा. तानि **'सरपंतियाणि वा'** सर पङ्क्तीर्वा सरांसि तडागास्तेषा पंक्तीर्वा **'सरसरपंतियाणि वा'** सर सरःपंक्तीर्वा येषु एकस्मात् सरस अन्यत्सर प्रति जलं गच्छति ताः सरःसर.पंक्तीः, एतानि जलस्थानानि **'चक्खुदंसणवडियाए'** इत्यादिपदानां व्याख्या **पूर्ववद्** विज्ञेया । वप्रादीना च दर्शने 'सम्यक् सुन्दरं चैत' दिति कथने तदनुमोदनं स्यादित्यनुमोदने तदारम्भजन्यदोषसद्भावात् प्रायश्चित्तभागी भवति । अप्रशसने लोकाना मनसि खेदो भवति तज्जन्यप्रायश्चित्तमापद्येत सयमात्मविराधनाऽपि भवति अत· पूर्वोक्तवस्तूनि द्रष्टुं न मनसि विचारयेत्, न वा पश्येत् न वा दृष्टिपथं कुर्वन्तमनुमोदेत ॥ सू० १७॥

**सूत्रम्—जे भिक्खू कच्छाणि वा गहणाणि वा णूमाणि वा वणाणि वा वणविदुग्गाणि वा पव्वयाणि वा पव्वयविदुग्गाणि वा चक्खुदंसणवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥सू० १८॥**

**छाया**—यो भिक्षुः कच्छान् वा गहनानि वा नूमानि वा वनानि वा वनविदुर्गाणि वा पर्वतान् वा पर्वतविदुर्गाणि वा चक्षुर्दर्शनप्रतिज्ञया अभिसंधारयति अभिसंधारयन्तं वा स्वदते ॥ सू० १८॥

**चूर्णी**—**'जे भिक्खू'** इत्यादि । **'जे भिक्खू'** य कश्चिद् भिक्षु· श्रमण श्रमणी वा **'कच्छाणि वा'** कच्छान् वा, तत्र कच्छा जलबहुलप्रदेशा इक्ष्वादिवाटिका वा तान् **'गहणाणि वा'** गहनानि अनेकवृक्षाकुलकाननानि वा **'णूमाणि वा'** नूमानि वा, तत्र 'नूमं' इति देशी शब्दः छादनार्थे, तेन नूमानि गुप्तगृहवनानि, **'वणाणि वा'** वनानि वा एकजातीयवृक्षसमुदायरूपाणि, तानि **'वणविदुग्गाणि वा'** वनविदुर्गाणि वा, तत्र नानाजातीयवृक्षयुक्तवनसमुदायरूपाणि **'पव्वयाणि वा'** पर्वतान् वा **'पव्वयविदुग्गाणि वा'** पर्वतविदुर्गाणि वा अनेकपर्वतसमुदायरूपाणि -तानि **'चक्खुदंसणवडियाए'** इत्यादि व्याख्या पूर्ववत् ॥ सू० १८॥

**सूत्रम्—जे भिक्खू गामाणि वा णगराणि वा निगमाणि वा खेडाणि वा कब्बडाणि वा मडंबाणि वा दोणमुहाणि वा पट्टणाणि वा आगराणि वा संबाहाणि वा संनिवेसाणि वा चक्खुदंसणवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० १९॥**

छाया—यो भिक्षुर्ग्रामान् वा नगराणि वा निगमान् वा खेटानि वा कर्बटानि वा मडम्बानि वा द्रोणमुखानि वा पत्तनानि वा आकरान् वा संबाहान् वा संनिवेशान् वा चक्षुर्दर्शनप्रतिज्ञया अभिसंधारयति अभिसंधारयन्तं वा स्वदते ॥ सू० १९॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'गामाणि वा' ग्रामान् वा, तत्र ग्रामाः वृतिवेष्टिताः तान् 'णगराणि वा' नगराणि वा नगराणि यत्र अष्टादशकरादिकं न गृह्यते तादृशानि स्थानानि, तानि, 'णिगमाणि वा' निगमान् वा, निगमाः प्रभूततरवणिग्जननिवासाः, तान् वा, 'खेडाणि वा' खेटानि वा, तत्र खेटानि नाम धूलिप्राकारवेष्टितानि, तानि 'कब्बडाणि वा' कर्बटानि वा, तत्र कर्बटानि कुत्सितानि नगराणि, अल्पजननिवासस्थानानि वा 'मडंबाणि वा' मडबानि वा' मडम्बानि सार्द्धक्रोशद्वयाभ्यन्तरे ग्रामान्तररहितानि, तानि, 'दोणमुहाणि वा' द्रोणमुखानि वा—द्रोणमुखानि जलस्थलोपेता जननिवासाः, तानि 'पट्टणाणि वा' पत्तनानि वा, तत्र पत्तनानि समस्तवस्तुप्राप्तिस्थानानि, तानि द्विविधानि जलपत्तनानि स्थलपत्तनानि च, तत्र नौभिर्येषु गम्यते तानि जलपत्तनानि, येषु च शकटादिभिर्गम्यते तानि स्थलपत्तनानि, तानि 'आकराणि वा' आकरान् वा सुवर्णादीनामुत्पत्तिस्थानानि 'संबाहाणि वा' संबाहान् वा, तत्र संबाहा नाम अन्यत्र कृषिबलैर्धान्यरक्षार्थं निर्मितानि दुर्गमस्थानानि, तान् 'संनिवेसाणि वा' संनिवेशान् वा, तत्र संनिवेशा—समागतसार्थवाहादिनिवासस्थानानि, तान् 'चक्खुदंसणवडियाए' इत्यादि व्याख्या पूर्ववत् ॥ सू० १९॥

**सूत्रम्—जे भिक्खू गाममहाणि वा णगरमहाणि वा णिगममहाणि वा खेडमहाणि वा कब्बडमहाणि वा मडंबमहाणि वा दोणमुहमहाणि वा पट्टणमहाणि वा आगरमहाणि वा संबाहमहाणि वा संनिवेसमहाणि वा चक्खुदंसणवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू०२०॥**

छाया—यो भिक्षुर्ग्राममहान् वा नगरमहान् वा निगममहान् वा कर्बटमहान् वा मडम्बमहान् वा द्रोणमुखमहान् वा पत्तनमहान् वा आकरमहान् वा संबाहमहान् वा संनिवेशमहान् वा चक्षुर्दर्शनप्रतिज्ञया अभिसन्धारयति अभिसन्धारयन्तं वा स्वदते ॥२०॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चित् भिक्षुः श्रमणः श्रमणी वा 'गाममहाणि वा' ग्राममहान् वा, तत्र ग्रामस्य महा उत्सवा ग्राममहाः ग्रामोत्सवा इत्यर्थः तान् 'मेला' इति भाषाप्रसिद्धान् एवं नगरादिशब्दानां व्याख्या पूर्वसूत्रतो विज्ञेया, तेषां नगरादीनां पूर्वोक्तानां सर्वेषां महान् नगराद्युत्सवान् 'चक्खुदंसणवडियाए' चक्षुर्दर्शनप्रतिज्ञया इत्यादि व्याख्या पूर्ववत् ॥ सू० २०॥

**सूत्रम्—जे भिक्खू गामवहाणि वा णगरवहाणि वा णिगमवहाणि वा खेडवहाणि वा कब्बडवहाणि वा मडंबवहाणि वा दोणमुहवहाणि वा पट्टणवहाणि वा आगरवहाणि वा संबाहवहाणि वा संनिवेसवहाणि वा चक्खुदंसणवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० २१॥**

छाया—यो भिक्षुर्ग्रामवधान् वा नगरवधान् वा निगमवधान् वा खेटवधान् वा कर्बटवधान् वा मडम्बवधान् वा द्रोणमुखवधान् वा पत्तनवधान् वा आकरवधान् वा संबाहवधान् वा संनिवेशवधान् वा चक्षुर्दर्शनप्रतिज्ञया अभिसन्धारयति अभिसन्धारयन्तं वा स्वदते ॥ सू० २१॥

चूर्णी—**'जे भिक्खू'** इत्यादि । **'जे भिक्खू'** य कश्चिद् भिक्षु श्रमण श्रमणी वा **'गामवहाणि वा'** ग्रामवधान् वा तत्र ग्रामस्य वधा ग्रामवधा' देवताराजाद्युपद्रवेण ग्रामघाता ग्रामविनाशा, तान् वधस्य नानाप्रकारकत्वादत्र बहुवचनम् । एवमग्रेऽपि विज्ञेयम एव नगरादीना पूर्वव्याख्यातानां वधान **'चक्खुदंसणवडियाए'** इत्यादि व्याख्या पूर्ववत् ॥ सू० २१॥

**सूत्रम्—जे भिक्खू गामपहाणि वा णगरपहाणि वा निगमपहाणि वा खेडपहाणि वा कब्बडपहाणि वा मडंबपहाणि वा दोणमुहपहाणि वा पट्टणपहाणि वा आगरपहाणि वा संबाहपहाणि वा संनिवेसपहाणि वा चक्खुदंसणवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० २२॥**

छाया—यो भिक्षुर्ग्रामपथान् वा नगरपथान वा निगमपथान् वा खेटपथान वा कर्बटपथान् वा द्रोणमुखपथान् वा पत्तनपथान् वा आकरपथान् वा संबाहपथान् वा संनिवेशपथान् वा चक्षुर्दर्शनप्रतिज्ञया अभिसंधारयति अभिसंधारयन्त वा स्वदते ॥ सू०२२॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा **'गामपहाणि वा'** ग्रामपथान् वा, तत्र ग्रामस्य पन्थान मार्गा ग्रामपथा तान्, य ग्रामादौ नूतनमार्गाणा दर्शनीयादिगुणविशिष्टानां निर्माणं कृतं भवेत् तादृशान मार्गान्, एव नगरादीना तादृशान् मार्गान् **'चक्खुदंसणवडियाए'** इत्यादि पूर्ववत् स्वय व्याख्येयम ॥ सू० २२॥

**सूत्रम्—जे भिक्खू गामदाहाणि वा णगरदाहाणि वा निगमदाहाणि वा खेडदाहाणि वा कब्बडदाहाणि वा मडंबदाहाणि वा दोणमुहदाहाणि वा पट्टणदाहाणि वा आगरदाहाणि वा संबाहदाहाणि वा संनिवेसदाहाणि वा चक्खुदंसणवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० २३॥**

छाया—यो भिक्षुर्ग्रामदाहान् वा नगरदाहान् वा निगमदाहान् वा खेटदाहान् कर्वटदाहान् वा मडंबदाहान वा द्रोणमुखदाहान् वा पत्तनदाहान् वा आकरदाहान् वा संबाहदाहान् वा संनिवेशदाहान् वा चक्षुर्दर्शनप्रतिज्ञया अभिसन्धारयति अभिसन्धारयन्त वा स्वदते ॥सू० २३॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चिद् भिक्षु. श्रमणः श्रमणी वा 'गामदाहाणि वा' ग्रामदाहान् वा, तत्र ग्रामस्य दाहा वह्निना प्रज्वलनानि, तादृशान् ग्रामदाहान्, एवं नगरादीना दाहान् 'चक्खुदंसणवडियाए' इत्यादि पूर्ववत् । सू० २३ ।

सूत्रम्—जे भिक्खू आसकरणाणि वा हत्थिकरणाणि वा उट्टकरणाणि वा गोणकरणाणि वा महिसकरणाणि वा सूयरकरणाणि वा चक्खुदंसणवडियए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० २४ ॥

छाया यो भिक्षुरश्वकरणानि वा हस्तिकरणानि वा उष्ट्रकरणानि वा गोकरणानि वा महिषकरणानि वा शूकरकरणानि वा चक्षुर्दर्शनप्रतिज्ञया अभिसंधारयति अभिसंधारयन्त वा स्वदते ॥ सू० २४॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य' कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'आसकरणाणि वा' अश्वकरणानि—अश्वकरणस्थानानि, यत्राश्वाना करणानि विनयादिशिक्षणानि क्रीडनानि वा भवन्ति तानि अश्वकरणानि तादृशस्थानानि अश्वशिक्षणक्रीडनस्थानानीत्यर्थ, 'हत्थिकरणाणि वा' हस्तिकरणानि वा—हस्तिशिक्षणक्रीडनस्थानानि, एवम् 'उट्टकरणाणि वा' उष्ट्रकरणानि वा उष्ट्राणा शिक्षणक्रीडनस्थानानि, 'गोणकरणाणि वा' गोकरणानि वा—गोवीर्णां गोपुरुषाणा वा शिक्षणक्रीडनस्थानानि, 'महिसकरणाणि वा' महिषकरणानि वा—महिषशिक्षणक्रीडनस्थानानि वा, 'सूयरकरणाणि वा' शूकरकरणानि वा—शूकरशिक्षणक्रीडनस्थानानि वा 'चक्खुदंसणवडियाए' इत्यादि पूर्ववत् ॥ सू० २४॥

सूत्रम्—जे भिक्खू आसजुद्धाणि वा हत्थिजुद्धाणि उट्टजुद्धाणि वा महिसजुद्धाणि वा सूयरजुद्धाणि वा चक्खुदंसणवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० २५ ॥

छाया—यो भिक्षुरश्वयुद्धानि हययुद्धानि वा उष्ट्रयुद्धानि वा गोयुद्धानि वा महिषयुद्धानि वा शूकरयुद्धानि वा चक्षुर्दर्शनप्रतिज्ञया अभिसन्धारयति अभिसन्धारयन्तं वा स्वदते ॥ सू० २५॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु. श्रमणः श्रमणी वा 'आसजुद्धाणि वा' अश्वयुद्धानि वा—अश्वयोरश्वाना वा विनोदार्थं परस्परं युद्धं कार्यते स्वयं

कुर्वन्ति वा तानि अश्वयुद्धकरणस्थानानीत्यर्थः, एवम् हस्त्यादीनां युद्धस्थानानि 'चक्खुदंसणवडियाए' इत्यादि पूर्ववत् ॥ सू० २५॥

**सूत्रम्—जे भिक्खू गाउजूहियठाणाणि वा हयजूहियठाणाणि वा गयजूहियठाणाणि वा चक्खुदंसणवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० २६ ॥**

छाया—यो भिक्षु गोयूथिकस्थानानि वा हययूथिकस्थानानि वा गजयूथिकस्थानानि वा चक्षुर्दर्शनप्रतिज्ञया अभिसन्धारयति अभिसन्धारयन्त वा स्वदते ॥सू० २६॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य: कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'गाउजूहियठाणाणि वा' गोयूथिकस्थानानि वा गोयूथाना गोसमुदायानां यानि स्थानानि तानि गोयूथिकस्थानानि तानि, अथवा गोमिथुनस्थानानि गोयूथिकस्थानानि, एवमग्रे सर्वत्रापि-विज्ञेयम्, 'हयजूहियठाणाणि वा' हययूथिकस्थानानि वा 'गयजूहियठाणाणि वा' गजयूथिकस्थानानि वा 'चक्खुदंसणवडियाए' इत्यादि पूर्ववत् ॥ सू० २६॥

**सूत्रम्—जे भिक्खू अभिसेयठाणाणि वा अक्खाइयठाणाणि वा माणुम्माणपमाणठाणाणि वा महयाहयनट्टगीयवाइयतंतीतलतालतुडियघणमुइंगपडुप्पवाइयरवठाणाणि वा चक्खुदंसणवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० २७॥**

छाया—यो भिक्षुरभिषेकस्थानानि वा आख्यापिकास्थानानि वा मानोन्मानप्रमाणस्थानानि वा महदाहतनृत्यगीतवादित्रतन्त्रीतलतालत्रुटितघनमृदङ्गपटुप्रवादितरवस्थानानि वा चक्षुर्दर्शनप्रतिज्ञया अभिसन्धारयति अभिसन्धारयन्त वा स्वदते ॥ सू० २७॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'अभिसेयठाणाणि वा' अभिषेकस्थानानि वा, यत्र मूर्धाभिषिक्तराज्ञामभिषेकादि भवति तादृशानि स्थानानि अभिषेकस्थानानि 'अक्खाइयठाणाणि वा' आख्यायिकास्थानानि वा, यत्र भारतरामायणादिकथा क्रियते तादृशस्थानानि 'माणुम्माणपमाणठाणाणि वा' मानोन्मानप्रमाणस्थानानि वा, यत् धान्यादि पल्लादिना मीयते तद् मानम्, यत तुलया उद्धृत्य दीयते तद् उन्मानम्, यत् हस्ताङ्गुल्यादिना प्रमाणित कृत्वा दीयते तत् प्रमाणम्, यत्रैवं प्रकारेण वस्तूनां क्रयो विक्रयो भवेत् तादृशानि स्थानानि धान्यादिवस्तुक्रयविक्रयस्थानानीत्यर्थः, 'महयाहयनट्टगीयवाइयतंतीतलतालतुडियपडुप्पवाइयरवठाणाणि वा' महदाहतनृत्यगीतवादित्रतन्त्रीतलतालत्रुटितघनमृदङ्गपटुप्रवादितरवस्थानानि वा, यत्र स्थानविशेषे नृत्यगीतादिकं भवति तत्रातिबलेन ताडितानि पटुपुरुषेण

प्रवादितानि यानि वादित्राणि तंत्रीतलतालत्रुटितघनमृदङ्गरूपाणि, तेषां रवः शब्दो भवति तादृशानि स्थानानि, एतानि उपर्युक्तस्थानानि 'चक्खुदंसणवडियाए' इत्यादि सुगमम् ॥ सू० २७॥

सूत्रम्—जे भिक्खू डिंबाणि वा डमराणि वा खाराणि वा वेराणि वा महाजुद्धाणि वा महासंगामाणि वा कलहाणि वा बोलाणि वा चक्खुदंसण वडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० २८ ॥

छाया—यो भिक्षुः डिम्बानि वा डमराणि वा क्षाराणि वा वैराणि वा महायुद्धानि वा महासंग्रामान् वा कलहान् वा बोलान् वा चक्षुर्दर्शनप्रतिज्ञया अभिसन्धारयति अभिसन्धारयन्तं वा स्वदते ॥ सू० २८ ॥

चूर्णी 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'डिंबाणि' डिम्बानि—राष्ट्रविप्लवरूपाणि तेषां स्थानानि स्थानानीति पदं सर्वत्र योज्यम् । 'डमराणि वा' डमराणि वा, तत्र डमराणि नाम राष्ट्रस्य बाह्याभ्यन्तरजनकृतोपद्रवास्तेषां स्थानानि, 'खाराणि वा' क्षाराणि वा क्षारा नाम परस्परमन्तर्द्वेषाः तज्जनितोपद्रवस्थानानि, 'वेराणि वा' वैराणि वा, वैराणि नाम वंशपरम्पराऽऽगता द्वेषास्तत्समुत्पादितकलहादि स्थानानि, 'महाजुद्धाणि वा' महायुद्धानि वा, तत्र महायुद्धानि नाम अनेकेषां पुरुषाणां जायमानानि कलहादीनि, तेषां स्थानानि शस्त्रादिप्रहारस्थानानि वा 'महासंगामाणि वा' महासंग्रामान् चतुरंगिणीसेनाद्वारा जायमानशस्त्रादिप्रहारस्थानानि 'कलहाणि वा' कलहान् वा कलहस्थानानि 'बोलाणि वा' बोलानि वा, तत्र बोलाः कलकलशब्दाः, तेषां स्थानानि, एतानि पूर्वोक्तानि डिम्बादीनि यः श्रमणः श्रमणी वा 'चक्खुदंसणवडियाए' इत्यादि सुगमम् ॥ सू० २८॥

सूत्रम्—जे भिक्खू विरूवरूवेसु महुस्सवेसु इत्थीणि वा थेराणि वा मज्झिमाणि वा डहराणि वा अणलंकियाणि वा सुअलंकियाणि वा गायंताणि वा वायंताणि वा नच्चंताणि वा हसंताणि वा रमंताणि वा मोहंताणि वा विपुलं असणं वा पाणं वा खाइमं वा साइमं वा परिभायंताणि वा परिभुंजंताणि वा चक्खुदंसणवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० २९॥

छाया—यो भिक्षुर्विरूपरूपेषु महोत्सवेषु स्त्रीर्वा पुरुषान् वा स्थविरान् वा मध्यमान् वा डहरान् वा अनलङ्कृतान् वा स्वलङ्कृतान् वा गायतो वा

**वादयतो वा नृत्यतो वा हसतो वा रममाणान् वा मोहयतो वा पिपुलमशन वा पानं वा खाद्यं वा स्वाद्य वा परिभाजयतो वा परिभुञ्जानान् वा चक्षुर्दर्शनप्रतिज्ञया अभिसंधारयति अभिसन्धारयन्त वा स्वदते । सू० २९॥**

चूर्णी – 'जे भिक्खू' इत्यादि । **'जे भिक्खु'** य कश्चिद् भिक्षुः श्रमण' श्रमणी वा **'विरूवरूवेसु'** विरूपरूपेषु अनेकप्रकारेषु विलक्षणेषु वा **'महुस्सवेसु'** वा महोत्सवेषु महान्तश्च ते उत्सवाश्चेति महोत्सवा, तेषु इन्द्रमहोत्सवादिषु, यद्वा यत्रोत्सवे अनेकप्रकारकाः धनिका आढचनमा अकिंचनाश्चापि समिलिता भवन्ति, यद्वा–अनेकप्रकारका श्रेष्ठिनो राजानो राजपुरोहिततलवरादयो मिलिता भवन्ति तादृशा उत्सवा महोत्सवा, तादृशमहोत्सवेषु **'इत्थीणि वा'** स्त्रियो वा पूर्वोक्तमहोत्सवेषु संमिलिताः स्त्रिय इत्यर्थः **'पुरिसाणि वा'** पुरुषान् वा साधारणन पुरुषवर्गानित्यर्थ, **'थेराणि वा'** स्थविरान् वा, तत्र स्थविरा परिपक्ववयस' तान् वा **'मज्झिमाणि वा'** मध्यमान् वा वयसो मध्ये स्थितानित्यर्थ, **'डहराणि वा'** डहरान् वा, तत्र डहरा अल्पवयस्का तान् तादृशमहोत्सवे समुपस्थितान्, कीदृशान् तान्? तत्राह–**'अणलंकियाणि वा'** अनलङ्कृतान् वा कटककुण्डलाद्यलङ्काररहितान् वा **'सुअलंकियाणि वा'** स्वलङ्कृतान् वा कटककुण्डलाद्यलङ्कारेण सुसज्जितवेषान् वा **'गायंताणि वा'** गायतो वा तादृशमहोत्सवे संमिलितपुरुषेषु मध्ये केचन गानं कुर्वन्ति तान् गान कुर्वतो वेति **'वायंताणि वा'** वादयतो वा, तत्तालमृदङ्गादि वाद्यं वादयतो वा **'णच्चंताणि वा'** नृत्यतो वा नृत्य कुर्वतो वा **'हसंताणि वा'** हसतो वा अनेकप्रकारकहासोपहासव्यास्यादिकं कुर्वतो वा **'रमंताणि वा'** रममाणान् वा अनेक प्रकारकक्रीडा कुर्वतो वा **'मोहंताणि वा'** मोहयतो वा तादृशीं चेष्टा ये कुर्वन्ति यया परेषां मोह उत्पादितो भवेत् तादृशान् मोहोत्पादकानित्यर्थ । पुनः किं कुर्वतस्तान्? तत्राह–**'विउलं'** इत्यादि । **'विउलं'** विपुलमत्यधिकम् **'असणं वा'** ४ अशनं वा ४ चतुर्विधमाहारजातम् **'परिभायंताणि वा'** परिभाजयतो वा अशनादिभोज्यवस्तूनां परस्पर विभागं प्रविभज्य परस्परमादानप्रदान कुर्वतो वा **'परिभुंजंताणि वा'** परिभुञ्जानान् वा अशनाद्याहारजातमेकत्र स्थित्वाऽऽहरतो वा' एतादृशान् पूर्ववर्णितप्रकारकान् स्त्रीपुरुषादीन् **'चक्खुदंसणवडियाए'** इत्यादि पूर्ववत् ॥ सू० २९॥

**सूत्रम्— जे भिक्खू इहलोइएसु वा रूवेसु परलोइएसु वा रूवेसु दिट्ठेसु वा रूवेसु अदिट्ठेसु वा रूवेसु सुएसु वा रूवेसु वा असुएसु वा रूवेसु विन्नाएसु वा रूवेसु अविन्नाएसु वा रूवेसु सज्जइ रज्जइ गिज्झइ अज्झोववज्जइ सज्जंतं वा रज्जंतं वा गिज्झंतं वा अज्झोववज्जंतं वा साइज्जइ ॥सू० ३०॥**

छाया— यो भिक्षुरैहलौकिकेषु वा रूपेषु पारलौकिकेषु वा रूपेषु दृष्टेषु वा रूपेषु अदृष्टेषु वा रूपेषु विज्ञातेषु वा रूपेषु अविज्ञातेषु वा रूपेषु स्वजति रज्यति गृध्यति अध्युपपद्यते स्वजन्तं वा रज्यन्तं वा गृध्यन्तं वा अध्युपपद्यमानं वा स्वदते ॥सू० ३०॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु श्रमण. श्रमणी वा 'इहलोइएसु वा रूवेसु' ऐहलौकिकेषु वा रूपेषु, तत्र ऐहलौकिकाः मनुष्यस्त्र्यादिपदार्थाः तत्सम्बन्धिषु रूपेषु अनुरागकारणभूतपदार्थेषु 'परलोइएसु वा रूवेसु' पारलौकिकेषु वा, तत्र पारलौकिको देवदेव्यादिहस्तितुरगादिर्वा, तत्संबन्धिषु रूपेषु अनुकूलवदनीयेषु रूपादिपदार्थजातेषु 'दिट्ठेसु वा रूवेसु' दृष्टेषु वा रूपेषु पूर्वं प्रत्यक्षतो दृष्टेषु रूपादिषु वस्तुजातेषु 'अदिट्ठेसु वा रूवेसु' अदृष्टेषु वा रूपेषु, तत्रादृष्टा देवादय. तत्सम्बन्धिषु रूपादिषु 'सुएसु वा रूवेसु' श्रुतेषु वा रूपेषु श्रवणेन्द्रियेण साक्षात्कृतेषु श्रवणेन्द्रियजन्यज्ञानविषयतावत्सु अनुकूलवेदनीयपदार्थजातेषु 'असुएसु वा रूवेसु' अश्रुतेषु कर्णपथमनागतेषु वा रूपेषु पदार्थजातेषु 'विन्नाएसु वा रूवेसु' विज्ञातेषु वा रूपेषु वर्तमानकालिकानुभवात्मकज्ञानविषयतावत्सु पदार्थजातेषु 'अविन्नाएसु वा रूवेसु' अविज्ञातेषु वा रूपादिषु मानसिकानुभवात्मकज्ञानविषयेषु अनुकूलवेदनीयपदार्थजातेषु उपर्युक्तैहलौकिकादिपदार्थजातेषु य. श्रमण श्रमणी वा 'सज्जइ' स्वजति आसक्तिमान् भवति 'रज्जइ' रज्यति तस्मिन् रूपादिषु अनुरागवान् भवति 'गिज्झइ' गृद्ध्यति रूपादिपदार्थेषु गृद्धिमान् भवति तेषु गृद्धिभाव प्राप्नोति, तत्र सर्वदा समुपलभ्यमानेष्वपि अभिरमणं गृद्धिं ता प्राप्नोति 'अज्झोववज्झइ' अध्युपपद्यते अतिशयेनासक्तिमान् भवति तथा 'सज्जंतं' स्वजन्तम्-आसक्तिं कुर्वन्तम् 'रज्जंतं' रज्यन्तम् रूपादिष्वनुराग कुर्वन्तम् 'गिज्झतं' गृद्ध्यन्त रूपादिषु गृद्धिभावं कुर्वन्तम् 'अज्झोववज्जंतं' अध्युपपद्यमानम् अतिशयेनासक्तिं कुर्वन्तम् 'साइज्जइ' स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तेषु सङ्गादिकरणेन चारित्रपतनसंभवादिति ॥ सू० ३०॥

## सूत्रम्—जे भिक्खू पढमाए पोरिसीए असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेत्ता पच्छिमं पोरिसिं उवाइणावेइ उवाइणावेंतं वा साइज्जइ ॥ सू० ३१ ॥

छाया — यो भिक्षुः प्रथमायां पौरुष्यामशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्य पश्चिमां पौरुषीमतिक्रामति अतिक्रामन्त वा स्वदते ॥ सू० ३१॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चिद् भिक्षु श्रमणः श्रमणी वा 'पढमाए पोरिसीए' प्रथमाया पौरुष्याम् दिवसस्य प्रथमपौरुष्यामित्यर्थ. 'असणं वा ४' अशनं वा ४ चतुर्विधाहारजातम् 'पडिग्गाहेत्ता' प्रतिगृह्य—गृहस्थेभ्य आनीय 'पच्छिमं पोरिसिं'

पश्चिमां पौरुषीं दिवसस्य चरमपौरुषीमित्यर्थ', 'उवाइणावेइ' अतिकामति उल्लङ्घयति चरमपौरुषी-पर्यन्तं स्थापयतीत्यर्थ. 'उवाइणावेंतं वा साइज्जइ' अतिक्रामन्त वा स्वदते स प्रायश्चित्तभागी भवति पर्युषितदोषसभवात् ॥ सू० ३१॥

सूत्रम्—जे भिक्खू परं अद्धजोयणमेराओ परेणं असणं वा ४ उवाइणावेइ उवाइणावेंतं वा साइज्जइ ॥ सू० ३२ ॥

छाया—यो भिक्षुः परमर्द्धयोजनमर्यादात परेण अशन वा ४ अतिक्रामयति अतिक्रामयन्तं वा स्वदते ॥ सू० ३२॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षुः श्रमण श्रमणी वा 'परं अद्धजोयणमेराओ' परमर्द्धयोजनमर्यादातः–क्रोशद्वयमर्यादातोऽग्रे 'परेणं' परेण अन्येन श्रावकादिना श्रावकादिद्वारा समानीतमित्यर्थ 'असणं वा ४' अशन वा चतुर्विधमाहारजातम् 'उवाइणावेइ' अतिक्रामयति–अशनादेरुल्लघन कारयति अर्थात् अत्र गृहीतमाहार क्रोशद्वयादधिकमपि दूरं भोक्तुमन्यद्वारा नयति, अथवा क्रोशद्वयादपि अधिकदूरतोऽशनादिकमाहारजात परद्वारा आनयति आनयन कारयति तथा 'उवाइणावेंतं वा साइज्जइ' अतिक्रामयन्त वा स्वदते अनुमोदते, क्रोशद्वयादधिकदूरमशनादि परेण य नयति आनयति वा त तादृश श्रमणमनुमोदते स प्रायश्चित्त-भागी भवति ॥ सू०३२॥

सूत्रम्—जे भिक्खू दिया गोमयं पडिग्गाहेत्ता दिया कायंसि वणं आलिंपेज्ज वा विलिंपेज्ज वा आलिंपंतं वा विलिंपंतं वा साइज्जइ ॥

छाया—यो भिक्षुर्दिवा गोमयं प्रतिगृह्य दिवा काये व्रणमालिम्पेत् वा विलिम्पेत् वा आलिम्पन्तं वा विलिम्पन्तं वा स्वदते ॥ सू० ३३॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चिद् भिक्षु श्रमणः श्रमणी वा 'दिया' दिवा–दिवसे 'गोमयं' गोमय 'गोबर' इति भाषाप्रसिद्धम् 'पडिग्गाहेत्ता' प्रतिगृह्य–रात्रौ स्थापयित्वा 'दिया' दिवा–द्वितीयदिवसे 'कायंसि वणं' काये व्रणम् तत्र काये शरीरे जायमान पामादिजन्य व्रणम् 'आलिंपेज्ज वा' आलिम्पेत् वा एकवारम् 'विलिंपेज्ज वा' विलिम्पेत् वा अनेकवारम् । 'आलिंपंतं वा' आलिम्पन्त वा एकवार लेपकुर्वन्त 'विलिंपंतं वा' विलिम्पन्तं वा अनेकवार लेप कुर्वन्तं वा 'साइज्जइ' स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ३३॥

सूत्रम्—जे भिक्खू दिया गोमयं पडिग्गाहेत्ता रत्तिं कायंसि वणं आलिंपेज्ज वा विलिंपेज्ज वा आलिंपंतं वा विलिंपंतं वा साइ-ज्जइ ॥ सू० ३४ ॥

छाया—यो भिक्षुर्दिवा गोमयं प्रतिगृह्य रात्रौ काये व्रणम् आलिम्पेत् वा विलिम्पेत् वा आलिम्पन्तं वा विलिम्पन्तं वा स्वदते । सू० ३५॥

चूर्णी— 'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'दिया गोमयं पडिग्गाहेत्ता' दिवा दिवसे गोमय प्रतिगृह्य 'रत्तिं' रात्रौ रजन्यां 'कायंसि' काये शरीरे संजायमानम् 'वणं' व्रण पामादिजन्यम् 'आलिंपेज्ज वा' आलिम्पेत् वा एकवारम् 'विलिंपेज्ज वा' विलिम्पेत् वा अनेकवार 'आलिंपंतं वा' आलिम्पन्त वा 'विलिंपंत वा' विलिम्पन्तं वा 'साइज्जइ' स्वदते अनुमोदते स प्रायश्चित्तभागी भवति । रात्रौ कस्यापि वस्तुन. संग्रह-निषेधात् ॥ सू० ३४॥

सूत्रम्—जे भिक्खू रत्तिं गोमयं पडिग्गाहेत्ता दिया कायंसि वणं आलिंपेज्ज वा विलिंपेज्ज वा आलिपंतं वा विलिंपंतं वा साइज्जइ ॥३५॥

छाया—यो भिक्षुः रात्रौ गोमयं प्रतिगृह्य दिवा काये व्रणमालिम्पेत् वा विलिम्पेत् वा आलिम्पन्त वा विलिम्पन्तं वा स्वदते ॥ सू० ३५॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चिद् भिक्षु श्रमण श्रमणी वा 'रत्तिं' रात्रौ रजन्याम् 'गोमयं पडिग्गाहेत्ता' गोमयं प्रतिगृह्य गृहीत्वा 'दिया कायंसि वणं' दिवा दिवसे द्वितीयदिवसे काये शरीरे सजायमान व्रणम् 'आलिंपेज्ज वा' आलिम्पेत् वा 'विलिंपेज्ज वा' विलिम्पेत् वा आलिंपतं वा विलिंपतं वा साइज्जइ' आलिम्पन्तं वा विलिम्पन्त वा स्वदते स प्रायश्चित्तभागी भवति । रात्रौ कस्यापि वस्तुनो ग्रहणनिषेधात्, पर्युषितदोषसंभवाच्च ॥ सू० ३५॥

सूत्रम्—जे भिक्खू रत्तिं गोमयं पडिग्गाहेत्ता रत्तिं कायंसि वणं आलिंपेज्ज वा विलिपेज्ज वा आलिंपंतं वा विलिंपंतं वा साइज्जइ ॥

छाया - यो भिक्षुः रात्रौ गोमयं प्रतिगृह्य रात्रौ काये व्रणमालिम्पेत् वा विलिम्पेत् वा आलिम्पन्त वा विलिम्पन्तं वा स्वदते । सू० ३६॥

चूर्णी —'जे भिक्खू' इत्यादि । 'जे भिक्खू' य· कश्चिद् भिक्षु· श्रमण· श्रमणी वा 'रत्तिं' रात्रौ रजन्याम् 'गोमयं पडिग्गाहेत्ता' गोमय प्रतिगृह्य गृहीत्वा 'रत्तिं' रात्रौ रजन्याम् तस्यामेव रजन्या द्वितीयरजन्या वा 'कायंसि वणं' काये शरीरे सजायमानं व्रणम् 'आलिं-पेज्ज वा' आलिम्पेत् वा 'विलिंपेज्ज वा' विलिम्पेत् वा 'आलिंपंतं वा विलिंपंतं वा साइज्जइ' आलिम्पन्तं वा विलिम्पन्तं वा स्वदते स प्रायश्चित्तभागी भवति, रात्रौ ग्रहणस्य संग्रहस्य परिभोगस्य च दोषसद्भावेन निषिद्धत्वात् ॥ सू० ३६॥

**सूत्रम्—जे भिक्खू दिया आलेवणजायं पडिग्गाहेत्ता दिया कायंसि वणं आलिंपेज्ज वा विलिंपेज्ज वा आलिंपंतं वा विलिंपंतं वा साइज्जइ ॥सू० ३७॥**

छाया—यो भिक्षुर्दिवा आलेपनजात प्रतिगृह्य दिवा काये व्रणमालिम्पेत् वा विलिम्पेत् वा आलिम्पन्त वा विलिम्पन्तं वा स्वदते ॥सू० ३७॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षुः श्रमण श्रमणी वा 'दिया' दिवा-दिवसे 'आलेवणजायं पडिग्गाहेत्ता' आलेपनजातम् विलेपनद्रव्य प्रतिगृह्य गृहीत्वा रात्रौ स्थापयित्वा 'दिया' दिवा-द्वितीयदिवसे 'कायंसि वणं' काये शरीरे शरीरावयवे वा व्रण पामाभगन्दरादिकम् 'आलिंपेज्ज वा' आलिम्पेत् वा 'विलिंपेज्ज वा' विलिम्पेत् वा 'आलिंपंतं वा विलिंपंत वा साइज्जइ' आलिम्पन्तं वा विलिम्पन्तं वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० ३७॥ एव पूर्वोक्तसूत्र सगृह्य चत्वारि सूत्राणि—आलेपनजातविषयाण्यपि गोमयसूत्रवदेव व्याख्येयानि ॥सू० ३८-३९-४०॥

**सूत्रम्—जे भिक्खू अन्नउत्थिएण वा गारत्थिएण वा उवहिं वहावेइ वहावेंतं वा साइज्जइ ॥ सू० ४१॥**

छाया—यो भिक्षुरन्ययूथिकेन वा गृहस्थेन वा उपधिं वाहयति वाहयन्तं वा स्वदते ॥सू० ४१॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य. कश्चिद् भिक्षु श्रमण. श्रमणी वा 'अन्नउत्थिएण वा' अन्ययूथिकेन वा अन्यतीर्थिकेण पुरुषेण स्त्रि यावा 'गारत्थिएण वा' गृहस्थेन वा श्रावकेण तद्भिन्नेन वा येन केनापि, श्राविकया तद्भिन्नया वा 'उवहिं वहावेइ' उपधिं स्वकीयवस्त्रपात्रादिकम् वाहयति एकस्मात् स्थानात् स्थानान्तरं प्रापयति 'वहावेंतं वा साइज्जइ' वाहयन्तं प्रापयन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति, गृहस्थादिना कस्यापि कार्यस्य कारणे साधोरविरतिदोषप्रसङ्गात् ॥ सू० ४१॥

**सूत्रम्—जे भिक्खू तन्नीसाए असणं वा पाणं वा खाइमं वा साइमं वा देइ देंतं वा साइज्जइ ॥सू० ४२॥**

छाया—यो भिक्षु तन्निश्रयाऽशन वा पान वा खाद्यं वा स्वाद्य वा ददाति ददतं वा स्वदते ॥सू० ४२॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चित् भिक्षु श्रमण श्रमणी वा 'तन्नीसाए' तन्निश्रया—उपधिवहनादिकार्यनिश्रया उपध्यादिवाहकाय 'अयं मे उपधिं वहतो'–ति

कृत्वा, उपलक्षणादन्यस्मै वा कस्मैचिद् गृहस्थाय बालकादिभ्यो वा 'असणं वा ४' अशनं वा ४, चतुर्विधमाहारजातम् 'देइ' ददाति अन्यस्माद्दापयति वा 'देंतं वा साइज्जइ' ददतं वा स्वदते। यो हि अन्ययूथिकादिभ्य कार्यमुपधिवाहनादिकं कारयित्वा तेभ्यः तन्मूल्यरूपेणानुग्रहेण वा आहारादिकं ददाति दापयति ददतमनुमोदते वा स प्रायश्चित्तभागी भवति, भिक्षिताशनादेरन्यस्मै दाने साधोरनधिकारित्वात्, भगवतानिषिद्धत्वाच्च ॥ सू० ४२॥

**सूत्रम्—जे भिक्खू इमाओ पंच महण्णवाओ महानईओ उद्दिट्ठाओ गणियाओ वंजियाओ अंतो मासस्स दुक्खुत्तो वा तिक्खुत्तो वा उत्तरइ वा संतरइ वा उत्तरंतं वा संतरंतं वा साइज्जइ। तं जहा—गंगा, जउणा, सरऊ, एरावई, मही—त्ति ॥ सू० ४३॥**

**छाया – यो भिक्षुरिमाः पञ्च महार्णवा महानद्य उद्दिष्टा गणिता व्यञ्जिता अन्तर्मासस्य द्वि कृत्वो वा त्रि कृत्वो वा उत्तरति संतरति उत्तरन्तं वा सन्तरन्तं वा स्वदते तद्यथा–गङ्गा, यमुना, सरयू, ऐरावती, मही, इति ॥ सू० ४३॥**

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा 'इमाओ' इमा—वक्ष्यमाणा 'पंच' पञ्च—पञ्चसंख्याविशिष्टा, 'महण्णवाओ' महार्णवाः समुद्रतुल्या, आसां पञ्चनदीनां महार्णवतुल्यता च बहूदकत्वेन तथा आयामविस्ताराभ्यां वा यथा समुद्रो बहूदको दीर्घो विस्तृतश्च तथैव एता अपि बहूदका, दीर्घा विस्तृताश्च सन्ति अत एव 'महाणईओ' महानद्य यत एव बहूदकादिविशिष्टा अत एव महानदीपदवाच्या 'उद्दिट्ठाओ' उद्दिष्टाः कथिता 'गणियाओ' गणिता अन्यनदीषु महत्त्वेन गणना प्राप्ता 'वंजियाओ' व्यञ्जिता, प्रकटीकृता शास्त्रे प्रतिपादिता वा, एता महानदी 'अंतो मासस्स' अन्तर्मासस्य एकस्य मासस्यान्त—मध्ये 'दुक्खुत्तो वा तिक्खुत्तो वा' द्वि कृत्वो वा त्रि कृत्वो वा द्विवारं वा त्रिवारं वा 'उत्तरइ वा संतरइ वा' उत्तरति वा संतरति वा, तत्र निरन्तरं तरणम् उत्तरणं चरणाभ्यां पारकरणम्, संतरणं नावादिना पारकरणम्। गाढतरकारणाभावे नदीनामुत्तरणे संतरणे चाप्कायिकस्य विराधने संयमविराधनम्, तथा गर्त्तादौ चरणपतनात् पारकरणसमये जलपूरागमनाच्च आत्मविराधनम्। अनेन प्रकारेण मासाभ्यन्तरे यः श्रमणः श्रमणी वा द्विवारं वा त्रिवारं वा उत्तरति सन्तरति वा तथा 'उत्तरंतं वा संतरंतं वा साइज्जइ' उत्तरन्तं वा सन्तरन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति।

अत्राह भाष्यकारः—

**भाष्यम्—जइ होज्ज य थलमग्गो, जलेण गच्छेज्ज नेव पाएहिं।**
**नेव दुरोहे णावं, तत्थावायाण संभवओ ॥**

छाया— यदि भवेच्च स्थलमार्गः, जलेन गच्छेत् नैव पादाभ्याम् ।
नैव दूरोहेत् नावं, तत्राऽपायानां संभवत

अवचूरिः—यदि ग्लानस्य साधोर्वैयावृत्यादिके गाढतरे कारणे समुपस्थिते सति गमनमावश्यकं भवेत् तदा यदि तत्र गमनार्थं स्थलमार्गो दूरतरोऽपि भवत् तर्हि जलेन नद्यादिजल मार्गेण पादाभ्यां नैव गच्छेत्. नैव च नाव दूरोहेत् नौकोपरि नोपविशेत्, किमर्थमित्याह -तत्र पादाभ्यां नौकया वा गमने–अपायाना विघ्नाना बहूना सभवात् । अपाया द्विविधा - सयमापायाः आत्मापायाश्च । तत्र नदीजले पादाभ्यां गमने अप्कायस्य पादप्रहारेण तत्रस्थितत्रसकायानां मण्डूकमत्स्यादानां च विराधनारूपा अनेके संयमापाया भवन्ति । जल गर्त्तादौ पाद पतनात् तत्समये जलपूरस्यागमनादिना चानेके आत्मापाया अपि भवन्ति, एव नौकया गम नेऽपि विज्ञेयम्, तथाहि–नौकाया सचरणेन जलविलोडन भवति तेनाप्कायस्य तदधोगतानां त्रसाणां मण्डूकमत्स्यलघुजलचरादिजीवाना च विराधना भवति तेन सयमापायसभव, तथा नौकाया ब्रुडनभञ्जनादिना–आत्मापायसंभव', तत सयमात्मविराधनादोषसद्भावात् दूरतरस्थलमार्गसंभवे साधुर्जलमार्गेण नो गच्छेदिति भावः ॥ सू० ४३॥

**सूत्रम्—तं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥सू० ४४॥**

॥ निसीहज्झयणे बारसमो उद्देसो समत्तो ॥१२॥

छाया –तं सेवमान आपद्यते चातुर्मासिक परिहारस्थानमनुद्घातिकम् ॥४४॥
॥ निशीथाध्ययने द्वादश उद्देशः समाप्तः ॥१२॥

चूर्णी—'तं सेवमाणे' इत्यादि । 'तं सेवमाणे' तत् सेवमान, तत उद्देशकादौ कथितत्रसप्राणभातिबन्धनादारभ्योद्देशकान्ते वर्णितनदीसंतरणपर्यन्त प्रायश्चित्तस्थानमध्यात् एकमनेकं सर्वं वा प्रायश्चित्तस्थानं 'सेवमाणे' सेवमान. समाचरन् श्रमण श्रमणी वा 'आवज्जइ' आपद्यते प्राप्नोति 'चाउम्मासिय' चातुर्मासिकम् 'परिहारट्ठाण' परिहारस्थानम् प्रायश्चित्तस्थानम् 'अणुग्घाइयं' अनुद्घातिकम्–लघुमासिकमित्यर्थ ॥ सू० ४४॥

इति श्री–विश्वविख्यात–जगद्वल्लभ–प्रसिद्धवाचक–पञ्चदशभाषाकलितललितकलापालापक प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक–वादिमानमर्दक- श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त- "जैनशास्त्राचार्य"–पदभूषित–कोल्हापुरराजगुरु - बालब्रह्मचारि–जैनाचार्य–जैनधर्मदिवाकर–पूज्यश्री–घासीलालव्रति–विरचितायां "निशीथसूत्रस्य" चूर्णिभाष्यावचूरिरूपायां व्याख्यायाम् द्वादशोद्देशकः समाप्त ॥१२॥

## ॥ त्रयोदशोद्देशकः ॥

गतो द्वादशोद्देशकः, सम्प्रति त्रयोदशोद्देशको व्याख्यायते, तत्र द्वादशोद्देशकान्तिमसूत्रेण सहास्य त्रयोदशोद्देशकादिसूत्रस्य कः सम्बन्धः ?—इति चेदत्राह भाष्यकार—

**भाष्यम्— नावाइणा उत्तरिय, काउस्सग्गं करे मुणी ।**
**कत्थ कुज्जा न वा कुज्जा, संबंधो ईरिओ इहं ॥**

**छाया—नावादिना उत्तीर्य कायोत्सर्गं कुर्यात् मुनिः ।**
**कुत्र कुर्यात् न वा कुर्यात् सम्बन्ध ईरित इह ॥**

**अवचूरिः—'नावाइणा'** इत्यादि । द्वादशोद्देशकस्यान्तिमसूत्रे गङ्गादिका पञ्च महानद्यो वर्णिताः, ता नदीः कारणवशात् मासाभ्यन्तरे द्विवारं त्रिवारं वा उत्तरति तदा तस्य प्रायश्चित्तं कथितम्, तत्र नावादिना ता महानदीः समुत्तीर्य्य पारं गत्वा ऐर्य्यापथिकं कायोत्सर्गं अवश्यमेव कर्तव्यं । स च कुत्र स्थाने कर्तव्यः कुत्र न कर्तव्यः ? इति विचारणायां सचित्तपृथिव्यां न कर्तव्यः, एतस्य निषेधस्य वर्णनाय त्रयोदशोद्देशकः प्रारभ्यते, अस्मिन् उद्देशके सचित्तपृथिव्यादिषु समुपविश्यैर्यापथिकाद्यावश्यककार्यकरणे प्रायश्चित्तं कथयिष्यते, अयमेव सम्बन्धः पूर्वापरसूत्रयोर्भवति, तदनेन सम्बन्धेनायातस्यास्य त्रयोदशोद्देशकस्य प्रथमसूत्रमाह—

**सूत्रम्—जे भिक्खू अणंतरहियाए पुढवीए ठाणं वा सेज्जं वा णिसेज्जं वा णिसीहियं वा चेएइ चेएंतं वा साइज्जइ ॥सू० १॥**

**छाया—यो भिक्षुरनन्तरहितायां पृथिव्यां स्थानं वा शय्यां वा निषद्यां वा नैषेधिकीं वा चेतयते चेतयमानं वा स्वदते ॥सू०१॥**

**चूर्णी—'जे भिक्खू'** इत्यादि । **'जे भिक्खू'** यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा **'अणंतरहियाए पुढवीए'** अनन्तर्हितायां पृथिव्याम् अनन्तेन जीवेन रहिता किन्तु असंख्येयेन जीवेन युक्ता अनन्तर्रहिता सचित्तेत्यर्थः यतो हि पृथिवी असंख्यातजीवात्मिका भवति न त्वनन्तजीवात्मिका, अतः अनन्तरहितेत्युक्तम्, यद्वा—न अन्तरं व्यवधानम् अनन्तरं जीवव्यवधानरहितं यथा स्यात्तथा हिता स्थिता अनन्तरहिता व्यवधानरहितजीवयुक्ता सर्वात्मना सचित्तेत्यर्थः । तस्यां सचित्तपृथिव्युपरीत्यर्थः **'ठाणं वा'** स्थानं वा, तत्र स्थानं कायोत्सर्गः तत् कायोत्सर्गलक्षणं स्थानम् ऊर्ध्वत्वेनावस्थितिरूपं करोति इत्यग्रिमेण सम्बन्धः, उपलक्षणत्वात् त्वग्वर्तनादिकमपि करोति **'सेज्जं वा'** शय्यां वा तत्र शय्या शरीरप्रमाणा ता, शयनं वा करोति **'णिसेज्जं वा'** निषद्यां वा उपवेशनं वा **'निसीहियं वा'** नैषेधिकीं वा प्राणातिपातादिनिषेधपूर्वकं जायमाना क्रिया स्वाध्यायरूपा नैषेधिकी, ताम् **'चेएइ'** चेतयते करोति **'चेएंतं वा साइज्जइ'** चेतयमानं वा स्वदते । यो हि श्रमणः

अशिवादिकारणविशेषमादाय नावादिना पारं गत्वा तत्र सचित्तपृथिव्यां स्थितः सन तत्रैव सचित्त भूमौ स्थानादिक करोति तमनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्तीति ॥ सू० १॥

सूत्रम्—एवं जे भिक्खू ससणिद्धाए पुढवीए० ॥सू०२॥ जे भिक्खू ससरक्खाए पुढवीए० ॥ सू०३॥ जे भिक्खू मट्टियाकडाए पुढवीए० ॥ सू०४॥ जे भिक्खू चित्तमंताए पुढवीए० ॥ सू० ५॥ जे भिक्खू चित्तामंताए सिलाए ॥ सू० ६॥ जे भिक्खू चित्तमंताए लेलूए ठाणं वा सेज्जं वा निसेज्जं वा निसीहियं वा चेएइ चेएंतं वा साइज्जइ ॥ सू० ७॥

छाया—एवं यो भिक्षुः सस्निग्धायां पृथिव्याम्० ॥ सू०२॥ यो भिक्षुः सरजस्कायां पृथिव्याम् ॥ सू० ३॥ यो भिक्षुः मृत्तिकाकृतायां पृथिव्याम्० ॥ सू० ४॥ यो भिक्षुः चित्तवत्यां पृथिव्याम् ॥ सू०५॥ यो भिक्षुः चित्तवत्यां शिलायाम् ॥ सू० ६॥ यो भिक्षुः चित्तवति लेलुके स्थानं वा शय्यां वा निषद्यां वा नैषेधिकी वा चेतयते चेतयमानं वा स्वदते ॥ सू० ७॥

चूर्णी—'एवं जे भिक्खू' इत्यादि। एवम्—अनेनैव प्रकारेण 'जे भिक्खू' यो भिक्षु 'ससणिद्धाए-पुढवीए, सस्निग्धाया सचित्तजलेन ईषद्आर्द्रायां पृथिव्याम्० ॥ सू० २॥ यो भिक्षु 'ससरक्खाए पुढवीए' सरजस्कायां=सचित्तसूक्ष्मरेणुगुण्ठिताया पृथिव्याम् ॥सू० ३॥ यो भिक्षु. 'मट्टिया-कडाए पुढवीए' मृत्तिकाकृताया- मृत्तिकया कृताया सपादिताया लिप्तायां वा सचित्तमृत्तिका सचयेन पुञ्जीभूताया पृथिव्याम्० ॥ सू० ४॥ यो भिक्षु 'चित्तमंताए पुढवीए' चित्तवत्यां चित्तं-जीव. तद् विद्यते यस्या सा चित्तवती सूक्ष्मत्रसजीवयुक्ता तस्यां पृथिव्याम् ॥सू० ५॥ यो भिक्षु. 'चित्तमंताए सिलाए' चित्तवत्या जीवयुक्ताया शिलायां महापाषाणखण्डरूपायां, यस्याः सन्धिभागेऽधो वा जीवाना सभवात् तस्या शिलायाम्० ॥सू० ६॥ यो भिक्षु 'चित्त-मंताए लेलुए, चित्तवति लेलुके, लेलुकं नाम मृत्तिकाखण्ड, तस्मिन् 'ठाणं वा' स्थान कायोत्सर्गं वा उपलक्षणात् त्वग्वर्तनादिकमपि, तथा 'सेज्जं वा' शय्यां वा शरीरप्रमाणा शयनं वा, 'निसेज्जं वा' निषद्याम् उपवेशन वा 'निसीहियं वा' नैषेधिकीं वा स्वाध्यायरूपं क्रियाविशेष वा 'चेएइ' चेतयते करोति, 'चेएंतं वा साइज्जइ' चेतयमानं कुर्वन्तं स्वदते अनुमोदते स प्रायश्चित्तभाग् भवति ॥सू० ७॥

सूत्रम्—जे भिक्खू कोलावासंसि वा दारुए जीवपइट्ठिए सअंडे सपाणे सबीए सहरिए सओस्से सउदए सउत्तिंगपणगदगमट्टिय-

मक्कडासंताणगंसि ठाणं वा सेज्जं वा णिसेज्जं वा णिसीहियं वा चेएइ चेएंतं वा साइज्जइ ॥सू० ८॥

छाया—यो भिक्षुः कोलावासे वा दारुके जीवप्रतिष्ठिते साण्डे सप्राणे सबीजे सहरिते सओसे सोदके सोत्तिंगपनकोदकमृत्तिकामर्कटसंतानके स्थानं वा शय्यां वा निषद्यां वा नैषेधिकीं वा चेतयते चेतयमानं वा स्वदते ॥ सू० ८॥

चूर्णी--'जे भिक्खू' इत्यादि । जे भिक्खू' यः कश्चित् भिक्षुः श्रमणः श्रमणी वा 'कोलावासंसि वा' कोलावासे, तत्र कोला घुणा तेषाम् आवासे निवासस्थाने एतादृशे 'दारुए' दारुके काष्ठे यत्र काष्ठविशेषे घुणा सन्ति तादृशकाष्ठविशेषोपरि आसनादिकं कुरुते इत्यग्रिमेण सम्बन्धः, तथा 'जीवपइट्ठिए' जीवप्रतिष्ठिते दारुके काष्ठे-यत्र काष्ठविशेषे द्वीन्द्रियादयो जीवाः सन्ति तादृशजीवप्रतिष्ठितकाष्ठे 'सअंडे' साण्डे दारुके, तत्र अण्डानि गृहगोधिकादीनाम् तथा च यत्र काष्ठे गृहगोधिकादीनामण्डानि सन्ति तादृशदारुके तथा 'सपाणे' सप्राणे दारुके, तत्र प्राणः प्राणवान् जीवः द्वीन्द्रियत्रीन्द्रियादिः पीपिलिकादिः तादृशप्राणयुक्ते काष्ठे तादृशप्राणयुक्त-पृथिव्याम् वा तथा 'सबीए' सबीजे दारुके पृथिव्या वा, तत्र बीजं शाल्यादीनाम् 'सहरिए' सहरिते-अङ्कुरितबीजसहिते दारुके पृथिव्या वा तथा च हरितकायविशिष्टे दारुके पृथिव्या वा 'सओस्से' सओसे 'ओस' इति देशी शब्दो निशाजलवाचकः, तस्मिन्, शीतकाले रात्रौ सूक्ष्म-जलबिन्दवो निपतन्ति वृक्षादौ सस्थितजलबिन्दूनाम् 'ओस' इति नाम भवति, तथा च तादृश-ओसविशिष्टे दारुके पृथिव्यां वा 'सउदगे' सोदके दारुके जलसंमिश्रितदारुके पृथिव्यां वा 'सउत्तिंगपणगदगमट्टियमक्कडासंताणगंसि' सोत्तिंगपनकोदकमृत्तिकामर्कटसन्तानके, तत्र उत्तिंग:-भूमौ वर्तुलविवरकारिणः गर्दभमुखाकृतिकाः कीटविशेषा, तत्समूहः कीटिकानगररूपः, तस्मिन् तत्सहिते वा स्थाने तथा पनकः पञ्चवर्णः साङ्कुरोऽनङ्कुरो वा पञ्चवर्णानन्तकाय-विशेषः, उदकमृत्तिका उदकेन सहिता मृत्तिका सकर्दमा सचित्ता मिश्रा वा मृत्तिका, यद्वा दकं जलं मृत्तिका सचित्तमृत्तिका तत्र, मर्कटसन्तानकं लूताजालम् , एतेषु वस्तुषु यः श्रमणः श्रमणी वा 'ठाणं वा' स्थानं वा, तत्र स्थानमूर्ध्वस्थानम् 'सेज्जं वा' शय्या वा 'णिसेज्जं वा' निषद्यां वा 'णिसीहियं वा' नैषेधिकीं वा 'चेएइ' चेतयते करोति तथा 'चेएंतं वा साइज्जइ' चेतयमानं वा कोलावासादिषु स्थानादिकं कुर्वन्तं श्रमणान्तरं स्वदते अनुमोदते स प्रायश्चित्त-भागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति ।

अत्राह भाष्यकारः—

भाष्यम्—पुढवीमाइठाणं तु, जत्तियमेत्तमुदाहियं ।
तत्थ ठाणाइयं कुज्जा, आणाभंगाइ पावई ॥

छाया—पृथिव्यादिस्थान तु यावन्मात्रमुदाहृतम् ।
तत्र स्थानादिकं कुर्यात् आज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः—प्रथमसूत्रादारभ्याष्टमसूत्रपर्यन्तसूत्रेषु यत् यत् पृथिव्यादिकस्थानमधिकरणत्वेन उदाहृतम् कथितम् सचित्तपृथिवीत आरभ्य मर्कटसन्तानकान्तस्थानं सूत्रे यावन्मात्रं यावत्प्रमाणकं कथितम् तेषु सचित्तपृथिव्यादिस्थानेषु स्थानादिक स्थानशय्यानिषद्यास्वाध्यायादिकं यः कुर्यात् स श्रमण श्रमणी वा आज्ञाभङ्गादिकान् दोषान् आज्ञाभङ्गानवस्थामिथ्यात्वसयमात्मविराधनालक्षणान् दोषान् प्राप्नुयात् लभते ।

अथ पृथिव्याद्येकेन्द्रियाणां सघट्टनादिकरणे यादृशी वेदना भवति ता वेदनां दृष्टान्तद्वारेण दर्शयति तथाहि–यथा कश्चित् स्वभावतो दुर्बलो जराजीर्णो रोगेणापि आक्रान्तो भवेत्, स च वृद्धो बलवता तरुणेन त्रिंशद्वर्षायुष्केन युगलपाणिना सर्वबलेनाक्रान्तो भवेत् तदनन्तर तस्य वृद्धस्य तरुणेनाक्रान्तस्य यादृशी वेदना भवति पृथिव्याद्येकेन्द्रियजीवानामुपरि स्थानादिकरणेन ततोऽप्यधिकतरा अनन्तगुणा वेदना भवति, परन्तु अव्यक्तत्वात् चर्मचक्षुषा ज्ञातु न शक्यते, यानि च जीवस्य चिह्नानि तानि पृथिव्याद्येकेन्द्रियजीवेषु न व्यक्तानि यथा गाढनिद्रानिद्रितपुरुषे मूर्च्छिते वा सुखदुःखचिह्नानि अव्यक्तानि, एव पृथिव्याद्येकेन्द्रियजीवेष्वपि चैतन्य चैतन्यचिह्नं चातीवाव्यक्तम् तेनायं जाव इति न सकलसाधारणपुरुषेण ज्ञात भवति, पर केवलं केवलज्ञानिना एव दृश्यते, तदुपदेशात् श्रद्धालु परोपि जानाति, अश्रद्धालवो वस्तुतत्त्वं न जानन्ति । तेषामेव ज्ञानाय पृथिव्याद्येकेन्द्रियाणामुपयोगसाधकं दृष्टान्त दर्शयाम, तद्यथा–रूक्षे भोजने अतिशयितः सूक्ष्म स्नेहगुणो विद्यते यत तादृशभोजनकरणेनापि शरीरस्योपचयो भवति परन्तु अव्यक्तत्वात् सत्त्वस्नेहगुणो न लक्ष्यते, एवं पृथिव्यामपि विद्यत सूक्ष्म स्नेह. परन्तु अतिसूक्ष्मत्वात् न दृश्यते यत पृथिव्यादिषु स तनुस्थितोऽल्प तेन तेषा प्रबलस्नेहकार्यें हस्तादिशरीराणां चालनादिकं कर्तुमशक्यं भवति । एकेन्द्रियजीवाना क्रोधादिका. परिणामा अपि भवन्ति साकारोऽनाकारश्चोपयोग, तथा सातादिका वेदना, एते सर्वेऽपि भावा· सूक्ष्मत्वात् अनतिशयस्यानुपलक्षिता भवन्ति यथा सञ्ज्ञिनां पर्याप्तानां क्रोधादय परिणामा भवन्ति, तेन च परिणामेन संज्ञिनो जीवा आक्रोशादिकं कुर्वन्ति त्रिवलीचालनादिकं च कुर्वन्ति परन्तु संज्ञिजीववत् एकेन्द्रिया प्राबल्येन तादृशकार्यकरणं प्रति समर्था न भवन्ति, एतावानेव भेद· सञ्ज्ञिजीवेभ्य एकेन्द्रियजीवानाम्, किन्तु चेतनायोगात् सर्वमेव भवति पृथिव्याद्येकेन्द्रियजीवानामपि, किं बहुना यथा वयमनुभव कुर्मः तथैव पृथिव्याद्येकेन्द्रियजीवा अपि कुर्वन्ति तेपि सुखकारणे समुपस्थिते सुखिनो भवन्ति दु.खकारणे च.ते दु.खमप्यनुभवन्ति, क्रोधादिकम् आक्रोशादिकमपि कुर्वन्ति, किन्तु यथा उदुम्बरपुष्पमन-

भिव्यक्तं न सर्वेषां दृष्टिपथमाविर्भवति तथैव अनभिव्यक्तत्वात् एकेन्द्रियाणां क्रोधादिकं नाविर्भवति, किन्तु पृथिव्यादिषु वर्तन्ते एवैकेन्द्रियजीवाः, तदुक्तम्—

क्रोधादिकपरिणामा एकेन्द्रियादिजन्तूनाम् ।
प्राबल्यं तेषु कार्येषु अव्यक्तत्वात् न भवन्ति हि ॥१॥

यस्मात् कारणात् पृथिव्यादिका एकेन्द्रियजीवा अपि एवंविधवेदनादिकमनुभवन्ति तस्मात् कारणात् पृथिव्याद्येकेन्द्रियजीवोपरि कायोत्सर्गं शयनीयमासनं स्वाध्यायादिसंपादनं च कथमपि सर्वविरत श्रमणः श्रमणी वा स्वय न कुर्यात् न वा परानपि तदुपरि स्थानादिकं कारयेत्, न पृथिव्याद्येकेन्द्रियजीवानामुपरिस्थानादिकं कुर्वन्तमनुमोदेत किन्तु शास्त्रमर्यादामाश्रित्याचित्तभूम्यादावेव स्थानादिकं कुर्यात् कुर्वन्तमनुमोदेत ॥सू०८॥

**सूत्रम्—जे भिक्खू थूणंसि वा गिहेलुयंसि वा उसुयालंसि वा कामजलंसि वा दुब्बद्धे दुण्णिक्खित्ते अणिक्कंपे चलाचले ठाणं वा सेज्जं वा णिसेज्जं वा णिसाहियं वा चेएइ चेएंतं वा साइज्जइ ॥ सू० ९॥**

**छाया—यो भिक्षुः स्थूणायां वा गृहेलुके वा उसुकाले (उदूखले) वा कामजले वा (स्नानपीठे वा) दुर्बद्धे दुर्निक्षिप्ते अनिष्कंपे चलाचले स्थानं वा शय्या वा निषद्यां वा नैषेधिकीं वा चेतयते चेतयमानं वा स्वदते । सू० ९॥**

**चूर्णी—**'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा **'थूणंसि वा'** स्थूणाया वा, तत्र स्थूणा नाम स्तंभ तस्यां स्थूणाया स्तम्भे **'गिहेलुयंसि वा'** गृहैलुके वा देहल्यामित्यर्थ, **'उसुयालंसि वा'** उसुकाले वा, तत्र उसुकालो नाम उदूखलम् 'ऊखल' इति लोकप्रसिद्धम् तस्मिन् **'कामजलंसि वा'** कामजले वा, तत्र कामजलं नाम स्नानपीठादिकं यस्योपरि उपविश्य स्नान करोति तादृशं साधनविशेषलक्षणं कामजलमिति तस्मिन् कामजले । कथंभूते स्थूणादौ ? इति स्थूणादिविशेषणान्याह—**'दुब्बद्धे'** इत्यादि । **'दुब्बद्धे'** दुर्बद्धे तत्र बन्धनं द्विविधम्—रज्जुबन्धनं, काष्ठादिषु वेधबन्धनं वा तत् बन्धनं सम्यक् न कृतं तत् दुर्बद्धं शिथिलबन्धनमित्यर्थः तस्मिन् **'दुण्णिक्खित्ते'** दुर्निक्षिप्ते तत्र दुर्निक्षिप्तं,—दुर्-असम्यक् निक्षिप्तं निहितं तत्, न सम्यक् स्थापितमिति दुर्निक्षिप्तम् तस्मिन् दुर्निक्षिप्ते स्थूणादौ **'अणिक्कंपे'** अनिष्कंपे, तत्र निष्कम्पः—कम्पनवर्जित, न निष्कम्पः अनिष्कम्पः, तस्मिन् कम्पनविशिष्टे, यत एवम् अत एव **'चलाचले'** चलाचले अस्थिरे इत्यर्थ, एतादृशस्थूणादिषु स्थूणाद्युपरि यः श्रमणः श्रमणी वा **'ठाणं वा'** स्थानं वा **'सेज्जं वा'** शय्यां वा **'णिसेज्जं वा'** निषद्यां वा **'निसीहियं वा'** नैषेधिकीं

वा स्वाध्यायादिकरणम् 'चेएइ' चेतयते 'चेएंतं वा साइज्जइ' चेतयमान वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ९॥

सूत्रम्—जे भिक्खू कुलियंसि वा भित्तिसि वा सिलंसि वा लेलुंसि वा अंतलिक्खजायंसि वा दुब्बद्धे दुण्णिक्खित्ते अणिक्कंपे चलाचले ठाणं वा सेज्जं वा णिसेज्जं वा णिसीहियं वा चेएइ वा चेएंतं वा साइज्जइ १०

छाया—यो भिक्षुः कुडचे वा भित्तौ वा शिलायां वा लेलुके वा अन्तरिक्षजाते वा दुर्बद्धे दुर्निक्षिप्ते अनिष्कम्पे चलाचले स्थानं वा शय्यां वा निषद्यां वा नैषेधिकीं वा चेतयते चेतयमानं वा स्वदते ॥ सू० १०॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा 'कुलियंसि वा' कुडचे वा तृणभित्तिरूपकुडचे वा 'भित्तिसि वा' भित्तौ वा पाषाणमृत्तिका-निर्मितभित्तौ गिरिनदीतटरूपाया वा 'सिलंसि वा' शिलाया वा धान्यादिपेषणबृहत्पाषाणखण्डे वा 'लेलुंसि वा' लेलुके वा लोष्टे बृहन्मृत्पिण्डे 'अंतलिक्खजायंसि वा' अन्तरिक्षजाते वा—आकाश-भागनिर्मितमञ्चकादौ वा, कथम्भूते कुडचादिके ? तत्राह- 'दुब्बद्धे' इत्यादि । 'दुब्बद्धे' दुर्बद्धे सम्यग्रूपेण बन्धनरहिते कुडचादौ 'दुण्णिक्खित्ते' दुर्निक्षिप्ते असम्यग्रूपेण स्थापिते 'अणिक्कंपे' अनिष्कम्पे—कम्पनादिधर्मविशिष्टे अत एव 'चलाचले' चलाचले—अस्थिर कुडचादौ यः श्रमणः श्रमणी वा 'ठाणं वा' स्थान वा 'सेज्जं वा' शय्या वा 'निसेज्जं वा' निषद्या वा 'णिसीहियं वा' नैषेधिकीं वा 'चेएइ' चेतयति 'चेएंतं वा साइज्जइ' चेतयमान वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू०१०॥

सूत्रम्—जे भिक्खू खंधंसि वा फलिहंसि वा मंचंसि वा मंडवंसि वा मालंसि वा पासायंसि वा हम्मतलंसि वा दुब्बद्धे दुण्णिक्खित्ते अणिक्कंपे चलाचले ठाणं वा सेज्जं वा णिसेज्जं वा निसीहियं वा चेएइ चेएंतं वा साइज्जइ ॥ सू० ११॥

छाया—यो भिक्षुः स्कन्धे वा परिघे वा मञ्चे वा मण्डपे वा माले वा प्रासादे वा हर्म्यतले वा दुर्बद्धे दुर्निक्षिप्ते अनिष्कम्पे चलाचले स्थानं वा शय्यां वा निषद्यां वा नैषेधिकीं वा चेतयते चेतयमानं वा स्वदते ॥ सू० ११ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु श्रमण. श्रमणी वा 'खंधंसि वा' स्कन्धे वा, तत्र स्कन्धो नाम एकभूमप्रासादविशेष', अथवा स्कन्धो नाम गृहम्

इष्टिकादारुसंघातो वा तस्मिन् 'फलिहंसि वा' परिघे वा, तत्र परिघो नाम अर्गलाकारो स्तम्भ-काष्ठविशेषः, तस्मिन् 'मंचंसि वा' मञ्चे वा काष्ठस्तम्भोपरि निर्मिते खट्वाकारे मञ्चे 'मंडवंसि वा' मण्डपे वा, तत्र मण्डपः-काष्ठनिर्मितं निर्मित्तिकं स्थानं तस्मिन् 'मालंसि वा' माले वा, तत्र मालं गृहोपरि द्विभूमिकादि तस्मिन् । 'पासायंसि वा' प्रासादे वा-प्रासादः-जीर्णराजगृहं तस्मिन् 'हम्मतलंसि वा' हर्म्यतले वा, हर्म्यं जीर्णधनिकजननिवासस्थानम्, तस्मिन्, कीदृशे? इत्याह-'दुब्बद्धे' दुर्बद्धे शिथिलबन्धनयुक्ते 'दुण्णिक्खित्ते' दुर्निक्षिप्ते-सम्यगनवस्थापिते 'अणिक्कंपे' अनिष्कम्पे-कम्पनादिविशिष्टे अत एव चलाचले अस्थिरे, एतादृशस्कन्धादौ यो भिक्षुः 'ठाणं वा' स्थान वा कायोत्सर्गं वा 'सेज्जं वा' शय्यां वा शयनीयम् 'णिसेज्जं वा' निषद्यामासनं वा 'णिसीहियं वा' नैषेधिकीं वा स्वाध्यायादिकरणम् 'चेएइ' चेतयते 'चेएंतं वा साइज्जइ' चेतयमान स्कन्धादिषु अस्थिरादिषु स्थानादिकं कुर्वन्तं श्रमणान्तर-वा श्रमणः श्रमणी वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥

अत्राह भाष्यकारः—

भाष्यम्—थूणा-कुलिय-क्खंधा,-इयं खु जं आहियं च सुत्तेसु।
तेसुं ठाणाइकरणा, लब्भेज्जा आणभंगाई ॥

छाया स्थूणा-कुडय-स्कन्धादिकं खु यत् आख्यातं च सूत्रेषु ।
तेषु स्थानादिकरणात् लभेताज्ञाभङ्गादिकम् ॥

अवचूरिः—सूत्रेषु-नवमदशमैकादशेषु स्थूणाकुडयस्कन्धादिकं यत् यावन्मात्रमाख्यात कथित तेषु स्थूणादिषु स्थानेषु स्थानादिकरणात् कायोत्सर्ग-शय्या-निषद्यादि-सपादनात् श्रमणः श्रमणी वा आज्ञाभङ्गादिकान् आज्ञाभङ्गानवस्थामिथ्यात्वसंयमविराधनात्मविराधनालक्षणान् दोषान् लभेत प्राप्नुयात् ॥ सू ११ ॥

सूत्रम्—जे भिक्खू अण्णउत्थियं वा गारत्थियं वा सिप्पं वा सिलोगं वा अट्ठावयं वा कक्कडगं वा वुग्गहं वा सलाहं वा सलाहकहत्थयं वा सिक्खावेइ सिक्खावेंतं वा साइज्जइ॥सू० १२॥

छाया—यो भिक्षुरन्ययूथिकं वा गार्हस्थिकं वा शिल्पं वा श्लोकं वा अष्टापदं वा कर्कटकं वा व्युद्ग्रहं वा श्लाघं वा श्लाघकथास्तवं वा शिक्षयति शिक्षयन्तं वा स्वदते ॥ सू० १२ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'अण्णउत्थियं वा' अन्ययूथिकं वा परदर्शनानुयायिनं तापसादिकम् 'गारत्थियं वा गार्हस्थिकं

वा–गृहस्थं श्रावकमश्रावकं वा 'सिप्पं वा' शिल्पं वा–शिल्पकला वस्त्रादिसंपादनकलामित्यर्थः 'सिलोगं वा' श्लोकं वा–संस्कृतप्राकृतपद्यात्मकं वा काव्यनाटकादिकम् 'अट्ठावयं वा' अष्टापदं वा–अष्टापदमिति द्यूतफलकं पट्टिकारूपम्, यस्योपरि द्यूत क्रीडयते, उपचारात्तद्विषयककलां वा, अथवा अष्टापदमिति 'पासा' इति प्रसिद्धम्, तद्विषयां कलाम्, यथा–वयं नो जानीमः, इदं पासकं सुभिक्षदुर्भिक्षादिकं कथयतीत्येवरूपा कला वा, 'कक्कडग वा' कर्कटकं वा कर्कटकमिति कचवरं सर्ववस्तुसंमिश्रण, कर्कटमिव कर्कटक सर्वभावैक्य, सर्ववस्तुभावैक्यमित्यर्थः, एवं कथने उभयथाऽपि दोषापत्तिरापतेदिति । अथवा–कर्कटक निमित्तशास्त्रसामुद्रिकशास्त्रज्योतिर्विद्यादिसंमिश्रणरूप वा, 'वुग्गहं वा' व्युद्ग्रहम्–राजादियुद्धजनितजयपराजयज्ञानरूपां कलाम् 'सलाह वा' श्लाघा वा–अन्यगुणवर्णनरूपा काव्यकला वा, 'सलाहकहत्थयं वा' श्लाघकथास्तवं वा–श्लाघात्मिका कथां स्तव वा, अथवा अपूर्वाभिनवानेककाव्यवर्णनकला वा यः श्रमणः श्रमणी वा तापसादिक श्रावकमश्रावक वा 'सिक्खावेइ' शिक्षयति–तद्विषया शिक्षां ददाति तथा–'सिक्खावेंतं वा साइज्जइ' शिक्षयन्त शिल्पकलादीनां शिक्षण ददतं वा श्रमणान्तर स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकारः—

भाष्यम्—सिप्पसिलोगाइकलं, सिक्खावइ अन्नउत्थियं गिहिणं ।
सो पावइ पच्छित्तं, आणाभंगाइरूवं च ॥

छाया—शिल्पश्लोकादिकला शिक्षयति अन्यतीर्थिक गृहिणम् ।
स प्राप्नोति प्रायश्चित्त आज्ञाभङ्गादिरूप च ॥

अवचूरिः—प्रकृतसूत्रे शिल्पश्लोकादिकलाम्, आदिपदेन शेषा एतद्भिन्ना या अन्याः कलाः अष्टापदादिरूपा, ताः सर्वा अपि सूचिता भवन्ति एताः कला शिल्पादिकाः कदाचिदपि श्रमणः तापसादिकं गृहस्थादिक वा न शिक्षयेत्, यस्तु श्रमण मोहात्कारणान्तराद् वा अन्यतीर्थिकाना तापसादीनां गृहस्थानां श्रावकाणामन्येषा वा पूर्वोक्तकला शिक्षयति एतत्कला–शिक्षको भवति स श्रमणः श्रमणी वा आज्ञाभङ्गादिदोषरूप प्रायश्चित्तं प्राप्नोति स प्रायश्चित्तभागी भवतीत्यर्थः ॥ सू० १२ ॥

**सूत्रम्—जे भिक्खू अण्णउत्थियं वा गारत्थियं वा आगाढं वयइ वयंतं वा साइज्जइ ॥ सू० १३॥ जे भिक्खू अण्णउत्थियं वा गारत्थियं वा फरुसं वयइ वयंतं वा साइज्जइ ॥ सू० १४॥ जे भिक्खू अण्णउत्थियं वा गारत्थियं वा आगाढफरुसं वयइ वयंतं वा साइज्जइ ॥ सू० १५॥**

**जे भिक्खू अण्णउत्थियं वा गारत्थियं वा अण्णयरीए अच्चासायणाए अच्चासाएइ अच्चासाएंतं वा साइज्जइ ॥ सू० १६॥**

छाया—यो भिक्षुरन्यतीर्थिकं वा गार्हस्थिकं वा आगाढं वदति वदन्तं वा स्वदते ॥ सू० १३॥ यो भिक्षुरन्यतीर्थिक वा गार्हस्थिकं वा परुषं वदति वदन्तं वा स्वदते ॥ १४॥ यो भिक्षुरन्यतीर्थिकं वा गार्हस्थिक वा आगाढपरुष वदति वदन्तं वा स्वदते ॥ सू० १५॥ यो भिक्षुरन्यतीर्थिकं वा गार्हस्थिक वा अन्यतरया अत्याशातनया अत्याशातयति अत्याशातयन्तं वा स्वदते ॥ सू० १६॥

चूर्णी—'जे भिक्खु' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु' श्रमण श्रमणी वा 'अण्णउत्थिय वा' अन्ययूथिक वा तापसादिक 'गारत्थियं वा' गार्हस्थिकं गृहस्थं वा 'आगाढं' आगाढम्-आगाढवचनं कोपयुक्तवचनमित्यर्थ 'वयइ' वदति-कथयति 'वयंतं वा साइज्जइ' वदन्तमागाढवचनमन्यतीर्थिकं गृहस्थं प्रति वा वदन्तं श्रमणान्तरं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषाश्चापि भवन्ति ॥ सू० १३॥ एव 'फरुसं' परुषं कठोरवचन वदति वदन्त वा स्वदते ॥ सू० १४॥ तथा 'आगाढफरुसं' आगाढपरुषं-कोपयुक्तकठोरवचन वदति वदन्तं वा स्वदते स ॥ सू० १५॥ एवम्-अन्यतीर्थिकं गृहस्थं वा 'अण्णयरीए-अच्चासायणाए' अन्यतरया अन्यतीर्थिकाशातना-अन्यतीर्थिकं प्रति 'ससारस्वरूपं ज्ञात्वापि त्व जिनोक्त धर्मं नाचरसि, मावद्यक्रियामवलम्बसेऽतस्त्वां धिक्' इत्येवं कथनरूपा । गृहस्थाशातना-गृहस्थ प्रति "वं गृहस्थ. सन् द्वादश व्रतानि नाचरसे, रात्रिभोजनसरम्भसमारम्भादिकार्यं कुरुषेऽतस्त्वा धिक्' इत्येवं कथनरूपा, इत्यादिस्वरूपया एकया कयाचिदाशातनयाऽपि 'अच्चासाएइ' अत्याशातयति-अन्यतीर्थिकस्य गृहस्थस्य वा आशातना करोति 'अच्चासाएंतं' अत्याशातयन्त वा आशातनां कुर्वन्त वा 'साइज्जइ' स्वदते स प्रायश्चित्तभागी भवति ॥ १६॥

एतदागाढादिकं कस्मिन् विषये किमर्थं वा नो वदेत् ? इत्यत्राह भाष्यकारः—'जाइकुल' इत्यादि ।

भाष्यम्—जाइ-कुल-रूव-भासा, गण-बल-परियाग-जस-तवो-लाभा ।
सत्त-वय-बुद्धि-धारण,-उग्गह-सील-समायारो ॥१॥
एएसु विसएसु य, गारत्थिय अण्णउत्थियं वावि ।
आगाढ फरुसं नो, वएज्ज आसायए नो वा ॥२॥
एएहिं वयणेहिं, साहू कुप्पेज्ज किं पुणो अन्नो ।
एवं मम्मे वयणे, दोसा मरणाइया बहवो ॥३॥

१ २ ३ ४ ५ ६ ७ ८ ९ १०
छाया—जाति-कुल-रूप-भाषा-धन-बल-पर्याय-यश-स्तपो-लाभाः ।
११ १२ १३ १४ १५ १६ १७
सत्त्व-वयो-बुद्धि-धारणा-ऽवग्रह-शीलं समाचारः ॥१॥
एतेषु विषयेषु च, गार्हस्थिक अन्यतीर्थिकं वाऽपि ।
आगाढ परुषं नो वदेत् आशातयेत् नो वा ॥२॥
एतैर्वचनैः साधुः कुप्येत् किं पुनरन्यः ।
एवं मर्मणि वचने, दोषा मरणादिका बहव ॥३॥

**अवचूरिः**——जाति-कुलेति गाथात्रयम् । अत्र जात्यादयः सप्तदश प्रोक्ताः, तेऽर्थतः सुगमाः ॥१॥ द्वितीयगाथामाह-**'एएसु'** इत्यादि, **'एएसु'** एतेषु पूर्वोक्तेषु जात्यादिषु विषयेषु गृहस्थमन्यतीर्थिकं वा आगाढं, परुषम्, आगाढपरुष च नो वदेत्, तथा नो वा गृहस्थमन्यतीर्थिकं वा **'आसायए'** आशातयेत्, न तयो काञ्चिदप्याशातनां कुर्यात् ॥२॥ एवं करणे किं स्यात्? इत्याह—**'एएहिं'** इत्यादि, **'एएहिं वयणेहिं'** एतैः पूर्वोक्तैरागाढादिरूपैर्वचनैः **'साहू'** साधु क्रोधनिग्रहपरो मुनिरपि **'कुप्पेज्ज'** कुप्येत्—कोपाविष्टो भवेत् तर्हि **'किं पुणो अन्नो'** किं पुनरन्यः नो कुप्येत्? इति काकुपाठः, एतादृशवचनैः साधोरपि कोप स्यात् अन्यस्य तु का कथा इति भावः । अत्र के दोषाः? इति तान् दर्शयति— **एवं** इत्यादि **'एव'** एवम् एतादृशे मर्मणि वचने मर्मवेधके वचने कथिते सति अत्र मरणादिका बहवो दोषा भवन्ति । मर्मोद्घाटनसन्तापतप्ताः केचित् म्रियेरन्, साधुं वा आन्तरलग्नवैरभावेन दोषारोप कृत्वा राजद्वारे नयेयु, इत्यादि बहुदोषसभवात् साधुरागाढादिकं वचनं न वदेत्, नो वा वदन्तं स्वदेत, नो वा अत्याशातनया तान् अत्याशातयेत् परकृतामत्त्याशातनां नानुमोदयेत् । एव करणे साधुराज्ञाभङ्गादिदोषभागी भवतीति ॥३॥ जात्यादिषु आगाढादिवचनप्रकार प्रदर्श्यते—

अहं जातिमान् तथा कुलवान् त्व तु नीचो जारजातो वेत्यादि १—२ । अहं रूपवान् त्वं तु कुरूपः ३। अह मधुरभाषी त्व नैतादृशः ४ । अहं धनी सन् दीक्षितः, त्वं तु निर्धनः ५ । अह बलवान्, त्व निर्बलः ६ । अह पर्यायज्येष्ठोऽस्मि बहु जानामि त्वं नैतादृशः ७। अहं यशस्वी त्वं लोकनिन्द्योऽसि ८। अहं तपस्वी त्वं नैतादृशः, ९। मम बहुलाभो भवति त्व न किमपि लभसे १० । अहं सत्त्ववान् आन्तरबली त्व कातरः ११ । अह वयोवान् त्वमचिरजातो बालः १२। अहं बुद्धिमान् त्वं निर्बुद्धिकः १३ । मम धारणाशक्तिस्तीव्रा वर्त्तते त्वं तु विस्मरणशीलः १४ । अहमवग्रहे गुर्वादिज्येष्ठाज्ञाया वर्त्ते, त्वमुद्धतः १५। अह शीलवान् त्वं नैतादृशः १६। समाचार इति अहं साधुसामाचार्यां वर्त्ते त्वं स्वकीयमर्यादामपि न पालयसि १७। इत्यादि ॥ सू० १३-१६ ॥

सूत्रम्—जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा कोउगकम्मं करेइ करेंतं वा साइज्जइ॥ सू० १७॥ जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा भूइकम्मं करेइ करेंतं वा साइज्जइ ॥ सू० १८ ॥ जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा पसिणं करेइ करेंतं वा साइज्जइ ॥ सू० १९॥ जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा पसिणापसिणं करेइ करेंतं वा साइज्जइ ॥ सू० २० ॥ जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा पसिणं कहेइ कहेंतं वा साइज्जइ ॥ सू० २१ ॥ जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा पसिणापसिणं कहेइ कहेंतं वा साइज्जइ ॥ सू० २२॥ जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा तीयं निमित्तं कहेइ कहेंतं वा साइज्जइ ॥ सू० २३॥ जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा पडुप्पण्णं निमित्तं कहेइ कहेंतं वा साइज्जइ ॥ सू० २४ ॥ जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा आगमिस्सं निमित्तं कहेइ कहेंतं वा साइज्जइ ॥ सू० २५॥ जे भिक्खू अण्णउत्थियाण गारत्थियाण वा लक्खणं कहेइ कहेंतं वा साइज्जइ ॥ सू० २६ ॥ जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा वंजणं कहेइ कहेंतं वा साइज्जइ ॥ सू० २७॥ जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा सुमिणं कहेइ कहेंतं वा साइज्जइ ॥ सू० २८॥ जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा विज्जं पउंजइ पउंज्जंतं वा साइज्जइ ॥ सू० २९॥ जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा मंतं पउंजइ पउंजंतं वा साइज्जइ ॥ सू० ३०॥ जे भिक्खू अण्ण-उत्थियाण वा गारत्थियाण वा जोगं पउंजइ पउंजंतं वा साइज्जइ ॥ सू० ३१॥

छाया—यो भिक्षुरन्ययूथिकानां वा गृहस्थानां वा कौतुककर्म करोति कुर्वन्तं वा स्वदते ॥ सू० १७॥ यो भिक्षुःअन्ययूथिकानां वा गृहस्थानां वा भूतिकर्म करोति, कुर्वन्त वा स्वदते ॥सू० १८॥ यो भिक्षुरन्ययूथिकानां वा गृहस्थानां वा प्रश्न करोति कुर्वन्तं

वा स्वदते ॥सू० १९॥ यो भिक्षुः अन्ययूथिकानां वा गृहस्थानां वा प्रश्नाप्रश्नं करोति कुर्वन्तं वा स्वदते ॥ सू० २०॥ यो भिक्षुरन्ययूथिकाना वा गृहस्थानां वा प्रश्नं कथयति कथयन्तं वा स्वदते ॥ सू० २१॥ यो भिक्षुरन्ययूथिकाना वा गृहस्थानां वा प्रश्नाप्रश्न कथयति कथयन्तं वा स्वदते ॥सू० २२॥ यो भिक्षुरन्ययूथिकाना वा गृहस्थानां वा अतीतं निमित्तं कथयति कथयन्त वा स्वदते सू० २३॥ यो भिक्षुरन्ययूथिकानां वा गृहस्थानां वा प्रत्युत्पन्नं निमित्तं कथयति कथयन्त वा स्वदते । सू० २४॥ यो भिक्षुरन्ययूथिकानां वा गृहस्थानां वा आगमिष्यत् निमित्त कथयति कथयन्तं वा स्वदते ॥ सू० २५॥ यो भिक्षुरन्ययूथिकानां वा गृहस्थाना वा लक्षण कथयति कथयन्तं वा स्वदते ॥सू २६। यो भिक्षुरन्ययूथिकानां वा गृहस्थानां वा व्यञ्जनं कथयति कथयन्त वा स्वदते ॥ सू०२७॥ यो भिक्षुरन्ययूथिकानां वा गृहस्थानां वा स्वप्नं कथयति कथयन्त वा स्वदते ॥सू० २८॥ यो भिक्षुरन्ययूथिकानां वा गृहस्थाना वा विद्या प्रयुङ्क्ते प्रयुञ्जान वा स्वदते ॥सू० २९॥ यो भिक्षुरन्ययूथिकानां वा गृहस्थाना वा मन्त्रं प्रयुङ्क्ते प्रयुञ्जानं वा स्वदते ॥सू० ३०॥ यो भिक्षुरन्ययूथिकाना वा गृहस्थानां वा योग प्रयुङ्क्ते प्रयुञ्जान वा स्वदते ॥सू०३१॥

**चूर्णी**—'जे भिक्खू' इत्यादि । **'जे भिक्खू'** यः कश्चिद् भिक्षुः श्रमण श्रमणी वा **'अण्णउत्थियाण वा'** अन्ययूथिकाना वा **'गारत्थियाण वा'** गृहस्थाना वा **कोउगकम्मं करेइ'** कौतुककर्म करोति, तत्र कौतुकं-दृष्ट्यादिदोषनिवारणार्थं स्नानादिकमौषधादिकं वा करोति, तथा च यः श्रमण. परतीर्थिकाना कौतुककर्म करोति अथात् श्मशानचत्वरादिषु स्नानं कारयति अथवा कोऽपि तापसादिक गृहस्थो वा ज्वरशूलादिरोगेण ग्लानो जात तस्य ज्वरादिरोगशान्त्यर्थं सचित्तमचित्तं वा औषधादिकमानीय ददाति येन तस्य रोग सद्य एव शान्तो भवति स नीरोगता लभते तदेतत् श्मशानादिस्नानमौषधादिदान च कौतुककर्म कथ्यते । अथवा कुतुकस्य भाव कौतुकं कुतूहलता गृहस्थादीना मनोरञ्जनाय क्रियमाणं कर्म कौतुककर्म तथा **'करेंतं वा साइज्जइ'** कुर्वन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति ॥ सू० १७॥ एवम् **'भूइकम्मं करेइ'** भूतिकर्म—शरीरादिरक्षार्थं भस्मपोट्टलिकाभिमन्त्रणरूप करोति ॥सू० १८॥ **'पसिणं करेइ'** प्रश्न करोति--अन्यतीर्थिकादीनामत्त दर्पणादौ देवाद्याह्वान कृत्वा शुभाशुभफलप्रच्छनरूपं करोति ॥ सू० १९ ॥ **'पसिणापसिणं करेइ'** प्रश्नप्रश्नं करोति विद्यामन्त्रितघण्टाया कर्णमूले वादनेन तत्र देवताऽवतीर्य पृष्टस्य प्रश्नस्य विषये सा पुनरपि प्रश्नं करोति यत्तव पूर्वमेवमासीत् न वा' इति एकस्मिन् प्रश्ने द्वितीयप्रश्नकरणम्, एवं प्रश्ने प्रश्नकरणरूपं प्रश्नप्रश्नमन्यतीर्थिकगृहस्थनिमित्त करोति कुर्वन्त वा स्वदते ॥ सू० २०॥ **'पसिणं कहेइ'** प्रश्नं कथयति अन्यतीर्थिकगृहस्थेभ्य दर्पणाद्यवतीर्णदेवताकथितशुभाशुभफलरूपमुत्तरं कथयति. ॥ सू०२१ । एवम् **'पसिणापसिणं कहेइ'** प्रश्न प्रश्न कथयति प्रश्नोपरिप्रश्नस्योत्तर कथयति ॥२२॥ **'तीयं निमित्तं कहेइ'** अतीत निमित्तं कथयति, अन्यतीर्थिकगृहस्थेभ्य. 'तत्रातीतकाले

एतादृशं शुभमशुभं वा जातम्, अमुकप्रकारको लाभस्त्वया लब्धः, एतादृशं सुखं दुःखं वा प्राप्तम्', इत्यादिरूपं निमित्तं कथयति ॥ सू० २३॥ एवमेव 'पडुप्पन्नं निमित्त' प्रत्युत्पन्नं वर्त्तमानकालिकं निमित्तं कथयति ॥ सू० २४॥ एवं 'आगमिस्सं निमित्तं कहेइ' आगमिष्यत्कालिकं भविष्यत्कालिकं यत् 'तवाग्रे एतादृशं शुभमशुभं वा भविष्यती'त्यादिरूपं निमित्तं कथयति ॥ सू० २५॥ एवं 'लक्खणं कहेइ' लक्षणं कथयति, तत्र लक्षणं द्विविधम्-बाह्यमाभ्यन्तरं च, तत्र बाह्यं-ह्रस्वदीर्घशरीरावयवरेखादिकम्, आभ्यन्तरं-स्वभावसत्त्वादिकम् । बाह्यलक्षण-हस्तपादादिशरीरावयवसंभव द्वात्रिंशत्प्रमाणकं भवति यथा 'अयं द्वात्रिंशल्लक्षणः पुरुषः' इति, एतद्भिन्नान्यप्यपि लक्षणानि भवन्ति, यथा 'बलदेववासुदेवशरीरेऽष्टोत्तरशतम्, चक्रवर्त्तितीर्थकरशरीरेऽष्टोत्तरं सहस्रं लक्षणानां भवति तन्मध्यात्तव शरीरे इयन्ति लक्षणानि विद्यन्तेऽतस्त्वं महापुरुषो भविष्यसी'त्यादि, तथा 'तव शरीरे कानिचिदशुभलक्षणानि सन्तीत्यतोऽग्रे त्वं दुःखी भविष्यसी'त्यादि च लक्षणं कथयति ॥२६॥ एव 'वंजणं कहेइ' व्यञ्जनं कथयति, तत्र-व्यञ्जनं-मशतिलादिकं कथयति-तद्विषयकं शुभाशुभफलं प्रतिपादयति ॥ सू० २७॥ 'सुमिणं कहेइ' स्वप्नं कथयति-स्वप्नफलं प्रतिपादयति, तत्र स्वप्नो द्विविधः-मनोविषयो ज्ञानविषयश्च, तं स्वप्नं प्रायः सुप्तजागरावस्थः पश्यति, स च स्वप्नो भविष्यत्कालिकसुखदुःखयोर्निमित्तं भवति यथा मनुष्याणां मरणकाले पूर्वमेवारिष्टदर्शनं भवति तच्च सुखदुःखनिमित्तं जायते, तदरिष्टं त्रिविधं कायिकं वाचिकं मानसं च, तत्र कायिकं रोगपीडाव्रणाद्यनेकप्रकारकम्१, वाचिकं सहसावाक्प्रतिबन्धादिकमनेकविधम्२, मानसिकमप्यरिष्टमार्थिककौटुम्बिकमनोमालिन्यादिविविधप्रकारकम् ३। स्वप्नदर्शनं पञ्चप्रकारकं भवति याथातथ्य प्रतत-चिन्ता-विपरीता-व्यक्तभेदात्, तत्र सर्वपापविरताः साधवः संवृता याथातथ्यस्वप्नदर्शकाः, इतरे गृहस्थादयः पार्श्वस्थादयश्च याथातथ्यं प्रति भजनीयाः, एषां स्वप्नं याथातथ्यं तद्विपरीतं वा भवेत् । यत् स्वप्नदर्शनं यथैव दृष्टं तथैव भवति तत् याथातथ्यं स्वप्नदर्शनम् १, प्रततस्तु स्वप्नसंतानः शृङ्खलावत् २, जागरितावस्थायां यत् चिन्तितं तदेव रात्रौ पश्यति तत् चिंतानामकं स्वप्नदर्शनम्३, विपरीतं विपरीतफलदायकं स्वप्नदर्शनं तु तत् यत् शुचिसुगन्ध्यादिके मेध्ये स्वप्ने दृष्टे फलममेध्यं भवति, अमेध्ये स्वप्ने दृष्टे तत् फलं मेध्यं भवति, यथा दृष्टं तद्विपरीतं फलं यत्र भवति तद् विपरीतं स्वप्नदर्शनं चतुर्थम् ४, स्वप्नदशायां यत् दृष्टं प्रतिबुद्धोऽयं स्फुटरूपेण न संस्मरति, संस्मरन् वा यस्यार्थं सम्यग् नावगच्छति तदव्यक्तनामकं स्वप्नदर्शनं पञ्चमम् ५ । पञ्चप्रकारकोऽपि स्वप्नः पञ्चेन्द्रियविषयो भवति, सर्वेऽपि स्वप्नाः प्रायः इन्द्रियविषये एव भवन्तीति। अयं भावः-दृष्टस्य श्रुतस्य तदतिरिक्तस्य वा वस्तुनो वासनावशात् सुप्तावस्थायां मानसज्ञानं स्वप्नदर्शनम्, तत् त्रिविध-धातुविकारजनितम् १, वासनाजनितम् २, अदृष्टजनितं ३ च। तत्रादृष्टजनितं स्वप्नदर्शनं सर्वथैव शुभाशुभं फलं ददात्येव, एतदतिरिक्तं तु फलं ददाति न वा ददातीति।

एतादृशस्वप्नादिफलं कथयति ॥ सू० २८॥ एव विद्या–मन्त्र–योग-प्रतिपादकानि त्रीणि सूत्राणि । तत्र **'विज्जं पउंजइ'** विद्यां प्रयुङ्क्ते, विद्या रोहिण्यादिका सधाधना वा विद्या–मारण–मोहन-वशीकरणो–च्चाटनादिरूपा, ता प्रयुङ्क्ते तस्याः प्रयोगं करोति तद्विधिं प्रदर्शयति वा ॥ सू० २९॥ **'मंतं पउंजइ'** मन्त्र प्रयुङ्क्ते, तत्र मन्त्रम् असाधनं मन्त्रं यत् जपमात्रेण सिद्धयति, तस्य प्रयोगं करोति, ग्रहभूतप्रेतपिशाचादिजन्यं दु ख निवारयितु मन्त्रप्रयोग करोति ॥सू० ३०॥ **'जोगं पउंजइ'** योगं प्रयुङ्क्ते, तत्र योग -अनेकवस्तूना संयोगरूप विद्वेषोत्सादनान्तर्धानादिकारक चूर्णादिकं, यस्य प्रक्षेपेण विद्वेषादिक जायते तादृश योगं प्रयुङ्क्ते, योगप्रयोगं करोति । य कोऽपि श्रमणः श्रमणी वा अन्ययूथिकानां गृहस्थाना वा कौतुककर्मत आरभ्य योगप्रयोगपर्यन्तम् स्वयं करोति अन्येन वा कारयति, कुर्वन्त वा अनुमोदते स आज्ञाभङ्गादिदोषान् प्राप्नोतीति ॥

अत्राह भाष्यकार.—

**भाष्यम्**— कोउयं च समारम्भ, जाव जोग पउंजइ' ।
करणाणुमोयणओ, आणाभंगाइ पावइ ॥

छाया कौतुकं च समारभ्य यावत् योग प्रयुङ्क्ते ।
करणानुमोदनत आज्ञाभङ्गादि प्राप्नोति ॥

**अवचूरिः**— सूत्रे कौतुकसूत्रादारभ्य योगसूत्रपर्यन्तसूत्रेषु यत् कथितम् तस्य कौतुकादेः स्वयं करणात् अन्येन कारणात् कुर्वतोऽनुमोदनाद्वा श्रमण श्रमणी वा आज्ञाभङ्गादिक प्राप्नोति तस्याज्ञाभङ्गादिका दोषा भवन्तीति भाव ॥सू० ३१॥

## सूत्रम्–जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा नट्ठाणं मूढाणं विप्परियासियाणं वा मग्गं वा पवेएइ संधिं वा पवेएइ मग्गओ वा संधिं पवेएइ संधिओ वा मग्गं पवेएइ पवेएंतं वा साइज्जइ ॥ सू० ३२॥

छाया – यो भिक्षुरन्ययूथिकानां वा गृहस्थानां वा नष्टानां मूढानां विपर्यस्तानां वा मार्गं वा प्रवेदयति संधिं वा प्रवेदयति मार्गात् वा संधिं प्रवेदयति सन्धितो वा मार्गं प्रवेदयति प्रवेदयन्तं वा स्वदते ॥सू० ३२॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमण श्रमणी वा **'अण्णउत्थियाण वा'** अन्ययूथिकानां वा **'गारत्थियाण वा'** गृहस्थाना वा **'णट्ठाण'** नष्टानां मार्गभ्रष्टानां विस्मृतमार्गाणामित्यर्थ, गन्तव्यमार्गं विस्मृत्य इतस्ततो भ्रमतामिति यावत् **'मूढाणं'** मूढानां दिङ्मोहादिना अटव्यां दिग्भागमजानताम् **'विप्परियासियाणं'** विपर्यस्तानां यत्र येन मार्गेण गन्तव्यं तं मार्गं परित्यज्य मार्गान्तरं प्रति प्रस्थितानाम् **'मग्गं वा पवेएइ'** मार्गं पन्थानं प्रवेदयति प्रकाशयति कथयतीत्यर्थः **'संधिं वा पवेएइ'** सन्धि वा प्रवेदयति, तत्र संधिः द्वयो-

मार्गयोः सम्बन्धस्थानम्, अथवा यत्र राजमार्गाद् अन्यो मार्गो निस्सरति तस्योपमार्गस्य नाम सन्धिरिति कथ्यते 'मग्गाओ वा संधिं पवेएइ' मार्गात् मार्गेण वा सन्धिमुपमार्गं प्रवेदयति दर्शयति, यो हि राजमार्गारूढो राजमार्गात् उपमार्गं गन्तुमिच्छति तमुपमार्गं दर्शयति कथयतीत्यर्थः 'संधिओ वा मग्गं पवेएइ' सन्धितो वा मार्गं प्रवेदयति यो हि उपमार्गे स्थित तं सन्धिमार्गात् मार्गं राजमार्गं प्रति गमनाय राजमार्गस्योपदेशं करोति राजमार्गं कथयतीत्यर्थः तथा 'पवेएंतं वा साइज्जइ' मार्गभ्रष्टाना दिङ्मूढानां विपरीतमार्गं प्रति प्रस्थितानां परतीर्थिकानां गृहस्थानां वा राजमार्गस्योपमार्गस्य राजमार्गात् उपमार्गमुपमार्गात् राजमार्गं कथयन्तं श्रमणान्तरं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्ति।

अत्राह भाष्यकारः—

**भाष्यम्—गिहीणं अण्णतित्थीणं, मग्गं संधिं पवेयई।**
**मिच्छत्त पावई सो उ, आणाभंगाइय तहा॥**

**छाया—गृहिणामन्यतीर्थिनां मार्गं संधिं प्रवेदयति।**
**मिथ्यात्वं प्राप्नोति स तु आज्ञाभङ्गादिकं तथा॥**

**अवचूरिः**—गृहिणा गृहस्थानामन्यतीर्थिनां तापसादीना मार्गं राजमार्गम् सन्धिम् यत्र मार्गद्वय समिलति तादृशं पन्थानं प्रवेदयति कथयति तथा उपलक्षणात्—मार्गात् राजमार्गात् सन्धिं संमिलितमार्गद्वयं, तथा संधितो मार्गं राजमार्गादिकं प्रवेदयति कथयति स मिथ्यात्वम् आज्ञाभङ्गादिदोषांश्च प्राप्नोति। अयं निषेधो हिंसार्थप्रस्थितहिंसकजनविषयको जिनकल्पिकविषयको वा विज्ञेय इति॥ सू० ३२॥

## सूत्रम्—जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा धाउं पवेएइ पवेएंतं वा साइज्जइ॥ सू० ३३॥

छाया—यो भिक्षुरन्ययूथिकानां वा गार्हस्थिकानां वा धातुं प्रवेदयति प्रवेदयन्तं वा स्वदते॥ सू० ३३॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'अण्णउत्थियाण वा' अन्ययूथिकाना वा 'गारत्थियाण वा' गार्हस्थिकानां वा 'धाउं पवेएइ' धातुं, धातुः पाषाणरसमृत्तिकाभेदेन त्रिविध, पाषाणधातु यस्मिन् पाषाणे धम्यमाने तस्मात्सुवर्णं पतति सः १, रसधातु—यस्य जलेन आसिक्तं ताम्रादि सुवर्णं भवति सः २, मृत्तिकाधातुः—या मृत्तिका धम्यमाना सुवर्णं भवति सः ३, तादृशं धातुं श्रमणः श्रमणी वा प्रवेदयति कथयति तथा 'पवेएंतं वा साइज्जइ' धातुं प्रवेदयन्तं श्रमणान्तरं स्वदते अनुमोदते स प्रायश्चित्तभागी, भवति तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति॥ सू० ३३॥

**सूत्रम्—जे भिक्खू अण्णउत्थियाण वा गारत्थियाण वा निहिं पवेएइ पवेएंतं वा साइज्जइ ॥सू० ३४॥**

छाया—यो भिक्षुरन्ययूथिकानां वा गार्हस्थिकानां वा निधिं प्रवेदयति प्रवेदयन्तं वा स्वदते ॥ सू० ३४ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण. श्रमणी वा 'अण्णउत्थियाण वा' अन्ययूथिकानां वा 'गारत्थियाण वा' गार्हस्थिकानां–गृहस्थानां वा 'निहिं पवेएइ' निधिम् प्रवेदयति, तत्र निधान निधि निहितं स्थापित द्रविणजातमित्यर्थ· प्रवेदयति, मन्त्रादिना ज्ञात्वा भूमिनिहितं द्रव्यं कथयति प्रकाशयतीति तथा 'पवेएंतं वा साइज्जइ' प्रवेदयन्तं कथयन्त श्रमणान्तरं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्तीति।

अत्राह भाष्यकारः—

भाष्यम्—धाउं सुवण्णजणयं, निहिं वा पवेयए य जे भिक्खू।
गिहिणण्णतित्थियाणं सो पावइ आणभंगाइ ॥

छाया— धातुं सुवर्णजनकं निधिं वा प्रवेदयेत् यो भिक्षु·।
गृहिणामन्यतीर्थिकानां स प्राप्नोति आज्ञाभङ्गादिम् ॥

अवचूरि—यो भिक्षु श्रमण श्रमणी वा धातु यस्मिन् धम्यमाने सुवर्णादिकं पतति स धातुविशेष, त पूर्वसूत्रोक्त त्रिविधमपि, तथा निधि वा, तत्र निधानं निधि निहित स्थापित द्रविणजातं गृहिणां गृहस्थानामन्यतीर्थिकानां तापसादीना प्रवेदयेत् कथयेत् स श्रमण आज्ञाभङ्गादिकान् दोषान् प्राप्नोति, तत्र धातुस्त्रिप्रकारको भवति पाषाणरसमृत्तिकाभेदात्, तत्र यत्र पाषाणे धम्यमाने सुवर्णादिक पतति स पाषाणधातु. १, येन धातुजलेनासिक्त ताम्रादिकं सुवर्णादिकं भवति स रसधातुरिति कथ्यते २, या तु मृत्तिका योगयुक्ता ध्मायमाना वा सुवर्णादि भवति स मृत्तिकाधातु ३। त धातु, तथा निधि स्थापितद्रव्यजातं, स निधि मनुष्यदैवतै. अधिष्ठितोऽनधिष्ठितो वा भवति, तथा निधिर्जले वा भवति, स्थले वा भवति, तत्र यो निधिः स्थले भवति स द्विविध· निक्षिप्तो वा अनिक्षिप्तो वा, सर्वोऽप्यय निधि स्वरूपतो द्विप्रकारको भवति कृतरूपोऽकृतरूपश्च। धातुनिधिकथने इमे दोषा –धातूनामग्निना धमने षड्जीवनिकायविराधना भवति। निधिदर्शने तस्य देवाधिष्ठितत्वेनानेके विघ्ना समुद्भवन्ति। राज्ञा ज्ञाते राजदण्डमपि प्राप्नुयात्। तत्र चक्रध्वजो राजा दृष्टान्तः—

तथाहि–आसीत् मगधदेशे पुष्पपुरनगरे चक्रध्वजो राजा, तेन राज्ञा चक्राङ्किता अनेके दीनारा आनाय्य निधानत्वेन स्थापिता निधानस्थापनानन्तरं बहुदिनानि व्यतीतानि तदनन्तरं

निधिज्ञः कश्चित् तापसो निधिलक्षणेन ज्ञात्वा खनित्वा निधानं निष्कास्य नीतवान्, तेन च व्यवहारं करोति तद् हस्तात् अन्य' तदन्यो व्यवहारं करोति, एवं क्रमपरंपरया राजपुरुषेण दृष्टः। स राजपुरुष तं राजसमीपं नीतवान्। राज्ञा पृष्टः—कस्मादिमे दीनारास्त्वया लब्धाः, तेन कथितममुकसमीपात् लब्धवानस्मि। एवं परम्परया येन निधानमुत्खाततितम् स राज्ञा निगृह्य दण्डितः। इत्येवं निधिदर्शनेऽनेके दोषा' समापद्यन्ते। तस्मात्कारणात् श्रमण' श्रमणी वा धातुं निधिं वा न स्वयं प्रवेदयेत्, न परद्वारा प्रवेदयेत्, न वा प्रवेदयन्त कमप्यनुमोदयेदिति ॥ सू० ३४ ॥

सूत्रम्—जे भिक्खू मत्तए अप्पाणं देहेइ देहंतं वा साइज्जइ ॥ सू० ३५ ॥ जे भिक्खू अद्दाए अप्पाणं देहेइ देहंतं वा साइज्जइ ॥ ३६॥ जे भिक्खू असीए अप्पाणं देहेइ देहंतं वा साइज्जइ ॥ सू० ३७॥ जे भिक्खू मणिए अप्पाणं देहेइ देहंतं वा साइज्जइ ॥ सू० ३८ ॥ जे भिक्खू कुंडपाणीए अप्पाणं देहेइ देहंतं वा साइज्जइ ॥ सू० ३९ ॥ जे भिक्खू फाणिए अप्पाणं देहेइ देहंतं वा साइज्जइ ॥ सू० ४० ॥ जे भिक्खू तेल्ले अप्पाणं देहइ दहंतं वा साइज्जइ ॥ सू० ४१ ॥ जे भिक्खू महुए अप्पाणं देहेइ देहंतं वा साइज्जइ ॥ सू० ४२ ॥ जे भिक्खू सप्पिए अप्पाणं देहेइ देहंतं वा साइज्जइ ॥ सू० ४३ ॥ जे भिक्खू मज्जए अप्पाणं देहेइ देहंतं वा साइज्जइ ॥ सू० ४४ ॥ जे भिक्खू वसाए अप्पाणं देहेइ देहंतं वा साइज्जइ ॥ सू० ४५ ॥

छाया—यो भिक्षुर्मात्रके आत्मान पश्यति पश्यन्तं वा स्वदते ॥३५॥ यो भिक्षुरादर्शे आत्मानं पश्यति पश्यन्तं वा स्वदते ॥सू० ३६॥ यो भिक्षुरस्यामात्मानं पश्यति पश्यन्त वा स्वदते ॥सू० ३७॥ यो भिक्षुर्मणौ आत्मानं पश्यति पश्यन्त वा स्वदते ॥सू० ३८। यो भिक्षुः कुण्डपानीये आत्मानं पश्यति पश्यन्त वा स्वदते ॥सू३९॥ यो भिक्षुः फाणिते (तरलगुडे) आत्मानं पश्यति पश्यन्त वा स्वदते। सू ४०॥ यो भिक्षुस्तैले आत्मान पश्यति पश्यन्त वा स्वदते ॥सू० ४१॥ यो भिक्षुर्मधुके आत्मान पश्यनि पश्यन्तं वा स्वदते ॥ सू २॥ यो भिक्षुः सर्पिषि आत्मानं पश्यति पश्यन्त वा स्वदते। सू० ४३॥ यो भिक्षुर्मद्ये आत्मान पश्यति पश्यन्तं वा स्वदते ॥सू० ४४॥ यो भिक्षुर्वसायामात्मान पश्यति पश्यन्त वा स्वदते ॥सू० ४५ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य. कश्चित् भिक्षु' श्रमण' श्रमणी वा 'मत्तए, मात्रके, तत्र मात्रकं नाम येन पात्रेण जलं पिबति तत् तथा च जलपूरितपानपात्रे 'अप्पाणं

देहेइ' आत्मान मुखादिकं पश्यति प्रेक्षते तथा 'देहंतं वा साइज्जइ' पश्यन्तं वा जलपूरितमात्रके स्वात्मानं पश्यन्तं श्रमणान्तरं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्ति ॥सू० ३५। एवम् 'अद्दाए अप्पाण देहेइ' आदर्शे-दर्पणे आत्मानं पश्यति ॥ सू० ३६॥ 'असीए अप्पाणं देहेइ' असौ खड्गे आत्मानं पश्यति ॥ सू० ३७ ॥ 'मणीए अप्पाणं देहेइ' मणौ आत्मानं पश्यति ॥ सू० ३८॥ 'कुंडपाणीए अप्पाणं देहेइ' कुण्डपानीये ह्रदादिजले आत्मानं पश्यति । सू० ३९। फाणिए अप्पाणं देहेइ' फाणिते इक्षुविकारभूते तरले गुडे आत्मानं पश्यति ॥ सू०४०॥'तेल्ले अप्पाणं देहेइ' तैले आत्मानं पश्यति ॥ सू० ४१॥ 'महुए अप्पाणं देहेइ' मधुके-मधौ 'सहद' इति प्रसिद्धे द्रवभूते तरले मधौ आत्मानं पश्यति ॥ सू० ४२॥ 'सप्पिए अप्पाणं देहेइ' सर्पिषि-घृते आत्मान पश्यति ॥ सू० ४३॥ 'मज्जए अप्पाणं देहेइ' मद्यके-मद्ये सुरायामात्मान पश्यति ॥ सू० ४४॥ 'वसाए अप्पाणं देहेइ' वसायां शारीरिकधातुविशेषे 'चर्बी' इति प्रसिद्धायां आत्मान पश्यति पश्यन्त वा अनुमोदते स दोषभागी भवति ॥ सू० ४५॥

अत्राह भाष्यकार —

भाष्यम् - मत्तयाइवसांतेसु, एग्गिसन्नयरेसु वा ।
अप्पाणं देहए भिक्खू, आणाभंगाइ पावई ॥

छाया—मात्रकादिवसान्तेषु ईदृशान्यतरेषु वा ।
आत्मानं पश्यति भिक्षुः आज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः—पञ्चत्रिंशत्तमसूत्रादारभ्य पञ्चचत्वारिंशत्तमपर्यन्तसूत्रेषु मात्रकादीनि वस्तूनि कथितानि तेषु सर्वेषु, तथा तादृशेषु अन्येष्वपि वस्तुषु यो भिक्षुरात्मानं शरीरमुखादिकं पश्यति 'जत्तियमेत्ता उ आहिया ठाणा' इति वचनात् यावन्मात्राणि आख्यातानि स्थानानि-मुखादिदर्शनयोग्यानि वस्तूनि तेषु सर्वेषु य आत्मान पश्यति स आज्ञाभङ्गादिदोषान् प्राप्नोति ॥

## सूत्रम्—जे भिक्खू वमणं करेइ करेंतं वा साइज्जइ ॥सू० ४६॥

छाया—यो भिक्षुर्वमनं करोति कुर्वन्तं वा स्वदते ॥ सू० ४६॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चित् भिक्षुः श्रमणः श्रमणी वा 'वमणं करेइ' वमनं करोति, तत्र वमनं मुखद्वारा अशिताशनादेर्बहिर्निष्कासनमित्यर्थः 'करेंतं वा साइज्जइ, वमनं कुर्वन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ४६॥

## सूत्रम्—जे भिक्खू विरेयणं करेइ करेंतं वा साइज्जइ ॥ सू० ४७॥

छाया—यो भिक्षु विरेचनं करोति कुर्वन्तं वा स्वदते ॥सू० ४७॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे 'भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'विरेयणं करेइ' विरेचनं करोति, तत्र विरेचन नाम अध–स्रावणम्, सगृहीतमलस्य अपानद्वारा बहिर्निस्सारणं तादृश विरेचनं करोति तथा 'करेंतं वा साइज्जइ' विरेचनं कुर्वन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्ति ॥ सू० ४७॥

## सूत्रम्—जे भिक्खू वमणविरेयणं करेइ करेंतं वा साइज्जइ ॥सू० ४८॥

छाया— यो भिक्षुर्वमनविरेचन करोति कुर्वन्तं वा स्वदते ॥ सू० ४८ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा 'वमणविरेयण करेइ' वमनविरेचन–समकालं वमन विरेचन च करोति तथा 'करेंतं वा साइज्जइ' वमनं च विरेचन च कुर्वन्त वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ४८॥

## सूत्रम्—जे भिक्खू आरोग्गपडिकम्मं करेइ करेंतं वा साइज्जइ ॥ सू ४९॥

छाया – यो भिक्षुरारोग्यप्रतिकर्म करोति कुर्वन्तं वा स्वदते ॥ सू० ४९ ॥

चूर्णी —'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु श्रमणः श्रमणी वा 'आरोग्गपडिकम्म' आरोग्यप्रतिकर्म करोति, तत्रारोग्य नैरुज्य तस्मिन् सत्यपि प्रतिकर्म चिकित्सां करोति अनागतरोगस्य प्रतिकर्म करोति अर्थात् यो हि रोगरहितशरीरोपि अनागतकालेऽपि मम शरीरे कोपि रोग शरीरविनाशको मा भूयात्, इति कृत्वा बलादिवृद्धयर्थ भाविरोग-शमनार्थं वा औषधादीना सेवनलक्षण प्रतिकर्म करोतीति तथा 'करेंतं वा साइज्जइ' आरोग्य-प्रतिकर्म कुर्वन्त वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्ति ॥ सू० ४९॥

अत्राह भाष्यकार'—

भाष्यम्—अरोगत्ते सरीरस्स बलबुद्धिनिमित्तगं ।
सेवए ओसहं जो उ, आणाभंगाइ पावइ ॥

छाया— अरोगत्वे शरीरस्य, बलवृद्धिनिमित्तकम् ।
सेवते औषधं यस्तु आज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः—यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा नीरोगशरीरोपि बलादिवृद्धयर्थम् उपलक्षणात् आगामिकाले मम शरीरे रोगो मा भवतु, इति बुद्धया च औषधादिकं सेवते,

औषधादिसेवनं करोति स भिक्षुः श्रमणः शरीरप्रतिकर्म कुर्वाण पुनराज्ञाभङ्गादिकान् दोषान् प्राप्नोति ॥ सू० ४९॥

सूत्रम्—जे भिक्खू पासत्थं वंदइ वंदंतं वा साइज्जइ ॥ सू० ५०॥

छाया—यो भिक्षुः पार्श्वस्थं वन्दते वन्दमानं वा स्वदते ॥ सू० ५०॥

चूर्णिः—'जे भिक्खू' इत्यादि 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'पासत्थं' पार्श्वस्थम्, तत्र पार्श्वे ज्ञानदर्शनचारित्रस्य समीपे तिष्ठति न तत्र उद्यमति यः सः पार्श्वस्थः, अथवा 'पाशस्थ' इतिच्छाया, तत्र पाशो नाम बन्धनम्, तत्कारणमविरत्यादि किमपि पाशपदेन प्रोच्यते, तादृशे पाशे अविरत्यादिरूपे तिष्ठति यः स पाशस्थः, स द्विविधो द्विप्रकारकः देशतः सर्वतश्च, तत्र देशतः पार्श्वस्थः शय्यातरपिण्डभोज्यादिभेदैरनेकविधः । सर्वतस्त्रिविकल्पः ज्ञानदर्शनचारित्रभेदेन, तत्र ज्ञानविराधको दर्शनविराधकश्चारित्रविराधकश्चेति, तथाहि—ज्ञानस्य विराधकः पार्श्वस्थः १, दर्शनातिचारे वर्तते २, चारित्रे स्थितो न भवति, अतोऽतिचारजातं न परित्यजति स पार्श्वस्थः ३, तादृशं पार्श्वस्थम् 'वंदइ' वन्दते विधिपूर्वकं वन्दननमस्कारादिकं करोति तथा 'वंदंतं वा साइज्जइ' वन्दमानं स्वदते पार्श्वस्थस्य वन्दनं कुर्वन्तं श्रमणान्तरमनुमोदते स प्रायश्चित्तभागी भवति तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्ति ॥ सू० ५०॥

सूत्रम्— जे भिक्खू पासत्थं पसंसइ पसंसंतं वा साइज्जइ ॥ सू० ५१

छाया— यो भिक्षुः पार्श्वस्थं प्रशंसति प्रशंसन्तं वा स्वदते ॥ सू० ५१॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'पासत्थं' पार्श्वस्थम् 'पसंसइ' प्रशंसति 'एष शुद्धचारित्राराधकः' इत्येवंरूपां प्रशंसां करोति तथा 'पसंसंतं वा साइज्जइ' प्रशंसन्तं वा स्वदते, यो हि श्रमणः पार्श्वस्थस्य प्रशंसां करोति तमनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति ॥ सू० ५१॥

सूत्रम्—जे भिक्खू कुसीलं वंदइ वंदंतं वा साइज्जइ ॥ सू० ५२॥ जे भिक्खू कुसीलं पसंसइ पसंसंतं वा साइज्जइ ॥ सू० ५३॥ जे भिक्खू ओसण्णं वंदइ वंदंतं वा साइज्जइ ॥ सू० ५४॥ जे भिक्खू ओसण्णं पसंसइ पसंसंतं वा साइज्जइ ॥ सू० ५५॥ जे भिक्खू संसत्तं वंदइ वंदंतं वा साइज्जइ ॥ सू० ५६॥ जे भिक्खू संसत्तं पसंसइ पसंसंतं वा साइज्जइ ॥ सू० ५७ ॥ जे भिक्खू अहाछंदं वंदइ वंदंतं वा साइज्जइ ॥ सू० ५८॥ जे भिक्खू अहाछंदं पसंसइ पसंसंतं वा साइज्जइ ॥ सू० ५९॥ जे भिक्खू नितियं

वंदइ वंदंतं वा साइज्जइ ॥ सू० ६०॥ जे भिक्खू नितियं पसंसइ पसंसंतं वा साइज्जइ ॥ सू० ६१॥ जे भिक्खू काहियं वंदइ वंदंतं वा साइज्जइ ॥सू० ६२ जे भिक्खू काहियं पसंसइ पसंसंतं वा साइज्जइ ॥ सू० ६३॥ जे भिक्खू पासणियं वंदइ वंदंतं वा साइज्जइ ॥ सू० ६४॥ जे भिक्खू पासणियं पसंसइ पसंसंतं वा साइज्जइ ॥ सू० ६५॥ जे भिक्खू मामगं वंदइ वंदंतं वा साइज्जइ ॥ सू० ६६॥ जे भिक्खू मामगं पसंसइ पसंसंतं वा साइज्जइ ॥ सू० ६७॥ जे भिक्खू संपसारियं वंदइ वंदंतं वा साइज्जइ ॥सू० ६८॥ जे भिक्खू संपसारियं पसंसइ पसंसंतं वा साइज्जइ ॥सू० ६९॥

छाया—यो भिक्षुः कुशीलं वन्दते वन्दमानं वा स्वदते ॥ सू० ५२॥ यो भिक्षुः कुशील प्रशंसति प्रशंसन्त वा स्वदते ॥सू० ५३॥ यो भिक्षुरवसन्न वन्दते वन्दमान वा स्वदते ॥ सू० ५४॥ यो भिक्षुरवसन्न प्रशसति प्रशंसन्त वा स्वदते ॥सू० ५५॥ यो भिक्षुः संसक्तं वन्दते वन्दमानं वा स्वदते ॥ सू० ५६॥ यो भिक्षुः संसक्तं प्रशसति प्रशंसन्तं वा स्वदते ॥ सू० ५७॥ यो भिक्षुर्यथाछन्द वन्दते वन्दमान वा स्वदते ॥ सू० ५८॥ यो भिक्षु-यथाछन्द प्रशसति प्रशसन्त वा स्वदते ॥ सू० ५९। यो भिक्षुर्नैत्यिक वन्दते वन्दमानं वा स्वदते ॥ सू० ६०॥ यो भिक्षुर्नैत्यिक प्रशसति प्रशसन्त वा स्वदते ॥ सू० ६१॥ यो भिक्षुः काथिकं वन्दते वन्दमानं वा स्वदते ॥सू० ६२॥ यो भिक्षुः काथिकं प्रशंसति प्रशसन्त वा स्वदते ॥ सू० ६३ ॥ यो भिक्षुः प्राश्निकं वन्दते वन्दमान वा स्वदते ॥ सू० ६४ यो भिक्षुः प्राश्निक प्रशंसति प्रशसन्त वा स्वदते ॥ सू० ६५ ॥ यो भिक्षुर्मामकं वन्दते वन्दमानं वा स्वदते । सू० ६६॥ यो भिक्षुर्मामक प्रशंसति प्रशसन्तं वा स्वदते ॥ सू० ६७॥ यो भिक्षुः सांप्रसारिक वन्दते वन्दमान वा स्वदते ॥ सू० ६८॥ यो भिक्षुः साप्रसारिकं प्रशसति प्रशसंतं वा स्वदते ॥ सू० ६९॥

चूर्णी - 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'कुसीलं कुशीलम्, तत्र कुत्सितं शीलं यस्य स कुशील तम्, अथवा कुत्सितेषु निन्दितेषु कर्मसु सुशीलं करोतीत्यत कुशील', एवं वन्दन प्रशसनं चाधिकृत्य कुशीला वसन्न-संसक्त-यथाछन्द–नैत्यिक-काथिक-प्राश्निक–मामक साप्रसारिक–पर्यन्तं सूत्राणि पार्श्वस्थसूत्रवदेव व्याख्येयानि, तत्र कुशीलः, कुत्सितं शीलम् आचारो यस्य स कुशील, अथवा कुत्सितेषु निन्दितेषु कर्मसु शीलं स्वभावो यस्य स कुशीलः कौतुककर्मत आरभ्य विद्यामन्त्रचूर्णपर्यन्तकरणकारणादिभिरुपजीवी तं वन्दते० ॥ सू० ५२॥ 'पसंसइ' प्रशंसति ॥ सू० ५३॥ 'ओसन्नं' अवसन्नम्, तत्र अवसन्नः यः सर्वामपि सामाचारीं वितथां करोति सः, त वन्दते ॥ सू० ५४॥ प्रशंसति ॥सू० ५५॥ 'संसत्तं' संसक्तं, तत्र संसक्तः—

चारित्रविराधकदोषेषु संसक्तः आसक्तः चारित्रविराधकदोषयुक्त इत्यर्थः यथा गवादिमृतशरीरं कथितं सदनेकप्रकारककृमिजालाकीर्णं भवति तथैव ससक्तोऽप्यनेकदोषाकीर्णो भवति, स बहुरूपिपुरुषवत् अनेकरूपधारी भवति, नटवत् अनेकरूपाणि करोति, वस्त्रवत् यथा हरिद्रारागरक्तं प्रक्षाल्य गेरुकादि-रागरक्तं करोति, एवं संसक्तोऽपि नानाप्रकारको भवति, यथा पार्श्वस्थेषु तिष्ठन् पार्श्वस्थो भवति, कुशीलेषु तिष्ठन् कुशीलो भवति, एवमवसन्नादिविषयेऽपि विज्ञेयम् । एवमन्येष्वपि यथाविधेषु तिष्ठन् यथाविध एव जायते । एतादृशं संसक्तं वन्दते ॥ सू० ५६॥ प्रशंसति । सू० ५७॥ 'अहाच्छंदं' यथाच्छन्दम्, यथाच्छन्दः यथा यत्प्रकारकः छन्दः अभिप्रायः उत्पद्यते तदनुसारं वर्त्तते यः स यथाच्छन्दः यथेच्छकार्यकारी आगमनिरपेक्षचारित्यर्थः, तं वन्दते ॥ सू० ५८॥ प्रशंसति ॥ सू० ५९॥ 'नितियं' नैत्यिकम्, नैत्यिकः नित्यपिण्डभोजी यः प्रतिदिनमेकस्मादेव गृहात् नियमत आहारादिकं गृह्णाति सः तादृशं वन्दते ॥ सू० ६०॥ प्रशंसति ॥ सू० ६१॥ 'काहियं' काथिकम्, काथिकः कथाकारकः, योऽशनाद्यर्थं यशःकीर्तिप्राप्त्यर्थं च धर्मादिकथां कथयति यः स, तं वन्दते ॥ सू० ६२॥ प्रशंसति ॥ सू० ६३॥ 'पासणियं' प्राश्निकम्, प्राश्निकः यः सावद्यप्रश्नं करोति, सावद्यमपि प्रश्नस्योत्तरं ददाति भूतभविष्यत्कालिकं शुभाशुभं प्रश्नस्योत्तरं ददाति सः, तं वन्दते ॥ सू० ६४॥ प्रशंसति ॥ सू० ६५॥ 'मामगं' मामकम्, मामकः-यः उपधिवस्त्रपात्रवसत्यादौ मम ममेति ममकारकरणात् मामकः प्रोच्यते, एते उपध्यादयो मम सन्ति न कोऽप्यन्यः एषामुपभोगं करोतु, इत्येवं कथनशीलो मामकः, यथा मदीयो देशः सुन्दरः, वृक्षवापीसरस्तडागादिशोभितः नैतादृशोऽपरो देशः सुखविहारो मम देशः, यत्र सुलभ-वसतिभक्तोपकरणादयो बहवो गुणाः सन्ति, यत्र शालिगोधूमादीनि अनेकप्रकारकाणि वस्तूनि निष्पद्यन्ते, यत्र गोमहिष्यादीनां प्रभूतत्वेन दुग्धदधिनवनीततक्रादीनि प्रचुराणि भवन्ति, यत्र वस्त्रा-लङ्कारादिभिरुपशोभिताः स्त्रीपुरुषादिवर्तन्ते, तत्र साधुसाध्वीनामुपद्रवकारको जनो न कोऽपि वर्त्तते, एतादृशो देशो मम, इत्यादिरूपेण सर्वत्र ममकारको मामकः प्रोच्यते तं वन्दते ॥ सू० ६६॥ प्रशं-सति ॥ सू० ६७॥ 'संपसारियं' साम्प्रसारिकम्, साम्प्रसारिकः-गृहस्थानां कार्येषु गुरुलाघवं संप्रसारयितुं विस्तारयितुं विस्तरेण तद्विस्तरेण तद्विषये संमतिं दातुं शीलं यस्य स संप्रसारी, स एव साम्प्रसारिकः गृहस्थानां व्यापारादिषु कौटुम्बिकोचितानुचितकार्येषु मार्गप्रदर्शकः, तं यो वन्दते ॥ सू०६८॥ प्रशंसति प्रशंसन्तं वाऽन्यं स्वदते अनुमोदते सः आज्ञाभङ्गादिदोषान् प्राप्नोतीति ।

अत्राह भाष्यकारः —

**भाष्यम्** — पासत्थं च समारब्भ, सपसारियमंतगं ।
वंदइ पसंसई चेव, आणाभंगाइ पावई ॥

छाया—पार्श्वस्थं च समारभ्य, सांप्रसारिकान्तम् ।
वन्दते प्रशंसति चैव, आज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः 'जे भिक्खू' इति। यो भिक्षु श्रमण श्रमणी वा 'पासत्थं' पार्श्वस्थमारम्य साम्प्रसारिकान्तं साम्प्रसारिकपर्यन्तं शिथिलाचार मुनिवेषधरं वन्दते वन्दना करोति प्रशंसति प्रशसां करोति च स आज्ञाभङ्गादिदोषान् प्राप्नोतीत्यत तेषां वन्दनां प्रशंसां च न कुर्यात् तत्करणात् मिथ्यात्वादिदोष आपद्येत ॥ सू० ६९ ॥

सूत्रम्—जे भिक्खू धाईपिंडं भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ७०॥

छाया यो भिक्षुर्धात्रीपिण्डं भुङ्क्ते भुञ्जान वा स्वदते ॥ सू० ७०॥

चूर्णिः—जे भिक्खू इत्यादि। 'जे भिक्खू' य कश्चित् भिक्षु 'धाईपिंडं भुंजइ' धात्रीपिण्ड भुङ्क्ते, तत्र धात्रीकर्मकरणेन यत पिण्डादिकं भवति तत् धात्रीपिण्डम् गृहस्थबालकादे· क्रीडनं कारयित्वा ततो गृह्यमाण· पिण्ड स धात्रीपिण्ड, तम् धात्रीपिण्डम् तादृशधात्रीपिण्ड-स्योपभोग करोति तथा 'भुंजंतं वा साइज्जइ' भुञ्जानं वा स्वदते। यो हि भिक्षुर्धात्रीपिण्डस्यो-पभोगं करोति तमनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ७०॥

सूत्रम्—जे भिक्खू दूईपिंडं भुंजइ भुंजंतं वा साइज्जइ ॥सू० ७१॥ जे भिक्खू णिमित्तपिंडं भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ७२॥ जे भिक्खू आजीवियपिंडं भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ७३॥ जे भिक्खू वणीमगपिंडं भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ७४॥ जे भिक्खू तिगिच्छपिंडं भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ७५॥ से भिक्खू कोह-पिंडं भुंजइ भुंजंत वा साइज्जइ ॥ सू० ७६॥ जे भिक्खू माणपिंडं भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ७७॥ जे भिक्खू मायापिण्डं भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ७८॥ जे भिक्खू लोभपिंडं भुंजइ भुजंतं वा साइज्जइ ॥ सू० ७९॥ जे भिक्खू विज्जापिंडं भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ८०॥ जे भिक्खू मंतपिंडं भुंजइ भुंजंत वा साइज्जइ ॥ सू० ८१॥ जे भिक्खू जोगपिंडं भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ८२॥ जे भिक्खू चुण्णपिंडं भुंजइ भुंजंतं वा साइज्जइ ॥सू० ८३॥

छाया—यो भिक्षुर्दूतीपिण्ड भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू०७१॥ यो भिक्षुर्निमि-त्तपिण्डं भुङ्क्ते भुञ्जान वा स्वदते ॥ सू० ७२॥ यो भिक्षुः आजीविकापिण्डं भुङ्क्ते भुञ्जानं

वा स्वदते ॥ सू०७३॥ यो भिक्षुर्वनीपकपिण्डं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू०७४॥ यो भिक्षुः चिकित्सापिण्डं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ७५॥ यो भिक्षुः क्रोधपिण्डं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ७६॥ यो भिक्षुर्मानपिण्डं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ७७॥ यो भिक्षुर्मायापिण्डं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ७८॥ यो भिक्षुर्लोभपिण्डं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू०७९॥ यो भिक्षुर्विद्यापिण्डं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ८०॥ यो भिक्षुर्मन्त्रपिण्डं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ८१॥ यो भिक्षुर्योगपिण्डं भुङ्क्ते भुञ्जानं वा स्वदते ॥सू० ८२॥ यो भिक्षुश्चूर्णपिण्डं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू०८३॥

**चूर्णी**—एवम्—दूतीपिण्डादारभ्य चूर्णपिण्डपर्यन्तानि त्रयोदश सूत्राणि व्याख्येयानि, तत्र—**'दूईपिंडं भुंजइ'** दूतीपिण्डं भुङ्क्ते, तत्र यो गृहस्थस्य सन्देशं ग्रामाद् ग्रामान्तराद्वा ग्रामं ग्रामान्तरम् आनयति नयति स दूतः, एतत्कार्ये स्त्रिया मुख्यत्वमिति दूतीशब्दोऽत्र प्रयुक्तः, तद्योग्यकार्यं कृत्वा आहारादिपिण्डो गृह्यते स दूतीपिण्डः तं भुङ्क्ते ॥ सू० ७१॥ **'निमित्तपिंडं भुंजइ'** निमित्तपिण्डः अतीतानागतवर्तमानकालिकं शुभाशुभं कथयित्वा पिण्डग्रहणं निमित्तपिण्डस्तं भुङ्क्ते ॥सू० ७२॥ **'आजीवियपिंडं भुंजइ'** आजीविकापिण्डम्, आजीविकापिण्डः स य आजीविकार्थं जीवननिर्वाहार्थम् 'अहं भोगवंशीयः, उग्रवंशीय' इति स्वस्य जातिकुलादिकं प्रदर्श्य गृह्यते, तं भुङ्क्ते ॥ सू० ७३॥ **'वणीमगपिंडं'** वनीपकपिण्डम्, वनीपकपिण्डः स य 'अहं साधुरस्मि, यदि भवान् मह्यं भिक्षां न दास्यति तदा को दास्यति ?' इत्येवं दीनशब्दमुच्चार्य पिण्डो गृह्यते तं भुङ्क्ते ॥७४॥ **'तिगिच्छपिंडं'** चिकित्सापिण्डम्, चिकित्सापिण्डः स य गृहस्थानां रोगादौ औषधदानादिरूपा चिकित्सां कृत्वा गृह्यते, तं भुङ्क्ते ॥ सू० ५॥ **'कोहपिंडं'** क्रोधपिण्डम्, क्रोधपिण्डः स य क्रोधपूर्वकं गृह्यते स तं भुङ्क्ते ॥सू०७६॥ **'माणपिंडं'** मानपिण्डम्, मानपिण्डः सः योऽभिमानपूर्वकं गृह्यते, यथा 'इदमाहारजातं मह्यं देहि नान्यत् ग्रहीष्यामि किमहं साधारणोऽस्मि यदेतादृशमाहारजातं गृह्णामि' इत्यादिरूपाभिमानपूर्वकं गृह्यते स तं भुङ्क्ते ॥ सू०७७॥ **'मायापिंडं'** मायापिण्डम्, मायापिण्डः स य मायया कपटेनालीकादिभाषणं कृत्वा गृह्यते तं भुङ्क्ते ॥सू० ७८॥ **'लोभपिंडं'** लोभपिण्डम्, लोभपिण्डः स य लोभवशात् प्रणीतरसयुक्तो गृह्यते, तं भुङ्क्ते ॥सू० ७९॥ **'विज्जापिंडं'** विद्यापिण्डम्, विद्यापिण्डः स, या रोहिणीप्रभृतिस्त्रीदेवताधिष्ठिता ससाधना वा विद्या, तत्प्रयोगं कृत्वा गृह्यते, तं भुङ्क्ते ॥ सू० ८०॥ **'मंतपिंडं'** मन्त्रपिण्डम्, मन्त्रपिण्डः स, य मन्त्रः पुरुषदेवताधिष्ठितो मारणमोहनवशीकरणोच्चाटनादिरूपः तत्प्रयोगेण गृह्यते, तं भुङ्क्ते ॥ सू० ८१॥ **'जोगपिंडं'** योगपिण्डम्, योगपिण्डः स य गर्भाधानकरणगर्भस्थिरीकरण—वशीकरणादियोगं कृत्वा गृह्यते तं भुङ्क्ते ॥८२॥ **'चुण्णपिंडं'** चूर्णपिण्डम् चूर्णपिण्डः चूर्णम्—कुट्टितानेकवस्तुसंमिश्रणरूपम्, यत्प्रयोगेण प्रक्षेपणपानादिरूपेण वशीकरणगर्भस्थिरीकरणादिकं जायते तत्प्रयोगकरणपूर्वकं गृह्यते तं भुङ्क्ते, भुञ्जानं वा अनुमोदते स आज्ञाभङ्गादिदोषभागी भवति ॥ सू० ८३॥

अत्राह भाष्यकारः—

भाष्यम्—धाईपिंडं समारम्भ, चुण्णपिंडगमंतगं ।
भुंजे अह अणुमोए य, आणाभंगाइ पावइ ॥

छाया—धात्रीपिण्डं समारभ्य चूर्णपिण्डान्तकम् ।
भुञ्जीताथानुमोदेत च आज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः 'धाईपिंडं' इत्यादि । धात्रीपिण्डादारभ्य चूर्णपिण्डपर्यन्तं यो भुञ्जीत अहरेत्, अथ अनुमोदेत च स आज्ञाभङ्गादिदोषान् प्राप्नोति ॥ सू० ८३॥

अथोपसहारमाह— 'तं ठाणं' इत्यादि ।

**सूत्रम्—तं ठाणं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ॥ सू० ८४॥**

॥ निसीहज्झयणे तेरसमो उद्देसो समत्तो ॥१३॥

छाया—तत्स्थानं सेवमान आपद्यते चातुर्मासिकं परिहारस्थानमुद्घातिकम् ॥८४॥
॥ निशीथाध्ययने त्रयोदशोद्देशकः समाप्त ॥ १३॥

चूर्णी—'तं ठाणं सेवमाणे' तत्स्थानं पृथिवीकायिकादिषु स्थानकरणादित आरभ्य चूर्णपिण्डग्रहणपर्यन्त प्रायश्चित्तस्थानं सेवमानः, तस्य स्थानस्य प्रतिसेवनां कुर्वन् भिक्षुः एषु स्थानेषु मध्यात् यत् किमप्येकमनेक सर्वं वा प्रायश्चित्तस्थान प्रतिसेवमान 'आवज्जइ' आपद्यते प्राप्नोति 'चाउम्मासियं परिहारट्ठाण उग्घाइयं' चातुर्मासिकं परिहारस्थानमुद्घातिक लघु-चातुर्मासिकं प्रायश्चित्त प्राप्नोति ॥सू० ८४॥

इति श्री-विश्वविख्यात-जगद्वल्लभ-प्रसिद्धवाचक-पञ्चदशभाषाकलितललितकलापालापक-प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक-वादिमानमर्दक-श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-"जैनशास्त्राचार्य"-पदभूषित-कोल्हापुरराजगुरु-बालब्रह्मचारि-जैनाचार्य-जैन-धर्मदिवाकर-पूज्यश्री-घासीलालव्रति-विरचितायां "निशीथसूत्रस्य" चूर्णिभाष्यावचूरिरूपायां व्याख्यायाम् त्रयोदशोद्देशकः समाप्तः ॥१३॥





## ॥ चतुर्दशोद्देशकः ॥

अथ त्रयोदशोद्देशक व्याख्यायावसरप्राप्तं चतुर्दशोद्देशं व्याख्यातुमाह, तत्र त्रयोदशोद्देशकान्तिमसूत्रेण सह चतुर्दशोद्देशकादिसूत्रस्य कः सम्बन्धः ? इत्यत्राह भाष्यकारः—

भाष्यम्—पडिसेहो च पुव्वंमि, पिंडाइस्स पदंसिओ ।
सो चेव पडिसेहो उ, पत्ताइस्स कहिज्जइ ॥

छाया— प्रतिषेधश्च पूर्वस्मिन् पिण्डादेः प्रदर्शितः ।
स एव प्रतिषेधस्तु पात्रादेः कथ्यते ॥

अवचूरिः— त्रयोदशोद्देशकस्य अन्तिमे पिण्डादेरविहितधात्र्यादिपिण्डस्य प्रतिषेधः धात्रीपिण्डप्रभृतिपिण्डग्रहणस्य निषेध प्रदर्शित कथितः, तादृशपिण्डस्य संयमोपघातकत्वात्, स एव प्रतिषेधोऽत्र चतुर्दशोद्देशके पात्राद्युपधे कथ्यते, तत्राविहितपिण्डग्रहणस्य तदुपभोगस्य च निषेधः कृतोऽत्राविहितपात्रस्योपलक्षणादुपधेः निषेधो वर्ण्यते इति उभयत्रापि प्रतिषेध एव, ततश्च यथा अविशुद्धपिण्डग्रहण न कर्तव्यं तथैव–अविशुद्धपात्रादिकमपि वर्जनीयमेव, तदनेन सम्बन्धेनायातस्यास्य चतुर्दशोद्देशकीयप्रथमसूत्रस्य व्याख्यानं प्रस्तूयते—'जे भिक्खू' इत्यादि ।

**सूत्रम्—जे भिक्खू पडिग्गहं किणइ किणावेइ कीयमाहट्टु दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० १॥**

छाया— यो भिक्षुः प्रतिग्रह क्रीणाति क्रापयति क्रीतमाहृत्य दीयमानं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० १॥

चूर्णी–'जे भिक्खू' इत्यादि । 'जेभिक्खू' य कश्चित् भिक्षु श्रमण श्रमणी वा **'पडिग्गहं'** प्रतिग्रहं पात्रं **'किणइ'** क्रीणाति, द्रव्यादिक दत्वा स्वयमेव पात्रस्य क्रयणं करोति तथा **'किणावेइ'** क्रापयति, परद्वारा द्रव्यादिक दापयित्वा पात्र क्रीणाति तथा **'कीयमाहट्टु दिज्जमाणं पडिग्गाहेइ'** क्रीतमाहृत्यदीयमानं गृह्णाति, अन्य कोपि श्रद्धालुर्गृहस्थ मूल्य दत्वा पात्र क्रीतवान्, क्रीत्वा प्रदीयते तादृश क्रीतमाहृतमभिमुखमानीय दीयमान पात्रादिक प्रतिगृह्णाति स्वीकरोति स्वीकारयति वा तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गानवस्थामिथ्यात्वसंयमविराधनादयो दोषा भवन्तीति ॥ सू० १॥

अत्राह भाष्यकार -

भाष्यम्- कीय किणावियं वावि, अणुमोइयमेव वा ।
एक्केक्कं दुविहं वुत्तं, दव्वभावप्पभेयओ ॥

छाया—क्रीतं क्रापितं वापि अनुमोदितमेव वा ।
एकैकं द्विविधं प्रोक्त द्रव्यभावप्रभेदत ॥

अवचूरिः—यत् क्रीत स्वयमेव मूल्यं समर्प्य यस्य क्रयणं कृत तत्, यद्वा क्रापितम् अन्य द्वारा क्रयणं कारितम् अन्येन क्रीत्वा अभिमुखमानीय समर्पित तत् तादृशम् अनुमोदितं वा, एतत् त्रिविधमपि पात्रमेकैकं द्विविधं द्विप्रकारकं कथितं द्रव्यभावभेदात्, तत्र द्रव्यतो गन्धगुटिका-वस्त्रादिदानेन, भावतः धर्मकथादिकथनेन जातिकुलगणादिदर्शनेन, शिल्पादिशिक्षणेन भवति। तथा पुनरपि क्रीतादिक द्विविधं भवति आत्मपरभेदात्, तदपि पुनर्द्विविध द्रव्यभावभेदात्, तत्र यत् परक्रीतं गृहस्थेन स्वयं क्रीतं तत् त्रिविधं भवति सचित्तक्रीतम्, अचित्तक्रीतं, मिश्रक्रीतम्, तत्र सचित्तक्रीतं-सचित्तेन द्विपदचतुष्पदादिना क्रीणाति, अचित्तक्रीतम्—अचित्तेन हिरण्यादिना क्रीणाति, मिश्रक्रीतं मिश्रितेन वस्त्राभूषणसहितदासीदासादिना क्रीणाति तत् मिश्रक्रीतम्। द्रव्यत आत्मक्रीतं चेत्थम् यो भिक्षुः पात्रार्थं स्वस्य वस्त्रं दत्वा पात्र गृह्णाति, भावत आत्मक्रीतं धर्मकथादिना यत् गृह्यते। परक्रीतं तु इत्थम्—गृहस्थः स्वयमेव क्रीणाति तत् परक्रीतम्। एतेषां स्वक्रीत-पर-क्रीत-द्रव्यक्रीत-भावक्रीताभिमुखानीतपात्रादिकमध्यात् अन्यतरमपि पात्रादि उपभोगाय गृह्णाति तथा गृहीत्वा उपभोगं कुर्वाण समनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १ ॥

**सूत्रम्—जे भिक्खू पडिग्गहं पामिच्चेइ पामिच्चावेइ पामिच्चिय-माहट्टु दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० २॥**

छाया—यो भिक्षुः प्रतिग्रहं प्रामित्यति प्रामित्ययति प्रामित्यम् आहृत्य दीयमानं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० २॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चित् भिक्षुः 'पडिग्गहं' प्रतिग्रहं पात्रम् 'पामिच्चेइ' प्रामित्यति प्रमितिः प्रमाण, तस्माद् आगत प्रामित्यम्, प्रमाण कृत्वा प्रति प्रदानप्रतिज्ञया यद् ग्रहणं तत् प्रामित्यम्। तत्करोतीति प्रामित्यति, यथा यस्य वस्तुनः ग्रहणकाले कथयति 'यदिदानीमिदं वस्तु त्वं मम देहि कालान्तरे एतस्य मूल्यं तदेव वस्तु वा प्रति-दास्यामि' इति कृत्वा ऋणरूपेणानीयते तत् प्रामित्यम् 'उधार' इति लोकप्रसिद्धम्, तत्करोतीति, तथा 'पामिच्चावेइ' प्रामित्ययति, अन्यद्वारा ऋणरूपेण आनाययति 'पामिच्चियमाहट्टु दिज्जमाणं' प्रामित्यितम्-प्रामित्येन गृहीतम् आहृत्य दीयमानम् उद्धारं कृत्वा पात्रं क्रीतवान्, तादृशपात्रमभिमुखमानीय दीयमानम् यो भिक्षुः श्रमणः श्रमणी वा 'पडिग्गाहेइ' प्रतिगृह्णाति स्वी-करोति प्रातिग्राहयति स्वीकारयति वा तथा 'पडिग्गाहेंतं' वा साइज्जइ' प्रतिगृह्णन्तं वा स्व-दतेऽनुमोदते स प्रायश्चित्तभागी भवति।

अत्राह भाष्यकारः—

भाष्यम्—पामिच्चाइयपायं तु, दुविहं परिकित्तियं।
लोउत्तरं लोइयं च, तग्गहणे दोसभा जई ॥

छाया—प्रामित्यादिकपात्रं तु द्विविधं परिकीर्तितम् ।
लोकोत्तरं लौकिकं च तद्ग्रहणे दोषभाग् यतिः ॥

**अवचूरिः**—प्रामित्यादिकपात्रम् उच्छिन्नक्रीतम् क्रापितमनुमोदितमेतत्सर्वं द्विविधं द्विप्रकारकं परिकीर्तितं कथितं भवतीत्यर्थ, लौकिकं लोकोत्तरिकं च, तत्र लौकिकं प्रामित्यं गृहस्थेन श्रमणार्थं 'मूल्यं दास्यामी'–तिकृत्वा यत् उद्धाररूपेण क्रीतं, **तस्योदाहरणमिदम्**—

एको जिनदत्तनामा कौशलपुरवास्तव्य श्रावको दीक्षितो जात', स चाचार्यसमीपे वसन् श्रुतमधीतवान् , अधीत्य च गीतार्थो जात'। तदनन्तर स गुरुं पृष्टवान्–गुरो ! स्वकीयं संसारिबन्धुवर्गं दर्शनं दातुं स्वदेशं गन्तुमिच्छामि। ततो गुरुणा आज्ञप्तस्तं संसारिग्रामं गतवान् यत्र स्वकीया बन्धुबान्धवा आसन् , तत. स. ग्रामाद् बहिरेन स्थित्वा तद्ग्रामीणं कमपि पृष्टवान् यत् भो ! अमुकश्रावको अस्मिन् ग्रामे पूर्वकाले निवसन् आसीत् तस्य परिवारो सम्प्रति क. को 'विद्यते ? ततो ग्रामीणस्तममुकोयमिति ज्ञात्वा कथयति–भो' ! तव परिवारे केवलं तव भगिनी एव जीवति नान्य । तदनन्तरं स साधुः स्वभगिन्या गृह गतवान्, गत्वा च कुशलादिकथनान्तरं साधुरुवाच हे भगिनि ! मदर्थमाहारो न कर्तव्य. त्वया । इति कथितेपि सा उच्छिन्नमाहारजात तन्मूल्यप्रदानप्रतिज्ञया कस्याचित् गृहादानीय दत्तवती। तत सा यस्य गृहादानीत यद्वस्तु तस्य मूल्य तस्मै पुनर्न दत्तवती दारिद्र्यात्, तत् उद्धारद्रव्यमूल्यमदत्तं प्रतिदिन विवृद्ध यस्य प्रत्यर्पणं कर्तुं सा श्रमणभगिनी समर्था न जाता। तदनन्तर सा श्रमणभगिनी धनस्वामिनो गृहे दासी संजाता उद्धारद्रव्यमूल्यविमोचनाय, तदनन्तर विहरन् कदाचित् स साधुः स्वभगिनीं मिलितु तद्गृहं गतवान् परन्तु सा न मिलिता तदा साधुना पृष्टं मम भगिनी कुत्र गता न दृश्यते गृहे, तदनन्तरमन्येन कथित भवद्भगिनी द्रव्यमूल्य दातुमसमर्था उद्धारद्रव्यदातुः श्रेष्ठिनो गृहे दासी संजाता, तस्य श्रेष्ठिन आज्ञानुसारेण दासीकर्म कुर्वाणा कालं गमयति । ततो गमनसमये कथंचित् मिलिता भगिनी रोदन कुर्वाणा साधुं सर्वं समाचारं कथितवती। श्रमणश्च तामाश्वासयन् प्रोवाच–हे भगिनि ! मा रुद अचिरादेव त्वा दु.खान्मोचयिष्यामि । यदाहं तस्य श्रेष्ठिनो गृहे भिक्षार्थमागमिष्यामि तदा गृहपतेस्तस्य श्रेष्ठिन. प्रत्यक्ष यदा सचित्तोदकादिना आरंभ. कुर्वाणा त्व भविष्यसि तदाहं देशकालोचित सर्वं करिष्यामि। ततः कदाचित् स श्रमणः तस्य श्रेष्ठिनो गृहं भिक्षार्थं गतवान् । त समागत दृष्ट्वा तद्भगिनी उदकाद्यारम्भे संलग्ना । साधुं भिक्षार्थमागतं दृष्ट्वा गृहस्वामिना दास्यै प्रोवाच हे कर्मकरि ! साधवे भिक्षां देहि । श्रमणः तदीय. वचन श्रुत्वा प्रोवाच -नाह ग्रहिष्यामि भिक्षा दासीहस्तात् । गृहस्वामी प्रोवाच भो–श्रमण ! कथं भिक्षां दासीहस्तात न गृह्यते ? ततो लब्धावसरः साधुः भिक्षाया विशुद्धप्रसङ्गेन श्रमणधर्मं श्रमणस्याचारविचारं सर्वं श्रावितवान् । ततः सावधानो गृहस्वामी पुनरपि साधुं प्रति प्रोवाच–

हे दयालो ! कुत्र भवान् निवासं करोति ? साधुरुवाच अमुकोपाश्रये सम्प्रति वसामि । ततो द्वितीयदिवसे स गृहस्वामी गृहकार्यं सर्वं कृत्वा तस्मिन् उपाश्रये साधोर्दर्शनार्थं गतवान् । ततः स गृहस्वामी साधोर्वन्दननमस्कारादिकं विधाय समुपविष्टः, तत स साधुस्तस्मै धर्मकथां कथितवान्–हे श्रावक ! सर्वो जीव स्वस्वकर्मपराधीनः सर्वमपि कार्यं करोति तत्र दयादिधर्मः सम्यक् पालनीयो येन इहलोके परलोके उभयत्रापि सुखं भवेत्, आरम्भसमारम्भादिकं जीवाना नरकपातायैव केवलं भवति । एवं क्रमेण बृहतीं धर्मकथा कथितवान् । ततः साधुमुखात् संसारस्य नश्वरभाव मोक्षस्य च शाश्वतभावं निरतिशयसुखरूपं च ज्ञात्वा ससागत् जात-वैराग्योऽभवत् । तदीयस्वजनादयोपि नानाविधमभिग्रहं गृहीतवन्तः । सम्यक्त्वं प्रतिपन्नः सन् अणु-व्रतानि गृहीत्वा द्वादशव्रतधारी जातः । ज्ञातदासीवृत्तान्तो दासीं मुक्तवान् । लोकोत्तरं प्रामित्यं साधु साधुतः प्रामित्यं करोति, तत्रापि पुनरदाने परस्परं कलहवैमनस्यादयो बहवो दोषाः समापद्यन्ते, तस्मात् प्रामित्यपात्रादिग्रहणं न कार्यम् । उपलक्षणत्वात् वस्त्राहारादिकं किमपि न ग्राह्यम् ॥ सू० २ ।

**सूत्रम्—जे भिक्खू पडिग्गहं परियट्टेइ परियट्टावेइ परियट्टिय-माहट्टु दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ॥ सू० ३॥**

छाया—यो भिक्षुः प्रतिग्रहं परिवर्त्तते परिवर्तयति परिवर्तितमाहृत्य दीयमानं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० ३॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'पडिग्गहं' प्रतिग्रहं पात्रम् 'परियट्टेइ' परिवर्तते स्वयं परिवर्तनं करोति स्वकीयं पात्रम् अन्यस्मै ददाति अन्यस्य च पात्रं स्वयं गृह्णाति तथा 'परियट्टावेइ' परिवर्तयति अन्यद्वारा पात्रं परिवर्तयति 'परियट्टि-यमाहट्टु दिज्जमाणं' परिवर्तितमाहृत्य दीयमानं परिवर्तितं पात्रं अभिमुखमागत्य ददतम् 'पडिग्गा-हेइ' प्रतिगृह्णाति स्वीकरोति तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदते स प्राय-श्चित्तभागी भवति ।

अत्राह भाष्यकारः—

भाष्यम्—परियट्टियं च दुविहं, लोइय लोगुत्तरं समासेण ।
एक्केक्कंपि य दुविहं, तद्दव्वे अण्णदव्वे य ॥

छाया—परिवर्तितं च द्विविधं लौकिकं लोकोत्तरं समासेन ।
एकैकमपि द्विविधं तद्द्रव्ये अन्यद्रव्ये च ॥

अवचूरिः—सूत्रे परिवर्तितपात्रादेर्ग्रहणे तदुपयोगे च निषेधः कथितः, तत् परिवर्तितं पात्रादिकं द्विविधं द्विप्रकारकं भवति–एकं लौकिकमपरं लोकोत्तरं च, तत्र लौकिकं गृहस्थानां

लोकोत्तर साधूनाम् । पुनरपि एकैकं द्विविध द्विप्रकारकं भवति तद्द्रव्ये तथा अन्यद्रव्ये च । तद्द्रव्ये परिवर्तनं यथा पात्रं पात्रेण परिवर्तयति । अन्यद्रव्ये परिवर्तनं यथा पात्रं वस्त्रेण परिवर्तयति, वस्त्र वा पात्रेणान्येन वा येन केनचित् वस्तुना परिवर्त्तयति । तत्र गृहस्थः संयताय दातुकामः पात्रादिकम् अन्यस्मै गृहस्थाय परिवर्तयितु ददाति एतत् परिवर्तनं लौकिकम् ।

तथाहि — कस्मिश्चित ग्रामे द्वौ श्रावकौ आस्ताम्, तयोरेकैका भगिनी अपि आसीत्, तत्रैकस्य भगिनी अपरेण परिणीता, अपरस्य भगिनी अपरेण परिणीता, परस्परं तयो भगिनीपतित्वेन सम्बन्धो जातः । तत काळान्तरे तयोरेकस्यान्यो भ्राता संसारस्यासारतां ज्ञात्वा प्रव्रजितो जातः । स सूत्रं सम्यगधीत्याचार्याज्ञया स्वजनवर्गाय दर्शन दातु सांसारिकग्रामे गतवान् परन्तु तस्य भगिनी दरिद्रा आसोत् कोद्रवाद्यन्नेन जीवनं यापयति परन्तु श्रमणाय भ्रात्रे भिक्षार्थं कोद्रवं नीत्वा भ्रातृगृहात् शाल्यन्नमानीतवनी, एवंप्रकारेण साध्वर्थमोदन परिवर्तितं कृतम्, ततो यदा तया स्वामिने भोजनकाले कोद्रवो दत्तस्तदा पृष्टवान् कस्मात् कोद्रव समागत ? किन्तु सा नोक्तवती किमपि । तत क्रोधात् गृहपतिना गृहात् सा निष्कासिता । तच्छ्रुत्वा अन्योपि तद्भगिनीं निष्कासितवान्, एव क्रमेण तयो परस्परं कलहो जात । ततः स साधुः तयो कलहं ज्ञात्वा सम्यक्त्वधर्मोपदेशेन क्रोधफल श्रावितवान् । तत साधोरुपशमवचनं श्रुत्वा कलहान्निवृत्ता जाता । यस्मादेते कलहादिदोषाः सभवन्ति तस्मात्कारणात् पात्रपिण्डादीना परिवर्तनं न कर्तव्यम् । एवं साधुर्यत्र परस्परं परिवर्तनं पात्रादीना करोति तत् लोकोत्तर परिवर्तनम्, एव साधुभिरपि परस्परं परिवर्तनं न कर्तव्यम् ॥ सू० ३ ॥

**सूत्रम्—जे भिक्खू पडिग्गहं अच्छिज्जं अणिसिट्ठं अभिहड माहट्टु-दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० ४ ॥**

छाया—यो भिक्षुः प्रतिग्रहमाच्छेद्यं अनिसृष्टमभिहृतमाहृत्य दीयमानं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० ४ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चित् भिक्षुः 'पडिग्गहं' प्रतिग्रह पात्रम् 'अच्छिज्जं' आच्छेद्यम् अन्यस्वामिकं पात्र साध्वर्थं बलात् गृहीत्वा दीयते तत् आच्छेद्यम्, अन्यस्वामिकवस्तु बलात्कारपूर्वकं गृहीत्वा दीयमान तथा स्वकीयमपि वस्तु दासादिहस्ते स्थितं तद् वस्तु तद्धस्तादाच्छिद्य साधवे यद् दीयमानं तदपि आच्छेद्यमुच्यते 'अणिसिट्ठं' अनिसृष्टम्—यद्वस्तु अनेकस्वामिकं तत् सर्वेषामाज्ञा विना ग्रहणम् अनिसृष्टमित्यर्थ, 'अभिहडं आहट्टु दिज्जमाणं' अभिमुखमाहृत्य दीयमान साध्वर्थमभिमुखमागत्य यत् दीयते तादृशम् पात्रादिकम् 'पडिग्गाहेइ' प्रतिगृह्णाति स्वीकरोति तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्त वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकारः—

भाष्यम्—अच्छिज्जं तिविहं वुत्तं, पहु सामि य तेणए ।
एहिं छिज्जं च पत्ताइ, साहूणं णेव कप्पइ ॥

छाया—आच्छेद्यं त्रिविधं प्रोक्तं, प्रभु स्वामि च स्तेनकम् ।
एतैश्छेद्यं च पात्रादि साधूनां नैव कल्पते ।

**अवचूरिः**—सूत्रे यत् बलात्कारादिना पात्रादीनामाछेद्यत्वं कथितं तत् आछेद्यं त्रिविधं त्रिप्रकारकं भवति, प्रभ्वाछेद्यं, स्वाम्याछेद्यं स्तेनाछेद्य च। तत्र एतै प्रभुप्रभृतिभिराछेद्य बलात्कारादिना गृहीतं पात्रादिकं पिण्डवस्त्रपात्राद्युपधि श्रमणाना श्रमणीनां च नैव कल्पते उपभोगाय तथा च प्रभ्वाच्छेद्ये उदाहरणम्——

कस्मिंश्चित् ग्रामे एको गोप आसीत्, स च पयोविभागेन गाः रक्षति, गवां यत् दुग्धं भवति तत्रैकं भागं स्वयं गृह्णाति भागत्रयं च गोस्वामिने ददाति। अथवा दिनत्रयं सर्वं दुग्धं गोस्वामिने ददाति चतुर्थे दिने यत् यत् दुग्ध तत्सर्वं स्वयं गृह्णाति, एतदेव गोपस्य वेतनम्। एवंप्रकारेण गोपालन कुर्वन् गा रक्षति। एकदा कदाचित् गोपालस्य पयोग्रहणदिवसे कश्चित् श्रमण. समागत. तदा गोस्वामी गवा पयो गृहीत्वा श्रमणाय दत्तवान्, यद्यपि गोपस्येदृशं कार्यं नाभिमतं तेन तस्य मनसि अप्रियमभूत् तथापि तूष्णीमेव स्थितः मौनमेव स्थित. न्यूनमेव दुग्धं पयोभाजने गृहीत्वा स्वगृहं गतवान्। तदनन्तर तत्पत्न्या गोपिकया पयोभाजनमभृत दृष्टम्, तद्दृष्ट्वा सा प्रोवाच गोपं प्रति—कथमद्य पयोभाजने न्यूनमेव दुग्धं विद्यते। गोपोऽवदत् हे गोपिके! किं कथयामि मम दौर्भाग्यात् तत्रैको दुर्वर्णः श्रमणः समागतः तस्मै मम दुग्धं बलात् गृहीत्वा गोस्वामिना दत्तं ततो रिक्त पयोभाजन विद्यते, तदा सा गोपं प्रति क्रुद्धा दुर्वाक्यं कथितवती। तत. स साधुं मारयितुं समागत, प्रयत्नेन मोचितः साधुरिति। तस्मादाच्छिद्य दीयमानमन्नादिकं न ग्राह्यमिति। एव स्वाम्याच्छेद्यमनेकस्वामिकं वस्तु एकस्यैवाज्ञया ग्रहणे स्वामिना परस्परं कलहादिकं जायते अतस्तदपि त्याज्यम्। एवं स्तेनाच्छेद्यं चौरेण यच्चौर्यकर्मणाऽऽनीतं तत् भयप्रदर्शनपूर्वकं तद्धस्तादाच्छिद्य दीयमान भवति, एतादृशवस्तुग्रहणे तदीयसंतत्यादिना श्रावकस्य प्राणभयादिसंभावना, ततस्तथा न कार्यम् ॥ सू० ४ ॥

**सूत्रम्—जे भिक्खू अतिरेगपडिग्गहं गणिं उद्देसिय गणिं समुद्देसिय तं गणिं अणापुच्छिय अणामंतिय अण्णमण्णस्स वियरइ वियरंतं वा साइज्जइ ॥ सू० ५॥**

छाया— यो भिक्षुरतिरेकप्रतिग्रहं गणिमुद्दिश्य गणिं समुद्दिश्य तं गणिमनापृच्छय अनामन्त्र्य अन्योन्यस्मै वितरति वितरंतं वा स्वदते ॥ सू० ५ ॥

चूर्णी 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चित् भिक्षुः 'अइरेगपडिग्गहं' अतिरेकप्रतिग्रहम्-प्रमाणादधिकं पात्रं यावत्प्रमाणकं पात्रादिकं श्रमणार्थं शास्त्रे कथितं ततोऽधिकम्, अयं भावः—उत्कृष्टेन एकस्य साधोः कृते पात्रत्रयं चतुर्थमुन्दकं तीर्थंकरेणानुज्ञातं, ततोऽधिकं पात्रम् अतिरेकमिति कथ्यते । अथवा—यावत्संख्यकं पात्रग्रहणं कथितं तदपेक्षया यदि बहुतरं गृह्णाति ततोऽतिरेकमिति कथ्यते । अथवा अनेन प्रकारेणातिरेको भवेत्—यथा कोपि साधुः पात्रयाचनार्थं प्रस्थितः तत आचार्यः पृच्छति क गच्छसि, तदा स वदति पात्रमानेतुम्, पात्रेषु छिद्राणि जातानि । तदा आचार्यः कथयति—सर्वेसामर्थं पात्राणि आनयतु । तदा स निर्गतः पात्रमानेतुम् मार्गे गच्छन् संभोगिसाधुना स दृष्टः, संभोगी साधुर्वदति—क गच्छसि ? स प्रोवाच आचार्येण सर्वेषां पात्रग्रहणाय प्रस्थापितोऽस्मि । तदा सांभोगिकः साधुर्वदति—भो श्रमण ! यावन्ति पात्राणि गुरुणा ते ग्रहीतुं संदिष्टानि तावत्सु पात्रेषु गृहीतेषु यदि तदतिरिक्तं पात्रं लब्धं भवेत् तदा ग्रहीतव्यं, गृहीत्वा च मह्यं समर्पणीयम्, अहमाचार्यं विज्ञापयिष्यामि । ततः पात्रान्वेषकः साधुर्वदति एवं करिष्यामीति । ततः स गतः पात्रमानेतुम् ततो लब्धं तावत्प्रमाणकं पात्रं यावन्मात्रं गुरुणा संदिष्टं ततोऽधिकमपि पात्रं लब्धं गृहीतं च । एवं प्रकारेणातिरेकपरिग्रहो भवति । अथवा यदीदं पात्रं त्रुटितं स्फुटितं स्फटितं वा स्यात् तदा ग्रहीतव्यं भवेत्, सम्प्रति प्रायोग्यं च लभ्यते, इति कृत्वा आत्मच्छन्दसा अनिर्दिष्टान्यपि पात्राणि गृहीतानि इत्यतिरेकपरिग्रहो भवतीति । "गणिं उद्देसिय गणिं समुद्देसिय" यं गणिमुद्दिश्य यं गणिं समुद्दिश्य अतिरेकपात्रं गृह्णाति तत्र विशेषितः उद्देशो यथा—गृहीतमतिरेकपात्रादिकं साधर्मिकाय दास्यामीति, तथा विशेषितः समुद्देशः यथा सति साधर्मिके साधर्मिकाय दास्यामि, अथवा उद्देशः -गणिनो दास्यामि वाचकाय वा दास्यामि, समुद्देशो यथा अमुकगणिने दास्यामि अमुकवाचकाय वा दास्यामीति । तत्र सामान्यतोऽवधारणमुद्देशो विशेषतो निर्धारणं समुद्देश इति निष्कर्षः । "तं गणिं अणापुच्छिय अणामंतिय" तं गणिनं यदर्थमतिरेकपात्रस्य ग्रहणं कृतवान् तम् अनापृच्छ्य पृच्छामकृत्वैव अनामन्त्र्य आमंत्रणमकृत्वैव, यमुद्दिश्य अतिरेकपात्रादिकं गृहीतवान् तं दृष्ट्वा निमन्त्रणं, यथा—इदं त्वदीयं पात्रादिकं स्वेच्छया गृहाण, अथ यदर्थमानीतवान् स प्रत्यक्षतो न मिलति तदा अन्यं पृच्छति कुत्र गतवान् स साधुरमुको वाचको गणी वा इति प्रच्छनम्, दृष्टे आमन्त्रणमदृष्टे पृच्छेति विवेकः । "अणामणस्स वियरइ" अन्योन्यस्मै वितरति यं समुद्दिश्याऽऽनीतवान् तमनापृच्छ्य अनामन्त्र्यान्यस्मै स्वेच्छया वितरति ददाति, तथा 'वियरंतं वा साइज्जइ' वितरन्तं ददतं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा भवन्ति ॥ सू० ५ ॥

**सूत्रम्**—जे भिक्खू अइरेगं पडिग्गहं खुड्डगस्स वा खुड्डियाए वा थेरस्स वा थेरियाए वा अहत्थच्छिन्नस्स अपायछिण्णस्स अनासाछिण्णस्स अकण्णछिण्णस्स अणोट्ठछिण्णस्स सक्कस्स देइ देंतं वा साइज्जइ ॥ सू० ६ ॥

**छाया**— यो भिक्षुरतिरेकप्रतिग्रहं क्षुल्लकाय वा क्षुल्लिकायै वा स्थविराय वा स्थविरायै वा अहस्तछिन्नाय अपादछिन्नाय अनासाछिन्नाय अकर्णछिन्नाय अनोष्ठछिन्नाय शक्ताय ददाति ददतं वा स्वदते ॥ सू० ६ ॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'अइरेगं पडिग्गहं' अतिरेकं प्रतिग्रहं प्रमाणादधिकं प्रतिग्रहं पात्रं यस्य पात्रस्य यावत् प्रमाणं शास्त्रे कथितं तदपेक्षया अधिकं पात्रमतिरेकमिति कथ्यते, तादृशपात्रम् **'खुड्डगस्स'** क्षुल्लकायातिक्रान्तबालवयस्काय बालकायेत्यर्थः, **'खुड्डियाए वा'** क्षुल्लिकायै वा बालिकायै **'थेरगस्स वा'** स्थविराय-वृद्धाय वा **'थेरियाए वा'** स्थविरायै वा वृद्धायै इत्यर्थः, कथम्भूतेभ्यः-क्षुल्लकादिभ्यः? तत्राह— **'अहत्थच्छिण्णस्स'** अहस्तच्छिन्नाय न हस्तौ छिन्नौ भग्नौ यस्य स अहस्तछिन्नः हस्तावयवसम्पन्नः, तस्मै अहस्तछिन्नाय तथा **'अपायच्छिण्णस्स'** अपादछिन्नाय न पादौ चरणौ छिन्नौ विभग्नौ यस्य स अपादछिन्नः पादावयवसम्पन्नः, तस्मै अपादच्छिन्नाय तथा **'अणासाच्छिण्णस्स'** अनासाछिन्नाय न छिन्ने कर्तिते नासिके यस्य स अनासाछिन्नः तस्मै अनासाछिन्नाय नासिकावयवसम्पन्नाय **'अकण्णछिण्णस्स'** अकर्णछिन्नाय-अच्छिन्नकर्णाय कर्णसंपन्नायेत्यर्थः **'अणोट्ठछिण्णस्स'** अनोष्ठछिन्नाय, न छिन्नौ ओष्ठौ पूर्वापरौ यस्य स तथाविधः तस्मै अनोष्ठछिन्नाय ओष्ठावयवसम्पन्नाय, एतावता सर्वावयवसम्पन्नत्वं प्रदर्शितम् अत एव **'सक्कस्स'** शक्ताय समर्थाय, तत्र शारीरिकमानसिकादिबलयुक्तः समर्थः तादृशाय शक्तिसम्पन्नाय **'देइ'** ददाति सर्वाङ्गोपाङ्गयुक्तबलवीर्यादिसम्पन्नाय यो भिक्षुरतिरेकपात्रं समर्पयति तथा **'देंतं वा साइज्जइ'** ददतं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति।

अत्राह भाष्यकारः—

**भाष्यम्**—बालस्स य वुड्ढस्स य, साहुस्स साहुणिस्स वा।
सक्कस्साणंगछिन्नस्स, देज्ज पत्ताइ दोसभा ॥

**छाया**—बालाय च वृद्धाय च साधवे साध्व्यै वा।
शक्तायाऽनङ्गछिन्नाय दद्यात् पात्रादि दोषभाक् ॥

**अवचूरिः**—बालाय बाल्यावस्थासम्पन्नाय, वृद्धाय स्थविराय वा साधवे तथा एतादृश्यै साध्व्यै वा, कीदृशाय? शक्ताय शक्तिसम्पन्नाय गमनागमनसमर्थाय तथा अनङ्गछिन्नाय

हस्तपादादिपरिपूर्णाङ्गाय साधवे साध्व्यै वा यदि कोपि मुनिः यत् पात्रादि वस्त्रपात्राद्युपकरणजातं सातिरेकं साधुकल्पादधिकं तत् दद्यात् स दोषभाग् भवति-आज्ञाभङ्गादिदोषान् प्राप्नोतीति भाव. ॥सू० ६॥

**सूत्रम्—जे भिक्खू अइरेगं पडिग्गहं खुड्डगस्स वा खुड्डियाए वा थेरगस्स वा थेरियाए वा हत्थछिण्णस्स पायच्छिण्णस्स नासाछिण्णस्स कण्णछिण्णस्स ओट्ठछिण्णस्स असक्कस्स न देइ न देंतं वा साइज्जइ ॥**

छाया– यो भिक्षुरतिरेकं प्रतिग्रहं क्षुल्लकाय वा क्षुल्लिकायै वा स्थविराय वा स्थविरायै वा हस्तछिन्नाय पादछिन्नाय नासाछिन्नाय कर्णछिन्नाय ओष्ठछिन्नाय अशक्ताय न ददाति न ददतं वा स्वदते ॥ सू० ७ ॥

चूर्णी—सूत्रोक्तहस्तछिन्नादिविशेषणविशिष्टेभ्य', साधुसाध्वीभ्यः अतिरेकं पात्र न ददाति न ददतमनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ७॥

**सूत्रम्—जे भिक्खू पडिग्गहं अणलं अथिरं अधुवं अधारणिज्जं धरेइ धरेंतं वा साइज्जइ ॥सू० ८॥**

छाया—यो भिक्षुः प्रतिग्रहमनलमस्थिरमध्रुवमधारणीयं धरति धरन्तं वा स्वदते ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य. कश्चिद् भिक्षु 'पडिग्गहं' प्रतिग्रहं पात्रम् 'अणल' अनलम्–अपर्याप्तम्, तत्र अल शब्द' पर्याप्त्यर्थक' न अलमनलम् अपर्याप्तम् असंपूर्णं खण्डितावयवमित्यर्थ 'अथिरं' अस्थिरम् अदृढम् 'अधुवं' अध्रुवम्, तत्र ध्रुव दीर्घकालभावि तथा च दीर्घकालभावि यत् न भवति तत् अध्रुवम् 'अधारणिज्जं' अधारणीयम् न धारयितुं योग्यं यत् तत अधारणीयम् अलक्षणसम्पन्नमित्यर्थ यादृश लक्षणं पात्रस्य कथितं तादृशलक्षण विहीन यत् पात्र तत अधारणीयमिति कथ्यते, एतादृशमनलमस्थिरमध्रुवमधारणीयपात्रम् यो भिक्षुः 'धरेइ' धरति, स्वसमीपे स्थापयति तथा 'धरेंतं वा साइज्जइ' धरन्तं वा स्वदते, यो हि अनलादिकपात्रस्य धारण करोति कारयति तस्यानुमोदनं वा करोति स प्रायश्चित्तभागी भवति ॥ सू० ८ ॥

**सूत्रम्—जे भिक्खू पडिग्गहं अलं थिरं धुवं धारणिज्जं न धरेइ न धरेंतं वा साइज्जइ ॥ सू० ९॥**

छाया—यो भिक्षु प्रतिग्रह अलं स्थिरं ध्रुवं धारणीयं न धरति न धरन्तं वा स्वदते ॥ सू० ९ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'पडिग्गहं' प्रतिग्रहं पात्रम् 'अलं' अलं पर्याप्तम् 'थिरं' स्थिरं दृढम् 'धुवं' ध्रुव चिरकालपर्यन्तमपि स्थायि 'धारणिज्जं' धारणीयं धर्तुं योग्यं पात्रस्य यत् लक्षणं प्रदर्शितम् तादृशलक्षणयुक्तम् 'न धरेइ' न धरति यत् पात्रं कार्यकरणसमर्थं दृढ चिरकालस्थायि सर्वलक्षणलक्षित न धरति न स्वकीयपार्श्वेऽवस्थापयति तथा 'न धरेंतं वा साइज्जइ' न धरन्तं वा स्वदते, यो हि भिक्षुः सर्वथा-लक्षणादिसम्पन्नमपि पात्रादिकं न धरति तस्यानुमोदनं करोति स प्रायश्चित्तभागी भवति ॥ सू० ९॥

सूत्रम्—जे भिक्खू वण्णमंतं पडिग्गाहं विवण्णं करेइ करेंतं वा साइज्जइ ॥ सू० १०॥

छाया—यो भिक्षुर्वर्णवन्तं प्रतिग्रहं विवर्णं करोति कुर्वन्त वा स्वदते ॥ सू० १०॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चित् भिक्षु 'वण्णमंतं पडिग्गाहं' वर्णवन्त प्रतिग्रह शोभायुक्तम् 'विवण्णं करेइ' विवर्णं करोति, तत्र कुत्सितो वर्णो नीलादिकः यस्य दर्शनेन मनसि अप्रीतिर्जायते तादृशेन कुत्सितवर्णेन युक्तं करोति 'करेंतं वा साइज्जइ' कुर्वन्त वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० १० ॥

सूत्रम्—जे भिक्खू विवण्णं पडिग्गहं वण्णमंतं करेइ करेंतं वा साइज्जइ ॥ सू० ११ ॥

छाया—यो भिक्षुर्विवर्णं प्रतिग्रहं वर्णवत् करोति कुर्वन्तं वा स्वदते ॥ सू० ११ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चित् भिक्षु. 'विवण्णं पडिग्गहं' विवर्णं प्रतिग्रहं पात्रम् विगतवर्णं क्षारचिक्कोष्णजलादिना विगतवर्णं प्रतिग्रह पात्रादिकं पुनरपि 'वण्णमंतं करेइ' वर्णवत् करोति शोभनवर्णयुक्तं करोति 'करेंतं वा साइज्जइ' कुर्वन्त वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० ११ ॥

सूत्रम्—जे भिक्खू नवए मे पडिग्गहे लद्धे त्ति कट्टु तेल्लेण वा घएण वा णवणीएण वा वसाए वा मक्खेज्ज वा भिलिंगेज्ज वा मक्खेंतं वा भिलिंगेंतं वा साइज्जइ ॥ सू० १२॥

छाया—यो भिक्षुर्नवो मया प्रतिग्रहो लब्ध इति कृत्वा तैलेन वा घृतेन वा नवनीतेन वा वसया वा म्रक्षयेत् वा अभ्यङ्गयेत् वा म्रक्षयन्तं वा अभ्यङ्गयन्तं वा स्वदते ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य· कश्चित् भिक्षु· 'नवए मे पडिग्गहे लद्धे' नवो मया प्रतिग्रहो लब्धः प्रतिग्रह· पात्रं लब्धम् 'त्ति कट्टु' इति कृत्वा लब्धस्य प्रति-

प्रहस्व सौन्दर्यप्रसाधनाय 'तेल्लेण वा' तैलेन वा-अतस्यादितैलेन 'घएण वा' घृतेन वा 'णवणीएण वा' नवनीतेन वा 'वसाए वा' वसया वा-चर्बीति लोकप्रसिद्धया तत् पात्रम् 'मक्खेज्जवा' म्रक्षयेत् वा एकवार लेपं कुर्यात् 'भिलिगेज्ज वा' अभ्यङ्गयेत् वा अनेकवार वा म्रक्षणं कुर्यात् कारयेत् वा तथा 'मक्खेत वा' म्रक्षयन्तं वा 'भिलिंगेंत वा' अभ्यङ्गयन्त वा 'साइज्जइ' स्वदते स प्रायश्चित्तभागी भवति ॥ सू० १२ ॥

एवम्-अनेन नूतनपात्रविषयकतैलाद्यालापकप्रकारेण लोध्रादिना १३, शीतोदकविकृतादिना १४, एवं बहुदैवसिकेन तैलादिना १५, लोध्रादिना १६, शीतोदकविकृतादिना १७, एवं तैलादित. शीतोदकविकृतादिपर्यन्तानि सर्वाणि षट् सूत्राणि, नूतनपात्रविषयाणि १७, तथा सुरभिगन्धपात्रस्य दुरभिगन्धकरणविषय १८, दुरभिगन्धस्य सुरभिगन्धकरणविषयमिति द्वे सूत्रे १९। सुरभिगन्धपात्रस्य तैलादिविषय २० लोध्रादिविषय २१, शीतोदकविकृतादिविषयं चेति त्रीणि सूत्राणि २२, एवं सुरभिगन्धपात्रस्य बहुदैवसिक-तैल-लोध्र-शीतोदकविकृतादिना त्रीणि सूत्राणि, एवं षट् सूत्राणि २५। अनेनैव प्रकारेण तैलादिना लोध्रादिना शीतोदकविकृतादिना, एव बहुदैवसिक-तैल-लोध्र-शीतोदकविकृतादिना दुरभिगन्धविषयाणि षडपि सूत्राणि बोध्यानि ३१। एतानि द्वादशसूत्रत आरभ्यैकत्रिंशत्सूत्रपर्यन्तानि विंशतिसूत्राणि यथायोगं परिभाव्य व्याख्येयानि सूत्रालापकाश्चेत्थम्—

"जे भिक्खू णवए मे पडिग्गहे लद्धेत्ति कट्टु लोद्धेण वा कक्केण वा चुण्णेण वा वण्णेण वा उल्लोलेज्ज वा उवट्टेज्ज वा उल्लोलंतं वा उव्वट्टंतं वा साइज्जइ ॥ सू० १३ ॥ जे भिक्खू णवए मे पडिग्गहे लद्धे-त्ति कट्टु सीओदगवियडेण वा उसिणोदगवियडेण वा उच्छोलेज्ज वा पधोवेज्ज वा उच्छोलंतं वा० ॥ सू० १४ ॥ जे भिक्खू णवए मे पडिग्गहे लद्धे-त्ति कट्टु बहुदेवसिएण तेल्लेण वा० ॥ सू० १५ ॥ बहुदेवसिएण लोद्धेण वा० ॥ सू० १६ ॥ बहुदेवसिएण सीओदग वियडेण वा० ॥ सू०१७ ॥ जे भिक्खू सुब्भिगंधे पडिग्गहे लद्धे-त्ति कट्टु दुब्भिगंधे करेइ ॥१८॥ जे भिक्खू दुब्भिगंधे पडिग्गहे लद्धे त्ति कट्टु सुब्भिगंधे करेइ ॥ सू० १९ ॥ जे भिक्खू सुब्भिगंधे पडिग्गहे लद्धे-त्ति कट्टु तेल्लेण वा० ॥ सू० २० ॥ लोद्धेण वा० ॥ सू० २१ ॥ सीओदगवियडेण वा० ॥ सू० २२ ॥ एवं बहुदेवसिएण तेल्लेण वा० ॥ सू० २३ ॥ बहुदेसिएण लोद्धेण वा० ॥ सू० २४ ॥ बहुदेवसिएण सीओदगवियडेण वा० ॥ सू० २५ ॥ जे भिक्खू दुब्भिगंधे पडिग्गहे लद्धे-त्ति कट्टु तेल्लेण वा० ॥ सू० २६ ॥ लोद्धेण वा० ॥ सू०२७ सीओदगवियडेण वा० ॥ सू० २८ ॥ एवम्-बहुदेवसिएण तेल्लेण वा० । सू० २९ ॥ बहुदेवसिएण लोद्धेण वा० ॥ सू० ३० ॥ बहुदेवसिएण सीओदगवियडेण वा० ॥ सू० ३१ ॥" इत्येवं सूत्रालापका बोध्याः ।

अत्राह भाष्यकार.—

भाष्यम् – घंसणे खालणे लेवकरणे पायगस्स हि ।
पावई बहुणो दोसा, भिक्खू एत्थ न संसओ ॥

छाया – घर्षणे क्षालने लेपकरणे पात्रकस्य हि ।
प्राप्नोति बहून् दोषान् भिक्षुरत्र न संशय ॥

**अवचूरिः** – नव मया पात्र लब्धमिति कृत्वा यो भिक्षु श्रमण श्रमणी वा घर्षणमेकवारमनेकवार वा करोति तथा नवीनपात्रस्य नवाकारमेव पात्रं सर्वथा तिष्ठतु इति बुद्धया तैलादिना घर्षणं मर्दनं करोति कारयति वा कुर्वन्तं वा अनुमोदते, तथा क्षालनं पात्रस्य सुगन्धिकरणाय दुरभिगन्धनिवृत्तये. नवस्य नवाकारमेव सर्वथा तिष्ठतु इति बुद्धया अचित्तशीतोष्णजलेन करोति परद्वारा वा कारयति तथा कुर्वन्तमनुमोदते, तथा लेपने नवप्राप्तस्य पात्रस्य. नवत्वदृढतायै सुरभिगन्धपात्रस्य सुरभिगन्धस्थापनाय दुर्गभगन्धपात्रस्य दुर्गन्धनिवृत्त्यर्थं लोध्रादिद्रव्येण लेपनं करोति कारयति तथा कुर्वन्तमनुमोदते । एवं बहुदैवसिकसूत्रेष्वपि, तैलघृतनवनीतादिना–सकृत् असकृद्वा मर्दनम्, अचित्तशीतोष्णजलेन प्रक्षालनं करोति कारयति कुर्वन्तमनुमोदते स भिक्षु श्रमण. श्रमणी वा बहून् आज्ञाभङ्गादिकान् आज्ञाभङ्गानवस्थामिथ्यात्वसंयमविराधनात्मविराधनारूपान् दोषान् प्राप्नोति, अत्रैतस्मिन् न कोपि संशय., एते दोषा भवन्त्येव तेषामिति भावः । इमे चान्येपि दोषा भवन्ति तथाहि–तैलादिना पात्रस्य घर्षणे कृते हस्ताद्यङ्गानामुपघातो भवति, तथा नवनीतादिषु विद्यमानजीवानामप्युपघातो भवति, तथा पात्रस्य दुर्गन्धनिवारणाय आतापस्थाने धूपनादिकरणे सम्पातिकजीवानां विराधनमपि जायते, तथा उत्पीडने च भूमिगता जीवा अपि विराधिता भवन्ति, यस्मात् तैलादिना घर्षणादिकरणे एते पूर्वोक्ता दोषा भवन्ति तस्मात्कारणात् श्रमण. श्रमणी वा अपरिकर्मितं यदृच्छया प्राप्तमेव पात्रादिकं धारयेत्, तथा तादृशस्यैवोपभोगमपि कुर्यात् . न तु कदाचिदपि सुगन्धितलब्धपात्रादीना सुगन्धिता दृढयितुं दुरभिसंप्राप्तपात्रस्थ दुर्गन्धस्यापनयनाय तैलादिना बहुदैवसिकतैलादिना मर्दनलेपनशीतोष्णान्यतराचित्तजलेन प्रक्षालनादिक स्वय न कुर्यात् न वा परद्वारा कारयेत् न वा तैलादिना मर्दनादिकं कुर्वन्तं श्रमणान्तरं कथमपि कदाचिदप्यनुमोदयेदिति, किन्तु शास्त्रसंमतपद्धतिमाश्रित्यैव संयमाराधनं कर्तव्यं कारयितव्यं कुर्वन्त वा अनुमोदनीयम् न तु कदाचिदपि स्वमनीषया किमपि तत्र न्यूनाधिकभाव. करणीयः, सर्वज्ञभाषितपरमसूक्ष्मविषये स्वमनीषया विचारस्यायोग्यत्वात् ॥ सू० ३१॥

**सूत्रम्**—जे भिक्खू अणंतरहियाए पुढवीए पडिग्गहं आयावेज्ज वा पयावेज्ज वा, आयावेंतं वा पयावेंतं वा साइज्जइ ॥ सू० ३२ ॥

छाया—यो भिक्षु अनन्तरहितायां पृथिव्यां प्रतिग्रहं आतापयेद् वा प्रतापयेद् वा, आतापयन्तं वा प्रतापयन्तं वा स्वदते ॥ सू० ३२ ॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चित् भिक्षुः श्रमणः श्रमणी वा **'अणंतरहियाए'** अनन्तरहितायाम् अनन्तरहिता नाम सचित्ता तस्यां सचित्तायाम् **'पुढवीए'** पृथिव्यां पूर्वोक्तरूपायां पृथिव्या उपरीत्यर्थः **'पडिग्गहं'** प्रतिग्रहं पात्रम् **'आयावेज्ज वा'** आतापयेद् वा एकवारम् **'पयावेज्ज वा'** प्रतापयेद् वा अनेकवारम् एवम्, **'आयावेत वा'** आतापयन्तं वा **'पयावेंतं वा'** प्रतापयन्तं वाऽन्यम् **'साइज्जइ'** स्वदतेऽनुमोदते स प्रायश्चित्तभाग् भवति ॥ ३२ ॥

एवं **'ससणिद्धाए पुढवीए'** त्रयस्त्रिंशत्तमसूत्रादारभ्य द्विचत्वारिंशत्तमसूत्रपर्यन्तदशसूत्राणां व्याख्या त्रयोदशोद्देशकोक्तद्वितीयसूत्रादारभ्यैकादशपर्यन्तसूत्रव्याख्यावदवसेया, विशेषस्त्वेतावानेव यत्—तत्र सचित्तपृथिव्यादौ स्थानशय्यानिषद्यानैषेधिकीनां प्रतिषेधः कृतः, अत्र तु प्रतिग्रहस्यातापनप्रतापनविषयः प्रतिषेधः प्रोक्त इति ॥ सू० ३३-४२ ॥

## सूत्रम्—जे भिक्खू पडिग्गहाओ पुढवीकायं नीहरेइ नीहरावेइ नीहरियं आहट्टु दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥४३॥ एवं आउकायं ॥सू० ४४॥ तेउकायं ॥ सू० ४५॥

छाया—यो भिक्षुः प्रतिग्रहात् पृथिवीकायं निर्हरति निर्हारयति निर्हृतं आहृत्य दीयमानं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० ४३ ॥ एवं अप्कायम् ॥ सू० ४४ ॥ तेजस्कायम् ॥ सू० ४५ ॥

**चूर्णिः**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चित् भिक्षुः गृहस्थगृहे पात्रग्रहणसमये यदि **'पडिग्गहाओ'** प्रतिग्रहात् पात्रात् **'पुढवीकायं'** सचित्तपृथिवीकायं लवणगैरिकादिकं यदि पतेत् तत् **'नीहरेइ'** निर्हरति निष्कासयति स्वयमेव तथा **'नीहरावेइ'** निर्हारयति अन्येन गृहस्थेन वा **'नीहरियं आहट्टु दिज्जमाणं'** निर्हृतं निष्कासितं सदपि आहृत्य अभिमुखमानीय दीयमानं पात्रम् **'पडिग्गाहेइ'** प्रतिगृह्णाति स्वीकरोति स्वीकारयति वा **'पडिग्गाहेंतं वा साइज्जइ'** प्रतिगृह्णन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ४३ ॥

**'एवं आउकायं तेउकायं'** इति, अनेनैव प्रकारेण अप्कायतेजस्काययोरपि निर्हरणविषयं सूत्रद्वयं व्याख्येयम्। अग्निकायनिर्हरणमेवं भवति पात्रे केनापि कारणेन अकस्माद्वा अग्निकणः पतितो भवेत् तं निष्कास्य ददाति इति ॥ ४४-४५ ॥

एवमेव कन्द-मूल-पत्र-पुष्प-फल-बीज-हरितविषयकाणि सप्त सूत्राणि ॥ सू० ५२॥ एवम् औषधिबीजविषयकं सूत्रम्, तत्र औषधिः शाल्याद्यन्नं तस्य बीजानीति कणान् निर्हरति, इत्यादि

सूत्रम् ॥ सू० ५३ ॥ एवं त्रसप्राणजातं कुन्थुपिपीलिकादिकं तद्विषयकमपि सूत्रं विज्ञेयं व्याख्येयं च ॥ सू० ५४॥

**सूत्रम्— भिक्खू पडिग्गहं कोरेइ कोरावेइ कोरियं आहट्टु-दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० ५५॥**

छाया—यो भिक्षुः प्रतिग्रहं कोरयति कोरावयति कोरितमाहृत्य दीयमानं प्रतिगृह्णाति प्रतिगृह्णन्त वा स्वदते ॥ सू० ५५ ॥

चूर्णिः—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चित् भिक्षुः श्रमणः श्रमणी वा 'पडिग्गहं' प्रतिग्रहं पात्रम् 'कोरेइ' कोरेइ इति देशीशब्दोऽयम् तदर्थस्तु सूक्ष्मच्छिद्रैश्चित्रयति अर्थात् यो भिक्षु. पात्रस्य मुखादिकं विच्छिरय स्वय सम्पादयति चित्रादिक च पात्रे स्वयं करोति 'कोरावेइ' कोरावयति चित्रयति अन्यद्वारा पात्रस्य मुखादिकं चित्रादिक च कारयति 'कोरियं आहट्टु दिज्जमाणं' कोरितमाहृत्य दीयमान चित्रितं पात्रं परद्वारा सम्मुखमागत्य दीयमानम् 'पडिग्गाहेइ' प्रतिगृह्णाति स्वीकरोति स्वीकारयति वा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदतेऽनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ५५॥

**सूत्रम्—जे भिक्खू णायगं वा अणायगं वा उवासगं वा अणुवासगं वा गामंतरंसि वा गामपहंतरंसि वा पडिग्गहं ओभासिय ओभासिय जायइ जायंतं वा साइज्जइ ॥ सू० ५६ ॥**

छाया—यो भिक्षुर्ज्ञातकं वा अज्ञातकं वा उपासकं वा अनुपासकं ग्रामान्तरे वा ग्रामपथान्तरे वा प्रतिग्रहमवभाष्यावभाष्य याचते याचमान वा स्वदते ॥ सू० ५६ ॥

चूर्णि—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'णायगं वा' ज्ञातकं वा स्वजनं वा तत्र स्वजन· पूर्वसंस्तुतः पश्चात्संस्तुतश्च, तत्र पूर्वसंस्तुतः पूर्वपरिचितो मातापितृभ्रातृप्रभृतिक, पश्चात्संस्तुत· श्वशुरश्वश्रूश्यालकादि. 'अणायगं वा' अज्ञातकम् अस्वजनं स्वजनभिन्नो वा पूर्वपरिचित· ग्रामवासी देशवासी वा तम् 'उवासगं वा' उपासकं जिनधर्मानुयायिनं श्रावकं श्राविकां वा 'अणुवासग वा' अनुपासकं श्रावकभिन्नं यं कमपि वा 'गामंतरंसि वा' ग्रामान्तरे वा-द्वयोर्ग्रामयोर्मध्यभागे 'गामपहंतरंसि वा' ग्रामपथान्तरे वा ग्रामस्य मार्गद्वयमध्ये 'ओभासिय ओभासिय' अवभाष्यावभाष्य उच्चैःशब्देन कथयित्वा कथयित्वा 'पडिग्गहं' प्रतिग्रहं पात्रादिकम् 'जायइ' याचते पात्रयाचनां करोति 'जायंतं वा साइज्जइ' याचमान वा स्वदते स प्रायश्चित्तभाग् भवति ।

अत्राह भाष्यकारः—

भाष्यम्—अणायगं णायगं वा, गामे मग्गेऽहवा जई ।
ओभास्स जायई पत्तं, आणाभंगाइ पावई ॥

छाया—अज्ञातकं ज्ञातकं वा ग्रामे मार्गेऽथवा यति ।
अवभाष्य याचते पात्रमाज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः यो यति श्रमण श्रमणी वा ग्राममध्ये ग्राममार्गे ग्राममध्यवर्तिमार्गे वा ग्रामद्वयमध्यवर्तिमार्गमध्ये इत्यर्थ अज्ञातकम् ज्ञातकं श्रावकमश्रावक वा अवभाष्य उच्चैः स्वरेण कथयित्वा कथयित्वा याचते स यति श्रमण श्रमणी वा आज्ञाभङ्गादिकान् आज्ञाभङ्गानवस्थामिथ्यात्वसयमविराधनात्मविराधनादोषान् प्राप्नुयात् तस्मात्कारणात श्रमण श्रमणी वा ग्रामस्य मार्गमध्ये अन्यत्र वा मार्गमध्ये स्वजनास्वजनादिकं श्रावकमश्रावक वा अवभाष्य पात्रादिक न याचेत न वा याचमान श्रमणान्तरं कथमपि कदाचिदप्यनुमोदयेत् इति ॥ सू० ५६॥

सूत्रम्—जे भिक्खू णायगं वा अणायगं वा उवासगं वा अणुवासगं वा परिसामज्झओ उट्ठवेत्ता पडिग्गहं ओभासिय ओभासिय जायइ जायंतं वा साइज्जइ ॥सू० ५७॥

छाया—यो भिक्षुर्ज्ञातकं वा अज्ञातकं वा उपासकं वा अनुपासकं वा परिषन्मध्यात् उत्थाप्य प्रतिग्रहमवभाष्यावभाष्य याचते याचमानं वा स्वदते ॥ सू० ५७ ॥

चूर्णिः—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चित् भिक्षु 'णायगं वा' ज्ञातकं वा 'अणायगं वा' अज्ञातक वा 'उवासगं वा' उपासक श्रावक वा 'अणुवासगं वा' अनुपासकं श्रावकभिन्न वा य कमपि व्यक्तिविशेषम् 'परिसामज्झओ उट्ठवेत्ता' परिषन्मध्यात् उत्थाप्य, तत्र परिषत् सभा, तन्मध्यात् उत्थाप्य 'पडिग्गहं' प्रतिग्रहं पात्रम् ओभासिय 'ओभासिय' अवभाष्यावभाष्य मिष्टमनोज्ञादिवचन वा कथयित्वा कथयित्वा 'जायइ' याचते 'जायंतं वा साइज्जइ' याचमानं वा स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह भाष्यकार.—

भाष्यम्—णायगाई सभामज्झा, उट्ठाविय जई जइ ।
जायई पत्तवत्थाइं, आणाभंगाइ पावई ॥

छाया—ज्ञातकादिकं सभामध्यादुत्थाप्य यतिर्यदि ।
याचते वस्त्रपात्रादीन् आज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः—यदि कदाचित् सभा परिषत् तन्मध्यात् उत्थाप्य ज्ञातकादिक स्वजनमस्वजन वा श्रवकमश्रावकं वा पात्रवस्त्रादीन् याचते प्रार्थयते तदा आज्ञाभङ्गादिकान् दोषान् प्राप्नुयात् तस्मात् तथा न कुर्यात् ; न वा तथाकुर्वन्तमनुमोदयेदिति । सभात उत्थाप्य स्वजनादिना वार्तालापकरणे-

ऽन्येपि दोषा भवन्ति तथाहि—सभामध्ये धर्मकथां श्रोतुमनेके ज्ञातका अज्ञातका वा श्रावका अश्रावका वा समागता भवन्ति तत्र तन्मध्यात् यं कमपि समुत्थाप्य पात्रादियाचनं करोति श्रमणः तदा तस्य तत्र कश्चित् शत्रुरपि धर्मकथां शृण्वन् आसीत्, तच्छत्रोर्मिन्ना अपि आसन्, तद्दिवसे तत्काले वा तच्छत्रो चतुष्पदमश्वादिकं कोपि चौर्येणाहरत् स्वयं वा विनष्टो जातः, तदीयस्वजनो वा उपद्रावित. केनापि भवेत् तदा शत्रोर्मनसि एवं शङ्का भविष्यति यद् चतुष्पदादिर्मम नष्टस्तद्दिवसे अमुकः श्रावकः सभामध्यादुत्थाय बहिर्गत इति मया दृष्ट प्रायस्तेनैवापहरणं कृतं भवेत्, एवप्रकारेण श्रावकोपरि श्रमणोपरि वा शङ्का करिष्यति, अथवा साधुरेवापहरण कृतवानित्यपि शङ्केत, रुष्टा वा ते संतापनादिकं कुर्युरिति तन्निष्पन्नं प्रायश्चित्तं श्रमणस्य भवेत् तस्मात्कारणात् श्रमण सभात स्वजनादिकमुत्थाप्य पात्रादियाचनां न कुर्यात् न वा कुर्वन्तमनुमोदेतेति ॥ सू० ५७ ॥

## सूत्रम्—जे भिक्खू पडिग्गहनीसाए उडुबद्धं वसइ, वसंतं वा साइज्जइ ॥ सू० ५८ ॥

छाया—यो भिक्षुः प्रतिग्रहनिश्रया ऋतुबद्धं वसति वसन्तं वा स्वदते ॥ सू० ५८॥

चूर्णी— जे 'भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चित् भिक्षु 'पडिग्गहनीसाए' प्रतिग्रहनिश्रया पात्रादिलाभेच्छया अन्यं मासकल्पयोग्यं क्षेत्र परित्यज्य अत्र क्षेत्रे पात्रादिकं लप्स्ये इति लोभेन यः श्रमण श्रमणी वा ऋतुबद्धे काले मासकल्पस्याप्रायोग्येपि ग्रामादौ 'वसइ' वसति निवासं करोति 'वसंतं वा साइज्जइ' वसन्त वा स्वदते स प्रायश्चित्तभाग् भवति ॥सू० ५८॥

## सूत्रम्—जे भिक्खू पडिग्गहनीसाए वासावासं वसइ वसंतं वा साइज्जइ ॥ सू० ५९ ॥

छाया—यो भिक्षुः प्रतिग्रहनिश्रया वर्षावासं वसति वसन्तं वा स्वदते ॥सू० ५९॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चित् भिक्षुः 'पडिग्गहनीसाए' प्रतिग्रहनिश्रया अर्थात् अमुकक्षेत्रे निवासकरणे प्रचुर पात्रादिक मे मिलिष्यतीति विचार्य योग्ये अयोग्ये वा क्षेत्रे 'वासावास' वर्षावास वर्षाकालनिवास चातुर्मास्यमित्यर्थ. 'वसइ' वसति निवासं करोति तथा 'वसंत वा साइज्जइ' वसन्त वा स्वदते, यो हि श्रमण· श्रमणी वा पात्रादिलोभेन वर्षाकालिकनिवासाय योग्येऽयोग्ये वा क्षेत्रे वर्षाकालिकनिवासं करोति तमनुमोदते स प्रायश्चित्तभाग् भवति ।

अत्राह भाष्यकारः—

भाष्यम्—उडुबद्धे मासं वा, चाउम्मासं तहेव य ।
पडिग्गहत्थं जे भिक्खू, वसइ दोसभा भवे ॥

छाया ऋतुबद्धे मासं वा चातुर्मासं तथैव च ।
प्रतिग्रहार्थं यो भिक्षुर्वसति दोषभाग् भवेत् ॥

अवचूरिः— यो भिक्षुः प्रतिग्रहाशया ऋतुबद्धे काले हेमन्तग्रीष्मादिसमये मासं मासकल्पं वसति निवासं करोति तथैव तेनैव प्रकारेण चतुर्मासं वसति निवासं करोति प्रतिग्रहाशया तदा तादृश निवासं कुर्वन् भिक्षुः दोषभाग् आज्ञाभङ्गादिदोषभाग् भवति ॥ सू० ५९॥

## सूत्रम्—तं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ॥

॥ णिसीहज्झयणे चउदसमो उद्देसो समत्तो ॥१४॥

छाया—तत्सेवमान आपद्यते चातुर्मासिकं परिहारस्थानमुद्घातिकम् ॥ सू० ६०॥

॥ निशीथाध्ययने चतुर्दश उद्देशकः समाप्तः ॥ १४ ॥

चूर्णी—'तं सेवमाणे' इत्यादि । 'तं सेवमाणे' तत् 'पडिग्गहं किणइ' इत्यारभ्य 'पडिग्गाहनीसाए वासावासं' इति पर्यन्तं स्थानं प्रतिसेवमानः प्रतिसेवनां कुर्वाणः श्रमणः श्रमणी वा 'आवज्जइ' आपद्यते प्राप्नोति 'चाउम्मासियं' चातुर्मासिकम् 'परिहारट्ठाणं' परिहारस्थानम् 'उग्घाइयं' उद्घातिकं लघुकम् लघुचातुर्मासिकं प्राप्नोति ॥ सू० ६०॥

इति श्री—विश्वविख्यात—जगद्वल्लभ—प्रसिद्धवाचक- पञ्चदशभाषाकलितललितकलापालापक—
प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक—वादिमानमर्दक - श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-
"जैनशास्त्राचार्य"- पदभूषित—कोल्हापुरराजगुरु—बालब्रह्मचारि—जैनाचार्य—जैन-
धर्मदिवाकर—पूज्यश्री—घासीलालव्रति—विरचितायां "निशीथसूत्रस्य"
चूर्णिभाष्यावचूरिरूपायां व्याख्यायाम् चतुर्दशोद्देशकः समाप्तः ॥१४॥



## ॥ पञ्चदशोद्देशकः ॥

मतश्चतुर्दशोद्देशकः, सम्प्रति अवसरप्राप्त. पञ्चदशोद्देशक प्रारभ्यते । तत्र पूर्वोक्तचतुर्दशोद्देशकेन सहास्य पञ्चदशोद्देशकस्य सम्बन्ध प्रदर्श्यते—चतुर्दशोद्देशकस्यान्तिमसूत्रे प्रोक्तम् साधुः—प्रतिग्रहनिश्रया वर्षावासं न वसेत्, इति, एवं प्रतिग्रहनिश्रया वसन्तं साधुं यदि कोऽन्यः साधुरेवं करणे प्रतिषेधयेत् तदा तं प्रति स क्रोधावेशेन परुष वदिष्यतीत्यत्र पञ्चदशोद्देशके परुषभाषाया निषेध करिष्यते, इति सम्बन्धेनाह भाष्यकार. 'ण मे णिरट्ठगो' इत्यादि ।

भाष्यम्—ण मे णिरट्ठगो वासो, वल्ली रूढफलाहुणा ।
एवं वयंतं समणं, अज्जो ! मेवं वयाहि भो ॥१॥

छाया—न मे निरर्थको वासो वल्ली रूढफलाऽधुना ।
एवं वदन्तं श्रमणं आर्य ! मैव वद भोः ॥१॥

अवचूरिः—कश्चित् श्रमणश्चतुर्मासकरणार्थं कुत्रचित् क्षेत्रे वर्षावासनिवासं कृतवान्, तत्र पात्रार्थं वसन् एका तुम्बिकालता पश्यन् एव वदति—अहो अत्र क्षेत्रे मम वासो न निरर्थको जात', किन्तु सफल एव, यस्मात्कारणात् एषा पुरतो दृश्यमाना तुम्बिकावल्ली समुत्पन्ना न केवलं समुत्पन्नैव किन्तु क्रमशो वृद्धिगता सती भित्त्यादौ आश्रये प्रसरति, पत्रादिकमपि अस्यां वल्ल्यां पर्याप्तं जातम्, न केवलं पत्राणामेवाऽऽधिक्यम् किन्तु पुष्पप्राचुर्यमपि जातम्, न केवलं पुष्पाणामेव प्राचुर्यम् अपि तु फलान्यपि अनेकानि जातानि, न केवलं फलान्येव सजातानि, किन्तु कतिपयफलानि पक्वानि सजातानि, अत परं तुम्बिकाया फलानि मे पात्राणि भविष्यन्ति यदर्थं ममात्र वासो जातस्तत्कार्यं मे विनैव परिश्रमं भविष्यति, अनुकूलं मदीयभाग्यम्, एवप्रकारेण हर्षातिरेकाद् वदन्तं श्रमणं दृष्ट्वा कोऽपि तत्समीपवर्ती श्रमण तं श्रमणं प्रति वदति—हे आर्य ! श्रमण ! मैवं त्वं वद, एवं वदतस्ते महान् कर्मबन्धो भविष्यति, तत. स श्रमण' प्रतिषेधेनारुष्टोऽसौ तं प्रति कठोरवचनं वदेत्, तादृशकठोरवचनस्य प्रतिषेधाय पञ्चदशोद्देशकसूत्रमिदमारभ्यते, अयमेव सम्बन्ध. पूर्वापरसूत्रयोर्भवति, तदनेन सम्बन्धेन आयातस्यास्य पञ्चदशोद्देशीयप्रथमसूत्रस्य व्याख्यानं प्रस्तूयते—'जे भिक्खू' इत्यादि ।

**सूत्रम्—जे भिक्खू भिक्खूणं आगाढं वयइ वयंतं वा साइज्जइ ॥सू०१॥**

छाया—यो भिक्षुर्भिक्षूणाम् आगाढं वदति वदन्त वा स्वदते ॥ सू० १ ॥

चूर्णी—'जे भिक्खू' इत्यादि । जे भिक्खू' य· कश्चिद् भिक्षुः 'भिक्खूणं' भिक्षूणां—प्रेरकभिक्षूणा 'आगाढं वयइ' आगाढं वदति—तत्र अत्यर्थं गाढम् आगाढम्—उच्चैर्वचनम् उच्चैराक्रोशव-

चनमित्यर्थः एवंभूतं वचनं भाषते, तथा 'वयंतं वा साइज्जइ' वदन्त वा श्रमणमाक्रोशवचनं स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति । एतत्सूत्रस्य विशेषतो व्याख्यानमत्रैव दशमोद्देशके द्रष्टव्यम्, एतावान् विशेष:--यत् दशमोद्देशके आचार्य पर्यायज्येष्ठं वा प्रति आक्रोशवचनस्य प्रतिषेध. कृत., अत्र तु भिक्षुकमात्रं प्रति आक्रोशवचनस्य निषेध क्रियते ॥ सू० १ ॥

**सूत्रम्—जे भिक्खू भिक्खूणं फरुसं वयइ वयंतं वा साइज्जइ ॥सू० २॥**

छाया—यो भिक्षुर्भिक्षूणां परुष वदति वदन्तं वा स्वदते ॥ सू० २ ॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु 'भिक्खूणं' भिक्षूणाम् 'फरुसं वयइ' परुषं वदति, तत्र परुष-कठोरं वाक्यं भाषते तथा 'वयंतं वा साइज्जइ' वदन्तम् कठोरवाक्य भाषमाणं स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २ ॥

**सूत्रम्—जे भिक्खू भिक्खूणं आगाढफरुसं वयइ वयंतं वा साइज्जइ ॥ सू० ३ ॥**

छाया—यो भिक्षुर्भिक्षणाम् आगाढपरुषं वदति वदन्त वा स्वदते ॥ सू० ३ ॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य· कश्चिद भिक्षुः 'भिक्खूण' भिक्षूणाम् 'आगाढफरुसं वयइ' आगाढपरुषं वदति, तत्र आगाढम्-आक्रोशवचन-मर्मोद्घाटन-पूर्वकमुच्चै· सक्रोध परुषं वाक्य वदति-आक्षेप करोति, तथा 'वयंतं वा साइज्जइ' वदन्तं वा स्वदते स प्रायश्चित्तभागी भवति । दशमोद्देशस्यादौ एव अस्य व्याख्यान कृतं तत एव द्रष्टव्यमिति ॥ सू० ३ ॥

**सूत्रम्—जे भिक्खू भिक्खूणं अण्णयरीए अच्चासायणाए अच्चासाएइ, अच्चासाएंतं वा साइज्जइ ॥ सू० ४ ॥**

छाया—यो भिक्षुर्भिक्षूणाम् अन्यतरया अत्याशातनया अत्याशातयति अत्याशातयन्तं वा स्वदते ॥ सू० ४ ॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चिद् भिक्षु· 'भिक्खू णं' भिक्षूणाम् 'अण्णयरीए' अन्यतरया-अनेकप्रकारकाशातनामध्याद् एकया कयाचित् 'अच्चासायणाए' अत्याशातनया 'अच्चासाएइ' अत्याशातयति-आशातनां करोति, तथा 'अच्चासाएंतं वा साइज्जइ' अत्याशातयन्तम्-आशातना कुर्वन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥

अत्राह भाष्यकारः---

**भाष्यम्**—आगाढं फरुसं वक्कं, दसमे खलु वन्नियं ।
त चेवेत्थवि णायव्वं, नवरं भिक्खुयं पइ ॥

छाया—आगाढं परुषं वाक्यं दशमे खलु वर्णितम् ।
तदेवात्रापि ज्ञातव्यं नवरं भिक्षुकं प्रति ॥

अवचूरिः—आगाढं परुष वाक्यम्, आगाढपरुषतदुभयाऽऽशातनादीनां स्वरूपम् यदेव दशमोद्देशके वर्णितम् तदेव अत्रापि ज्ञातव्यम् यत् पूर्वमुक्तं तदेव पुनरत्र प्रदर्शितम् किन्तु 'नवरं' इत्यादि, नवरम् एतावान् भेदः दशमपञ्चदशोद्देशकयोर्भवति यत्—दशमोद्देशके आचार्यपर्याय-ज्येष्ठं प्रति आगाढवचनादेः प्रयोगकरणनिषेधो दर्शितः, अत्र पञ्चदशोद्देशके तु भिक्षुकं—सामान्य-श्रमणं प्रति आगाढादीनां निषेधो दर्शितः, तादृशप्रयोगकरणे च प्रायश्चित्तादिकं कथितमि-त्यय भेदः ॥ सू० ४ ॥

सूत्रम्—जे भिक्खू सचित्तं अंबं भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ५॥

छाया—यो भिक्षुः सचित्तम् आम्रं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ५ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः 'सचित्त अंब' सचित्त-माम्रम् तत्र चित्तं—जीवः तेन जीवेन सह वर्तते इति सचित्तं—सजीवम् आम्रफलम् 'भुंजइ' भुङ्क्ते—अभ्यवहरति तथा 'भुंजंतं वा साइज्जइ' भुञ्जानं वा स्वदते—अनुमोदते स प्रायश्चित्त-भागी भवति ॥ सू० ५ ॥

सूत्रम्—जे भिक्खू सचित्तं अंबं विडंसइ विडंसंतं वा साइज्जइ ॥सू० ६॥

छाया—यो भिक्षुः सचित्तमाम्रं विदशति विदशन्तं वा स्वदते ॥सू० ६॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः 'सचित्तं अंबं' सचित्तं सजीवमाम्रम् 'विडंसइ' विदशति—चूषति भक्षयति वा 'विडंसंतं वा साइज्जइ' विदशन्तं वा स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ६॥

सूत्रम्—जे भिक्खू सचित्तं अंबं वा अंबपेसियं वा अंबभित्तं वा अंबसालगं वा अंबचोयगं वा भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ७॥

छाया—यो भिक्षुः सचित्तमाम्रं वा आम्रपेशिकां वा आम्रभित्तं वा आम्रसालकं वा आम्रचोयगं वा भुङ्क्ते भुञ्जानं वा स्वदते ॥सू०७॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः 'सचित्तं अंबं वा' सचित्तमाम्रं वा सजीवमाम्रफलमित्यर्थः 'अंबपेसियं वा' आम्रपेशिकां वा सचित्तामाम्रपेशीम्, तत्र पेशी दीर्घाकाराम्रफलस्यावयवलक्षणा तादृशीम् आम्रफलपेशीम्, 'अंबभित्तं वा' आम्रभित्तं वा तत्र भित्तम्-खण्डः आम्रफलस्यार्द्धभाग इत्यर्थः तत् 'अंबसालगं वा' आम्रसालकं वा, तत्र—बाह्या छल्ली सालमिति कथ्यते 'अंबचोयगं वा' आम्रचोयगं वा तत्र—चोयगम्-आन्तरत्वचा तत् 'भुंजइ' भुङ्क्ते स प्रायश्चित्तभागी भवति ॥ सू० ७॥

सूत्रम्—जे भिक्खू सचित्तं अंबं वा अंबपेसियं वा अंबभित्तं वा अंबसालगं वा अंबचोयगं वा विडंसइ विडंसंतं वा साइज्जइ॥ सू० ८॥

छाया—यो भिक्षुः सचित्तमाम्रं वा आम्रपेशिकां वा आम्रभित्तं वा आम्रसालकं वा आम्रचोयगं वा विदशति विदशन्तं वा स्वदते ॥ सू० ८॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'सचित्तं अंबं वा' सचित्तमाम्रं वा 'अंबपेसियं वा' आम्रपेशिकां वा 'अंबभित्तं वा' आम्रभित्तं वा 'अंबसालगं वा' आम्रसालकं वा 'अंबचोयगं वा' आम्रचोयगं वा 'विडसइ' विदशति चूषति तथा 'विडंसंतं वा साइज्जइ' विदशन्तं वा स्वदते--अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ८॥

सूत्रम्—जे भिक्खू सचित्तपइट्ठियं अंबं भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ९॥ जे भिक्खू सचित्तपइट्ठियं अंबं विडंसइ विडंसंतं वा साइज्जइ ॥ सू० १०॥

छाया यो भिक्षुः सचित्तप्रतिष्ठितमाम्रं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ९॥
यो भिक्षुः सचित्तप्रतिष्ठितमाम्रं विदशति विदशन्तं वा स्वदते ॥ सू० १०॥

चूर्णी 'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षुः 'सचित्तपइट्ठियं' सचित्तप्रतिष्ठितम् सचित्ते-सचित्तजलहरितकायाद्युपरि प्रतिष्ठित-विद्यमानम् आम्रं भुङ्क्ते. विदशति चूषति। शेषं सूत्रद्वयगतं सर्वं सुगमम् ॥ सू० ९-१० ॥

सूत्रम्—जे भिक्खू सचित्तपइट्ठियं अंबं वा अंबपेसियं वा अंबभित्तं वा अंबसालगं वा अंबचोयगं वा भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ११॥

छाया—यो भिक्षुः सचित्तप्रतिष्ठितमाम्रं वा आम्रपेशिकां वा आम्रभित्तं वा आम्रसालकं वा आम्रचोयगं वा भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ११॥

चूर्णी—'जे भिक्खू' इत्यादि। सचित्तप्रतिष्ठितम् सचित्ते-सचित्तजलाद्युपरि विद्यमानं तत् सचित्तप्रतिष्ठितम् शेषम् सुगमम् ॥ सू० ११ ॥

सूत्रम्—जे भिक्खू सचित्तपइट्ठियं अंबं वा अंबपेसियं वा अंबभित्तं वा अंबसालगं वा अंबचोयगं वा विडंसइ विडंसंतं वा साइज्जइ ॥ सू० १२॥

छाया—यो भिक्षुः सचित्तप्रतिष्ठितमाम्रं वा आम्रपेशिकां वा आम्रभित्तं वा आम्रसालकं वा आम्रचोयगं वा विदशति विदशन्तं वा स्वदते ॥ सू० १२॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमण, श्रमणी वा 'सचित्तपइट्ठियं' सचित्तप्रतिष्ठितम्, इतिविशेषणविशिष्टमाम्रादिकं विदशति-चूसति शेषं सुगमम् ।

अत्राह भाष्यकार—

सचित्तंबं तहा पेसिं, त सचित्तपइट्ठियं ।
जो भुंजेज्ज विडंसेज्ज, आणाभंगाइ पावइ ॥१॥

छाया—सचित्ताम्रं तथा पेशीं, तत्सचित्तप्रतिष्ठितम् ।
यो भुङ्क्ते विदशति, आज्ञाभङ्गादि प्राप्नोति ॥१॥

अवचूरिः—य. कश्चिद् भिक्षु—श्रमण' उपलक्षणात् श्रमणी वा स सचित्ताम्रम्—सचित्ताम्रफलम् तथा पेशीम्—आम्रचीरिकाम् उपलक्षणाद् आम्रभित्तं आम्रसालकम् आम्रचोयगं वा, आम्रफलस्य कोऽपि प्रकारो भवेत् त सचित्त यदि भुङ्क्ते विदशति वा तदा स श्रमणः आज्ञाभङ्गादिदोषान् प्राप्नोतीति ॥ सू० १२॥

**सूत्रम्—जे भिक्खू अण्णउत्थिएण वा गारत्थिएण वा अप्पणो पाए आमज्जावेज्ज वा पमज्जावेज्ज वा आमज्जावेंतं वा पमज्जावेंतं वा साइज्जइ ॥ सू० १३ ॥**

छाया—यो भिक्षुरन्ययूथिकेन वा गार्हस्थिकेन वा आत्मनः पादौ आमार्जयेद् वा प्रमार्जयेद् वा आमार्जयन्त वा प्रमार्जयन्तं वा स्वदते ॥ सू० १३ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु—श्रमणः श्रमणी वा 'अण्णउत्थिएण वा' अन्ययूथिकेन—अन्यमतानुयायिना तापसादिनेत्यर्थः 'गारत्थिएण वा' गार्हस्थिकेन गृहस्थेन श्रावकेण तद्भिन्नेन वा 'अप्पणो पाए' आत्मन. स्वकीय पादौ—चरणौ 'आमज्जावेज्ज वा' आमार्जयेद्वा—एकवारं वा मार्जनं कारयेद्वा 'पमज्जावेज्ज वा' प्रमार्जयेद्वा अनेकवारं वा प्रमार्जनं कारयेद्वा, तथा 'आमज्जावेंतं वा' आमार्जयन्त वा—एकवारं चरणप्रमार्जनं कारयन्तं वा 'पमज्जावेंतं वा' प्रमार्जयन्तं वा—प्रतिदिनमनेकवारं वा पादयोः प्रमार्जनं कारयन्तं श्रमणान्तरम् 'साइज्जइ' स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्ति ॥ सू १३ ॥

**सूत्रम्—एवं तइयउद्देसगमओ णेयव्वो जाव गामाणुगामं दूइज्जमाणे अण्णउत्थिएण वा गारत्थिएण वा अप्पणो सीसदुवारियं करावेइ करावेंतं वा साइज्जइ ॥ सू० १४—६८ ॥**

छाया — एवं तृतीयोद्देशगमको नेतव्यः यावत् ग्रामानुग्रामं द्रवन् अन्यतीर्थिकेन वा गार्हस्थिकेन वा आत्मनः शीर्षद्वारिकां कारयति कारयन्तं वा स्वदते ॥ सू० १४-६८ ॥

चूर्णी — 'एवं' इत्यादि। 'एवं तइयउद्देसगगमओ णेयव्वो' एव तृतीयोद्देशगमको नेतव्य., एवम् अनेनैव प्रकारेण तृतीयोद्देशगमकः–अस्यैव ततीयोद्देशकगतो गमः सर्वोऽपि नेतव्य.–ज्ञातव्यः 'जाव' यावत, अत्र यावत्पदेन 'जे भिक्खू अप्पणो पाए सवाहेज्ज वा' इत्यादिसप्तदशसूत्रादारभ्य 'जे भिक्खू गामाणुगामं दूइज्जमाणे०' इत्येकसप्ततितमसूत्रपर्यन्तं पञ्चपञ्चाशत्संख्यकसूत्राणि तदर्थश्चेति सर्वं तत्रत एव द्रष्टव्यम्। अत्र तु (१४) चतुर्दशसूत्रादारभ्य अष्टषष्ठि (६८) तमसूत्रपर्यन्तं तृतीयोद्देशगमवद् व्याख्येयम्। केवलं भेद एतावनेव यत्–तत्र ततीयोद्देशके प्रमार्जनादीनां स्वय करणविषयको निषेध कृत., अत्र तु अन्यतीर्थिकादिभि प्रमार्जनादीनां कारणाऽनुमोदनविषयको निषेधो वर्तते इति॥

अत्राह भाष्यकारः—

पायप्पमज्जणारब्भ, अंते सीसदुवारियं ।
गिहिहिं अन्नतित्थीहिं, करावे दोसभा भवे ॥१॥

छाया—पादप्रमार्जनादारभ्य, अन्ते शीर्षदौवारिकाम् ।
गृहिभिः अन्यतीर्थिभिः कारयेत् दोषभाग् भवेत् ॥१॥

अवचूरिः— यो यति. पादप्रमार्जनादारभ्य अन्ते शीर्षदौवारिकाम् गृहिभि.–गृहस्थैः, अन्यतीर्थिकै तापसादिभि. कारयति, तथा कारयन्त श्रमणान्तरम् अनुमोदते स प्रायश्चित्तभाग् भवति, तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्ति गृहस्थादिकृतसेवाशुश्रूषादिकार्यस्य भगवता निषिद्धत्वात्।

अथ परतीर्थिकादिभि. पादप्रमार्जनादिकं कारयत को दोष. ? इति चेदत्राह–ते अन्यतीर्थिका गृहस्था वा यदि प्रमार्जनादिकं करिष्यन्ति तदा ते पादप्रमार्जनादिकरणानन्तरम् पश्चात् हस्तधावनादि कर्म करिष्यन्ति प्रस्वेदमलादिक साधो शरीरेऽवस्थितं दृष्ट्वा घ्रात्वा अशुचय इमे इति कृत्वा अवर्णवादं वदिष्यन्ति, अयतनया वा पादप्रमार्जनादिक कुर्वन्त सांपातिकान् जीवान् हन्यु., अथवा बहुना द्रव्येणायतनया प्रक्षालयन्त उच्छोलणादोषं कुर्यु', भूमिष्ठान् जीवान् विराधयेयुरिति तस्मात् कारणात् तापसादिभिर्गृहस्थैश्च पादप्रमार्जनादिक न कारयेदिति॥ सू० ६८॥

**सूत्रम्—जे भिक्खू आगंतागारेसु वा आरामागारेसु वा गाहावइकुलेसु वा परियावसहेसु वा उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥ सू० ६९ ॥**

छाया यो भिक्षु आगन्त्रागारेषु वा आरामागारेषु वा गाथापतिकुलेषु वा पर्यावसथेषु वा उच्चारप्रस्रवणं परिष्ठापयति परिष्ठापयन्तं वा स्वदते ॥ सू० ६९ ॥

चूर्णी—'जे भिक्खू' इत्यादि। जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'आगंतागारेसु वा' आगन्त्रागारेषु, यत्र स्थाने आगन्तारो गन्तारश्च विश्रामाय निवसन्ति स. आगन्त्रागारः—धर्मशालेति लोकप्रसिद्ध तेषु—आगन्तुकनिवासस्थानेषु तथा—'आरामागारेसु वा' आरामागारेषु, तत्राराम.—उपवनम् तत्र विद्यमानः अगारो गृहं यत्र क्रीडार्थमागताः पुरुषा. विश्रामार्थं निवसन्ति तादृशस्थानेषु 'गाहावइकुलेसु वा' गाथापतिकुलेषु, तत्र गाथापतिर्गृहस्थः, तस्य कुलेषु गृहेषु गृहस्वामिना ग्रामान्तरगमनेन शून्यप्रायेषु गृहेष्वित्यर्थ 'परियावसहेसु वा' पर्यावसथेषु वा तापसानां निवासस्थानेषु इत्यर्थं, एतेषु स्थानेषु 'उच्चारपासवण' उच्चारप्रस्रवण मूत्रपुरीषादिकम् उपलक्षणत्वात् ष्ठीवनादिकमपि गृह्यते 'परिट्ठवेइ' परिष्ठापयति तत्र व्युत्सृजतीत्यर्थ तथा 'परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्तं वा मूत्रपुरीषादीनां व्युत्सर्जनं कुर्वन्तं श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्ति, तथा ये एतादृशस्थानेषु उच्चारप्रस्रवणादिक व्युत्सृजन्ति तेषामयशो भवति—'एते साधवः अशुचिसमाचारा योगाचार—बाह्या मलमूत्रपरायणाः दुर्वृत्ता भोगोपभोगस्थानानि अपवित्राणि कुर्वन्तो विहरन्ती,—त्येवमादययशो भवति, लोकापवादाच्च न कोऽपि दीक्षां ग्रहीष्यतीत्यतः प्रवचनस्य हानिर्हीलना च भवति एव कोट्टपालादिना निवारिता ग्रामादौ प्रवेशमपि नो लभेरन् ॥ सू० ६९ ॥

## सूत्रम्—जे भिक्खू उज्जाणंसि वा उज्जाणगिहंसि वा उज्जाणसालंसि वा निज्जाणंसि वा निज्जाणगिहंसि वा निज्जाणसालंसि वा उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥ सू० ७० ॥

छाया—यो भिक्षुरुद्याने वा उद्यानगृहे वा उद्यानशालायां वा निर्याणे वा निर्याणगृहे वा निर्याणशालायां वा उच्चारप्रस्रवणं परिष्ठापयति परिष्ठापयन्तं वा स्वदते ॥ सू० ७० ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु श्रमणः श्रमणी वा 'उज्जाणंसि वा' उद्याने वा, तत्रोद्यानं नाम एकजातीयवृक्षाणां समुदायलक्षणम्, तादृशे उद्याने 'उज्जाणगिहंसि वा' उद्यानगृहे वा उद्यानस्थिते गृहे विश्रामस्थाने 'उज्जाणसालंसि वा' उद्यानशालायाम् उद्याने स्थिता या शाला तस्याम् 'निज्जाणंसि वा' निर्याणे वा लोकाना गमनागमनमार्गे 'निज्जाणगिहंसि वा' निर्याणगृहे वा गमनागमनमार्गस्थितगृहे वा 'निज्जाणसालंसि वा' निर्याणशालाया वा तादृशेषु स्थानेषु श्रमणः श्रमणी वा 'उच्चारपासवण' उच्चारप्रस्रवणं 'परिट्ठवेइ' परिष्ठापयति मूत्रपुरीषयोर्व्युत्सर्जनं करोति 'परिट्ठवेत वा' परिष्ठापयन्तं वा 'साइज्जइ' स्वदते स प्रायश्चित्तभागी भवति ॥ सू० ७० ॥

**सूत्रम्**—जे भिक्खू अट्टंसि वा अट्टालियंसि वा चरियंसि वा पागारंसि वा दारंसि वा गोपुरंसि वा उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥ सू० ७१ ॥

छाया—यो भिक्षुः अट्टे वा अट्टालिकायां वा चरिकायां वा प्राकारे वा द्वारे वा गोपुरे वा उच्चारप्रस्रवणं परिष्ठापयति परिष्ठापयन्तं वा स्वदते ॥ सू० ७१ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमण श्रमणी वा 'अट्टंसि वा' अट्टे वा–कोट इति लोकप्रसिद्धे 'अट्टालियंसि वा' अट्टालिकायाम् अट्टोपरिविद्यमानस्थाने इत्यर्थः 'चरियंसि वा' चरिकाया वा अट्टालिकाया उपरितन स्थानं चरिका–तादृशस्थानविशेषे इत्यर्थः, 'पागारंसि वा' प्राकारे वा 'दारंसि वा' द्वारे वा गृहस्थद्वारभागे इत्यर्थ, 'गोपुरंसि वा' गोपुरे वा–द्वाराग्रद्वारे, एतेषु स्थानेषु 'उच्चारपासवणं' उच्चारप्रस्रवणम् 'परिट्ठवेइ' प्रतिष्ठापयति, तथा 'परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्तं वा स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ७१ ॥

**सूत्रम्**—जे भिक्खू दगंसि वा दगमग्गंसि वा दगपहंसि वा दगतीरंसि वा दगट्ठाणंसि वा उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥ सू० ७२ ॥

छाया—यो भिक्षुरुदके वा उदकमार्गे वा उदकपथे वा उदकतीरे वा उदकस्थाने वा उच्चारप्रस्रवण परिष्ठापयति परिष्ठापयन्त वा स्वदते ॥ सू० ७२ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु य कश्चित् श्रमण श्रमणी वा 'दगंसि वा' उदके–जले जलाशये सरित्तडागादौ जलाशयमर्यादितस्थाने इत्यर्थ 'दगमग्गंसि वा' उदकमार्गे–जल मार्गे येन मार्गेण जलं प्रवहति यद्वोदकमिश्रितमार्गे, 'दगपहंसि वा' उदकपथे वा जलानयनमार्गे वा 'दगतीरंसि वा' उदकतीर–जलतटे जलासन्नवर्त्तिस्थाने इत्यर्थः 'दगट्ठाणंसि वा' उदकस्थाने वा यत्र स्थाने उदकं सगृह्य सस्थाप्यते तादृशस्थाने, एतेषु–उपर्युक्तजल स्थानेषु 'उच्चारपासवण' उच्चारप्रस्रवणम् 'परिट्ठवेइ' परिष्ठापयति–व्युत्सृजति तथा 'परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्तं वा स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ७२ ॥

**सूत्रम्**—जे भिक्खू सुन्नगिहंसि वा सुन्नसालंसि वा भिन्नगिहंसि वा भिन्नसालंसि वा कूडागारंसि वा कोट्ठागारंसि वा उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥ सू० ७३ ॥

छाया— यो भिक्षुः शून्यगृहे वा शून्यशालायां वा भिन्नगृहे वा भिन्नशालायां वा कूटागारे वा कोष्ठागारे वा उच्चारप्रस्रवणं परिष्ठापयति परिष्ठापयन्तं वा स्वदते ॥७३॥

चूर्णिः—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'सुन्नगिहंसि वा' शून्यगृहे वा यत्र गृहे न कोऽपि वसति तादृशगृहे 'सुन्नसालंसि वा' शून्यशालायाम् यत्र शालायां न कोऽपि वसति तस्याम् 'भिन्नगिहंसि वा' भिन्नगृहे वा–भग्नगृहे इत्यर्थ. 'भिन्नसालंसि वा' भिन्नशालायां वा भग्नशालायाम् 'कूडागारंसि वा' कूटागारे वा–कूटाकारगृहे 'कोट्ठागारंसि वा' कोष्ठागारे वा या दशस्थाने धान्यादिकं स्थापयति तस्य कोष्ठागार इति नाम भवति तस्मिन् कोष्ठागारगृहे कोष्ठागारशालाया च 'उच्चारपासवणं परिट्ठवेइ' उच्चारप्रस्रवणं परिष्ठापयति 'परिट्ठवेतं वा साइज्जइ' परिष्ठापयन्तं वा स्वदते–अनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू०७३॥

सूत्रम्—जे भिक्खू तणगिहंसि वा तणसालंसि वा तुसगिहंसि वा तुससालंसि वा भुसगिहंसि वा भुससालंसि वा उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥ सू० ७४ ॥

छाया—यो भिक्षुः तृणगृहे वा तृणशालायां वा तुषगृहे वा तुषशालायां वा भुसगृहे वा भुसशालायां वा उच्चारप्रस्रवणं परिष्ठापयति परिष्ठापयन्त वा स्वदते ॥७४॥

चूर्णी—'जे भिक्खू इत्यादि। 'जे भिक्खू य कश्चिद्भिक्षु श्रमणः श्रमणी वा 'तणगिहंसि वा' तृणगृहे वा–तृणस्थापनगृहे अथवा तृणनिर्मिते गृहे 'तणसालंसि वा' तृणशालायां वा तृणभृतशालायाम् 'तुसगिहंसि वा' तुषगृहे 'तुससालंसि वा' तुषशालाया वा 'भुसगिहंसि वा' भुसगृहे वा, तत्र गोधूमादीना स्तम्ब, तस्य चूर्णीकृतोऽवयव 'भूसा' इतिलोकप्रसिद्धः तस्य संस्थापनस्थान भुसगृहमिति तस्मिन् भुसगृहे 'भुससालंसि वा' भुसशालायं वा, एतादृशस्थानेषु यो भिक्षुः 'उच्चारपासवणं' उच्चारप्रस्रवणम् 'परिट्ठवेइ' परिष्ठापयति 'परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्तं वा स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ७४ ॥

सूत्रम्—जे भिक्खू जाणगिहंसि वा जाणसालंसि वा जुग्गगिहंसि वा जुग्गसालंसि वा उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥ सू० ७५ ॥

छाया—यो भिक्षुर्यानगृहे वा यानशालायां वा युग्यगृहे वा युग्यशालायां वा उच्चारप्र वणं परिष्ठापयति परिष्ठापयन्तं वा स्वदते ॥ सू० ७५ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य· कश्चिद् भिक्षु· 'जाणगिहंसि वा' यानगृहे–रथादिस्थापनगृहे वा 'जाणसालंसि वा' यानशालाया वा 'जुग्गगिहंसि ' युग्यगृहे वा,

तत्र युग्यं–शिबिकादिकम्, तस्य स्थापनार्थं गृहं तस्मिन्, 'जुग्गसालंसि वा युग्यशालायां वा 'उच्चारपासवणं' उच्चारप्रस्रवणम्, 'परिट्ठवेइ' परिष्ठापयति तथा 'परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्त वा स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ७५॥

**सूत्रम्—जे भिक्खू पणियगिहंसि वा पणियसालंसि वा कुवियगिहंसि वा कुवियसालंसि वा उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥सू० ७६॥**

छाया—यो भिक्षुः पण्यगृहे वा पण्यशालाया वा कुप्यगृहे वा कुप्यशालायां वा उच्चारप्रस्रवण परिष्ठापयति परिष्ठापयन्त वा स्वदते ॥ सू० ७६॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद्भिक्षुः श्रमण श्रमणी वा 'पणियगिहंसि वा' पण्यगृहे वा–क्रयविक्रयस्थाने वा पणियसालंसि वा' पण्यशालाया वा 'कुवियगिहंसि वा' कुप्यगृहे वा, तत्र कुप्यं सुवर्णरजतभिन्नं लोष्टादिपात्रं तस्य गृहे 'कुवियसालंसि वा' कुप्यशालाया वा 'उच्चारपासवण' उच्चारप्रस्रवणम्, 'परिट्ठवेइ' परिष्ठपयति तथा 'परिट्ठवेंतं वा साइज्जइ परिष्ठापयन्तं–श्रमणान्तरम् स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥सू० ७६॥

**सूत्रम्—जे भिक्खू गोणगिहंसि वा गोणसालंसि वा महाकुलंसि वा महागिहंसि वा उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥सू० ७७॥**

छाया—यो भिक्षुर्गोणगृहे वा गोणशालाया वा महाकुले वा महागृहे वा उच्चारप्रस्रवणं परिष्ठापयति, परिष्ठापयन्तं वा स्वदते ॥ सू०७७॥

चूर्णी—जे भिक्खू' इत्यादि। 'जे भिक्खू' य' कश्चिद्भिक्षु श्रमण, श्रमणी वा 'गोणगिहंसि वा' गोणगृहे वा, तत्र गोणगृहं गवां गृहम् यत्र गावो बध्यन्ते गोशालेति प्रसिद्धम् तस्मिन् 'गोणसालंसि वा' गोशालाया वा 'महाकुलंसि वा' महाकुले वा–इभ्यादिकुले महागिहंसि वा' महागृहे वा बृहत्परिवारयुक्ते बृहदाकारयुक्ते वा गृहे 'उच्चारपासवणं' उच्चारप्रस्रवणम् 'परिट्ठवेइ' परिष्ठापयति परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्त वा स्वदते -अनुमोदते स प्रायश्चित्तभागी भवति।

अत्राह भाष्यकार:—

आगंतुगाइठाणेसु, उच्चारं पस्सवं तहा।
परिट्ठवेइ जो भिक्खू, आणाभंगाइ पावई ॥

छाया—आगन्तुकादिस्थानेषु उच्चारं प्रस्रवं तथा।
परिष्ठापयति यो भिक्षुराज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः—आगन्तुकादिस्थानेषु आगन्त्रागारेषु इत्यारभ्य 'महागिहंसि' एतत्सूत्रपर्यन्त-कथितस्थानेषु उच्चारप्रस्रवणं यो यतिः परिष्ठपयति परिष्ठापयन्तं वा अनुमोदते स भिक्षुः आज्ञा-भङ्गादिकं दोषजातं प्राप्नोति, तथा--महदयशोऽपि जायते 'अशुच्याचारा एते साधवो हि शुचीनि भोगोपभोगस्थानानि अशुचीनि कुर्वाणा विहरन्ति, ततश्च लोकापवादेन प्रवचनहानिरपि स्यात्, तस्मात् आगन्तुकागारादिषु उच्चारप्रस्रवणयोः परिष्ठापनं न कुर्यात् न वा कारयेत् न वा कुर्वन्तमनुमोदयेदिति ॥ सू० ७७ ॥

सूत्रम्—जे भिक्खू अण्णउत्थियस्स वा गारत्थियस्स वा असणं वा पाणं वा खाइमं वा साइमं वा देइ देंतं वा साइज्जइ ॥ सू० ७८॥

छाया—यो भिक्षुः अन्ययूथिकाय वा गृहस्थाय वा अशनं वा पानं वा खाद्यं वा स्वाद्यं वा ददाति ददत वा स्वदते ॥सू० ७८॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु' श्रमण. श्रमणी वा 'अण्णउत्थियस्स' अन्यूथिकाय तापसाय वा 'गारत्थियस्स वा' गृहस्थाय वा अशनादिकं ददाति ददत वा स्वदते स प्रायश्चित्तभागी भवतीति ॥सू० ७८॥

सूत्रम्—जे भिक्खू अण्णउत्थियस्स वा गारत्थियस्स वा वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं वा देइ देंतं वा साइज्जइ ॥

छाया—यो भिक्षुरन्ययूथिकाय वा गार्हस्थिकाय वा वस्त्रं वा प्रतिग्रहं वा कम्बलं वा पादप्रोञ्छनं वा ददाति ददतं वा स्वदते ॥सू० ७९॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु. श्रमणः श्रमणी वा 'अण्ण-उत्थियस्सा वा' अन्ययूथिकाय वा तापसपरिव्राजकायेत्यर्थ 'गारत्थियस्स वा' गार्हस्थिकाय गृहस्थाय वा 'वत्थं वा' वस्त्रं वा-चोलपट्टकमुत्तरीयवस्त्रादिकं अन्यदपि वस्त्रजातं वा 'पडिग्गहं वा' प्रतिग्रहं पात्रमलाबुकं मृत्तिकापात्रं वा 'कंबलं वा' कम्बलमूर्णावस्त्रादिकं वा 'पायपुंछणं वा' पादप्रोञ्छनं रजोहरण वा 'देइ' ददाति 'देंत वा साइज्जइ' ददतम् वस्त्रपात्रादिकं प्रयच्छन्तं वा स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ७९॥

सूत्रम्—जे भिक्खू पासत्थस्स असणं वा पाणं वा खाइमं वा साइमं वा देइ देंतं वा साइज्जइ ॥ सू० ८० ॥

छाया—यो भिक्षुः पार्श्वस्थाय अशनं वा पानं वा खाद्यं वा स्वाद्यं वा ददाति ददत वा स्वदते ॥ सू० ८०॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षुः श्रमणो वा श्रमणी वा 'पासत्थस्स' पार्श्वस्थाय-पार्श्वे संयमस्य समीपे तिष्ठतीति पार्श्वस्थः न तु संयमस्थ, तस्मै 'असणं वा पाणं वा खाइमं वा साइमं वा' अशनं वा पानं वा खाद्यं वा स्वाद्यं वा 'देइ' ददाति 'देतं वा' ददतं वा 'साइज्जइ' स्वदते स प्रायश्चित्तभागी भवति ॥सू० ८०॥ एवमेव पार्श्वस्थाय अशनादिकं 'पडिच्छइ' प्रतीच्छति तत्पार्श्वात् गृह्णाति ॥सू० ८१॥ एवं पार्श्वस्थाय 'वत्थं वा' वस्त्रं वा चोलपट्टादिकम् 'पडिग्गहं वा' प्रतिग्रहं वा पात्रं वा 'कंबलं वा' कम्बलं वा ऊर्णामयं, 'पायपुंछणं वा' पादप्रोञ्छनं वा पादप्रमार्जनवस्त्रखण्डं वा ददाति० ॥सू० ८२॥ एवं प्रतीच्छति गृह्णाति ॥ सू० ८३॥ एवं अशनादेर्दानग्रहणरूपं सूत्रद्वयम्, तथा वस्त्रादेर्दानग्रहणरूपं च सूत्रद्वयमिति सूत्रचतुष्टयम् अवसन्नविषयकम् ॥सू० ८७॥ कुशीलविषयकम् ॥ सू० ९१॥ यथाच्छन्दविषयकम् ॥सू० ९५॥ संसक्तविषयकम् ॥ सू० ९९॥ एवं नैत्यिकविषयकमपि सूत्रचतुष्टयम् ॥ सू० १०३॥ एतानि चतुर्विंशतिसूत्राणि त्रयोदशोद्देशकोक्तसूत्रव्याख्यानवद् व्याख्येयानि, विशेषस्त्वेतावानेव यत्-तत्र वन्दन-प्रशंसनविषयाणि सूत्राणि सन्ति, अत्र तु अशनादीनां वस्त्रादीनां च दान-ग्रहणविषयाणि वाच्यानीति ॥

अत्राह भाष्यकारः—

> पासत्थाओ समारब्भ, णितियंतस्स साहुणो।
> देंतो जो पडिगिण्हंतोऽसणाई दोसभा भवे ॥

छाया—पार्श्वस्थात् समारभ्य नैत्यिकान्ताय साधवे।

> ददन् य प्रतिगृह्णन् अशनादि दोषभाग् भवेत् ॥

अवचूरिः—यो भिक्षुः श्रमणः श्रमणी वा पार्श्वस्थात् समारभ्य नैत्यकान्ताय साधवे पार्श्वस्थावसन्न-कुशील-यथाछन्द-संसक्त-नैत्यिकेभ्य इत्यर्थः योऽशनादिकम्-अशनपानादिकं ददन् प्रतिगृह्णन् वा, तथा पार्श्वस्थादिभ्योऽशनादिकं ददतः स्वीकुर्वतश्चानुमोदकः स यति दोषभाग् भवेत् ॥ सू० १०३॥

**सूत्रम्—जे भिक्खू जायणावत्थं वा निमंतणावत्थं वा अजाणिय अपुच्छिय अगवेसिय पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ। से य वत्थे चउण्हमण्णयरे सिया तंजहा—णिच्चनिवसणिए १ मज्जणिए २ छणूसविए ३ रायदुवारिए ४ ॥ सू० १०४ ॥**

छाया—यो भिक्षुर्याचनावस्त्रं वा निमन्त्रणावस्त्रं वा अज्ञात्वा अपृष्ट्वा अगवेषयित्वा प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते। तच्च वस्त्रं चतुर्णामन्यतमं स्यात् तद्यथा—नित्यनिवसनिकम् १ मज्जनिकम् २ क्षणोत्सविकम् ३ राजदौवारिकम् ४ ॥ सू० १०४ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चित् भिक्षुः श्रमणः श्रमणी वा 'जायणावत्थं वा' याचनावस्त्रं वा यद् याचनेन प्राप्यते तत् तथा 'निमंतणावत्थं वा' निमन्त्रणावस्त्रं वा यत् निमन्त्रणापूर्वकं प्राप्यते तत्, एतद् द्विविधमपि वस्त्रं भिक्षु 'अजाणिय' अज्ञात्वा कुत्रत आनीतम्, इत्यादि वस्त्रोत्पत्तिकारणम् अज्ञात्वा, तथा—'अपुच्छिय' अपृष्ट्वा—तद्विषये पृच्छामकृत्वा कस्येदम, कथं वेदं वस्त्रमासीत्, इत्यादिक्रमेण पृच्छामकृत्वा, 'अगवेसिय' अगवेषयित्वा मदर्थमेवेदं वस्त्रमनेनानीतम् अन्यार्थं वाऽऽनीतम्, कया बुद्धया मह्यं ददातीत्यादिक्रमेण गवेषणामकृत्वैव याचनावस्त्रनिमन्त्रणावस्त्रमिति द्विविधमपि वस्त्र साधु 'पडिग्गाहेइ' प्रतिगृह्णाति—स्वीकरोति 'पडिग्गाहेंत वा साइज्जइ' प्रतिगृह्णन्तं वा अज्ञात्वा अपृष्ट्वा अगवेषयित्वा याचनानिमन्त्रणावस्त्रं प्रतिगृह्णन्तं श्रमणान्तरं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति । 'से य वत्थे' तच्च द्विविधमपि वस्त्रम् 'चउण्हमण्णयरे सिया' चतुर्णामन्यतम स्यात् वक्ष्यमाणानां चतुर्णां वस्त्राणां मध्ये अन्यतमम् एकं स्यात्, 'तं जहा' तथथा—'णिच्चणिवसणिए १, मज्जणिए २, छणूसविए ३, रायदुवारिए ४, तत्र 'णिच्चणिवसणिए' नित्यनिवसनिकम्—यत् नित्यं परिधीयते तत् १, 'मज्जणिए' मज्जनिकं—यत् स्नानावसरे परिधीयते तत् २, 'छणूसविए' क्षणोत्सविकम्—यत् विवाहाद्युत्सवे परिधीयते तत् ३, 'रायदुवारिए' राजदौवारिकम्—यत् राजद्वारे सभादौ वा गमनसमये परिधीयते तत् ४. एवं चतुर्विधं वस्त्र भवति, एष्वन्यतमं याचनावस्त्र निमन्त्रणावस्त्रं च अज्ञानाऽपृच्छनाऽगवेषणापूर्वकं यो भिक्षु प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते स आज्ञाभङ्गादिदोषभाग् भवतीति ॥ सू० १०४ ॥

## सूत्रम्—जे भिक्खू विभूसावडियाए अप्पणो पाए आमज्जेज्ज वा पमज्जेज्ज वा आमज्जंतं वा पमज्जंतं वा साइज्जइ ॥ सू० १०५ ॥

छाया—यो भिक्षुर्विभूषाप्रत्ययेन आत्मनः पादौ आमार्जयेद्वा, प्रमार्जयेद्वा आमार्जयन्तं वा प्रमार्जयन्तं वा स्वदते ॥ सू० १०५ ॥

चूर्णी---'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चिद् भिक्षु 'विभूसावडियाए, विभूषाप्रत्ययेन–विभूषानिमित्तेन सुकुमालतादिसंपादनाबुद्धयेत्यर्थं, 'अप्पणो पाए' आत्मन. स्वस्य पादौ चरणौ 'आमज्जेज्ज वा' आमार्जयेद्वा—तत्रामार्जनं धूल्यादीनाम् पृथक्करणम्, तत् कुर्याद्वा तथा- 'पमज्जेज्ज वा' प्रमार्जयेद्वा प्रतिदिनमनेकवारं चरणयो प्रमार्जनं कुर्यात् कारयेद्वा । तथा—'आमज्जंतं वा' आमार्जयन्त वा—एकवारमामार्जनं कुर्वन्तं कारयन्तं वा 'पमज्जंतं वा' प्रमार्जयन्तं वा—प्रतिदिनमनेकवारं प्रमार्जनं कुर्वन्तं कारयन्तं वा श्रमणान्तरम् 'साइज्जइ' स्वदते—अनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० १०५ ॥

**सूत्रम्—एवं तइयउद्देसगमओ जाव–जे भिक्खू गामाणुगामं दूइज्जमाणे विभूसावडियाए अप्पणो सीसदुवारियं करेइ करेंतं वा साइज्जइ ॥सू० १०६–१६०॥**

छाया—एवं तृतीयोद्देशगमको यावद् यो भिक्षु ग्रामानुग्रामं द्रवन् विभूषाप्रत्ययेन आत्मनः शीर्षदौवारिकं करोति, कुर्वन्तं वा स्वदते ॥ सू० १०६–१६०॥

चूर्णी—'एवं तइय उद्देसगमओ' इत्यादि । एवम्–अनेनैव प्रकारेण 'तइयउद्देसगमओ' तृतीयोद्देशगमक.–तृतीयोद्देशकगतषट्पञ्चाशत्सूत्रात्मकसन्दर्भकथितानि पादामार्जनसूत्रात् षोडशरूपादारभ्य 'जाव' यावत् 'जे भिक्खू गामाणुगामं' इत्येकसप्ततिसूत्रपर्यन्तसूत्राणि अग्रे सम्प्राह्याणि, तत्रत्यान्तिमसूत्रमेव पठनीयम्, तथाहि–'जे भिक्खू' यो भिक्षु श्रमण· श्रमणी वा 'गामाणुगामं' ग्रामानुग्रामम् एकस्माद् ग्रामाद् अनुपदं द्वितीय ग्रामम् 'दूइज्जमाणे' द्रवन् विहरन् 'विभूसावडियाए' विभूषाप्रत्ययेन विभूषानिमित्तं शोभार्थं तत्सपादनबुद्धये यर्थ 'अप्पणो' आत्मन स्वस्य उपरि 'सीसदुवारियं' शीर्षदौवारिकां शीर्षावरणं छत्राकारेण शीर्षस्थगनम् 'करेइ करेंतं वा साइज्जइ' करोति कुर्वन्तं वा स्वदते अनुमोदते स दोषभाग् भवतीति । एषा व्याख्याऽपि विभूषाप्रत्ययपदं संयोज्य तत्रैव द्रष्टव्या । विशेष केवलमयम् -यत् तत्र पादादीनां सामान्यतया प्रमार्जनादिकं कथितम्, अत्र तु विभूषानिमित्त प्रमार्जनादिकं वक्तव्यम् ॥ सू०१०६–१६०।

**सूत्रम्—जे भिक्खू विभूसावडियाए वत्थं वा पडिग्गहं वा कंबलं वा पायपुच्छणं वा अण्णयरं वा उवगरणजायं धरेइ धरंतं वा साइज्जइ ॥**

छाया—यो भिक्षुः विभूषाप्रत्ययेन वस्त्रं वा प्रतिग्रहं वा कम्बलं वा पादप्रोञ्छनं वा अन्यतमं वा उपकरणजातं धरति धरन्तं वा स्वदते ॥ सू० १६१ ॥

चूर्णी - 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यो भिक्षु श्रमण. श्रमणी वा 'विभूसावडियाए' विभूषाप्रत्ययेन–विभूषानिमित्तेन सौन्दर्यमाश्रित्य शोभार्थमित्यर्थ, 'वत्थं वा' वस्त्र वा 'पडिग्गहं वा' प्रतिग्रहं–पात्रं वा 'कंबलं वा' कम्बलमूर्णावस्त्रं वा 'पायपुच्छणं वा' पादप्रोञ्छनं वा–पादरज·शोधकं वस्त्रखण्डं रजोहरण वा 'अण्णयरं वा उवगरणजायं' एतदतिरिक्तं यत्किञ्चिदन्यतममुपकरणजातम् 'धरेइ धरंतं वा साइज्जइ' धरति–गृह्णाति धरन्तं वा स्वदते वस्त्रपात्रादिकमिदं सुन्दरमिदमसुन्दरमिति कृत्वा स्वशोभावृद्धिबुद्ध्या सुन्दरं सुन्दरवस्त्रपात्रादिकं धरति धरन्तं वाऽन्यमुनिमनुमोदते स प्रायश्चित्तभागी भवतीति ॥ सू० १६१ ॥

**सूत्रम्—जे भिक्खू विभूसावडियाए वत्थं वा जाव पायपुंछणं वा अण्णयरं वा उवगरणजायं धोवेइ धोवंतं वा साइज्जइ ॥सू० १६२॥**

छाया- यो भिक्षुर्विभूषाप्रत्ययेन वस्त्रं वा यावत् पादप्रोञ्छनकं वा अन्यतमं वा उपकरणजातं धावति धावन्तं वा स्वदते ॥ सू० १६२ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः-श्रमणः श्रमणी वा वस्त्रादिकमन्यतमं वा उपकरणजातम् 'विभूसावडियाए' विभूषाप्रत्ययेन शोभानिमित्तं धावति-प्रक्षालयति, धावन्तमन्यमुनिं वा स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १६२ ॥

किं प्रायश्चित्तं प्राप्नोतीत्याह-'तं सेवमाणे' इत्यादि ।

सूत्रम्—तं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ॥सू० १६३॥

॥ णिसीहज्झयणे पणरसमो उद्देसो समत्तो ॥ १५ ॥

छाया—तत्सेवमान आपद्यते चातुर्मासिकं परिहारस्थानम् उद्घातिकम् ॥सू०१६३॥

॥ निशीथाध्ययने पञ्चदशोद्देशकः समाप्तः ॥ १५ ॥

चूर्णी—'तं सेवमाणे' इत्यादि । 'तं' तत् उद्देशकादित आरभ्य शोभार्थवस्त्रधावनपर्यन्तपापस्थानमध्यात् यत् किमपि एकमनेकं वा पापस्थानम् 'सेवमाणे' सेवमानः-प्रतिसेवनां कुर्वन् श्रमणः श्रमणी वा 'आवज्जइ' आपद्यते प्राप्नोति 'चाउम्मासियं' चातुर्मासिकम् 'परिहारट्ठाणं' परिहारस्थानम् प्रायश्चित्तम् 'उग्घाइयं' उद्घातिकम्-लघुचातुर्मासिकं प्रायश्चित्तं तस्य भवतीति ॥ सू० १६३ ॥

इति श्री-विश्वविख्यात-जगद्वल्लभ-प्रसिद्धवाचक-पञ्चदशभाषाकलितललितकलापालापक-प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक-वादिमानमर्दक-श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-"जैनशास्त्राचार्य"-पदभूषित-कोल्हापुरराजगुरु-बालब्रह्मचारि-जैनाचार्य-जैनधर्मदिवाकर-पूज्यश्री-घासीलालव्रति-विरचितायां "निशीथसूत्रस्य" चूर्णिभाष्यावचूरिरूपायां व्याख्यायाम् पञ्चदशोद्देशकः समाप्तः ॥१५॥



## ॥ षोडशोद्देशकः ॥

व्याख्यातः पञ्चदशोद्देशकः, साम्प्रतमवसरप्राप्तः षोडशोद्देशको व्याख्यायते, तत्र षोडशोद्देशकादिसूत्रस्य पञ्चदशोद्देशकान्तिमसूत्रेण सह क सम्बन्ध इति चेत् अत्राह भाष्यकार —

पुव्वंतमि विभूसाए, पडिसेहो य वन्निओ ।
चरित्ते दोसभावाओ, एत्थ सेज्जा णिसिज्झइ ॥

छाया—पूर्वान्ते विभूषायाः प्रतिषेधश्च वर्णितः ।
चारित्रे हि दोषभावादत्र शय्या निषिद्ध्यते ॥

अवचूरिः-पूर्वान्ते-पूर्वस्य-एतदपेक्षया पूर्वस्य प्राक्कथितस्य पञ्चदशोद्देशकस्यान्ते-चरमसूत्रे विभूषानिमित्त-शोभार्थं पादादिप्रमार्जनादीनाम् तथा विभूषार्थं च उज्ज्वलोपधिधारणस्य प्रतिषेध. वर्णितः कथितः । कथ विभूषादीनां प्रतिषेध· कृतस्तत्राह—'चरित्ते' इत्यादि, चारित्रे दोषभावात् दोषोत्पादकत्वात् उज्ज्वलोपधिधारणं शरीरविभूषादिकं च साक्षात् परम्परया वा चारित्रस्य विराधनकारणं तस्मात् कारणात् तस्य प्रतिषेध· कृतः, तत्सम्बन्धादत्र षोडशोद्देशकेऽपि सागारिकशय्याया सागारिकवसने· प्रतिषेध एव क्रियते सागारिकशय्याया अपि सयमविराधकत्वात् इति सयमविराधकत्वस्य उभयत्रापि समानत्वेन अयमेव सम्बन्ध पूर्वापरसूत्रयो ।

पूर्वस्मिन् उद्देशके लघुचातुर्मासिकं प्रायश्चित्तं कथितम्, अत्रापि तदेव कथयिष्यते इति । तदनेन सम्बन्धेन आयातस्यास्य षोडशोद्देशकस्येदमादिसूत्रम्—

### सूत्रम्—जे भिक्खू सागारियसेज्जं अणुप्पविसइ अणुप्पविसंतं वा साइज्जइ ॥ सू० १ ॥

छाया— यो भिक्षुः सागारिकशय्यामनुप्रविशति अनुप्रविशन्तं वा स्वदते ॥ सू०१ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमण. श्रमणी वा **'सागारियसेज्ज'** सागारिकशय्याम्. तत्र सागारिकः गृहस्थः तस्य शय्या वसतिरिति सागारिकशय्या, शेते यस्यां सा शय्या—वसतिर्निवासस्थानम् यत्रावस्थानेन मैथुनभाव उद्भवति सा, सागारिकेत्येषा सामयिकी सज्ञा तेन सागारिकशय्येति दम्पत्योः शयनस्थानमित्यर्थः एतादृशं स्थान यो भिक्षु· श्रमण श्रमणी वा **'अणुप्पविसइ'** अनुप्रविशति ओदनादिग्रहणार्थं प्रवेशं करोति कारयति वा तथा—अणुप्पविसत वा साइज्जइ' अनुप्रविशन्तं वा स्त्रीपुरुषयोः शयनस्थाने प्रवेशं कुर्वन्त श्रमणान्तरं स्वदते—अनुमोदते स दोषभागी भवति, एतादृशस्थाने शृङ्गारसामग्रीबाहुल्येन मनोविकृते· सभवादिति ॥ सू० १ ॥

अत्राह भाष्यकारः—

सेज्जा दुविहा एत्थ य, दव्वे भावे तहा मुणेयव्वा ।
जं सट्ठाणं दव्वे विसरिसरूवं तु भावम्मि ॥

छाया—शय्या द्विविधा अत्र च, द्रव्ये भावे तथा ज्ञातव्या ।
यत् स्वस्थानं द्रव्ये विसदृशरूपं तु भावे ॥

**अवचूरिः**—शय्या—सागारिकशय्या दम्पत्योर्निवासरूपा, सा अत्र च द्विविधा-द्विप्रकारिका द्रव्ये तथा भावे द्रव्यभावभेदात् ज्ञातव्या, सागारिक द्विविधम्, तत्र यत् स्वस्थान स्वसदृशरूपं तत् द्रव्ये-द्रव्यत, यत् विसदृशरूपं स्वसादृश्यभिन्न तद भावे भावतो भवति । तत्र स्वसादृश्ये सागारिके मनोविकारा-संभवाद् द्रव्यत्वम्, विसदृशरूपे सागारिके मनोविकारबाहुल्याद् भावत्वमिति विवेकः । तथाहिद्रव्यभावसागारिकं रूपे आभरणविधौ वस्त्रालङ्कारभोजनगन्धेषु तथा आतोद्यनृत्यनाट्यगीत-शयनादिद्रव्येषु च भवति, तत्र रूपं नाम यत् काष्ठचित्रलेप्यकर्मणि पुरुषरूप कृतं तत्, अथवा जीवरहित पुरुषशरीर तत् श्रमणानां कृते पुरुषरूपं स्वस्थानत्वात् द्रव्यसागारिकम् । एतादृश-मेव पुरुषरूपं विसदृशत्वात् श्रमणीना भावसागारिकं भवति । एवमेतेष्वेव काष्ठकर्मादिषु यत्र स्त्रीणां शरीरं तत् श्रमणीनां कृते द्रव्यसागारिकं साधूना कृते तदेव शरीरं भावसागारिकम् । एवमाभरणं पुरुषोपभोग्य तत् पुरुषाणां द्रव्यसागारिकं स्त्रीणा कृते भावसागारिकम्, तथा—स्त्रीणामुपभोग्यं यत् आभरणादिक तत्स्त्रीणा कृते द्रव्यसागारिक, पुरुषाणां कृते भावसागारिकम् । एवं वस्त्रालंकारा-दिकं चतुःप्रकारकम् तत्पुरुषयोग्यं पुरुषाणा द्रव्यसागारिकं स्त्रीणां भावसागारिकम् । यत्पुन-र्वस्त्रालङ्कारादिक स्त्रीणां योग्य तत् स्त्रीणा द्रव्यसागारिकं पुरुषाणा कृते तदेव भावसागारिकम् । एवं भोजनम्, अशनपानखाद्यस्वाद्यभेदेन चतुर्विधम्, तदपि पुरुषोपभोगयोग्यं पुरुषाणा द्रव्यसागारिकं, स्त्रीणा कृते भावसागारिकम्, यत् पुनः स्त्रीणामुपभोगयोग्यम् अशनादिकं तत्स्त्रीणां कृते द्रव्यसागा-रिकं तदेव पुरुषाणां कृते भावसागारिकम् । एवं गन्धेऽपि, तत्र गन्धः—कोष्ठपुटकादिः, तत्र यो गन्ध पुरुषोपभोगयोग्यः स श्रमणानां द्रव्यसागारिकम्, स एव गन्ध. श्रमणीनां भावसागारिकम्, यश्च गन्धः स्त्रीणामुपभोगयोग्य. स स्त्रीणा द्रव्यसागारिकं, श्रमणानां स एव भावसागारिकम् । एवमातोद्ये, तत्रातोद्यं चतुर्विधम्, ततम् १, विततम् २, घनम् ३, शुषिर च ४, तत्र यत् आतोद्यं पुरुषसाध्यं पुरुषयोग्य तत् श्रमणानां द्रव्यसागारिकं, श्रमणीनां भावसागा-रिकम्, यत् पुनरातोद्यं स्त्रीसाध्यं स्त्रीयोग्यम् तत् श्रमणीना द्रव्यसागारिकं श्रमणानां भावसागा-रिकम् । एवं नृत्येऽपि, तत्र नृत्यं चतुर्विधम्—अञ्चितम् १, रिभितम् २, आरभटम् ३, भसोलं च ४, तत्र यत् नृत्यं पुरुषसंपादनीयं तत् श्रमणाना द्रव्यसागारिकं श्रमणीना भावसागारिकम्, यत् पुनर्नृत्यं स्त्रीभिः सम्पादनीयम् तत् श्रमणीनां द्रव्यसागारिकं श्रमणानां भावसागारिकम्, इति ।

एवं नाटयेऽपि, तत्र नृत्यनाटकयोरयं भेदः—यत् गीतरहितं तत् नृत्यं तत्र केवलं गात्रसञ्चालनमेव, नाटकं तु गीतसमन्वितम्, यत्र गीतमपि गायति गात्रसञ्चालनमपि करोति इति, तत्र नाटकेऽपि स्त्रीपुरुषयोर्विभागेन द्रव्यभावभेदो ज्ञातव्य इति। एवं गीतेऽपि, तत्र गीतं-स्वरसाम्येन गानं, तच्चतुर्विधं भवति, तन्त्रीसमम् १, तालसमम् २, ग्रहसमम् ३, लयसमं च ४, तत्र यत् गीतं पुरुषैर्गातुं योग्यं तत् श्रमणानां द्रव्यसागारिक श्रमणीना तदेव भावसागारिकम्, यत् पुनः स्त्रीभिर्गातुं योग्यं तत् श्रमणीना द्रव्यसागारिकं श्रमणाना भावसागारिकम्। एवं शयनीयेऽपि, तत्र शयनीयं पर्यङ्काद्यनेकप्रकारकम्, तत्र यत् शयनीयं पुरुषैरधिष्ठातु योग्य तत् श्रमणानां द्रव्यसागारिकं तदेव शयनीयं श्रमणीनां भावसागाकिरम्, यत्पुनः स्त्रीभिरधिष्ठातुं योग्यं तत् शयनीयं श्रमणीनां द्रव्यसागारिकं श्रमणाना तु भावसागारिकम्। इत्यादिभेदभिन्नां सागारिकशय्या य कश्चिद्भिक्षुरनुप्रविशति स दोषभागी भवतीति ॥ सू० १ ॥

## सूत्रम्—जे भिक्खू सोदगं सेज्जं अणुप्पविसइ अणुप्पविसंतं वा साइज्जइ ॥ सू० २ ॥

छाया—यो भिक्षुः सोदका शय्यामनुप्रविशति अनुप्रविशन्त वा स्वदते ॥ सू० २ ॥

**चूर्णिः**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य. कश्चिद्भिक्षु श्रमण श्रमणी वा 'सोदगं सेज्जं' सोदकां शय्याम् सचित्तजलसहितां जलस्थानरूपा सागारिकवसतिं गृहस्थाना जलस्थान प्रपादिकम् यत्रोदकं विद्यते तादृशस्थानं यस्य वा समीपे उदक विद्यते तादृश स्थानं सोदकशय्येति पदेन कथ्यते इति तादृशीं सोदका वसतिं य श्रमण श्रमणी वा 'अणुप्पविसइ' अनुप्रविशति तत्र प्रवेशं करोति, कारयति वा 'अणुप्पविसंतं वा साइज्जइ' अनुप्रविशन्त वा सोदकशय्यायां वासं कुर्वन्तं श्रमणान्तर स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २ ॥

## सूत्रम्—जे भिक्खू सागणियं सेज्जं अणुप्पविसइ अणुप्पविसंतं वा साइज्जइ ॥ सू० ३ ॥

छाया—यो भिक्षु साग्निकां शय्यामनुप्रविशति अनुप्रविशन्तं वा स्वदते ॥ सू० ३ ॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य. कश्चिद् भिक्षु श्रमण श्रमणी वा 'सागणियं सेज्जं' साग्निकां शय्याम्, तत्र अग्निना सहिता-संयुक्ता अग्निसमीपस्था वा शय्या वसतिः-स्थानं सा साग्निकशय्या तां साग्निकशय्यां पाकस्थानं महानसादिकम्, कुम्भकारस्य भाण्डपचनस्थानं वा यत्राग्निर्भवेत् तत्र, अथवा अग्निसमीपवर्तिस्थानं वा 'अणुप्पविसइ' अनुप्रविशति अग्निशालादिषु प्रवेशं करोति कारयति वा तथा 'अणुप्पविसंतं वा साइज्जइ' अनुप्रविशन्तं वा श्रमणान्तरं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥

अत्राह भाष्यकारः—

सोदगागणियं सेज्जं, खणिगं सव्वकालियं ।
पविसे तत्थ जो भिक्खू, आणाभंगाइ पावइ ॥१॥

छाया—सोदकाग्निकां शय्यां, क्षणिकां सर्वकालिकाम् ।
प्रविशेत् तत्र यो भिक्षु, आज्ञाभङ्गादि प्राप्नोति ॥१॥

अवचूरिः—'सोदगागणियं' सोदकाग्निकाम्–सोदकां साग्निकां वा उदकसहिताम् अग्निसहिता वा 'सेज्जं' शय्याम्, सा द्विविधा–क्षणिका–अल्पकालभाविनी, सर्वकालिका–सर्वकालभाविनी जलाशयरूपा इष्टिकापाकादिरूपा च, तां द्विविधामपि शय्याम्–वसतिं प्रविशेत् यो भिक्षु तिष्ठेत् स आज्ञाभङ्गादिदोषान् प्राप्नोतीति ॥ सू० ३ ॥

**सूत्रम्—जे भिक्खू सचित्तं उच्छुं भुंजइ भुजंतं वा साइज्जइ ॥ सू० ४॥**

छाया—यो भिक्षुः सचित्तमिक्षुं भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ४ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'सचित्तं उच्छुं' सचित्तमिक्षुम 'भुजइ' भुङ्क्ते तथा 'भुंजंतं वा साइज्जइ' भुञ्जानं वा स्वदते–सचित्तेक्षुदण्डस्योपभोग कुर्वाणं श्रमणान्तरं स्वदते अनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० ४॥

**सूत्रम्—एवं पण्णरसमे उद्देसे अंबस्स जहा गमो सो चेव इहंपि णेयव्वो ॥ सू० ५–९॥**

छाया—एवं पञ्चदशे उद्देशे आम्रस्य यथा गमः स एव इहापि ज्ञातव्य ॥सू०५-९॥

चूर्णी—एवं–अनेनैव प्रकारेण यथा पञ्चदशोद्देशके सचित्ताम्रफलभक्षणे गमः कथितः स एव गमो निरवशेषोऽत्रापि ज्ञातव्यः केवलाम्रफलस्थाने सचित्तमिक्षुमितिपदं निवेशनीयमिति । नवरम् 'अंतरुच्छुयं' इति अन्तरिक्षुकम्–इक्षोरन्तर्भागव्यवस्थितमवयवविशेषम् । शेष सूत्रपञ्चकं पञ्चदशोद्देशकगताम्रसूत्रवद् व्याख्येयम् ॥ सू० ५-९ ॥

**सूत्रम्—जे भिक्खू आरण्णगाणं वणवयाणं अडविजत्तासंपट्ठियाणं असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० १० ॥**

छाया—यो भिक्षुरारण्यगानां वनव्रजानाम् अटवीयात्रासंप्रस्थितानाम् अशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्णाति, प्रतिगृह्णन्तं वा स्वदते ॥ सू० १० ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः 'आरण्णगाणं' आरण्यगाणाम्, अरण्यम्–एकजातीयवृक्षसमूहात्मकं तदेव आरण्यम् तत्र गच्छन्तीति आरण्यगाः, तेषामारण्यगा-

नाम्—अरण्यगामिनाम् 'वणवयाणं' वनव्रजानाम्, तत्र वन प्रति, व्रजन्ति—वने गच्छन्ति ये ते वनव्रजाः, तेषां वनगामिनाम् आजीविकार्थम् अरण्ये वने वा गच्छतामित्यर्थ, 'अडविजत्तासंपट्ठियाणं' अटवीयात्रासंप्रस्थितानाम्—वनयात्रार्थं निर्गतानाम् , तत्र वनवृक्षाकुलं निर्जनं भयङ्करं वनमटवी कथ्यते, तत्सम्बन्धिनी यात्रा—गमनरूपा तदर्थं संप्रस्थिताना काष्ठादिहरणार्थं निर्गतानां तथा वनोपजीविनां काष्ठहारकाणा संबन्धि यो भिक्षु 'असणं वा' अशनं वा—'पाणं वा' पानं वा 'खाइमं वा' खाद्य वा 'साइमं वा' स्वाद्यं वा 'पडिग्गाहेइ' प्रतिगृह्णाति—स्वीकरोति स्वीकारयति वा तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्त वा श्रमणान्तरम् स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्ति यतो यो वन गच्छति स तु पारमितमेवाशनादिक स्वस्याभोक्तु गृह्णातिद् यदि साधुर्ग्रहीष्यति तदा स पुरुषः स्वकीयोदरपूरणे कष्टमनुभविष्यति तस्मादरण्यादौ गच्छता वनोपजीविना. सम्बन्धि यदशनादिकं तत् न गृह्णीयात् न वा ग्राहयेत् न वा गृह्णन्तमनुमोदयेदिति ॥ सू० १० ॥

सूत्रम्—जे भिक्खू वसुराइयं अवसुराइयं वयइ वयंतं वा साइज्जइ ॥ सू० ११ ॥

छाया—यो भिक्षुर्वसुराजिकमवसुराजिकं वदति वदन्त वा स्वदते ॥ सू० ११ ॥

चूर्णी—'जे भिक्खु' इत्यादि । 'जे भिक्खू' य. कश्चिद् भिक्षु· श्रमण. श्रमणी वा 'वसुराइयं' वसुराजिकम्—विशुद्धज्ञानदर्शनचारित्राराधकं दमितेन्द्रिय जैनदीपकस्वरूपम् , तत्र वसूनि रत्नानि पञ्चमहाव्रतरूपाणि ज्ञानदर्शनचारित्रतपांसि वा भावरत्नानि तै राजते—शोभते यः स वसुराजिक तथा चैतादश वसुराजिक मुनिं 'अवसुराइयं' अवसुराजिकम्—ज्ञानदर्शनचारित्रतपोभावरत्नरहितं—'वयइ' वदति—कथयति अर्थात् ज्ञानदर्शनचारित्राराधकं मुनिवर्यम् 'नाय वसुराजिक. अपितु धूर्त्तो वञ्चको विराधितसयममार्ग:' इत्यादिक्रमेण निन्दा करोति, तथा 'वयंतं वा साइज्जइ' वदन्तं वा तादृशश्रमणान्तर य· कश्चित् स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्तीति ॥ सू० ११ ॥

सूत्रम्—जे भिक्खू अवसुराइयं वसुराइयं वयइ वयंतं वा साइज्जइ ॥ सू० १२ ॥

छाया—यो भिक्षुरवसुराजिकं वसुराजिकं वदति वदन्तं वा स्वदते ॥ सू० १२ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद्भिक्षु श्रमण. श्रमणी वा 'अवसुराइयं' अवसुराजिकम् य· खलु ज्ञानदर्शनचारित्राणामनाराधक· श्रमणभिन्न. श्रमणसदृशश्च केवलं वेषमात्रेण साधुसमान. ज्ञानदर्शनचारित्रात्मकरत्नरहितत्वात्, तमवसुराजिक पार्श्वस्थादिकम् 'वसुराइयं'

वसुराजिकम्—ज्ञानदर्शनचारित्राणामाराधकं 'वयइ' वदति—कथयति स्नेहात् मोहाद्वा पोर्श्वस्थादिकमसाधुमपि अयं साधुरिति कथयति तथा 'वयंतं वा साइज्जइ' वदन्तमन्यं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्य आज्ञाभङ्गादिदोषा अपि भवन्ति ॥ सू० १२ ॥

सूत्रम्—जे भिक्खू वसुराइयगणाओ अवसुराइयगणं संकमइ संकमंतं वा साइज्जइ ॥ सू० १३ ॥

छाया—यो भिक्षुः वसुराजिकगणात् अवसुराजिकगणं संक्रामति संक्रामन्तं वा स्वदते ॥ सू० १३ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद्भिक्षु. श्रमणः श्रमणी वा 'वसुराइयगणाओ' वसुराजिकगणात्—ज्ञानदर्शनचारित्रतप.समाराधकाः वसुराजिकास्तेषां गणः—समुदायस्तस्मात् तादृशसमुदायमध्यात् 'अवसुराइयगणं संकमइ' अवसुराजिकगणं सक्रामति—गच्छतिवसुराजिकानां गणम्—समुदाय परित्यज्य य खलु मन्दभाग्यः अवसुराजिकानां गणं प्रति गच्छति तथा 'संकमंतं वा साइज्जइ' ज्ञानदर्शनचारित्राराधकानां गणं परित्यज्य ज्ञानाद्यनाराधकपार्श्वस्थादिगणे सक्रामन्तं—गच्छन्तं वा श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १३

सूत्रम्—जे भिक्खू वुग्गहवुक्कंताणं असणं वा पाणं वा खाइमं वा साइमं वा देइ देंतं वा साइज्जइ ॥ सू० १४ ॥

छाया—यो भिक्षुर्व्युद्ग्रहव्युत्क्रान्तानामशन वा पानं वा खाद्यं वा स्वाद्यं वा ददाति ददत वा स्वदते ॥ सू० १४ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमण· श्रमणी वा 'वुग्गहवुक्कंताणं' व्युद्ग्रहव्युत्क्रान्तानाम्, तत्र व्युद्ग्रहोऽधिकरणं कलहः, त कलहकृत्वा ये व्युत्क्रान्ता.—निष्क्रान्तास्ते व्युद्ग्रहव्युत्क्रान्ता, तेषा श्रमणानाम् व्युद्ग्रहव्युत्क्रान्तेभ्य. श्रमणेभ्यः इत्यर्थः 'असणं वा' अशन वा 'पाणं वा' पान वा 'खाइमं वा' खाद्यं वा 'साइमं वा' स्वाद्यं वा 'देइ' ददाति—समर्पयति यो हि श्रमण· श्रमणी वा कलहं कृत्वा स्वगणादवक्रान्तस्तस्मै चतुर्विधमाहारजातं समर्पयति तथा 'देंतं वा साइज्जइ' ददत वा कलहकारिणे अशनादिकं समर्पयन्तं श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १४ ॥

सूत्रम्—जे भिक्खू वुग्गहवुक्कंताणं असणं वा पाणं वा खाइमं वा साइमं वा पडिच्छइ पडिच्छंतं वा साइज्जइ ॥ सू० १५ ॥

छाया—यो भिक्षुर्व्युद्ग्रहव्युत्क्रान्तानाम् अशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतीच्छति प्रतीच्छन्तं वा स्वदते ॥ सू० १५ ॥

चूर्णी—'जे भिक्खू इत्यादि । यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'वुग्गहवुक्कंताणं' व्युद्ग्रहव्युत्क्रान्तानां पूर्वोक्तस्वरूपाणां श्रमणानां श्रमणीनां वा सम्बन्धि तेभ्य इत्यर्थः 'असणं वा पाणं वा खाइमं वा साइमं वा' अशनादिकं चतुर्विधम् 'पडिच्छइ' प्रतीच्छति—स्वीकरोति तथा 'पडिच्छंतं वा साइज्जइ' प्रतीच्छन्तं वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० १५ ॥

**सूत्रम्—जे भिक्खू वुग्गहवुक्कंताणं वत्थं वा पडिग्गहं वा कंबलं वा पायपोंछणगं वा देइ देंतं वा साइज्जइ ॥ सू० १६ ॥**

छाया – यो भिक्षुर्व्युद्ग्रहव्युत्क्रान्तानां वस्त्रं वा प्रतिग्रहं वा कम्बलं वा पादप्रोञ्छनकं वा ददाति ददतं वा स्वदते ॥ सू० १६ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'वुग्गहवुक्कंताणं' व्युद्ग्रहव्युत्क्रान्तानाम्—श्रमणानां श्रमणीनां वा 'वत्थं वा' वस्त्रं वा—चोलपट्टप्रावरणादिकम् 'पडिग्गहं वा' प्रतिग्रहं वा—पात्रादिकम् 'कंबलं वा' कम्बलं वा -ऊर्णामयम् 'पायपोंछणगं वा' पादप्रोञ्छनकं वा रजोहरणम् 'देइ' ददाति-समर्पयति तथा 'देंतं वा साइज्जइ' ददतं वा श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १६ ॥

**सूत्रम्–जे भिक्खू वुग्गहवुक्कंताणं वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणगं वा पडिच्छइ पडिच्छंतं वा साइज्जइ ॥ सू० १७ ॥**

छाया—यो भिक्षुर्व्युद्ग्रहव्युत्क्रान्तानां वस्त्रं वा प्रतिग्रहं वा कम्बलं वा पादप्रोञ्छनकं वा प्रतीच्छति प्रतीच्छन्तं वा स्वदते ॥ सू० १७ ॥

चूर्णी--'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'वुग्गहवुक्कंताणं' व्युद्ग्रहव्युत्क्रान्तानाम् साधूनाम् सकाशात् 'वत्थं वा' वस्त्रं वा—चोलपट्टादिकम् 'पडिग्गहं वा' प्रतिग्रहं वा—पात्रादिकम् 'कंबलं वा' कम्बलं वा 'पायपोंछणगं वा' पादप्रोञ्छनकं वा—एतानि वस्त्रादीनि यः 'पडिच्छइ' प्रतीच्छति स्वीकरोति तथा 'पडिच्छंतं वा साइज्जइ' प्रतीच्छन्तं वा—स्वीकुर्वन्तं श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १७ ॥

**सूत्रम्—जे भिक्खू वुग्गहवुक्कंताणं वसहिं देइ देंतं वा साइज्जइ ॥ सू० १८ ॥**

छाया—यो भिक्षुर्व्युद्ग्रहव्युत्क्रान्तानां वसतिं ददाति–ददतं वा स्वदते ॥ सू० १८ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'वुग्गहवुक्कंताणं' व्युद्ग्रहव्युत्क्रान्तानाम् 'वसहिं देइ' वसतिम्-उपाश्रये आश्रयं ददाति तथा 'देंतं वा साइज्जइ' ददतं वा स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १८ ॥

**सूत्रम्—जे भिक्खू वुग्गहवुक्कंताणं वसहिं पडिच्छइ पडिच्छन्तं वा साइज्जइ ॥ सू० १९ ॥**

छाया — यो भिक्षुर्व्युद्ग्रहव्युत्क्रान्तां वसतिं प्रतीच्छति प्रतीच्छन्तं वा स्वदते ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'वुग्गहवुक्कंताणं' व्युद्ग्रहव्युत्क्रान्तानाम् सम्बन्धिकां तदाश्रयभूतामित्यर्थः । 'वसहिं' वसतिम्—स्थानम् 'पडिच्छइ' प्रतीच्छति—स्वीकरोति तथा 'पडिच्छंतं वा साइज्जइ' प्रतीच्छन्तं—स्वीकुर्वन्तं वा श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १९ ॥

**सूत्रम्—जे भिक्खू वुग्गहवुक्कंताणं वसहिं अणुप्पविसइ अणुप्पविसंतं वा साइज्जइ ॥ सू० २० ॥**

छाया— यो भिक्षुर्व्युद्ग्रहव्युत्क्रान्तानां वसतिमनुप्रविशति अनुप्रविशन्तं वा स्वदते ॥ सू० २० ॥

चूर्णी —'जे भिक्खू' इत्यादि । जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'वुग्गहवुक्कंताणं' व्युद्ग्रहव्युत्क्रान्तानां सम्बन्धिनीं 'वसहिं' वसतिम्—उपाश्रयम् 'अणुप्पविसइ' अनुप्रविशति तेषामुपाश्रये प्रवेशं करोति । तथा 'अणुप्पविसंतं वा साइज्जइ' अनुप्रविशन्तं वा श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २० ॥

**सूत्रम्—जे भिक्खू वुग्गहवुक्कंताणं सज्झायं देइ देंतं वा साइज्जइ ॥ सू० २१ ॥**

छाया यो भिक्षुर्व्युद्ग्रहव्युत्क्रान्तानां स्वाध्यायं ददाति ददतं वा स्वदते ॥२१॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'वुग्गहवुक्कंताणं' व्युद्ग्रहव्युत्क्रान्तानाम् 'सज्झायं' स्वाध्यायम्—स्वाध्यायपदवाच्यानां सूत्रार्थानां सूत्रार्थविषयकं ज्ञानं सूत्रार्थयोरध्ययनमित्यर्थः 'देइ' ददाति—सूत्रमर्थं तदुभयं वा अध्यापयतीत्यर्थः, तथा—'देंतं वा साइज्जइ' ददतं वा श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २१ ॥

**सूत्रम्—जे भिक्खू वुग्गहवुक्कंताणं सज्झायं पडिच्छइ पडिच्छंतं वा साइज्जइ ॥ सू० २२ ॥**

छाया - यो भिक्षुर्व्युद्ग्रहव्युत्क्रान्तानां स्वाध्यायं प्रतीच्छति प्रतीच्छन्तं वा स्वदते ॥ सू० २२ ॥

**चूर्णी**— '**जे भिक्खू** इत्यादि। '**जे भिक्खू**' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा '**वुग्गहवुक्कंताणं**' व्युद्ग्रहव्युत्क्रान्तानाम् व्युद्ग्रहव्युत्क्रन्तेभ्य इत्यर्थ '**सज्झायं**' स्वाध्यायम्—सूत्रार्थतदुभयरूपम् '**पडिच्छइ**' प्रतीच्छति '**पडिच्छतं वा साइज्जइ**' प्रतीच्छन्तं वा श्रमणान्तरं स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति॥

अत्राह भाष्यकार —

'**वुग्गहवुक्कंताणं, असणा आरब्भ जो य सज्झायं।**
**देइ पडिच्छइ भिक्खू, आणाभंगाइ पावेइ ॥**

**छाया**—**व्युद्ग्रह व्युत्क्रान्तानां (व्युद्ग्रहव्युत्क्रान्तेभ्यः) अशनादारभ्य यश्च स्वाध्यायम्।**
**ददाति प्रतीच्छति भिक्षुः, आज्ञाभङ्गादि प्राप्नोति ॥**

**अवचूरिः**—यश्च भिक्षु व्युद्ग्रहव्युत्क्रान्तानां अशनादारभ्य स्वाध्यायम्—अशनादिकं वस्त्रादिकं वसतिं ददाति प्रतीच्छति तत्र प्रविशति वा, तथा स्वाध्याय च ददाति, तेषां सकाशात् स्वाध्यायं स्वीकरोति वा स आज्ञाभङ्गादिकं प्राप्नोतीति॥ सू० २२॥

**सूत्रम्—जे भिक्खू विहं अणेगाहगमणिज्जं संति लाढे विहाराए संथरमाणेसु जणवएसु विहारवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ॥ सू० २३॥**

**छाया**— **यो भिक्षुर्वीथिमनेकाहगमनीयां सति लाढे विहाराय संस्त्रियमाणेषु जनपदेषु विहारप्रतिज्ञया अभिसंधारयति अभिसंधारयन्त वा स्वदते॥ सू० २३॥**

**चूर्णी**—'**जे भिक्खू**' इत्यादि। य कश्चिद् भिक्षु श्रमणः श्रमणी वा '**विहं**' वीथिम् कथंभूतां वीथिम्' तत्राह—'**अणेगाह०**' इत्यादि, '**अणेगाहगमणिज्जं**' अनेकाहगमनीयाम् अनेकैरहोभि.—दिवसै गमनीयाम्—गन्तुयोग्यामटवीरूपा विहारप्रतिज्ञया गन्तुमभिसंधारयति इत्यग्रेण सम्बन्ध। कथमित्याह—'**संति लाढे**' सति लाढे विद्यमानेऽन्यस्मिन् देशे यत्र '**विहाराए**' विहाराय विहारनिमित्तम् तपोनियमसयमस्वाध्यायाद्यर्थम् '**संथरमाणेसु**' सस्त्रियमाणेषु—आहारोपधिवसत्यादिना सुलभेषु निर्वाहयोग्येषु '**जणवएसु**' जनपदेषु सत्सु '**विहारवडियाए**' विहारप्रतिज्ञया—विचरणभावनया '**अभिसंधारेइ**' अभिसंधारयति—गन्तुं मनसि विचारयति, '**अभिसंधारेंतं**' अनेकदिवसगमनीयामटवीं विहारविचारणा कुर्वन्तम् श्रमणान्तरम् '**साइज्जइ**' स्वदते अनुमोदते स प्रायश्चित्तभाग् भवतीति। अयं भाव—कथमनेकदिवसगमनीयमार्गे गमननिषेध कृतस्तत्राह—यत्र देशे गम्यमाने संयमात्मविराधनादयोऽनेके दोषा. प्रसज्जेयु, तपोनियमस्वाध्यायाद्यभावरूपा संयमविराधना, श्वापदादिहिंसकप्राणिभिरात्मविराधना च सम्भवतीत्यतोऽनेकदिवसगमनीयमार्गे गमनाय मुनिः मनस्यपि विचार न कुर्यादिति॥ सू० २३॥

**सूत्रम्— जे भिक्खू विरूवरूवाइं दस्सुयाययणाइं अणारियाइं मिलक्खुइं पच्चंतियाइं संति लाढे विहाराए संथरमाणेसु जणवएसु विहारवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० २४॥**

छाया—यो भिक्षुः विरूपरूपाणि दस्युकायतनानि अनार्याणि म्लेच्छानि प्रात्यन्तिकानि सति लाढे विहाराय संस्त्रियमाणेषु जनपदेषु विहारप्रतिज्ञया अभिसंधारयति अभिसंधारयन्तं वा स्वदते ॥ सू० २४ ॥

चूर्णी—'जे भिक्खू' इत्यादि । य किश्चिद्भिक्षु श्रमणः श्रमणी वा '**विरूवरूवाइं**' विरूपरूपाणि शकयवनाद्यन्यान्यवेषभूषादिनाऽनेकप्रकारकाणि '**दस्सुयाययणाइं**' दस्युकायतनानि दस्युकाः—चौरास्तेषामायतनानि-स्थानानि कीदृशानीत्याह—'**अणारियाइं**' अनार्याणि-अनार्यैः-आर्यभिन्नैः परिसेव्यमामानि '**मिलक्खुइं**' म्लेच्छानि—म्लेच्छैः परिसेव्यमानानि, तत्र म्लेच्छास्ते ये अव्यक्तभाषिणः यदा रुष्टास्तदा दुःखमुत्पादयन्ति धर्मे दुष्प्रबोधाः सर्वादरेण भोजनशीलाः अकालपरिभोगिनो रात्रावेव जागरणशीला धर्ममधर्मं मन्यमाना इत्थंभूता म्लेच्छास्तेषां स्थानानि, पुन '**पच्चंतियाइं**' प्रात्यन्तिकानि प्रत्यन्तानि अनार्याणि तैः सेवितानि '**संति साढे**' सति लाढे सत्यन्यस्मिन् देशे '**विहाराए**' विहाराय '**संस्थरमाणेसु**' संस्त्रियमाणेषु '**जणवएसु**' जनपदेषु व्याख्या पूर्ववत् '**विहारवडियाए**' विहारप्रतिज्ञया यो भिक्षुर्दस्युकानार्यम्लेच्छदेशेषु गमनाय विहारभावनया '**अभिसंधारेइ**' अभिसंधारयति—विचार करोति कारयति वा तथा '**अभिसंधारेंत वा साइज्जइ**' अभिसंधारयन्त-तत्र गमनाय विचारं कुर्वन्तं कारयन्तं वा श्रमणान्तरं स्वदते अनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० २४ ॥

**सूत्रम्—जे भिक्खू दुगुंछियकुलेसु असणं वा पाणं वा खाइमं वा साइयं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० २५॥**

छाया—यो भिक्षुः जुगुप्सितकुलेषु अशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० २५ ॥

चूर्णी —'जे भिक्खू' इत्यादि । '**जे भिक्खू**' यो भिक्षुः श्रमणः श्रमणी वा '**दुगुंछियकुलेसु**' जुगुप्सितकुलेषु—निन्दितकुलेषु, तच्च-चर्मकार मद्यविक्रयि-मद्यपायि-भिल्ल-धीवरादिकुलम् , यद्वा यद् हि यत्र देशे निन्दितत्वेन प्रसिद्धम् तेषु तथाविधेषु कुलेषु '**असणं वा**' अशनं वा '**पाणं वा**' पानं वा '**खाइमं वा**' खाद्यं वा '**साइमं वा**' स्वाद्यं वा '**पडिग्गाहेइ**' प्रतिगृह्णाति—स्वीकरोति '**पडिग्गाहेंतं वा साइज्जइ**' प्रतिगृह्णन्तं वा श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २५ ॥

सूत्रम्— जे भिक्खू दुगुंछियकुलेसु वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणगं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥सू० २६॥

छाया—यो भिक्षुः जुगुप्सितकुलेषु वस्त्रं वा प्रतिग्रहं वा कम्बलं वा पादप्रोञ्छनकं वा प्रतिगृह्णाति प्रतिगृह्णन्त वा स्वदते ॥ सू० २६॥

चूर्णी— 'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमण श्रमणी वा 'दुगुंछियकुलेसु' जुगुप्सितकुलेषु 'वत्थं वा' वस्त्रं वा 'पडिग्गहं वा' प्रतिग्रहं वा पात्रं वा 'कंबलं वा' कम्बलं वा 'पायपुंछणगं वा' पादप्रोञ्छनकं वा रजोहरणमित्यर्थः 'पडिग्गाहेइ' प्रतिगृह्णाति—स्वीकरोति तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तम्—स्वीकुर्वन्तं श्रमणान्तरं स्वदते अनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० २२ ॥

सूत्रम्—जे भिक्खू दुगुंछियकुलेसु वसहिं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥सू० २७॥

छाया—यो भिक्षुः जुगुप्सितकुलेषु वसतिं प्रगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ २७॥

चूर्णी—'जे भिक्खू' इत्यादि। यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'दुगुंछियकुलेसु' जुगुप्सितकुलेषु 'वसहिं' वसतिम्—निवासस्थानम् 'पडिग्गाहेइ' प्रतिगृह्णाति 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदते—अनुमोदते स प्रायश्चित्तभाग् भवति ॥ सू० २७॥

सूत्रम्—जे भिक्खू दुगुंछियकुलेसु सज्झायं करेइ करेंतं वा साइज्जइ ॥सू० २८ ॥

छाया—यो भिक्षुः जुगुप्सितकुलेषु स्वाध्यायं करोति कुर्वन्तं वा स्वदते ॥सू० २८॥

चूर्णी—'जे भिक्खू' इत्यादि जे भिक्खू' यः कश्चिद्भिक्षुः श्रमण श्रमणी वा 'दुगुंछियकुलेसु' जुगुप्सितकुलेषु 'सज्झायं' स्वाध्यायं सूत्रार्थयोरध्ययनम् 'करेइ' करोति 'करेंतं वा साइज्जइ' कुर्वन्तं वा श्रमणान्तर स्वदते-अनुमोदते स दोषभाग् भवति॥ सू० २८॥

सूत्रम्—जे भिक्खू दुगुंछियकुलेसु सज्झायं उद्दिसइ उद्दिसंतं वा साइज्जइ ॥ सू० २९ ॥

छाया—यो भिक्षुः जुगुप्सितकुलेषु स्वाध्यायमुद्दिशति उद्दिशन्तं वा स्वदते॥ २९ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'दुगुंछियकुलेसु' जुगुप्सितकुलेषु 'सज्झाय उद्दिसइ' स्वाध्यायमुद्दिशति-सूत्रमर्थं तदुभय वा एकवारमध्यापयति पाठयति तथा 'उद्दिसंतं वा साइज्जइ' उद्दिशन्तम्—स्वाध्यायमध्यापयन्तं श्रमणान्तरं स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २९॥

सूत्रम्—जे भिक्खू दुगुंछियकुलेसु सज्झायं समुद्दिसइ समुद्दिसंतं वा साइज्जइ ॥ सू० ३० ॥

छाया—यो भिक्षुः जुगुप्सितकुलेषु स्वाध्यायं समुद्दिशति समुद्दिशन्तं वा स्वदते ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू य' कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'दुगुंछियकुलेसु' जुगुप्सितकुलेषु 'सज्झायं समुद्दिसइ' स्वाध्यायं समुद्दिशति—सूत्रमर्थं तदुभयं वा अनेकवारमध्यापयति तथा 'समुद्दिसंतं वा साइज्जइ' समुद्दिशन्तं श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ३० ॥

सूत्रम्—जे भिक्खू दुगुंछियकुलेसु सज्झायं अणुजाणइ अणुजाणंतं वा साइज्जइ ॥ सू० ३१ ॥

छाया—यो भिक्षुः जुगुप्सितकुलेषु स्वाध्यायमनुजानाति अनुजानन्तं वा स्वदते ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यो भिक्षुः श्रमणः श्रमणी वा 'दुगुंछियकुलेसु' जुगुप्सितकुलेषु समुपविश्य श्रमणं यं कमपि वा 'सज्झायं' स्वाध्यायम्—सूत्रार्थतदुभयात्मकं द्वादशाङ्गीलक्षणम् 'अणुजाणइ' अनुजानाति—प्रशंसति तथा 'अणुजाणंतं वा साइज्जइ' अनुजानन्तं वा स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ३१ ॥

सूत्रम्—जे भिक्खू दुगुंछियकुलेसु सज्झायं वाएइ वायंतं वा साइज्जइ ॥ सू० ३२ ॥

छाया—यो भिक्षुः जुगुप्सितकुलेषु स्वाध्यायं वाचयति वाचयन्तं वा स्वदते ॥३२॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'दुगुंछियकुलेसु' जुगुप्सितकुलेषु 'सज्झायं वाएइ' स्वाध्यायं वाचयति—शास्त्रस्य वाचनां ददाति 'वायंतं वा साइज्जइ' वाचयन्तम् वाचनां ददतं श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ३२ ॥

सूत्रम्—जे भिक्खू दुगुंछियकुलेसु सज्झायं पडिच्छइ पडिच्छंतं वा साइज्जइ ॥ सू० ३३ ॥

छाया—यो भिक्षुः जुगुप्सितकुलेषु स्वाध्यायं प्रतीच्छति प्रतीच्छन्तं वा स्वदते ॥३३॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'दुगुंछियकुलेसु' जुगुप्सितकुलेषु 'सज्झायं' स्वाध्यायं—सूत्रमर्थं च 'पडिच्छइ' प्रतीच्छति—स्वीक-

रोति तथा 'पडिच्छंतं वा साइज्जइ' प्रतीच्छन्तं वा श्रमणान्तर स्वदते–अनुमोदते स प्राय-श्चित्तभागी भवति ॥ सू० ३३ ॥

**सूत्रम्—जे भिक्खू दुगुंछियकुलेसु सज्झायं परियट्टेइ परियट्टंतं वा साइज्जइ ॥ सू० ३४ ॥**

छाया—यो भिक्षु जुगुप्सितकुलेषु स्वाध्यायं परिवर्तयति परिवर्तयन्त वा स्वदते ३४

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चि द्भिक्षु श्रमण श्रमणी वा 'दुगुंछियकुलेसु' जुगुप्सितकुलेषु 'सज्झायं' स्वाध्यायम्–सूत्रमर्थं वा 'परियट्टइ' परिवर्तयति-सूत्रार्थतदुभयस्य पुनरावर्तनं करोति कारयति वा तथा 'परियट्टंतं वा साइज्जइ' परिवर्तयन्तं वा श्रमणान्तर स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ३४ ॥

**सूत्रम्—जे भिक्खू असणं वा पाणं वा खाइमं वा साइमं वा पुढवीए णिक्खिवइ निक्खिवंतं वा साइज्जइ ॥ ३५ ॥**

छाया—यो भिक्षुः अशनं वा पानं वा खाद्य स्वाद्य वा पृथिव्यां निक्षिपति निक्षिपन्त वा स्वदते ॥ सू० ३५ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा 'असणं वा' अशन वा 'पाण वा' पान वा 'खाइम वा' खाद्यं वा 'साइमं वा' स्वाद्यं वा 'पुढ-वीए' पृथिव्याम् 'णिक्खिवइ' निक्षिपति–आहारावशिष्टमशनादिकं पृथिव्या स्थापयतीत्यर्थः, तथा 'णिक्खिवंतं वा साइज्जइ' निक्षिपन्त वा श्रमणान्तर स्वदते अनुमोदते स प्रायश्चित्तभागी भवति पिपीलिकादिप्राण्युपमर्दनसंभवात् ॥ ३१ ॥

**सूत्रम्—जे भिक्खू असणं वा पाणं वा खाइमं वा साइमं वा संथारए णिक्खिवइ णिक्खिवंतं वा साइज्जइ ॥ सू० ३६ ॥**

छाया—यो भिक्षुरशन वा पान वा खाद्यं वा स्वाद्यं वा सस्तारके निक्षिपति निक्षिपन्त वा स्वदते ॥ सू० ३६ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु श्रमण श्रमणी वा 'असणं वा' अशनं वा 'पाणं वा' पानं वा 'खाइमं वा' खाद्य वा 'साइमं वा' स्वाद्यं वा 'संथारए' सस्तारके–आसने यत्र स्वपिति उपविशति वा तत्रैव आसने तमशनादिचतुर्विधमाहार-जातं दर्भादितृणसंस्तारके वस्त्रसस्तारके काष्ठपट्टकादौ वा 'णिक्खिवइ' निक्षिपति–संस्थापयति तथा 'णिक्खिवंतं वा साइज्जइ' निक्षिपन्तं–स्थापयन्त वा–श्रमणान्तरं स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ३६ ॥

सूत्रम्—जे भिक्खू असणं वा पाणं वा खाइमं वा साइमं वा वेहासे णिक्खिवइ णिक्खिवंतं वा साइज्जइ ॥ सू० ३७॥

छाया—यो भिक्षुरशनं वा पानं वा खाद्यं वा स्वाद्यं वा विहायसि निक्षिपति निक्षिपन्तं वा स्वदते ॥ सू० ३७ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'असणं वा' अशनं वा 'पाणं वा' पानं वा 'खाइमं वा' खाद्यं वा 'साइमं वा' स्वाद्यं वा 'वेहासे' विहायसि—आकाशे नागदन्ते सिक्कादौ पृथिव्यसंबद्धप्रदेशादौ 'णिक्खिवइ' निक्षिपति—व्यवस्थापयति नागदन्तादौ आलम्ब्यान्यवेलायां भोजनार्थमाहारजातं व्यवस्थापयतीत्यर्थः, तथा 'णिक्खिवंतं वा साइज्जइ' निक्षिपन्तं वा श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति, तस्याज्ञाभङ्गानवस्थामिथ्यात्वसंयमात्मविराधनादयो दोषा भवन्ति, तत्र संयमविराधनेत्थम्—यदि पृथिव्यादौ साधुरशनादीनि निक्षेप्स्यति तदा तत्र घृतगुडादीनां गन्धमाघ्राय पिपीलिकादिलघुजन्तवः समागमिष्यन्ति, तेषां विराधनारूपा संयमविराधना भवति, तल्लघुजन्तुभक्षणार्थं तत्र गृहगोधिका मूषको वा समागमिष्यति। तद्भक्षणार्थं मार्जारो धाविष्यति, तं धावन्तं दृष्ट्वा कुक्कुरः समागमिष्यति, इत्येवं प्रकारेणापरापरजन्तूनां समागमनात् प्राणातिपातः स्यात्, एवं नागदन्तादौ स्थापने पात्रादिकं पृथिव्यां पतिष्यति पतनाच्च भाजनभेदः षट्कायविराधनं च स्यात्, एवं प्रकारेणापि संयमविराधना प्रसज्येत। आत्मविराधनेत्थम् भूम्यादौ निक्षिप्तमशनादिकं गृहगोधिकया सर्पेण वा आघ्रातं भक्षितं वा स्यात् तस्याघ्राणेनाऽशनादौ तन्मुखलालासंस्पृष्टं विषमपि संचरिष्यति, वृश्चिकादयो वा तत्र पतिष्यन्ति ततश्च तादृशविषसंस्पृष्टाऽशनादिभक्षणे कृते साधूनां मरणमपि स्यात्। यदि कदाचित् तादृशमशनादिकं पृथिव्यां परिष्ठापयिष्यति तदा तत्राहारलाभात् समागतकुक्कुरैः साधुर्दष्टोऽपि भवेत् तेन तत्रापि आत्मविराधना स्यात्, एवंप्रकारेणाऽऽत्मविराधना प्रसज्येत तस्मात् कारणात् श्रमणः श्रमणी वा पृथिवीसंस्तारकनागदन्तादौ अशनादिकमाहारजातं न स्थापयेत् न वा परद्वारा तस्य स्थापनं कारयेत्, न वा पृथिव्यादिस्थाने संस्थापयन्तं श्रमणान्तरमनुमोदयेदिति ॥ सू० ३७ ॥

सूत्रम्—जे भिक्खू अण्णउत्थिएहिं वा गारत्थिएहिं वा सद्धिं भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ३८ ॥

छाया—भिक्षुरन्ययूथिकैर्वा गृहस्थैर्वा सार्द्धम् भुङ्क्ते भुञ्जानं वा स्वदते ॥ सू० ३८॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'अण्णउत्थिएहिं वा' अन्ययूथिकैर्वा, तत्रान्ययूथिका दर्शनान्तरीयाः पार्श्वस्थादयस्तापसादयश्च, तैरन्ययूथिकैः

'गारत्थिएहिं वा सद्धिं' गृहस्थैर्वा सार्द्धम् एकस्मिन् भाजने एकपङ्क्तौ वा समुपविश्याशनादि-चतुर्विधमाहारजातम् 'भुंजइ' भुङ्क्ते-आहरति आहारयति वा तथा 'भुंजत वा साइज्जइ' भुञ्जानं वा श्रमणान्तरं स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति ॥३८॥

## सूत्रम्—जे भिक्खू अण्णउत्थिएहिं वा गारत्थिएहिं वा सद्धिं आवेढिय परिवेढिय भुंजइ भुंजंतं वा साइज्जइ ॥ सू० ३९॥

छाया—यो भिक्षुरन्ययूथिकैर्वा गृहस्थैर्वा सार्द्धमावेष्ट्य परिवेष्ट्य भुङ्क्ते भुञ्जानं वा स्वदते ॥सू० ३९॥

चूर्णी— 'जे भिक्खू' इत्यादि । जे भिक्खू' यः कश्चिद्भिक्षुः श्रमण श्रमणी वा 'अण्णउ-त्थिएहिं वा' अन्यतीर्थिकैर्वा तापसादिभि 'गारत्थिएहिं वा सद्धिं' गृहस्थैर्वा सार्द्धम् 'आवेढिय' आवेष्ट्य तत्र आवेष्टनमेकद्वित्रिदिशासु परतीर्थिकादिभिरावेष्टितो भूत्वा तथा-'परिवेढिय' परिवेष्ट्य, तत्र परिवेष्टनं सर्वदिक्संबंधि दिशासु विदिसासु वा स्थितै परतीर्थिकादिभि· परिवेष्टितो भूत्वा अशनपानादिकम् 'भुंजइ' भुङ्क्ते भोजनं करोति कारयति वा तथा 'भुजंत वा साइज्जइ' भुञ्जानं वा अन्यतीर्थिकैरावेष्टित· परिवेष्टितो भूत्वा अशनादिकं भुञ्जान श्रमणान्तर स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति अन्यतीर्थिकादीनां समक्षमाहारकरणस्य निषिद्धत्वात् ।

अत्राह भाष्यकारः—

भाष्यम्— अण्णतित्थिगिहत्थेहिं, सद्धिं संपरिवेढिओ ।
आहारं भुंजई जो उ, आणाभंगाइ पावइ ॥

छाया—अन्यतीर्थिगृहस्थैः, सार्द्धं परिवेष्टितः ।
आहारं भुङ्क्ते यस्तु, आज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः—यो हि श्रमण. श्रमणी वा अन्यतीर्थिकै. तापसादिभि गृहस्थै· पूर्वपरिचितैरपरिचितै र्वा, पूर्वसंस्तुतै. पश्चात्संस्तुतैर्वा, तत्र पूर्वसंस्तुता मातापितृभगिनीभ्रात्रादय., गृहस्थावस्थापरिचिता अन्ये वा, पश्चात्संस्तुता. श्वशुरश्वश्रूश्यालकादय साधुवस्थापरिचिता वा, तै सार्द्धम् संपरि-वेष्टितः आवेष्टितः परिवेष्टितो वा भूत्वा य कश्चित श्रमणो मोहादिवशात् अशनादिकं भुङ्क्ते तथा भुञ्जानं श्रमणान्तरमनुमोदते स आज्ञाभङ्गादिकान् दोषान् प्राप्नोति तस्मात् एभिः सह न भोक्तव्यम्, न वा भुञ्जानमनुमोदयेत् प्रवचनहीलनासंभवादिति ॥ सू० ३९॥

## सूत्रम्—जे भिक्खू आयरिय उवज्झायाणं सेज्जासंथारगं पाएणं संघट्टित्ता हत्थेणं अणणुण्णइत्ता पधारेमाणे गच्छइ गच्छंतं वा साइ-ज्जइ ॥ सू० ४० ॥

छाया— यो भिक्षुराचार्योपाध्यायानां शय्यासंस्तारकं पादेन संघट्य हस्तेन अननुज्ञाप्य प्रधारयन् गच्छति गच्छन्तं वा स्वदते ॥ सू० ४० ॥

चूर्णी 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'आयरिय-उवज्झायाणं' आचार्योपाध्यायानाम्, तत्र आचार्यो- गच्छनायकः, उपाध्यायः, सूत्रार्थयोरध्यापकः, तेषामाचार्योपाध्यायानाम् उपलक्षणात् पर्यायज्येष्ठानां च साधूनाम् 'सेज्जासंथारगं' शय्यासंस्तारकम्, तत्र शय्या—शरीरप्रमाणा संस्तारकम्—सार्द्धद्वयहस्तप्रमाणकम् उपलक्षणात् आहारोपधिदेहपीठफलकादिकं च 'पाएणं संघट्टेत्ता' पादेन—चरणेन संघट्य शय्यासंस्तारकादीन् प्रमादवशात् पादेन संस्पृश्य, यदा गमनागमनसमयेऽनाभोगवशात् आचार्योपाध्यायादीनां शय्यासंस्तारकादीनि चरणेन संस्पृष्टानि भवन्ति तदा 'हत्थेणं अणणुण्णवेत्ता' हस्तेन अननुज्ञाप्य—हस्तेन तत् स्पृष्ट्वा स्वदोषप्रकटनरूपामाज्ञामगृहीत्वा उपलक्षणात् शय्यासंस्तारकमप्रमार्ज्य वन्दनामकृत्वा मिथ्यादुष्कृतं चादत्वा 'पधारेमाणे गच्छइ' प्रधारयन् प्रस्थानं कुर्वन् गच्छति-चलन्नेव चलति, अयं भावः—यदि आचार्यादीनामासनादिषु अनुपयोगात् पादस्पर्शो भवेत्तदा तद् हस्तेन स्पृष्ट्वा मस्तकं स्पृशन् वदेच्च—'हे गुरो ! मयाऽपराधः कृत इति क्षमस्व, न पुनरेवमनुपयोगेन चलिष्यामि' इत्यादिरूपेण क्षमायाचनं कर्तव्यमेवेति । तथा-'गच्छंतं वा साइज्जइ' आचार्यादीनामासनं चरणेन संस्पृश्य क्षमायाचनमकृत्वा मिथ्यादुष्कृतमदत्वा च गच्छन्तं श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति॥

अत्राह भाष्यकारः—

भाष्यम्—'सेज्जासंथारदेहाइं, संघट्टे गुरुणो पया ।
खमावणमकाऊण, गच्छंतो दोसभा भवे ॥

छाया—शय्यासंस्तारदेहादि संघट्टेत गुरोः पदात् ।
क्षमापनमकृत्वा गच्छन् दोषभाग् भवेत् ॥

अवचूरिः- गुरोः—आचार्योपाध्यायपर्यायज्येष्ठरूपस्य शय्यासंस्तारकदेहादि, तत्र शय्या—शरीरप्रमाणा, संस्तारकं सार्द्धद्वयहस्तप्रमाणम्, देहं करचरणादिकम् आदित—आहारोपध्यादीश्च प्रमादवशेन पदात् यदि संघट्टेत चरणेन स्पृशेत् यो भिक्षुः श्रमण श्रमणी वा तदा—मिथ्यादुष्कृतमदत्वा क्षमापनमकृत्वैव गच्छेत् तथा एवं गच्छन्तं श्रमणान्तरं योऽनुमोदते स दोषभाग् भवेत् प्रायश्चित्तभागी भवेदित्यर्थः । अथ आचार्योपाध्यायादिसम्बन्धिनां शय्यासंस्तारकादीनां कथं संघट्टनं भवति ? तत्रोच्यते—उपाश्रये प्रविशतो निष्क्रामतो मार्गे चलतो वा, उपविशतो गुरोः पादसंवाहनादिकं कुर्वाणस्य वा पादेन संघट्टनं सम्भवति, एवं शयनसमये पादप्रसारणादिकरणे च संघट्टनस्य संभवो भवति तत्र यदि आचार्योपाध्यायादिसम्बन्धिशय्यासंस्तारकदेहादीनां पादेन शरीरेण च संघट्टनं

कदाचित् भ्रमात् प्रमादाद्वा जायेत तदा अवश्यमेव क्षमापनादिकं कुर्यात्, अकरणे च साधुः प्रायश्चित्तभाग् भवेदिति ॥ सू० ४० ॥

**सूत्रम्—जे भिक्खू पमाणाइरित्तं वा गणणाइरित्तं वा उवहिं धरेइ धरेंतं वा साइज्जइ ॥ सू० ४१ ॥**

**छाया—यो भिक्षुः प्रमाणातिरिक्तं वा गणनातिरिक्तं वा उपधिं धरति धरन्तं वा स्वदते ॥ सू० ४१ ॥**

**चूर्णी—'जे भिक्खू'** इत्यादि । **'जे भिक्खू'** यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा **'पमाणाइरित्तं वा'** प्रमाणातिरिक्तं वा यस्य यादृशं प्रमाणम् एकद्वयादिस्ततः प्रमाणं यद्भगवताऽऽज्ञप्तं ततोऽतिरिक्तम्, तथा **'गणणाइरित्तं वा'** गणनातिरिक्तं वा गणनया—सङ्ख्ययाऽधिकम् । तत्र प्रमाणातिरिक्तं वस्त्रम्—यस्य वस्त्रस्य यावत्कं प्रमाणं हस्तादिमापनरूपं शास्त्रे प्रतिपादितं तस्मादधिकं प्रमाणातिरिक्तं वस्त्रं कथ्यते तथाहि—**"कप्पइ निग्गंथाणं तओ संघाडीओ धरित्तए वा परिहरित्तए वा । कप्पइ निग्गंथीणं चत्तारि संघाडीओ धरित्तए वा परिहरित्तए वा । कप्पइ निग्गंथाणं बावत्तरिहत्थपरिमियं वत्थं धरित्तए वा परिहरित्तए वा । कप्पइ निग्गंथीणं छण्णउइहत्थपरिमियं वत्थं धरित्तए वा परिहरित्तए वा"**- कल्पते निर्ग्रन्थानां तिस्रः सङ्घाटीः धर्तुं वा परिहर्तुं वा । कल्पते निर्ग्रन्थीनां चतस्रः सङ्घाटीः धर्तुं वा परिहर्तुं वा । कल्पते निर्ग्रन्थानां द्वासप्ततिहस्तपरिमितं वस्त्रं धर्तुं वा परिहर्तुं वा । कल्पते निर्ग्रन्थीनां षण्णवतिहस्तपरिमितं वस्त्रं धर्तुं वा परिहर्तुं वा, इति छाया । एवं गणनातिरिक्तम्, गणना वस्त्रविषया पात्रविषयेति द्विविधा भवति, तत्र वस्त्रविषया गणना पूर्वमुक्तैव, पात्रविषया गणना प्रोच्यते, सा च गणना एकद्वयादिसंख्या पात्राणामेकद्वयादिरूपेण वा सङ्ख्या शास्त्रे प्रतिपादिता तदतिरिक्तं गणनातिरिक्तं कथ्यते, तथाहि—**"कप्पइ निग्गंथाणं तिन्नि पायाइं चउत्थं उंदगं धारित्तए । कप्पइ निग्गंथीणं चत्तारि पायाइं पंचमं उंदगं धारित्तए ॥"** इति शास्त्रोक्तगणनातोऽधिकम् **'उवहिं'** उपधिम्—वस्त्रपात्रादिकं यो भिक्षुः **'धरेइ'** स्वयं धरति परद्वारा वा धारयति तथा—**'धरेंतं वा साइज्जइ'** धरन्तं प्रमाणगणनातिरिक्तमुपधिं धारयन्तं वा श्रमणान्तरं यः स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ४१ ॥

**सूत्रम्—जे भिक्खू अणंतरहियाए पुढवीए जीवपइट्ठिए सअंडे सपाणे सबीए सहरिए सओसे सउदए सउत्तिंगपणगदगमट्टियमक्कडासंताणगंसि दुब्बद्धे दुण्णिक्खित्ते अणिक्कंपे चलाचले उच्चारपासवणं परिट्ठवेइ परिट्ठवेंतं वा साइज्जइ ॥ सू० ४२ ॥**

छाया - यो भिक्षुरनन्तरहितायां पृथिव्यां जीवप्रतिष्ठिते साण्डे सप्राणे सबीजे सहरिते सओसे सोदके सोत्तिङ्गपनकदकमृत्तिकामर्कटसंतानके दुर्बद्धे दुर्निक्षिप्ते अनिष्कम्पे चलाचले उच्चारप्रस्रवणं परिष्ठापयति परिष्ठापयन्तं वा स्वदते ॥ सू० ४२ ॥

चूर्णी-'जे भिक्खू' इत्यादि । 'जेभिक्खू' यः कश्चित् भिक्षुः श्रमणः श्रमणी वा 'अणंतरहियाए पुढवीए' अनन्तरहितायां पृथिव्याम्, तत्र -अन्तरहिता-अन्तरं-व्यवधानं तेन हिता स्थिता अन्तरहिता-व्यवधानयुक्ता न अन्तरहिता अनन्तरहिता अचित्तताव्यवधानवर्जिता, चतुरङ्गुलपर्यन्तसचित्ततासम्बन्धयुक्ता सचित्तेत्यर्थः तस्यामनन्तरहितायां सचित्तायां पृथिव्याम् 'जीवपइट्ठिए' इत्यादिविशेषणानि स्थानसामान्यस्य बोध्यानि ततश्च जीवप्रतिष्ठिते-द्वीन्द्रियादिजीवविशिष्टे-दारुकादौ 'सअंडे' साण्डे, तत्र अण्डेन सहितं साण्डं स्थानं तस्मिन्-अण्डविशिष्टस्थाने 'सहरिए' सहरिते-हरितविशिष्टे स्थाने 'सओसे' सओसे, तत्र ओस इति निशाजलं तेन सहिते स्थाने 'सउदए' सोदके-सचित्तोदकसहिते स्थाने 'सउत्तिंगपणगदगमट्टियमक्कडासंताणगंसि' सोत्तिङ्ग-पनक-दकमृत्तिका-मर्कटसन्तानके, तत्र उत्तिङ्गो जीवविशेषो गर्दभाकृतिर्भूमौवर्तुलच्छिद्रकारकः, तद्विशिष्टे भूभागे, पनकः-'लीलनफुलन-काई' इति लोकप्रसिद्धस्तत्सहिते भागे, दकमृत्तिका-उदकमिश्रितमृत्तिका, तद्विशिष्टे भूभागे-सार्द्रमृत्तिकायुक्ते स्थाने, तथा-मर्कटसन्तानके लूता(मकडी)जालप्रतिष्ठितस्थाने, पुनः कथंभूते 'दुब्बद्धे' दुर्बद्धे-सम्यग्बन्धनरहिते 'दुण्णिक्खित्ते' दुर्निक्षिप्ते-असम्यग्रूपेण स्थापिते दारुकादौ 'अनिक्कंपे' अनिष्कंपे-कम्पनसहिते 'चलाचले' चलाचले-अस्थिरे स्थाने यः श्रमणः श्रमणी वा 'उच्चारपासवणं' उच्चारप्रस्रवणम् 'परिट्ठवेइ' परिष्ठापयति-व्युत्सृजति तथा 'परिट्ठवेंतं वा साइज्जइ' परिष्ठापयन्तं वा श्रमणान्तरं स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति । ॥ सू०४२ ॥ 'जे भिक्खू ससणिद्धाए पुढवीए' इति सूत्रादारभ्य-'जे भिक्खू खंधंसि वा' इति सूत्रपर्यन्तानि दश सूत्राणि, तच्छाया, तद्व्याख्या तद्भाष्यं चेति सर्वं त्रयोदशोद्देशके विलोकनीयम् । विशेषस्तु एतावानेव यत्-तत्र 'ठाणं वा संज्जं वा' इत्युक्तम्, अत्र तु 'उच्चारपासवणं परिट्ठवेइ' इति वाच्यम् ॥ सू० ४२-१०-५२ ॥

सूत्रम्—तं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ॥ सू० ५३ ॥

॥ निसीहज्झयणे सोलसमो उद्देसो समत्तो ॥१६॥

छाया—तत्सेवमान आपद्यते चातुर्मासिकं परिहारस्थानमुद्घातिकम् ॥ सू०५३ ॥

॥ निशीथाध्ययने षोडशोद्देशकः समाप्तः ॥ १६ ॥

**चूर्णी**—'**तं सेवमाणे**' इत्यादि । '**तं सेवमाणे**' तत्-सागारिकशय्यात आरभ्य उद्देशकपरिसमाप्तिपर्यन्तं प्रायश्चित्तस्थानं सेवमानः तस्य प्रतिसेवनां कुर्वन्-श्रमण श्रमणी वा '**आवज्जइ**' आपद्यते-प्राप्नोति '**चाउम्मासियं**' चातुर्मासिकम् '**परिहारट्ठाणं**' परिहारस्थानम्-प्रायश्चित्तम् '**उग्घाइयं**' उद्घातिकम्-सागारिकशय्यादिप्रवेशादारभ्य उद्देशकपरिसमाप्ति-गतोच्चारप्रस्रवणपरिष्ठापनसूत्रपर्यन्तं यानि यानि प्रायश्चित्तस्थानानि दर्शितानि तेषु मध्यात् एकमनेकं सर्वं वा पापस्थानं प्रतिसेवमानस्य लघु चातुर्मासिकं प्रायश्चित्तं भवति, तथा तस्याऽऽज्ञाभङ्गादिका दोषा अपि भवन्ति ॥ सू० ५३ ॥

इति श्री-विश्वविख्यात-जगद्वल्लभ-प्रसिद्धवाचक-पञ्चदशभाषाकलितललितकलापालापक-प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक-वादिमानमर्दक-श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-"**जैनशास्त्राचार्य**"-पदभूषित-कोल्हापुरराजगुरु-बालब्रह्मचारि-जैनाचार्य-जैन-धर्मदिवाकर-पूज्यश्री-**घासीलालव्रति**-विरचितायां "**निशीथसूत्रस्य**" चूर्णिभाष्यावचूरिरूपायां व्याख्यायाम् षोडशोद्देशकः समाप्तः ॥१६॥



## ॥ सप्तदशोद्देशकः ॥

व्याख्यातः षोडशोद्देशकः, सम्प्रति सप्तदशोद्देशको व्याख्यायते, तत्रास्य सप्तदशोद्देशकादिसूत्रस्य षोडशोद्देशकान्तिमसूत्रेण सह क सम्बन्ध ? इति चेदत्राह भाष्यकारः—

उद्देसंते समक्खायं, संजमत्तविराहणं ।
तं चेव सत्तदसगे, कत्थई य विराहणं ॥

छाया—उद्देशान्ते समाख्यातं, संयमात्मविराधनम् ।
तदेव सप्तदशके कथ्यते च विराधनम् ॥

अवचूरिः—उद्देशान्ते षोडशोद्देशकस्यान्ते स्कन्धादौ उच्चारप्रस्रवणं परिष्ठापनं कुर्वतः स्कन्धादित. पततश्च संयमविराधनमात्मविराधनं च भवति, इति कथितम्, तदेव सयमविराधनमात्मविराधनं च कौतूहलप्रतिज्ञया त्रसप्राणादेर्बन्धनेऽपि भवतीति सप्तदशोद्देशके कथ्यते, तदेवमुभयत्रापि विराधनमेव प्रतिपादितं भवतीति अयमेव सम्बन्ध. पूर्वापरसूत्रयोर्भवति, तदनेन संबन्धेन आयातस्यास्य सप्तदशोद्देशकस्येदं प्रथमं सूत्रम् —

**सूत्रम्—जे भिक्खू कोउहल्लवडियाए अण्णयरं तसपाणजायं तणपासएण वा मुंजपासएण वा, कट्ठपासएण वा, चम्मपासएण वा, वेत्तपासएण वा रज्जुपासएण वा सुत्तपासएण वा बंधइ बंधंतं वा साइज्जइ ॥**

छाया—यो भिक्षुः कौतूहलप्रतिज्ञया अन्यतमं त्रसप्राणजातं तृणपाशकेन वा मुञ्जपाशकेन वा, काष्ठपाशकेन वा, चर्मपाशकेन वा, वेत्रपाशकेन वा, रज्जुपाशकेन वा सूत्रपाशकेन वा, बध्नाति बध्नन्तं वा स्वदते ॥ सू० १ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमण. श्रमणी वा 'कोउहल्लवडियाए' कौतूहलप्रतिज्ञया—कौतूहलवृत्तितया वा, तत्र कौतूहलं हास्यविनोदादिलक्षणम्, तस्य कौतूहलस्य प्रतिज्ञया अभिलाषया वृत्तितया वा 'अण्णयरं तसपाणजाय' अन्यतमं किञ्चिदेक त्रसप्राणजातम्, तत्र त्रसन्ति एकस्मात्स्थानात् स्थानान्तरं प्रति गच्छन्तीति त्रसाः—गवादयश्चतुष्पदाः, पक्षिणश्च, एतदन्येऽपि स्थलचरखेचरादयो गृहीता भवन्ति, एतेषु अन्यतमं त्रसप्रणजातम् 'तणपासएण वा' तृणपाशकेन वा, तत्र तृणो—दर्भादिकस्तस्य पाशकेन दर्भादितृणविनिर्मितदवरिकया पाशशब्दस्य दवरिकावाचकत्वात् 'मुंजपासएण वा' मुञ्जपाशकेन वा, तत्र मुञ्जो नाम तृणविशेषः, तन्निर्मित पाशो दवरिका तेन मुञ्जपाशकेन 'कट्ठपासएण वा' काष्ठपाशकेन वा 'चम्मपासएण वा' चर्मपाशकेन—पश्वादिचर्मनिर्मितेन पाशकेन 'वेत्तपासएण वा' वेत्रपाशकेन

वा, तत्र वेत्रं नाम लताविशेषः 'वेंत' इति लोकप्रसिद्ध. तेन वेत्रेण निर्मित. पाशको दवरिका तेन वेत्रपाशकेन '**रज्जुपासएण वा**' रज्जुपाशकेन वा, तत्र शणादिना निर्मिता या रज्जु' तस्याः पाशको दवरिका तेन रज्जुपाशकेन '**सुत्तपासएण वा**' सूत्रपाशकेन वा, तत्र सूत्रं—कार्पासिकादिकं तेन निर्मित पाशको दवरिका तेन सूत्रपाशकेन, एतेषा तृणादिपाशकानामन्यतमेन पाशकेन कौतूहलप्रतिज्ञया अन्यतमं त्रसप्राणजातं य श्रमण श्रमणी वा '**बंधइ**' बध्नाति त्रसप्राणजातस्य बन्धन करोति कारयति वा तथा '**बधंतं वा साइज्जइ**' बध्नन्तं वा श्रमणान्तर स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १॥

सूत्रम्——जे भिक्खू कोउहल्लवडियाए अण्णयरं तसपाणजायं तणपासएण वा, मुंजपासएण वा, कट्ठपासएण वा, चम्मपासएण वा, वेत्तपासएण वा, रज्जुपासएण वा सुत्तपासएण वा, बंधेल्लगं मुयइ मुयंतं वा साइज्जइ ॥ सू० २ ॥

छाया—यो भिक्षु कौतूहलप्रतिज्ञया अन्यतमं त्रसप्राणजात तृणपाशकेन वा मुञ्जपाशकेन वा काष्ठपाशकेन वा चर्मपाशकेन वा वेत्रपाशकेन वा रज्जुपाशकेन वा सूत्रपाशकेन वा बद्ध मुञ्चति, मुञ्चन्तं वा स्वदते ॥ सू० २ ॥

चूर्णी—'**जे भिक्खू**' इत्यादि। '**जे भिक्खू**' य कश्चिद्भिक्षु श्रमण श्रमणी वा '**कोउहल्लवडियाए**' कौतूहलप्रतिज्ञया—हास्यविनोदाद्यभिलाषेण '**अण्णयरं तसपाणजायं**' अन्यतमं त्रसप्राणजातम् तृणादिपाशकेन '**बंधेल्लगं**' बद्ध '**मुंचइ**' मुञ्चति—बन्धनविमुक्त करोति, तथा '**मुयंतं वा साइज्जइ**' मुञ्चन्त वा स्वदते—बन्धनबद्ध प्राणिजातं बन्धनात् विमोचयन्त श्रमणान्तर स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति, तस्याज्ञाभङ्गादिका दोषा अपि भवन्ति। अत्र कुतूहलादिना त्रसप्राणिना बन्धने मोचने च तेषामबोधत्वेन जलाग्निगर्तपातादिना मरणसंभवात्तन्निषेधः कृत. किन्तु अग्निना ज्वलता जलेन प्लावयमानाना हिंस्रैर्हन्यमानाना सर्पादिभिर्दश्यमानाना तु दयाबुद्धया बन्धनं मोचनं च कर्तव्यमेव, न तन्निषेध । सूत्रे तु कौतूहलप्रतिज्ञया बन्धनविमोचनस्यैव निषेधो न तु दयाबुद्धयेति तत्त्वम् ॥

अत्राह भाष्यकार—

तणाइपासजाएणं, तसाणं बंधमोयणं ।
कोऊहल्लेण नो कुज्जा, दयट्ठं ण णिसिज्झई ॥

छाया—तृणादिपाशजातेन त्रसाणां बन्धमोचनम् ।
कौतूहलेन नो कुर्यात्, दयार्थं न निषिध्यते ॥

अवचूरिः—तृणादिपाशजातेन- तृणमुञ्जादिना निर्मितेन पाशजातेन केनापि प्रकारेण पाशेन दवरिकया त्रसाणां बन्धमोचनं बन्धनं मोचनं च कौतूहलेन कुतूहलबुद्धया विनोदहास्यार्थं नो कुर्यात्, किन्तु दयार्थं दयानिमित्तं बन्धनं मोचनं च न निषिध्यते जलाग्न्यादितो रक्षणार्थं बन्धनस्य मोचनस्य च निषेधो भगवता न कृत, अतएव 'कोऊहलवडियाए' इति सूत्रे कथितम् ।सू० २।

सूत्रम्—जे भिक्खू कोउहल्लवडियाए तणमालियं वा मुंजमालियं वा भिंडमालियं वा मयणमालियं वा पिच्छमालियं वा दंतमालियं वा सिंगमालियं वा संखमालियं वा हड्डमालियं वा कट्ठमालियं वा पत्तमालियं वा पुप्फमालियं वा फलमालियं वा बीयमालियं वा हरियमालियं वा करेइ करेंतं वा साइज्जइ ॥सू० ३॥

छाया— यो भिक्षुः कौतूहलप्रतिज्ञया तृणमालिकां वा मुञ्जमालिकां वा भिण्डमालिकां वा मदनमालिकां वा पिच्छमालिकां वा दन्तमालिकां वा शृङ्गमालिकां वा शङ्खमालिका वा अस्थिमालिकां वा काष्ठमालिकां वा पत्रमालिकां वा पुष्पमालिकां वा फलमालिकां वा बीजमालिका वा हरितमालिकां वा करोति कुर्वन्तं वा स्वदते ॥ सू० ३॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'कोउहल्लवडियाए' कौतूहलप्रतिज्ञया—आत्मनो विनोदाभिप्रायेण 'तणमालियं वा' तृणमालिकां वा, तत्र तृणानां—दर्भादितृणविशेषाणा मालिका मालां करोति—तृणादिना माला निर्माति 'मुंजमालियं वा' मुञ्जमालिकां वा—तृणविशेषरूपमुञ्जस्य मालिकां निर्माति 'भिंडमालियं वा' भिण्डमालिकां वा, भिण्ड —वनस्पतिविशेषः तस्य मालाम् 'मयणमालियं वा' मदनमालिकां वा—मदनस्य 'मोम' इति लोकप्रसिद्धस्य मालाम् 'पिच्छमालियं वा' पिच्छमालिकां वा—मयूरादिपिच्छाना मालाम् 'दंतमालियं वा' दन्तमालिका वा—गजादिदन्तानां मालाम् 'सिंगमालियं वा' शृङ्गमालिकां वा—हरिणमहिषादिशृङ्गाणा मालाम् 'संखमालियं वा' शङ्खमालिकां वा—शङ्खाना मालाम् 'हड्डमालियं वा' अस्थिमालिका वा—महिष्याद्यस्थ्नां मालाम्, 'कट्ठमालियं वा' काष्ठमालिकां वा—तुलस्यादिकाष्ठाना मालाम् 'पत्तमालियं वा' पत्रमालिका वा—तुलस्यादिपत्रैर्निर्मितां मालाम् 'पुप्फमालियं वा' पुष्पमालिका वा—चम्पादिपुष्पाणां मालाम् 'फलमालियं वा' फलमालिका वा - अनेकप्रकारकफलानां मालाम् 'बीयमालियं वा' बीजमालिकां वा—रुद्राक्षादिबीजाना मालाम् 'हरियमालियं वा' हरितमालिकां वा—हरितकायवनस्पतीनां सम्बन्धिनीं मालाम्, 'करेइ' करोति—संपादयति, तथा 'करेंतं वा साइज्जइ' कुर्वन्तं—तृणादिविविधवस्तूनां मालां कुर्वन्तं संपादयन्तं श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति, तस्याज्ञाभङ्गादिका दोषा अपि भवन्ति ॥ सू० ३ ॥

सूत्रम्—जे भिक्खू कोउहल्लवडियाए तणमालियं वा मुंजमालियं वा भिंडमालियं वा मयणमालियं वा पिच्छमालियं वा दंतमालियं वा सिंगमालियं वा संखमालियं वा हड्डमालियं वा कट्ठमालियं वा पत्तमालियं वा पुप्फमालियं वा फलमालियं वा बीयमालियं वा हरियमालियं वा धरेइ धरेंतं वा साइज्जइ ॥सू० ४॥

छाया—यो भिक्षुः कौतूहलप्रतिज्ञया तृणमालिकां वा मुञ्जमालिकां वा भिण्डमालिकां वा मदनमालिकां वा पिच्छमालिकां वा दन्तमालिकां वा शृङ्गमालिकां वा शङ्खमालिकां वा अस्थिमालिकां वा पत्रमालिकां वा पुष्पमालिका वा फलमालिकां वा बीजमालिकां वा हरितमालिकां वा धरति धरन्तं वा स्वदते ॥ सू० ४ ॥

चूर्णी— 'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद्भिक्षु श्रमण श्रमणी वा 'कोउहल्लपडियाए' कौतूहलप्रतिज्ञया तृणादिसम्पादिता माला धरति-हस्तादौ स्थापयति धरन्त वा स्वदते स प्रायश्चित्तभाग् भवति ॥ सू० ४ ॥

एवं 'परिभुंजइ' इत्यपि सूत्रम्–'परिभुंजइ' परिभुङ्क्ते–तृणादिमालाया. सुगन्धस्पर्शादिना उपभोगं करोति कण्ठे धारयति वा । तृणादिमालाविषयककरण–धरण–परिभोगप्रदर्शकानां त्रयाणां सूत्राणां व्याख्या सप्तमोद्देशके द्रष्टव्या । विशेषस्तु एतावानेव यत्तत्र 'मैथुनपतिज्ञया' इति पदेन कथितम्, अत्र तु 'कौतुहलप्रतिज्ञया' इति पदेन वाच्यम्, एवमग्रेऽपि ॥

अत्राह भाष्यकारः—

कोऊहल्लेण अन्नेण, केणावि कारणेण जो ।
तणाइमालियं कुज्जा, धरेज्जा परिभुंजए ॥१॥
आणाभंगाइदोसाइ, पावई सो अणेगहा ।
तम्हा भिक्खू विवज्जेज्जा, मालियाकरणाइयं ॥२॥

छाया —कौतूहलेन अन्येन केनापि कारणेन यः ।
तृणादिमालिका कुर्यात् धरेत् परिभुञ्जीत ॥ १ ॥
आज्ञाभङ्गादिदोषान्, प्राप्नोति स अनेकधा ।
तस्माद् भिक्षुर्विवर्जयेत्, मालिकाकरणादिकम् ॥ २ ॥

अवचूरिः—यः कोऽपि निर्ग्रन्थ निर्ग्रन्थी वा कुतूहलेन हास्यविनोदादिना तथा अन्येन वा केनाऽपि कारणेन रागद्वेषमोहादिना तृणादिमालिकां कुर्यात् धरेत् परिभुञ्जीत वा स आज्ञाभङ्गादिदोषान् अनेकप्रकारकान् प्राप्नोति तस्मात् कारणात् भिक्षु मालिकाकरणादिकं, मालि-

कायाः करणं धरणं परिभोगं च विवर्जयेत् दूरतः परिवर्जयेत् साध्वाचारविरुद्धत्वेन भगवदननुमतत्वादिति ॥ १-२ ॥ सू० ५ ॥

**सूत्रम्—जे भिक्खू कोउहल्लवडियाए अयलोहाणि वा तंबलोहाणि वा तउयलोहाणि वा सीसलोहाणि वा रुप्पलोहाणि वा सुवण्णलोहाणि वा करेइ करेंतं वा साइज्जइ ॥ सू० ६ ॥ एवं धरेइ ॥ सू० ७ ॥ परिभुंजइ ॥ सू० ८ ॥**

छाया - यो भिक्षु कौतूहलप्रतिज्ञया अयोलोहान् वा त्रपुलोहान् वा सीसकलोहान् वा रूप्यलोहान् वा सुवर्णलोहान् वा करोति कुर्वन्त वा स्वदते ॥ सू० ६ ॥ एवं धरति ॥ सू० ७ ॥ परिभुङ्क्ते ॥ सू० ८ ॥

चर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षु. श्रमण' श्रमणी वा 'कोउहल्लवडियाए' कौतूहलप्रतिज्ञया—आत्मनोविनोदाभिप्रायेण उपलक्षणाद् अन्येनापि केनचित्कारणेन 'अयलोहाणि वा' अयोलोहान् वा, तत्रायसो लोहस्य लोहान् सूत्रशलाकादिरूपेणाऽऽकृतिविशेषान् 'तंबलोहाणि वा' ताम्रलोहान् वा—ताम्रस्याऽऽकृतिविशेषान् वा 'तउयलोहाणि वा' त्रपुलोहान् वा, तत्र त्रपो'—धातुविशेषस्य 'जस्ता' इति लोकप्रसिद्धस्य लोहान्—आकृतिविशेषात् 'सीसलोहाणि वा' सीसकलोहान् वा, तत्र सीसकं 'सीसा' इति लोकप्रसिद्धम् तस्याऽऽकृतिविशेषान् रुप्पलोहाणि वा रूप्यलोहान् वा, तत्र रूप्य रजतम् तस्याऽऽकृतिविशेषान् 'सुवण्णलोहाणि वा' सुवर्णलोहान् वा सुवर्णस्य कटककुण्डलाद्याकृतिविशेषान् 'करेइ' करोति—अय.प्रभृतीनामाकृतिविशेषान् मनोरञ्जनार्थं यो भिक्षु स्वय करोति—सम्पादयति, तथा 'करेंतं वा साइज्जइ' कुर्वन्तं वा श्रमणान्तर स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ६ ॥ एव 'धरेइ परिभुंजइ' इति सूत्रद्वयमपि स्वयमूहनीयम् करण—धरण—परिभोगविषयकसूत्रत्रयस्य विशेषव्याख्या सप्तमोद्देशके द्रष्टव्या ॥ सू० ७-८ ॥

**सूत्रम्—जे भिक्खू कोउहल्लवडियाए हाराणि वा अद्धहाराणि वा एगावलिं वा मुत्तावलिं वा कणगावलिं वा रयणावलिं वा कडगाणि वा तुडियाणि वा केऊराणि वा कुंडलाणि वा पट्टाणि वा मउडाणि वा पलंबसुत्ताणि वा सुवण्णसुत्ताणि वा करेइ करेंतं वा साइज्जइ ॥ सू० ९ ॥ एवं धरेइ० ॥ सू० १० ॥ परिभुंजइ ॥ सू० ११ ॥**

**छाया—**यो भिक्षुः कौतूहलप्रतिज्ञया हाराणि वा अर्द्धहाराणि वा एकावलीं वा मुक्तावलीं वा कनकावलीं वा रत्नावलीं वा कटकानि वा त्रुटितानि वा केयूराणि वा कुण्डलानि वा पट्टानि वा मुकुटानि वा प्रलम्बसूत्राणि वा सुवर्णसूत्राणि वा करोति कुर्वन्तं वा स्वदते ॥ सू० ९॥ एवं धरति० ॥ सू० १० ॥ परिभुङ्क्ते० ॥ सू० ११ ॥

**चूर्णी—**'जे भिक्खू' इत्यादि। यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा मोहनीयकर्मोदयात् **'कोउहल्लवडियाए'** कौतूहलप्रतिज्ञया-स्वात्मविनोदेच्छया अन्येनापि कारणेन वा **'हाराणि वा'** हारान् वा अष्टादशसरिकान् **'अद्धहाराणि वा'** अर्द्धहारान् वा नवसरिकान् अर्द्धहारान्, **'एगावलिं वा'** एकावलीं वा-एकसरिकाम् **'मुक्तावलिं वा'** मुक्तावलीं वा, तत्र मुक्तानां मौक्तिकानामावली-पङ्क्तिर्यत्र सा, तां मुक्तावलीम् **'कणगावलिं वा'** कनकावलीं वा, तत्र कनकानां सुवर्णमणकानामावली यत्रेति कनकावली ताम्, **'रयणावलिं वा'** रत्नावलीं वा, तत्र रत्नानां माणिक्यप्रभृतीनामावली-पंक्तिर्यत्र तां रत्नावलीम्, **'कडगाणि वा'** कटकानि वा कङ्कणानि—सुवर्णवलयान् वा **'तुडियाणि वा'** त्रुटितानि वा बाह्वाभरणानि **'केऊराणि वा'** केयूराणि वा 'भुजबन्ध' इति प्रसिद्धानि भुजाभरणानि **'कुण्डलाणि वा'** कुण्डलानि वा—कर्णाभरणानि **'पट्टाणि वा'** पट्टानि वा कटिपट्टानि कट्याभरणानि **'मउडाणि वा'** मुकुटानि वा—शिरोभूषणानि **'पलंबसुत्ताणि वा'** प्रलम्बसूत्राणि वा कण्ठादौ प्रलम्बमानाभरणानि **'सुवण्णसुत्ताणि वा'** सुवर्णसूत्राणि वा—कण्ठे धार्यमाणानि सुवर्णसूत्रग्रथितान्याभरणानि, एतानि हारादीनि यः श्रमणः श्रमणी वा स्वात्मविनोदाभिप्रायेण अन्येन वा केनापि कारणेन **'करेइ'** करोति—स्वयं सम्पादयति तथा **'करेंतं वा साइज्जइ'** कुर्वन्तं वा—सम्पादयन्तं वा स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ९ ॥ एवम्-हारादीनां विषये 'धरेइ परिभुंजइ' इति सूत्रद्वयमपि स्वयमूहनीयम्, करण—धरण—परिभोगविषयाणां सूत्राणां व्याख्या सप्तमोद्देशके द्रष्टव्या ॥ सू० १०-११ ॥

**सूत्रम्—**जे भिक्खू कोउहल्लवडियाए आईणाणि वा आईणपाउरणाणि वा कंबलाणि वा कंबलपाउरणाणि वा कोयराणि वा कोयर पाउरणाणि वा गोरमियाणि वा कालमियाणि वा नीलमियाणि वा सामाणि वा महासामाणि वा उट्टाणि वा उट्टलेस्साणि वा वग्घाणि वा विवग्घाणि वा पवंगाणि वा सहिणाणि वा सहिणकल्लाणि वा खोमाणि वा दुगुल्लाणि वा तिरीडपट्टाणि वा पतुलाणि वा पणलाणि वा आवरंताणि वा चीणाणि वा अंसुयाणि वा कणगकंताणि वा कणगखचियाणि वा कणगविचित्ताणि वा आभरणविचित्ताणि वा करेइ करेंतं वा साइज्जइ ॥ सू० १२॥

छाया—यो भिक्षुः कौतूहलप्रतिज्ञया आजिनानि वा आजिनप्रावरणानि वा कम्बलानि वा कम्बलप्रावरणानि वा कोतराणि वा कोतरप्रावरणानि वा गौरमृगाणि वा कृष्णमृगाणि वा नीलमृगाणि वा श्यामानि वा महाश्यामानि वा उष्ट्राणि वा उष्ट्रलेश्यानि वा व्याघ्राणि वा विव्याघ्राणि वा प्लवङ्गानि वा श्लक्ष्णानि श्लक्ष्णकल्पानि वा क्षौमाणि वा दुकूलानि वा तिरीटपट्टाणि वा प्रतुलानि वा पणलानि वा अवरत्राणि वा चीनानि वा अंशुकानि वा कनककान्तानि वा कनकखचितानि वा कनकचित्राणि वा कनकविचित्राणि वा आभरणविचित्राणि वा करोति कुर्वन्तं वा स्वदते ॥ सू० १२ ॥

'चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू कोउहल्लवडियाए आईणाणि वा' यो भिक्षुः कौतूहलप्रतिज्ञया आजिनानि वा, तत्र अजिनं-मृगचर्म तेन निर्मितानि आजिनानि-मृगचर्मवस्त्राणि। इत्यारभ्य 'आभरणविचित्ताणि वा' आभरणविचित्राणि-आभूषणमण्डितानि वा, इति पर्यन्तानि वस्त्राणि 'करेइ धरेइ, परिभुंजइ' करोति १२, धरति १३, परिभुङ्क्ते १४, इतिसूत्रत्रयं सप्तमोद्देशकसूत्रवद् व्याख्येयम् ॥ सू० १२-१३-१४॥

सूत्रम्—जे निग्गंथे णिग्गंथस्स पाए अण्णउत्थिएण वा गारत्थिएण वा आमज्जावेज्ज वा पमज्जावेज्ज वा आमज्जावेंतं वा पमज्जावेंतं वा साइज्जइ॥ सू० १५॥

छाया—यो निर्ग्रन्थः निर्ग्रन्थस्य पादौ अन्ययूथिकेन वा गार्हस्थिकेन वा आमार्जयेद् वा प्रमार्जयेद् वा आमार्जयन्तं वा प्रमार्जयन्त वा स्वदते ॥ सू० १५॥

चूर्णी—'जे निग्गंथे' इत्यादि। 'जे निग्गंथे' यः कश्चित् निर्ग्रन्थः श्रमणः 'निग्गंथस्स' निर्ग्रन्थस्य स्वात्मभिन्नस्य 'पाए' पादौ-चरणौ 'अण्णउत्थिएण वा' अन्ययूथिकेन अन्यतीर्थिकेन वा 'गारत्थिएण वा' गार्हस्थिकेन गृहस्थेन वा 'आमज्जावेज्ज वा' आमार्जयेद् वा एकवारम् 'पमज्जावेज्ज वा' प्रमार्जयेद वा अनेकवारम् 'आमज्जावेंतं वा' आमार्जयन्तं वा 'पमज्जावेंतं वा' प्रमार्जयन्तं वा श्रमणान्तरं 'साइज्जइ' स्वदते स प्रायश्चित्तभागी भवति ॥सू० १५ ॥

सूत्रम्—एवं तइयउद्देसगमो भाणियव्वो जाव जे निग्गंथे निग्गंथस्स गामाणुगामं दूइज्जमाणस्स अण्णउत्थिएण वा गारत्थिएण वा सीसदुवारियं कारावेइ कारावेंतं वा साइज्जइ॥ (५५) ॥ सू० १६-७०॥

एवं जे निग्गंथे निग्गंथीए० (५६) ॥ सू० ७१-१२६॥ एवं जा निग्गंथी निग्गंथी निग्गंथस्स० (५६) ॥ सू० १२७-१८२ ॥ एवं जा निग्गंथी निग्गंथीए० (५६) ॥ सू० १८३-२३८॥

छाया—एवम्-तृतीयोद्देशकगमो भणितव्य यावत् यो निर्ग्रन्थः निर्ग्रन्थस्य ग्रामानुग्रामं द्रवतः अन्ययूथिकेन गार्हस्थिकेन वा शीर्षदौवारिकां कारयति कारयन्तं वा स्वदते (५५)॥ सू० १६-७०॥

एवम् यो निर्ग्रन्थः निर्ग्रन्थ्याः० (५६) ॥ सू० ७१-१२६ ॥ एवम्-या निर्ग्रन्थी निर्ग्रन्थस्य० (५६) ॥ सू० १२७-१८२ ॥ एवम्-या निर्ग्रन्थी निर्ग्रन्थ्याः० (५६) ॥सू०१८३-२३८॥

चूर्णी—'एवं' इत्यादि । एवम् अनेन क्रमेण 'तइयउद्देसगमो भाणियव्वो' तृतीयोद्देशकगमो भणितव्य कथयितव्य, कियत्पर्यन्तमित्याह–'जाव' इत्यादि । 'जाव' यावत्–तृतीयोद्देशकगतसप्तदशसूत्रादारभ्य एकसप्ततितमसूत्रपर्यन्तंपञ्चपञ्चाशत्सूत्रकदम्बकमत्र वाच्यम्, तदन्तिमसूत्रमाह–'जे निग्गंथे' इत्यादि । 'जे निग्गंथे' यः कश्चित् निर्ग्रन्थ 'निग्गंथस्स' निर्ग्रन्थस्य–स्वात्मभिन्नान्यश्रमणस्य 'गामाणुगामं दूइज्जमाणस्स' ग्रमानुग्राम-ग्रामाद् ग्रामान्तरं विहरत 'अन्नउत्थिएण वा' अन्ययूथिकेन अन्यदार्शनिकेन 'गारत्थिएण वा' गार्हस्थिकेन गृहस्थेन वा 'सीसदुवारियं' शीर्षदौवारिका शिरसि छत्राकाराच्छादनरूपा 'कारावेइ' कारयति 'कारावेंतं वा साइज्जइ' कारयन्तं वा श्रमणान्तरं स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ( ५५ ) ॥ सू० १६–७० ॥

एवम्–'जे निग्गंथे-निग्गंथीए०' अत्रापि पादामार्जनादारभ्य शीर्षदौवारिकापर्यन्तानि षट्पञ्चाशत्सूत्राणि वाच्यानि ( ५६ ) ॥ सू० ७१–१२६ ॥

एवम्–'जा निग्गंथी निग्गंथस्स०' अत्रापि षट्पञ्चाशत्सूत्राणि वाच्यानि (५६) ॥ सू० १२७–१८२) एवम् 'जा निग्गंथी निग्गंथीए०' अत्रापि षट्पञ्चाशत् सूत्राणि बोध्यानि (५६) ॥ सू०१८३–२३८ ॥

एतानि सर्वाणि सूत्राणि तृतीयोद्देशकसूत्रकदम्बकवद् व्याख्येयानि, भेदस्त्वेतावानेव–यत् तत्र पादामार्जनादि स्वयं करण कथितम्, अत्र तु परेण कारणमिति । षट्पञ्चाशत्सूत्राणि यथा–षट्सूत्राणि पादविषयकाणि ६, एवं षट् कायस्य १२, षड् व्रणस्य १८, षड् गण्डविषयस्य २४, पायुकृमि–दीर्घनखशिखेति द्वयम् २६, अष्टरोमविषयाणि ३४, त्रीणि दन्तानाम् ३७, षड् ओष्ठस्य ४३, एकमुत्तरोष्ठस्य ४४, एकमक्षिपत्रविषयकम् ४५, षड् अक्ष्णो ५१, भ्रूरोम-पार्श्वरोमविषयकं द्विकम् ५३, अक्ष्यादिमलविषयकमेकम् ५४, कायस्वेदविषयकमेकम् ५५, एकं च शीर्षद्वारिकाविषयकम् ५६, इति षट्पञ्चाशत् सूत्राणि ५६ । एवमेतानि षट्पञ्चाशत्सूत्राणि 'जे निग्गंथे निग्गंथीए पाए' इत्यादिनिर्ग्रन्थकारितनिर्ग्रन्थीपादप्रमार्जनाद्यारभ्य शीर्षद्वारिकापर्यन्तानि वाच्यानि ५६ । एवमेव 'जा निग्गंथी निग्गंथस्स पाए' इत्यादिनिर्ग्रन्थीकारितनिर्ग्रन्थपादप्रमार्जनादीनि शीर्षद्वारिका-

पर्यन्तानि षट्पञ्चाशत्सूत्राणि पठितव्यानि ५६ । एवमेव 'जा निग्गंथी निग्गंथीए पाए' इत्यादि, निर्ग्रन्थीकारितनिर्ग्रन्थीपादप्रमार्जनादीनि शीर्षद्वारिकापर्यन्तानि षट्पञ्चाशत्सूत्राणि वक्तव्यानि ५६ । एतानि सर्वाणि पञ्चदशसूत्रादारभ्य–अष्टत्रिंशदधिकद्विशत(२३८) सूत्रपर्यन्तानि चतुर्विंशत्यधिकद्विशत(२२४) सङ्ख्यकसूत्राणि तृतीयोद्देशकगतषोडशसूत्रादारभ्य एकसप्ततितमसूत्रपर्यन्तोक्तगमानधिकृत्य षट्पञ्चाशत्सूत्राणि 'जे णिग्गंथे निग्गंथस्स' इत्यादिषु चतुर्ष्वपि प्रत्येकं पठितव्यानि, तदर्थोऽपि तदनुसारेणैव ज्ञातव्य ॥ सू० १५–२३८ ॥

## जे णिग्गंथे णिग्गंथस्स सरिसगस्स अंते ओवासे संते ओवासं न देइ न देंतं वा साइज्जइ ॥ सू० २३९॥

छाया—यो निर्ग्रन्थो निर्ग्रन्थाय सदृशकायाऽन्तरवकाशे सति अवकाशं न ददाति न ददतं वा स्वदते ॥ सू० २३९ ॥

चूर्णी 'जे णिग्गंथे' इत्यादि । 'जे णिग्गंथे' य कश्चिद् निर्ग्रन्थ श्रमण 'णिग्गंथस्स सरिसगस्स' निर्ग्रन्थाय सदृशकाय–यो यस्य समानसामाचारीकः स तस्य सदृशः कथ्यते, एतादृशाय समागताय श्रमणाय 'अंते ओवासे संते' अन्तः–स्ववसतिमध्ये अवकाशे निवासस्थाने सति–विद्यमानेऽपि 'ओवासं' अवकाशं–निवासस्थानम् 'न देइ' न ददाति–न समर्पयति तथा 'न देंतं वा साइज्जइ' विद्यमानमपि अवकाशं न ददतं श्रमणान्तरं स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति, तस्याज्ञाभङ्गादिका दोषा अपि भवन्ति ॥ सू० २३९ ॥

## सूत्रम्—जा णिग्गथी णिग्गंथीए सरिसियाए अंते ओवासे संते ओवासं न देइ न देंतं वा साइज्जइ ॥ सू० २४० ॥

छाया – या निर्ग्रन्थी निर्ग्रन्थ्यै सदृशकाये अन्तरवकाशे सति अवकाशं न ददाति न ददतीं वा स्वदते ॥ सू० २४० ॥

चूर्णी – 'जा णिग्गंथी इत्यादि 'जा णिग्गंथी' या काचित् निर्ग्रन्थी–श्रमणी णिग्गंथीए सरिसियाए' निर्ग्रन्थ्यै–श्रमण्यै सदृशकायै समानकल्पस्थिरयादिमत्यै 'अं तेओवासे संते' अन्तर्मध्ये सति अवकाशे निवासस्थाने स्ववसतौ 'ओवासं न देइ' अवकाशं–निवासस्थानं न ददाति न प्रयच्छति, काचित् श्रमणी परग्रामादिस्थानान्तरात् समागच्छेत् तस्यै यदि 'इय श्रमणी मत्समानधर्मिणी' इति ज्ञात्वाऽपि स्ववसतौ निवासं न ददाति तथा 'न देंतं वा साइज्जइ' न ददतीं वा तां या स्वदने–अनुमोदते सा प्रायश्चित्तभागिनी भवति, तथा तस्याः आज्ञाभङ्गादिका अपि दोषा भवन्ति ॥

अत्राह भाष्यकारः—

**भाष्यम्**—निग्गंथो तह निग्गंथी, सस्स सस्स परोप्परं ।
संतावासं न जं देई, आणाभंगाइ पावई ॥१॥

छाया **निर्ग्रन्थस्तथा निर्ग्रन्थी स्वस्य स्वस्व परस्परम् ।**
**सन्तमावासं न यत् ददाति, आज्ञाभङ्गादि प्राप्नोति ॥ १ ॥**

**अवचूरिः**— निर्ग्रन्थः साधु· तथा निर्ग्रन्थी साध्वी स्वस्य स्वस्य परस्परं साधुः समानसामाचारीकाय साधवे, साध्वी समानसामाचारीकायै साध्व्यै सन्त विद्यमान स्वस्थितोपाश्रये आवासं सदपि निवासस्थान यत्- यदि न ददाति तदा स· साधुः साध्वी वा आज्ञाभङ्गादिदोषान् प्राप्नोतीति ॥ सू० २४० ॥

## सूत्रम्—जे भिक्खू मालोहडं असणं वा पाणं वा खाइमं वा खाइमं वा दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० २४१ ॥

छाया – **यो भिक्षुर्मालावहृतम् अशनं वा पान वा खाद्यं वा स्वाद्यं वा दीयमानं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० २४१ ॥**

**चूर्णिः** – **'जे भिक्खू'** इत्यादि । **'जे भिक्खू'** यः कश्चिद्भिक्षुः श्रमण. श्रमणी वा **'मालोहडं'** मालाऽवहृतम्, तत्र मालावहृतम्-मालः स्थानविशेष. तस्माद अवहृतम्–अपकृष्टं मालावहृतम्-तत् त्रिविधम्—ऊर्ध्वाधस्तिर्यग्भेदात्, तत्र ऊर्ध्वमालावहृतम्–उच्चप्रदेशात् निश्रेण्यादिनाऽवतारितम् १ अधोमालावहृतम्-भूमिगृहादित आनीतम २, तिर्यङ्मालावहृतम् -मञ्चादितोऽवतारितम् ३ । एतादृशम्, **'असणं वा'** अशनं वा **'पाणं वा'** पान वा **'खाइमं वा'** खाद्य वा **'खाइमं वा'** स्वाद्य वा चतुर्विधमाहारजातम् **'दिज्जमाणं'** दीयमानम्, यो भिक्षु. **'पडिग्गाहेइ'** प्रतिगृह्णाति–स्वीकरोति तथा **'पडिग्गाहेंतं वा साइज्जइ'** प्रतिगृह्णन्त वा श्रमणान्तरं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २४१ ॥

## सूत्रम्—जे भिक्खू कोट्ठाउत्तं असणं वा पाणं वा खाइमं वा साइमं वा उक्कुज्जिय णिक्कुज्जिय दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० २४२ ॥

छाया—**यो भिक्षुः कोष्ठायुक्तम् अशनं वा पानं वा खाद्यं वा स्वाद्यं वा उत्कुब्ज्य निष्कुब्ज्य दीयमानं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ २४२ ॥**

**चूर्णी**--**'जे भिक्खू'** इत्यादि । **'जे भिक्खू'** य कश्चिद्भिक्षु· श्रमणः श्रमणी वा **'कोट्ठाउत्तं'** कोष्ठायुक्तम्, तत्र कोष्ठं नाम-मृत्तिकादिनिर्मितपुरुषैकप्रमाण ततो हीनमधिकं वा **'कोठा'** इति लोकप्रसिद्धं तादृशकोष्ठादौ स्थितम् **'असणं वा'** अशनं वा **'पाणं वा'** पानं वा

'खाइमं वा' खाद्यं वा 'साइमं वा' स्वाद्यं वा चतुर्विधमाहारजातम् 'उक्कुज्जिय णिक्कुज्जिय' उत्कुब्ज्य निष्कुब्ज्य--उच्चैः कुब्जीभूय नीचैः कुब्जीभूय च-कायमुन्नम्य अवनम्य 'दिज्जमाणं' दीयमानं तादृशमाहारजातं यः श्रमणः श्रमणी वा 'पडिग्गाहेइ' प्रतिगृह्णाति स्वीकरोति तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदते--अनुमोदते प्रायश्चित्तभागी भवति ॥ सू०२४२।

सूत्रम्— जे भिक्खू मट्टिओलित्तं असणं वा पाणं वा खाइमं वा साइमं वा उब्भिदिय निब्भिदिय दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० २४३॥

छाया--यो भिक्षुः मृत्तिकोपलिप्तमशनं वा पानं वा खाद्यं वा स्वाद्यं वा उद्भिद्य निर्भिद्य दीयमानं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० २४३॥

चूर्णिः—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'मट्टिओलित्तं' मृत्तिकोपलिप्तम्-मृत्तिकया उपलिप्तं-मुद्रितम् 'असणं वा' अशनं वा 'पाणं वा' पानं वा 'खाइमं वा' खाद्य वा 'साइमं वा' स्वाद्यं वा 'उब्भिदिय निब्भिदिय' उद्भिद्य निर्भिद्य-यद्वस्तु घृतगुडादिक पात्रविशेषे स्थापयित्वा मृत्तिकया छिप्तं तत् उद्भिद्य--उत्कृष्ट बलपूर्वकं भित्त्वा त्रोटयित्वा निर्भिद्य-नितरा बार बारं भित्त्वा 'दिज्जमाणं' दीयमानम् 'पडिग्गाहेइ' प्रतिगृह्णाति स्वीकरोति 'पडिग्गाहेंतं' तादृशमशनादिकं प्रतिगृह्णन्तं श्रमणान्तरम् 'साइज्जइ' स्वदते--अनुमोदते स प्रायश्चित्तभाग् भवतीति ॥ सू० २४३॥

सूत्रम्—जे भिक्खू असणं वा पाणं वा खाइमं वा साइमं वा पुढवीपइट्ठियं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० २४४॥ एवं आउपइट्ठियं ॥ सू० २४५॥ तेउपइट्ठियं ॥ सू० २४५॥ वणप्फइकायपइट्ठियं ॥ सू० २४७॥

छाया--यो भिक्षुरशनं वा पानं वा खाद्यं वा स्वाद्यं वा पृथिवीप्रतिष्ठितं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० २४४॥ एवम् अप्प्रतिष्ठितम् ॥ सू० २४५॥ तेजःप्रतिष्ठितम् ॥ सू० २४६॥ वनस्पतिकायप्रतिष्ठितम् ॥ सू० २४७॥

चूर्णिः—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'असणं वा' अशनं वा 'पाणं वा' पानं वा 'खाइमं वा' खाद्य वा 'साइमं वा' स्वाद्यं वा 'पुढवीपइट्ठियं' पृथिवीप्रतिष्ठितं, पृथिव्याम्-यत् सचित्तपृथिवीकाये-सचित्तमृत्तिकालवणगैरिकारूपे प्रतिष्ठितम्-अनन्तरपरम्पररूपेण साक्षात् परम्परया वा स्थापितं भवेत् तद् अशनादिकं दीयमानं यः श्रमणः श्रमणी वा 'पडिग्गाहेइ' प्रतिगृह्णाति-स्वीकरोति तथा 'पडिग्गाहेंतं वा साइज्जइ'

प्रतिगृह्णन्तं वा श्रमणान्तरं स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २४४ ॥ एवं 'आउपइट्ठियं' अप्कायप्रतिष्ठितं-सचित्तमिश्राप्कायोपरिस्थितमशनादिकम् ॥ सू० २४५ ॥ 'तेउपइट्ठियं' तेजःप्रतिष्ठित तेजस्कायोपरि स्थितमशनादिकम् ॥ सू० २४६ ॥ वणप्फइकायपइट्ठियं' वनस्पतिकायप्रतिष्ठितं हरितकायोपरिस्थितम् उपलक्षणाद् व्रीह्यादिबीजधान्यादिप्रतिष्ठितं वा ऽशनादिकं यो भिक्षु प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते स प्रायश्चित्तभाग् भवति । अत्र शिष्यः पृच्छति-हे गुरो ! यदि पृथिव्यादिप्रतिष्ठितमशनादिकं गृह्णाति तदा को दोषः, न स्पर्शमात्रेण कस्यापि जीवस्य पीडा सम्भवति ? इति, आचार्यः प्राह-हे शिष्य ! भवत्येव तज्जीवानां पीडा, यत् श्रमणार्थं श्रावक पात्रादिकमवतारयति इति भवत्यवतारणादिसमये संघट्टनं, संघट्टनमात्रेणैव ते एकेन्द्रिया महतीं वेदनामनुभवन्ति, यथा कश्चित् जराजीर्णदेहो वृद्धो बलवता तरुणयमलपाणिना शिरसि ताडयते तत्र यादृशीं वेदनामनुभवति वृद्धस्ततोऽप्यधिकतरां वेदना संघट्टनमात्रेणैव एकेन्द्रियजीवा अनुभवन्ति तस्मात् कारणात् एकेन्द्रियजीवानां संघट्टन येन भवेत् तथा न कर्तव्यमित्यत सूत्रे तन्निषेध कृत इति । एवं यो हि दोष पृथिव्यादिप्रतिष्ठिताऽशनादिग्रहणे भवति स एव दोषो नियमत सचित्तपृथिव्यादिप्रतिष्ठितवस्त्रपात्रादिग्रहणेऽपि ज्ञातव्यः ॥ सू० २४७ ॥

**सूत्रम्—जे भिक्खू अच्चुसिणं असणं वा पाणं वा खाइमं वा साइमं वा मुहेण वा सुप्पेण वा विहुणणेण वा तालियंटेण वा पत्तेण वा पत्तभंगेण वा साहाए वा साहाभंगेण वा पेहुणेण वा पेहुणहत्थेण वा चेलेण वा चेलकण्णेण वा हत्थेण वा फुमित्ता वीइत्ता आहट्टु दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० २४८ ॥**

छाया—यो भिक्षुरत्युष्णमशनं वा पानं वा खाद्यं वा स्वाद्यं वा मुखेन वा शूर्पेण वा विधुननेन वा तालवृन्तेन वा पत्रेण वा पत्रभङ्गेन वा शाखया वा शाखाभङ्गेन वा पेहुणेन वा पेहुणहस्तेन वा चेलेन चेलकर्णेन वा हस्तेन वा फूत्कृत्य वीजयित्वा आहृत्य दीयमानं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० २४८ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद्भिक्षुः श्रमण, श्रमणी वा 'अच्चुसिणं' अत्युष्णम्-अतिशयोष्णम् 'असणं वा' अशनं वा 'पाण वा' पानं वा 'खाइमं वा' खाद्य वा 'साइमं' स्वाद्य वा 'मुहेण वा' मुखेन वा मुखवायुनेत्यर्थः 'सुप्पेण वा' सूर्पेण वा सूर्पवायुना इत्यर्थः, 'विहुणणेण वा' विधुननेन वा-व्यजनेन 'पंखा' इति लोकप्रसिद्धेन तदीयवायुनेत्यर्थः 'तालियंटेण वा तालवृन्तेन वा तालव्यजनेन तदीयवायुनेत्यर्थः, 'पत्तेण वा' पत्रेण वा

'पत्तभंगेण वा' पत्रभङ्गेन वा-पत्रखण्डेन इत्यर्थः 'साहाए वा' शाखया वा-वृक्षावयवरूपया 'साहाभंगेण वा शाखाभङ्गेन-शाखाखण्डेनेत्यर्थः, 'पेहुणेण वा' मयूरपिच्छेन वा 'पेहुणहत्थेण वा मयूरपिच्छपुञ्जेन वा 'चेलेण वा' चेलेन वा-वस्त्रेण वा 'चेलकण्णेण वा चेलकर्णेन वा वस्त्रावयवेन वस्त्रखण्डेनेत्यर्थः, हत्थेण वा' हस्तेण वा-हस्तसञ्चालितवायुना 'फुमित्ता' फूत्कृत्य मुखेन फूत्कारं कृत्वा 'वीइत्ता' वीजयित्वा-व्यजनादिना शीतलीकृत्य 'आहट्टु' आहृत्य-आनीय हस्ते गृहीत्वेत्यर्थः 'दिज्जमाणं' दीयमानम् 'पडिग्गाहेइ' प्रतिगृह्णाति-स्वीकरोति तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्त वा-चूल्यादितोऽवतारितमत्युष्णमशनादिकं मुखादिवायुना वीजयित्वा-शीतलीकृत्य दीयमानमशनादिकं गृह्णन्तं श्रमणान्तर स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति। तथा तस्याऽऽज्ञाभङ्गादिका दोषा अपि भवन्ति ॥ सू० २४८ ॥

सूत्रम्—जे भिक्खू असणं वा पाणं वा खाइमं वा साइमं वा अच्चुसिणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० २४९ ॥

छाया – यो भिक्षुरशन वा, पानं वा, खाद्यं वा स्वाद्यं अत्युष्णं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० २४९ ॥

चूर्णी – 'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद्भिक्षु श्रमण· श्रमणी वा 'असणं वा' अशन वा 'पाणं वा' पानं वा 'खाइमं वा' खाद्यं वा 'साइमं वा' स्वाद्य वा 'अच्चुसिणं' अत्युष्णम्-अत्यन्तोष्णं येन हस्तादि दह्यते तादृशमशनादिक 'पडिग्गाहेइ' प्रतिगृह्णाति-स्वीकरोति तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्त वा श्रमणान्तर स्वदते-अनुमोदते य प्रायश्चित्त-भागी भवति। यत -अत्युष्णग्रहणे वायुकायसंपातिमद्वीन्द्रियादीनां हिंसासद्भावात् संयमविराधना, हस्तादिदहनसद्भावादात्मविराधना च भवतीति तादृशाशनादिकं न ग्राह्यम् ।सू० २४॥

सूत्रम्—जे भिक्खू उस्सेइमं वा संसेइमं वा चाउलोदगं वा वारोदगं वा तिलोदगं वा तुसोदगं वा जवोदगं वा आयामं वा सोवीरं वा-अंबकंजियं वा सुद्धवियडं वा अहुणाधोयं अणंबिलं अपरिणयं अवुक्कंत-जीवं अविद्धत्थं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० २५० ॥

छाया— यो भिक्षुः उत्सेकिमं वा संसेकिमं वा तण्डुलोदकं वा वारोदक वा तिलोदकं वा तुषोदकं वा यवोदकं वा आचामं वा सौवीरं वा आम्रकाञ्जिकं वा शुद्धविकटं वा अधुनाधौतम् अनाम्लम् अपरिणतम् अव्युत्क्रान्तजीवम् अविध्वस्तं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० २५० ॥

**चूर्णी** —'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा **'उस्सेइमं वा'** उत्सेकिमं वा-बाष्पितगोधूमपिष्टतिलादि येन जलेन सिच्यते-धाव्यते तज्जलम्, अथवा-येन जलेन पिष्टकादिसंश्लिष्ट पात्रम् 'कठौती' तिलोकप्रसिद्धं प्रक्षाल्यते तज्जल वा **'संसेइमं वा'** संसेकिम वा बाष्पितवास्तुकतन्दुलीयकादिपत्रशाकं संसिच्यते तज्जलम् । **'चाउलोदगं वा** तण्डुलोदक वा तण्डुलधावनजल येन जलेन तण्डुला धाव्यन्ते पाकात्पूर्वं तादृशं जलम् **'वारोदगं वा'** वारोदक वा- वार' घट येन जलेन गुडादिघट प्रक्षाल्यते तादृश जलं वारोदक मिति कथ्यते **'तिलोदगं वा'** तिलोदक वा-तिलधावनजलम् **'तुसोदगं वा'** तुषोदकं वा-तुषधावनजलम् व्रीह्यादिप्रक्षालितजलमित्यर्थ **'जवोदगं वा'** यवधावनजलं येन जलेन यवाः प्रक्षाल्यन्ते तादृश जलमित्यर्थ, **'आयामं वा'** आचाम वा अवस्रावणं सिद्धतण्डुलजलम्, अथवा उष्णलोहं यस्मिन् जले शीतलीक्रियते तादृश जलमाचाममिति कथ्यते **'सोवीरं वा'** सौवीरं वा काञ्जिकजलमित्यर्थ **'अंबकंजियं वा'** आम्रकाञ्जिक **'सुद्धवियड वा'** शुद्धविकटं वा शुद्धम् उष्णं जलम्, एतादृश सर्वं पानकजातम् यदि **'अहुणाधोयं'** अधुनाधौतं-तत्कालधौतम् **'अणंबिलं'** अनाम्लम् यस्य रसम् आम्ल न जातं भवेत् **'अपरिणयं'** अपरिणतम्-शस्त्रापरिहतम् **'अवुक्कंतजीवं'** अव्युत्क्रान्तजीवम्-अव्युत्क्रान्ता अनपगताः जीवा यस्मात् तत् तथा, जीवेनाविप्रमुक्तं सचेतनं मिश्र वेत्यर्थ **अविद्धत्थं'** अविध्वस्तम् यत् वर्ण-गन्ध-रस-स्पर्शैर्न विध्वस्तम्-वर्णादिभ्यो न चलित तत् स्वभावावस्थमित्यर्थ, एतादृश पूर्वोक्तविशेषणविशिष्ट जलं भवेत्तज्जल य श्रमण. श्रमणी वा **'पडिग्गाहेइ'** प्रतिगृह्णाति-दीयमान स्वीकरोति तथा **'पडिग्गाहेंतं वा साइज्जइ'** प्रतिगृह्णन्तं वा स्वीकुर्वन्तं श्रमणान्तरं य. स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २५० ॥

## सूत्रम्—जे भिक्खू अप्पणो आयरियत्ताए लक्खणाइं वागरेइ वागरेंतं वा साइज्जइ ॥ सू० २५१ ॥

**छाया** - यो भिक्षुरात्मन आचार्यतायै लक्षणानि व्याकरोति व्याकुर्वन्तं वा स्वदते

**चूर्णी** - जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद्भिक्षुः श्रमणः श्रमणी वा **'अप्पणो** आत्मन स्वस्य लक्खणाइं' लक्षणानि-करचरणस्थानि चक्राङ्कुशादीनि, तथा स्वदेहस्य मानोन्मान-प्रमाण सस्थान सहननादीनि वा **'आयरियत्ताए'** आचार्यतायै-स्वस्याचार्यपदप्राप्त्यर्थम् **वागरेइ'** व्याकरोति- अन्यस्मै कथयति, चक्राङ्कुशतिलमशादिविषये एवं कथयति-यानि आचार्यस्य लक्षणानि भवन्ति तानि मम शरीरेऽपि लभ्यन्ते तेनाहमाचार्यो भविष्यामीति । कथनप्रकारो यथा—

"अमुगायरियसरिच्छाइं लक्खणाइं णं पासह महंपि ।
एरिसलक्खणजुत्तो, य होइ अचिरेण आयरिओ" ॥१॥

छाया—अमुकाचार्यसदृशानि लक्षणानि खलु पश्य ममापि।
ईदृशलक्षणयुक्तश्च, भवति अचिरेण आचार्यः ॥ १ ॥

इत्यादि स्वस्य विषये व्याकरोति तथा 'वागरेंतं वा साइज्जइ' व्याकुर्वन्त वा स्वशरीरस्थ लक्षणानि प्रकाशयन्तं श्रमणान्तर य. स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २५१॥

सूत्रम्—जे भिक्खू गाएज्ज वा हसेज्ज वा वाएज्ज वा णच्चेज्ज वा अभिणएज्ज वा हयहेसियं, हत्थिगुलगुलाइयं उक्किट्ठसीहनायं वा करेइ करेंतं वा साइज्जइ ॥ सू० २५२॥

छाया—यो भिक्षुः गायेत् वा हसेद्वा वादयेद्वा नृत्येद्वा अभिनयेद्वा हयहेषितं हस्तिगुलगुलायितम् उत्कृष्टसिंहनादं वा करोति कुर्वन्तं वा स्वदते ॥ सू० २५२ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु· श्रमणः श्रमणी वा 'गाएज्ज वा' गायेद्वा—गानं कुर्यात्, तत्र स्वरकरणं स्वरसञ्चारो वा गानं तत्कुर्यात् 'हसेज्ज वा' हसेद्वा-मुख विस्फाल्य सविकारकहकहकरणरूपं हसन कुर्यात् 'वाएज्ज वा' वाद येत्—शङ्खवीणामृदङ्गादिक वादयेत् 'नच्चेज्ज वा' नृत्येद्वा—पादजङ्घोरुकटयुदरबाहङ्गुलिवदन नयनभ्रूमुखादीना विकारकरणं गात्रसञ्चालनापरपर्यायं नृत्य कुर्यात्, 'अभिणएज्ज वा' अभिनयेद्वा—अभिनय दृश्यश्रव्यादिनाटकाङ्गरूपं कुर्यात् 'हयहेसियं वा' हयहेषित वा—अश्ववत् हेषाशब्द कुर्यात् 'हत्थिगुलगुलाइयं वा' हस्तिगुलगुलायितं वा हस्तिशब्दवत् शब्दं करोति 'उक्किट्ठसीहनायं वा' उत्कृष्टसिंहनाद वा' सिंहो यथा विलक्षण हुङ्कारशब्दं करोति तथैव सिंहशब्दानुकारिशब्दम् 'करेइ' करोति स्वयमेव, परद्वारा वा कारयति तथा 'करेंतं वा साइज्जइ' कुर्वन्त वा श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ।

अत्राह—भाष्यकार·—

गाएज्ज अहवा णच्चे. हसेज्ज जइ मोहओ ।
पावइ आणाभंगाई, मिच्छत्तं च विराहणं ॥

छाया—गायेद्वा अथवा नृत्येत् हसेद्वा यदि मोहतः।
प्राप्नोत्याज्ञाभङ्गादि मिथ्यात्वं च विराधनम् ॥

अवचूरिः—यदि मोहत·—मोहवशात् कारणादकारणाद्वा श्रमण. श्रमणो वा गायेत्—गान कुर्यात्, अथवा हसेत्—कहकह—शब्दं कुर्यात् उपलक्षणत्वात् वादयेत् अभिनयेत्—अश्वगजादिशब्दं वा कुर्यात् तदा स आज्ञाभङ्गादिकं मिथ्यात्व विराधनं च प्राप्नोति ॥ सू० २५२ ॥

**सूत्रम्—जे भिक्खू भेरीसद्दाणि वा पडहसद्दाणि वा मुरयसद्दाणि वा मुइंगसद्दाणि वा नंदिसद्दाणि वा झल्लरिसद्दाणि वा वल्लरिसद्दाणि वा डमरुगसद्दाणि वा मड्डलसद्दाणि वा सदुयसद्दाणि वा पएससद्दाणि वा गोलुंकिसद्दाणि वा अन्नयराणि वा तहप्पगाराणि वितताणि सद्दाणि कण्णसोयपडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० २५३ ॥**

छाया—यो भिक्षु भेरीशब्दान् वा पटहशब्दान् वा मुरजशब्दान् वा मृदङ्गशब्दान् वा नन्दिशब्दान् वा झल्लरीशब्दान् वा वल्लरीशब्दान् वा डमरुकशब्दान् वा मर्दलशब्दान् वा सदुकशब्दान् वा प्रदेशशब्दान् वा गोलुङ्कीशब्दान् वा अन्यतरान् वा तथाप्रकारान् विततान् शब्दान् कर्णश्रोतःप्रतिज्ञया अभिसंधारयति अभिसंधारयन्तं वा स्वदते ॥

चूर्णी—'जे भिक्खु' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु श्रमण श्रमणी वा **'भेरीसद्दाणि वा** भेरीशब्दान् वा दुन्दुभिशब्दान् वा **'पडहसद्दाणि वा'** पटहशब्दान् वा 'ढोल' इति लोकप्रसिद्धशब्दान् **'मुरयसद्दाणि वा'** मुरजशब्दान् वा—पटहविशेषशब्दान् वा **'मुइंगसद्दाणि वा** मृदङ्गशब्दान् वा **'नंदिसद्दाणि वा** नन्दिशब्दान वा—यत्र द्वादश वाद्यानि सहैव वाद्यन्ते तादृशो वाद्यविशेषो नन्दिरिति कथ्यते, तत्सम्बन्धिशब्दान् वा **'झल्लरीसद्दाणि वा'** झल्लरीशब्दान् वा, तत्र 'झल्लरी –'झालर' इति लोकप्रसिद्धा तस्याः शब्दान् **'वल्लरिसद्दाणि वा'** वल्लरीशब्दान् वा **'डमरुगसद्दाणि वा'** डमरुकशब्दान् वा—'डमरु' इति लोकप्रसिद्धशब्दान् **'मड्डलसद्दाणि वा** मर्दलशब्दान् वा—मर्दल'-तन्नामको वाद्यविशेषः, तच्छब्दान् **'सदुयसद्दाणि वा** सदुकशब्दान् वा वाद्यविशेषशब्दान् वा **'पएससद्दाणि वा'** प्रदेशशब्दान् वा **'गोलुंकिसद्दाणि वा'** गोलुङ्काशब्दान् वा-गोलुङ्कीनामको वाद्यविशेषस्तच्छब्दान् वा तथा **'अन्नयराणि वा'** अन्यतरान् अन्यान् वा **'तहप्पगाराणि वा'** तथाप्रकारान्-पूर्वोक्तप्रदर्शित शब्दसदृशान् अन्यानपि अनेकप्रकारान् **'वितताणि सद्दाणि'** विततान् शब्दान्—विततजातीयवादित्रसमुत्थान् शब्दान् **'कण्णसोयपडियाए** कर्णश्रोत प्रतिज्ञया—कर्णेन्द्रियेण श्रवणप्रतिज्ञया - कर्णाभ्यां श्रवणेच्छया **'अभिसंधारेइ'** अभिसंधारयति—श्रोतु मनसि निश्चिनोति तथा **'अभिसंधारेंतं वा साइज्जइ'** अभिसंधारयन्त वा श्रमणान्तरं स्वदते—अनुमोदते सा प्रायश्चित्तभागी भवति ॥२५३॥

**सूत्रम्—जे भिक्खू तालसद्दाणि वा, कंसतालसद्दाणि वा लित्तियसद्दाणि वा गोहियसद्दाणि वा मकरियसद्दाणि वा कच्छभीसद्दाणि वा महइसद्दाणि वा सणालियासद्दाणि वा वलियासद्दाणि वा अन्नयराणि वा**

तहप्पगाराणि घणाणि सद्दाणि वा कण्णसोयपडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० २५४ ॥

छाया—यो भिक्षुस्तालशब्दान् वा कांस्यतालशब्दान् वा लित्तिकाशब्दान् वा गोधिकाशब्दान् वा मकरिकाशब्दान् वा कच्छपीशब्दान् वा महतिशब्दान् वा सणालिकाशब्दान् वा वलिकाशब्दान् वा अन्यतरान् वा तथाप्रकारान् घनान् शब्दान् वा कर्णश्रोतःप्रतिज्ञया अभिसन्धारयति अभिसन्धारयन्तं वा स्वदते ॥ सू० २५४ ॥

चूर्णी—'जे भिक्खू' इत्यादि । यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'तालसद्दाणि वा' तालशब्दान् वा-सयोगाभिघातजन्यतासम्बन्धेन जायमानान् शब्दान् 'कंसतालसद्दाणि वा' कांस्यतालशब्दान् वा, तत्र कांस्यं-धातुविशेषस्तस्य तालो-वादित्रविशेषः तत्संयोगेन जायमानान् शब्दान् कांस्यतालशब्दान् 'लित्तियसद्दाणि वा' लित्तिकाशब्दान् वा, तत्र लित्तिका वादित्रविशेषः तस्याः शब्दान् 'गोहियसद्दाणि वा' गोधिकाशब्दान् वा-गोधिकाऽऽकृतिको वाद्यविशेषस्तच्छब्दान् 'मकरियसद्दाणि वा' मकरिकाशब्दान् वा-मकराकृतिको वाद्यविशेषस्तस्य शब्दान् 'कच्छभीसद्दाणि वा' कच्छपीशब्दान् वा कच्छपाकृतिवाद्यविशेषशब्दान् वा 'महियसद्दाणि वा' महतिका शब्दान् वा 'सणालियासद्दाणि वा' सनालिकाशब्दान् वा, अत्र तालादिकं सर्वमपि वाद्यविशेषलक्षणमेव, तेषां विशेषतो नामानि लोकतो देशतश्च ज्ञातव्यानि, अत्र तु सामान्यरूपेणैव अर्थाः प्रतिपादिताः । 'अन्नयराणि वा' अन्यतरान् वा 'तहप्पगाराणि वा' तथाप्रकारान् अन्यानपि तत्सदृशान् 'घणाणि सद्दाणि' घनान्-जनजातीयवादित्रसमुत्थान् शब्दान् 'कण्णसोयपडियाए' कर्णश्रोतःप्रतिज्ञया-कर्णाभ्यां श्रोतुमिच्छया 'अभिसंधारेइ' अभिसंधारयति मनसा श्रवणार्थं निश्चयं करोति तथा 'अभिसंधारेंतं वा साइज्जइ' अभिसंधारयन्तं कर्णसुखावहान् तालादिशब्दान् श्रोतुं मनसा निश्चयं कुर्वन्तं श्रमणान्तरं वा स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २५४ ॥

सूत्रम्—जे भिक्खू वीणासद्दाणि वा विवंचीसद्दाणि वा तुणसद्दाणि बव्वीसद्दाणि वा वीणाइयसद्दाणि वा तुंबवीणासद्दाणि वा संकोडयसद्दाणि वा रुरुयसद्दाणि वा ढंकुणसद्दाणि वा अन्नयराणि वा तहप्पगाराणि तताणि सद्दाणि कण्णसोयवडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥२५५

छाया—यो भिक्षुः वीणाशब्दान् वा विपञ्चीशब्दान् वा तुणशब्दान् वा बव्वीसशब्दान् वा वीणातिकशब्दान् वा तुम्बवीणाशब्दान् वा संकोटकशब्दान् वा रुरुकशब्दान् वा

**ढंकुणशब्दान् वा अन्यतरान् वा तथाप्रकारान् ततान् शब्दान् कर्णश्रोतःप्रतिज्ञया अभिसंधारयति अभिसंधारयन्तं वा स्वदते ॥ सू० २५५॥**

**चूर्णी**—'**जे भिक्खू**' इत्यादि । '**जे भिक्खू**' यः कश्चिद्भिक्षुः श्रमण. श्रमणी वा '**वीणासद्दाणि वा** वीणाशब्दान् वा इति वीणादीना सूत्रोक्ताना शब्दान्, अन्यतरान् वा तथाप्रकारान् तत्तज्जातीयवादित्रसमुत्थान् शब्दान् वा '**कण्णसोयवडियाए**' कर्णश्रोत·प्रतिज्ञया '**अभिसधारेइ**' अभिसंधारयति '**अभिसंधारेंत वा साइज्जइ**' अभिसंधारयन्तं वा स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २५५ ॥

## सूत्रम्—जे भिक्खू संखसद्दाणि वा वंससद्दाणि वा वेणुसद्दाणि वा खरमुहासद्दाणि वा परिलीसद्दाणि वा चेचासद्दाणि वा अन्नयराणि वा तहप्पगाराणि झुसिराणि सद्दाणि कण्णसोयपडियाए अभिसंधारेइ अभिसंधारेंतं वा साइज्जइ ॥ सू० २५६॥

**छाया**—**यो भिक्षुः शङ्खशब्दान् वा वंशशब्दान् वा वेणुशब्दान् वा खरमुखीशब्दान् वा परिलीशब्दान् वा चेचाशब्दान् वा अन्यतरान् वा तथाप्रकारान् शुषिरान् शब्दान् कर्णश्रोतःप्रतिज्ञया अभिसंधारयति अभिसंधारयन्तं वा स्वदते ॥ सू० २५६ ॥**

**चूर्णी**—'**जे भिक्खू**' इत्यादि। जेभिक्खू य कश्चिद्भिक्षु. श्रमण· श्रमणी वा '**संखसद्दाणि वा**' शङ्खशब्दान् वा '**वंससद्दाणि वा**' वंशशब्दान् वा वंशेन जायमानान् शब्दान् वा '**वेणुसद्दाणि वा** वेणुशब्दान वा, तत्र वेणुरिति सशुषिरो वंशस्यैव जातिविशेष· यो मुखादिवायुना पूरित· शब्दं करोति, येन निष्पादितवादित्रम् 'बांसुरी' इति लोकप्रसिद्धं तस्य शब्दान् वा '**खरमुहीसद्दाणि वा**' खरमुखीशब्दान् वा, तत्र खरो–गर्दभ तस्य मुखमिव मुख यस्या· सा खरमुखी—वादित्रविशेष. तस्याः शब्दान् '**परिलीसद्दाणि वा**' परिलीशब्दान् वा वाद्यविशेषस्य शब्दान् '**चेचा सद्दाणि वा**' चेचाशब्दान् वा 'चेचा' इति वाद्यविशेषस्य शब्दान् वा '**अन्नयराणि वा तहप्पगाराणि**' अन्यतरान् वा तथाप्रकारान्—शङ्खवंशवेणुप्रभृतिशब्दसदृशशब्दान् '**झुसिराणि सद्दाणि**' शुषिरान्—शुषिरजातीयवादित्रजन्यान् शब्दान् '**कण्णसोयवडियाए**' कर्णश्रोतःप्रतिज्ञया-कर्णाभ्यां श्रवणेच्छया '**अभिसंधारेइ**' अभिसंधारयति—मनसि निश्चयं करोति तथा '**अभिसंधारेंतं वा साइज्जइ**' अभिसंधारयन्त वा श्रमणान्तरं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तस्याऽऽज्ञाभङ्गादिका दोषा अपि भवन्ति ॥ सू० २५६ ॥

## सूत्रम्—जे भिक्खू वप्पाणि वा फलिहाणि वा जाव इहलोइएसु वा रूवेसु परलोइएसु वा रूवेसु जाव अज्झोववज्जंतं वा साइज्जइ ॥ सू२७०

छाया—यो भिक्षुः वप्रान् वा परिखा वा यावत् ऐहलौकिकेषु वा रूपेषु पारलौकिकेषु वा रूपेषु यावत् अध्युपपद्यमानं वा स्वदते ॥ सू० २७० ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षु श्रमण श्रमणी वा 'वप्पाणि वा' वप्रान् वा 'वप्र' इति केदारः, दुर्ग, प्राकारः क्षेत्रम्, उन्नतभूभागो वा प्रोच्यते, तान् तादृशान्. वा स्थानविशेषान्, 'फलिहाणि वा' परिखा वा या ग्रामादेः समन्तात् परिवृता गर्त्तरूपा याः 'खाइ' इति प्रसिद्धास्ता', 'जाव' यावत्, यावत्पदेन इत आरभ्य 'इहलोइएसु वा रूवेसु' इति सूत्रपर्यन्तानि द्वादशोद्देशकोक्तानि चतुर्दश सूत्राणि संग्राह्याणि, तत्र वप्रादीनां प्रशसानिन्दात्मकानि वार्त्तादीनि कर्णश्रोत प्रतिज्ञया अभिसंधारयति, अभिसंधारयन्तं वा स्वदते,॥ सू०२६९॥ तथा 'इहलो इएसु' ऐहलोकिकेषु ऐहलौकिकशब्देन मनुष्या गृह्यन्ते तेन ऐहलौकिकेषु मनुष्यसम्बन्धिषु 'रूवेसु' रूवेषु तथा 'परलइएसु रूवेसु' अत्र पारलौकिकशब्देन तिर्यञ्चो गृह्यन्ते, तेन पारलौकिकेषु हय-गोगजादितिर्यक्षु दृष्टादृष्टादिभेदभिन्नेषु रूपेषु 'जाव' यावत्—यावत्पदेन 'सज्जइ रज्जइ गिज्झइ अज्झोववज्जइ सज्जंतं रज्जतं गिज्झंतं' आसक्तिं करोति, राग करोति, गृद्धिं करोति, अध्युपपत्तिं करोति, तथा—पूर्वोक्तं कुर्वन्तम् तथा 'अज्झोववज्जंतं' अध्युपपद्यमानम्-अध्युप-पत्तिं कुर्वन्तम् श्रमणान्तरम् 'साइज्जइ' स्वदते—अनुमोदते स प्रायश्चित्तभागी भवतीत्यन्तिम-सूत्रार्थः । अत्र प्रथमयावत्पदेन—'जेभिक्खू वप्पाणि वा फलिहाणि वा० १ एवं वणाणि वा गहणाणि वा २, गामाणि वा णगराणि वा० ३, गाममहाणि वा णगरमहाणि वा० ४, गामवहाणि वा णगरवहाणि वा० ५, गामपहाणि वा णगरपहाणि वा ६, आसकरणाणि वा हत्थिकरणाणि वा० ७, आसजुद्धाणि वा हत्थिजुद्धाणि वा० ८, हयठाणाणि वा हयजूहियठाणाणि वा० ९ अभिसेयठाणाणि वा अक्खाइयठाणाणि वा १०, कट्ठकम्माणि वा चित्तकम्माणि० वा ११, डिंबाणि वा डमराणि वा० १२, विरूवरूवेसु महुस्सवेसु इत्थीणि वा पुरिसाणि वा० १३ इहलोइएसु वा रूवेसु० १४, इति चतुर्दश सूत्राणि द्वादशोद्देशकेऽवलोकनीयानि, अर्थोऽपि तत्रैव द्रष्टव्य इति । विशेषस्त्वयम्—यत्तत्र 'चक्खुदंसण-वडियाए' इत्युक्तम्, अत्र तु 'कण्णसोयवडियाए' इति वाच्यम् । पुनश्च तत्र वप्रादीनां चक्षुषा दर्शनविषयको निषेध प्रतिपादित, अत्र तु वप्रादीनां प्रशंसानिन्दात्मकवार्त्तायाः कर्णाभ्यां श्रवणविषयको निषेधो ज्ञातव्य इति । तस्मात् कारणात् श्रमण-श्रमणी वा वप्रादीनां प्रशंसानिन्दात्मकवार्त्तादिश्रवणेच्छया विचारं न कुर्यात् नापि विचारं तत्कुर्वन्तमनुमोदयेत्, तथा पारलौकिकदृष्टादृष्टज्ञाताज्ञातश्रुताश्रुतरूपरसगन्धस्पर्शेषु कदाचिदपि आसक्तिरागादिकं न कुर्यात् न वा कारयेत् तथा तादृशरूपादिषु आसक्त्यादि कुर्वाणं श्रमणान्तर कथमपि कदाचिदपि नानुमोदयेत् ॥

अत्राह भाष्यकारः—

भाष्यम्—'वप्पाइयं तहा रूवा,-इयं सोयपडिन्नया ।
अभिसंधारए सज्जे आणाभंगाइ पावइ ॥

छाया—वप्रादिकं तथा रूपादिकम् श्रोत्रप्रतिज्ञया ।
अभिसंधारयेत् सज्जेत आज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः— यो भिक्षुः वप्रादिकं तथा रूपादिकम् ऐहलौकिकपारलौकिकेति मनुष्यतिर्यक्-सम्बन्धिरूपादिकं तद्वार्त्तादिक श्रोत्रप्रतिज्ञया श्रवणेच्छया मनसि अभिसधारयेत् , श्रोतुं मनसि निश्चयं कुर्यात् सज्जेत वा तत्र आसक्तो वा भवेत् तदा स भिक्षुः आज्ञाभङ्गादिकं प्राप्नोति ॥२७० ॥

## सूत्रम्—तं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ॥ सू० २७१ ॥

॥ निसीहज्झयणे सत्तरसमो उद्देसो समत्तो ॥ १७ ॥

छाया—तत् सेवमान आपद्यते चातुर्मासिकं परिहारस्थानम् उद्घातिकम् ॥ सू० २७१॥
॥ निशीथाध्ययने सप्तदशोद्देशकः समाप्तः ॥१७॥

चूर्णी—'तं' तत् उद्दे ३ कादित आरभ्यादशकान्त पर्यन्तकथितप्रायश्चित्तस्थानानि 'सेवमाणे' सेवमानः-प्रतिसेवनां कुर्वन् 'आवज्जइ' आपद्यते-प्राप्नोति 'चाउम्मासियं' चातुर्मासिकम् 'परिहारट्ठाणं' परिहारस्थानम् अर्थात प्रायश्चित्त कीदृशम् ? 'उग्घाइयं' उद्घातिकम् लघुकमिति ॥३३॥

इति श्री-विश्वविख्यात-जगद्वल्लभ-प्रसिद्धवाचक-पञ्चदशभाषाकलितललितकलापालापक-प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक-वादिमानमर्दक-श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-"जैनशास्त्राचार्य"-पदभूषित-कोल्हापुरराजगुरु-बालब्रह्मचारि-जैनाचार्य-जैन-धर्मदिवाकर-पूज्यश्री-घासीलालव्रति-विरचितायां "निशीथसूत्रस्य" चूर्णिभाष्यावचूरिरूपायां व्याख्यायाम् सप्तदशोद्देशक समाप्तः ॥१७॥



## ॥ अष्टादशोद्देशकः ॥

सप्तदशोद्देशकं व्याख्याय तदनु अवसरप्राप्तोऽष्टादशोद्देशकः प्रारभ्यते, अथास्याष्टादशोद्देशकादिसूत्रस्य सप्तदशोद्देशकान्तिमसूत्रेण सह कः सम्बन्धः? इति चेदत्राह भाष्यकारः—

भाष्यम्— सद्दस्स सवणट्ठाए, गमणं दुविहं भवे ।
जलेण थलमग्गेण जलेणेत्थ निसिज्झइ ॥

छाया – शब्दस्य श्रवणार्थाय गमनं द्विविधं भवेत् ।
जलेन स्थलमार्गेण जलेनात्र निषिध्यते ॥

अवचूरिः – सप्तदशोद्देशके शब्दस्य श्रवणार्थाय ततविततशुषिरादिवादित्राणां तथा अनेकेषां विविधशब्दानां श्रवणार्थाय, तत्र स्थलविशेषे 'ततविततशुषिरादिवादित्राणां मनोहरशब्दोऽवश्यमेव श्रोतव्यः' इत्येवं प्रकारेण मनसा निश्चयं करोति, तच्छ्रवणं च शब्दस्थानमगत्वा असंभवि इति मत्वा अवश्यमेव गमनं करिष्यति, तद् गमनं द्विविधं–द्विप्रकारकं भवेत् एकं गमनं जलेन-जलमार्गेण द्वितीयं च गमनं स्थलमार्गेण । तत्र पूर्वं शब्दश्रवणार्थं स्थलमार्गस्य निषेधः कृतः । जलमार्गेण गमनं तु नावमाश्रित्य भवतीति नौकाविषयको निषेधोऽस्मिन् उद्देशके करिष्यते, अयमेव सम्बन्धः पूर्वापरोद्देशकसूत्रयोर्भवतीति, तदनेन संबन्धेन आयातस्यास्याष्टादशोद्देशकस्येदं प्रथमं सूत्रम्—

**सूत्रम्—जे भिक्खू अणट्ठाए णावं दूरूहइ दूरूहंतं वा साइज्जइ ॥**

छाया यो भिक्षुः अनर्थाय नावं दूरोहति दूरोहन्तं वा स्वदते ॥ सू० १ ॥

चूर्णी –'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'अणट्ठाए' अनर्थाय तत्र न अर्थाय इति अनर्थाय अत्रार्थशब्दः प्रयोजनार्थद्योतकस्तथा च प्रयोजनमन्तरेणैव इत्यर्थः । अथवा–अनर्थाय–स्वेष्टसिद्धेर्विघातकाय साधूनामिष्टं मोक्षप्राप्तये संयमाराधनम्, नहि संयमाराधनमकृत्वा कोऽपि मोक्षभागी संभवति 'ज्ञानदर्शनचारित्रतपांसि मोक्षमार्गः' इति नियमात् नावादिना जलसंतरणेऽवश्यं षट्कायजीवानामतिपातो भवेत् ततश्च संयमो विराधितो भवति ततः 'अणट्ठाए' अनर्थाय येन संयमविराधना संपद्यते सोऽनर्थस्तस्मै, अथवा नञ्-शब्दोऽत्र अल्पार्थकस्तेन अनर्थाय अल्पप्रयोजनाय संयमसम्बन्धिगाढाऽऽगाढकारणमन्तरेण साधोर्नावारोहणं शास्त्रे निषिद्धम्, ततो यो गाढागाढकारणमन्तरेण 'णावं' नावं नौकां नद्यादिजलाशयस्य पारगमनाय 'दूरूहइ' दूरोहति नौकायामधिरोहणं करोति तथा 'दूरूहंतं वा

साइज्जइ' दुरोहन्त वा स्वदते, यो हि श्रमण. जलाशयपारगमनाय नौकामधिरोहति तमनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्ति ॥

अत्राह भाष्यकार.–

भाष्यम्––'णावारोहण साहुस्स अणट्ठाए असेयसे ।
कोउहल्लेण नारोहे, नन्नत्थागाढकारणा ॥१॥

छाया––नौकाधिरोहणं साधोरनर्थाय अश्रेयसे ।
कौतूहलेन नारोहेत्, अन्यत्रागाढकारणात् ॥१॥

अवचूरिः––'साहुस्स' साधो नावारोहण मनर्थाय–अश्रेयसे अकल्याणाय च भवति तत्र षट्कायविराधनाया अवश्यम्भावात्, अथवा अनर्थाय–अप्रयोजनाय प्रयोजन विना साधोर्नावारोहणम् अश्रेयसे–अमोक्षाय समाराय भवत्येव अत कौतूहलेन शब्दश्रवणादिकुतूहलमाश्रित्य साधु' कदापि नाव नारोहेत्, कदेत्याह–आगाढकारणादन्यत्र–गाढागाढकरण विना नारोहेत् । तत्र गाढागाढकारण च गुरुसेवाग्लानवैयावृत्यादिकम् ॥ सू० १ ॥

सूत्रम्––जे भिक्खू णावं किणइ किणावेइ कीयं आहट्टु दिज्जमाणं दुरूहइ दुरूहंतं वा साइज्जइ ॥ सू० २ ॥

छाया––यो भिक्षुः नौका क्रीणाति–क्रापयति क्रीतमाहृत्य दीयमान दूरोहति दूरोहन्तं वा स्वदते ॥ सू० २ ॥

चूर्णी–– 'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद्भिक्षु' श्रमण श्रमणी वा 'णावंकिणइ' नौकां क्रीणाति–मूल्यं दत्वा स्वीकरोति 'किणावेइ' क्रापयति -मूल्यं दत्वा अन्यद्वारा नौकाया' क्रयणं कारयति, तथा 'कीयं आहट्टु दिज्जमाणं' क्रीतमाहृत्य दीयमानम् अन्य' कोऽपि मूल्य दत्वा नौकां क्रीणाति, स च क्रीत्वा अभिमुखम् आहृत्य श्रमणाय ददाति तत् क्रीतमाहृत्य दीयमानमिति कथ्यते, क्रयक्रीतामभिमुखमानीय दीयमानां नौका श्रमणः श्रमणी वा 'दुरूहइ' दूरोहति -तदधिरोहणं करोति, तथा 'दुरूहंत वा साइज्जइ' दूरोहन्त वा–नौकाया उपरि अधिरोहणं कुर्वन्तं श्रमणान्तरं वा स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥सू० २॥

सूत्रम्––एवं जा चउद्दसमे उद्देसे पडिग्गहगमो सो णेयव्वो जाव अच्छेज्जं अणिसिट्ठं अभिहडमाहट्टु दिज्जमाणं दूरूहइ दूरूहंतं वा साइज्जइ ॥ सू० ३–५ ॥

छाया—एवं यः चतुर्दशे उद्देशे प्रतिग्रहगमः स ज्ञातव्यः यावत् आछेद्यम् अनिसृष्टम् अभिहृतम् आहृत्य दीयमानं दूरोहति दूरोहन्तं वा स्वदते ॥सू० ३॥

चूर्णी—'एवं' इत्यादि । 'एवं' एवम्–अनेन प्रकारेण नौक्रीणनरीत्या 'जो चउद्दसमे उद्देसे पडिग्गहगमो' यश्चतुर्दशे उद्देशे प्रतिग्रहगमः पात्रग्रहणगमकः प्रोक्तः 'से णेयव्वो' सोऽत्र नौकाविषये ज्ञातव्य -वक्तव्यः, कियत्पर्यन्तमित्याह–'जाव' यावत् 'अच्छेज्जं' आच्छेद्यां कस्यापि हस्तादाच्छिद्य स्थापितां 'अणिसिट्ठं' अनिसृष्टां नौकां स्वामिनाऽदत्तां तत्स्वामिन अज्ञानान्तरेण गृहीताम् 'अभिहडं' अभिहृतां–स्थानान्तरात् आनीताम् 'आहट्टु दिज्जमाणं' आहृत्य–संमुखमानीय दीयमानां नावम् 'दूरूहइ' दूरोहति–आरोहति 'दुरूहंतं वा साइज्जइ' दूरोहन्तं–नावमधिरोहन्तं श्रमणान्तरं स्वदते स प्रायश्चित्तभागी भवति । अत्र सूत्रे 'जाव' इति यावत्पदेन "जे भिक्खू नावं पामिच्चेइ नावं परियट्टेइ" इति सूत्रद्वय संग्राह्यम् अर्थस्तत्रैव चतुर्दशोद्देके द्रष्टव्य इति । विशेषस्तावदेतावानेव यत्–चतुर्दशोद्देशके प्रतिग्रहशब्दः प्रोक्त., अत्र तु 'नौ' शब्द प्रयोज्य आलापका विधातव्या इति ॥

अत्राह भाष्यकारः—

भाष्यम्—'जो कीणइ सयं णावं, पामिच्चाइयमारुहे ।
आणाभंगाइ पावेइ, मिच्छत्तं च विराहणं ॥

छाया—यः क्रीणाति स्वयं नौकां प्रामित्यादिकामारोहेत् ।
आज्ञाभङ्गादि प्राप्नोति मिथ्यात्वं च विराधनम् ॥

अवचूरिः—यो भिक्षुः श्रमणः श्रमणी वा स्वयमेव नौका क्रीणाति–मूल्यसमर्पणेन स्वात्माधीनां करोति अन्यद्वारा वा नौकायाः क्रयणं कारयति तथा प्रामित्यादिदोषदुष्टां नावमारोहेत् पूर्वोक्तप्रकारां नौकामधिरोहति, आरोहन्तं नौकायामधिरोहणं कुर्वन्तं श्रमणान्तरमनुमोदते, स आज्ञाभङ्गमनवस्थां मिथ्यात्वं संयमविराधनमात्मविराधन च प्राप्नोतीति भाष्यार्थः ॥ सू० ३–५ ॥

## सूत्रम्—जे भिक्खू थलाओ नावं जले ओक्कसावेइ ओक्कसावेंतं वा साइज्जइ ॥ सू० ६ ॥

छाया—यो भिक्षुः स्थलात् नावं जले अवकर्षयति अवकर्षयन्तं वा स्वदते ॥सू० ६॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः 'थलाओ' स्थलात्–जलपार्श्वस्थभूमिभागात् तटादित्यर्थः 'णावं' नावम्–नौकाम् 'जले ओक्कसावेइ' जले–नद्यादि-जलप्रवाहे अवकर्षयति–अवतारयति स्थले विद्यमानां नौकां जले करोति–कारयति वा तथा

'ओपक्कसावेंतं वा साइज्जइ' अवकर्षयन्तं स्थलात् जले नौकामवतारयन्त श्रमणान्तरं स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ६ ॥

सूत्रम्—जे भिक्खू जलाओ नावं थले उक्कसावेइ उक्कसावेंतं वा साइज्जइ ॥ सू० ७॥

छाया—यो भिक्षुः जलात् नावं स्थले उत्कर्षयति उत्कर्षयन्तं वा स्वदते ॥सू० ७॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य. कश्चिद्भिक्षु 'जलाओ नावं थले उक्कसावेइ' जलात्–नद्यादिजलमध्यात् नौका स्थले उत्कर्षयति–जलस्था स्थले करोति परद्वारा वा कारयति जल सतरन्तीं नौका जलात् निष्कास्य भूमिभागे स्थापयतीत्यर्थ, तथा–'उक्कसावेंतं वा साइज्जइ' उत्कर्षयन्तं–जलात् नौका स्थले कुर्वन्त श्रमणान्तर स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ७॥

सूत्रम्—जे भिक्खू पुण्णं णावं उस्सिंचइ उस्सिंचंतं वा साइज्जइ ॥

छाया—यो भिक्षुः पूर्णां नावमुत्सिञ्चति उत्सिञ्चन्तं वा स्वदते ॥सू० ८॥

चूर्णी 'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद्भिक्षु. 'पुण्णं नावं' पूर्णां जलपूर्णां नौकाम् सच्छिद्रत्वाज्जलेन परिपूर्णां नाव य श्रमण. श्रमणी वा 'उस्सिंचइ' उत्सिञ्चति नौकाया स्थित जलम् अञ्जल्यादिना अन्येन केनापि साधनेन बहिर्निष्कासयति तथा 'उस्सिंचंतं वा साइज्जइ' उत्सिञ्चन्तं वा स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ८॥

सूत्रम्—जे भिक्खू विखुण्णं णावं उप्पिलावेइ उप्पिलावेंतं वा साइज्जइ ॥ सू० ९ ॥

छाया—यो भिक्षुर्विक्षुण्णां नावम् उत्प्लावयति उत्प्लावयन्त वा स्वदते ॥ सू० ७ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद्भिक्षु श्रमण श्रमणी वा 'विखुण्णं' विक्षुण्णाम्–जले पङ्के वा मग्नाम् नौकाम् 'उप्पिलावेइ' उत्प्लावयति नौकां जलात् पङ्काद्वा उपरि उत्थापयति स्वय परद्वारा वा तथा–'उप्पिलावेंतं वा साइज्जइ' उत्प्लावयन्तं वा स्वदते स प्रायश्चित्तभागी भवति ॥ सू० ९॥

सूत्रम्—जे भिक्खू पडिणावियं कट्टु णावाए दूरूहइ दूरूहंतं वा साइज्जइ ॥ सू० १० ॥

छाया—यो भिक्षु. प्रतिनाविकं कृत्वा नौकायां दूरोहति दूरोहन्तं स्वदते ॥ सू० १० ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'पडिणावियं' प्रतिनाविकम् एकं नाविकं प्रति अन्यो नाविकः प्रतिनाविकस्तम् । अयं भावः—अस्मिन् तटे स्थितः सन् साधु कश्चिन्नाविकं वदति यत् नद्यादेरर्धभागेऽन्यो नाविक आगत्य मां नेष्यति अतो नद्यादेरर्धभागपर्यन्त मां त्वं नय, इत्युक्त्वा नाविको निर्णीयते स प्रतिनाविक कथ्यते, एतादृशं प्रतिनाविकम् 'कट्टु' कृत्वा 'नावाए' नावि-नौकायाम् 'दूरूहइ' दूरोहति—अधिरोहति, अन्यं वा दूरोहयति तथा 'दूरूहंतं' दूरोहन्तम्—अधिरोहन्तं श्रमणान्तरं 'साइज्जइ' स्वदते—अनुमोदते स पार्याश्चित्तभागो भवति ॥सू० १० ॥

## सूत्रम्—भिक्खू उड्ढगामिणिं वा णावं अहोगामिणिं वा णावं दूरूहइ दूरूहंतं वा साइज्जइ ॥ सू० ११ ॥

छाया यो भिक्षुरूर्ध्वगामिनीं वा नावमधोगामिनीं वा नावं दूरोहति दूरोहन्त वा स्वदते ॥ सू० ११ ॥

चूर्णी— 'जे भिक्खू इत्यादि । 'जे भिक्खू' य कश्चिद्भिक्षु श्रमण श्रमणी वा 'उड्ढगामिणिं वा नावं' ऊर्ध्वगामिनीं वा नावम् स्रोतसः समुखं गच्छतीं नौकां या खलु नद्यादौ वर्तमाना नौका प्रतिस्रोत स्रोतोऽभिमुख प्रयाति यस्मात् प्रदेशात् नदी आगच्छति तमेव प्रदेशं प्रति या गच्छति सा ऊर्ध्वगामिनी नौका कथ्यते, ता तादृशीं नौकाम् तथा 'अहोगामिणिं वा णाव दूरूहइ' अधोगामिनीं वा नाव दूरोहति, या जलप्रवाहेण सह जलप्रवाहानुसारेण गच्छति साऽधोगामिनी नौका कथ्यते, तामधोगामिनीं जलस्रोतोऽनुगामिनीं नौकां दूरोहति; तादृश्या नौकाया उपरि अधिरोहणं करोति कारयति वा तथा 'दूरूहंतं वा साइज्जइ' दूरोहन्तं वा श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ११ ॥

## सूत्रम्—जे भिक्खू जोयणवेलागामिणिं वा अद्धजोयणवेलागामिणिं वा णावं दूरूहइ दूरूहंतं वा साइज्जइ ॥ सू० १२ ॥

छाया—यो भिक्षुः योजनवेलागामिनीं वा अर्द्धयोजनवेलागामिनीं वा नावं दूरोहति, दूरोहन्तं वा स्वदते ॥ सू० १२ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षु श्रमणः श्रमणी वा 'जोयणवेलागामिणिं वा णावं' योजनवेलागामिनीं वा नावम् योजनप्रमाणां वेला तट गन्तु शीलं यस्याः सा योजनवेलागामिनीं योजनपरिमितजलमर्यादोल्लङ्घिनीत्यर्थः, तां योजनवेलागामिनीं नौकाम् 'अद्धयोजणवेलागामिणिं वा णावं' अर्द्धयोजनवेलागामिनीं वा नौकाम्- अर्द्धयोजनपरिमित-

जलमर्यादायां गमनशीलाम् नावम् नौकाम् 'दूरूहइ' दुरोहति तादृशनौकायामधिरोहणं करोति कारयति वा तथा 'दुरूहंतं वा साइज्जइ' दुरोहन्तं वा नौकामधिरोहन्तम् अधिरोहणं कुर्वन्तं श्रमणान्तरं स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥सू० १२॥

सूत्रम्—जे भिक्खू णावं आकसावेइ खेवावेइ रज्जुणा कट्ठेणं वा कड्ढावेइ आकसावंतं वा खेवावंतं वा कड्ढावंतं वा साइज्जइ ॥ सू० १३ ॥

छाया—यो भिक्षुः नावमाकर्षयति क्षेपयति रज्ज्वा काष्ठेन वा कर्षयति, आकर्षयन्तं वा क्षेपयन्तं वा कर्षयन्तं वा स्वदते ॥ सू० १३ ॥

चूर्णी— 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'णावं' नावं नौका जले संतरन्तीं जले निमज्जन्तीं वा 'आकसावेइ' आकर्षयति–समीपे आनयितुं प्रेरयति 'खेवावेइ' क्षेपयति चालनकाष्ठेन अन्यद्वारा चालयति, तथा 'रज्जुणा' रज्ज्वा 'कट्ठेण वा' काष्ठेन वा यष्ट्यादिना 'कड्ढावेइ' कर्षयति–जलाद्बहिर्निष्कासयति, एवम् आकर्षयन्तं क्षेपयन्तं रज्ज्वा काष्ठेन वा नावं कर्षयन्तं श्रमणान्तरम् 'साइज्जइ' स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १३ ॥

सूत्रम्—जे भिक्खू णावं अलित्तएण वा दंडेण वा पप्फिडिएण वा वंसेण वा वलेण वा वाहेइ वाहेंतं वा साइज्जइ ॥ सू० १४ ॥

छाया—यो भिक्षुः अरित्रकेण वा दण्डेन वा पप्फिडियण वा वंशेन वा वलेन वा वाहयति वाहयन्तं वा स्वदते ॥ सू० १४ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'णावं' नावम्–नौकाम् 'अलित्तएण वा' अरित्रकेण वा–नौचालकदण्डविशेषेण 'दंडेण वा' दण्डेन वा सामान्यदण्डविशेषेण 'पप्फिडिएण वा' 'पप्फिडिय' इति नौचालकोपकरणवाचको देशी शब्द तेन वा 'वंसेण वा' वंशेन वा–वशयष्ट्या वा 'वलेन वा' वला इति प्रसिद्धेन पृथुलकाष्ठेन वा, एतैरुपर्युक्तनौकाचालकसाधनैः यः श्रमणः श्रमणी वा नौकाम् 'वाहेइ' वाहयति चालयति स्वयं परद्वारा वा चालयति तथा 'वाहेंतं वा साइज्जइ' वाहयन्तं वा नौकां चालयन्तं वा श्रमणान्तरं स्वदते–अनुमोदते स 'प्रायश्चितभागी' भवतीति ॥ सू० १४ ॥

सूत्रम्—जे भिक्खू णावाउदगभायणेण वा पडिग्गहेण वा मत्तएण वा णावाउस्सिचणेण वा णावं उस्सिचइ उस्सिचंतं वा साइज्जइ ॥

छाया—यो भिक्षुः नावुदकभाजनेन वा प्रतिग्रहेण वा मात्रकेण वा नावुत्सिञ्चनकेन वा नावम् उत्सिञ्चति-उत्सिञ्चन्तं वा स्वदते ॥ सू० १५ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'णावाउदगभायणेण वा' नावुदकभाजनेन-नौकोदकभाजनेन, नौकासंबन्धिनोदकपात्रेण जलनिःसारकपात्रेण 'पडिग्गहेण वा' प्रतिग्रहेण-स्वकीयाहारपात्रेण वा 'मत्तएण वा' मात्रकेन-स्वकीयलघुपात्रेण वा 'णावाउस्सिंचणेण वा' नावुत्सिञ्चनकेन वा-नौकोत्सिञ्चनकेन वा येन पात्रेण नौकास्थितं जलं बहिर्निष्कास्यते तादृशपात्रेण 'णावं' नावं नौकाम् 'उस्सिंचइ' उत्सिञ्चति-नौकास्थं जलं नौकातो बहिर्निष्कासयति तथा 'उस्सिंचंतं वा' उत्सिञ्चन्तं वा श्रमणान्तरम् 'साइज्जइ' स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १५ ॥

**सूत्रम्—जे भिक्खू नावंउत्तिंगेण उदगं आसवमाणं उवरुवरिं च कज्जलावेमाणं पेहाए हत्थेण वा पाएण वा आसत्थपत्तेण वा कुसपत्तेण वा मट्टियाए वा चेलेण वा चेलकण्णेण वा पडिपिहेइ पडिपिहेंतं वा साइज्जइ ॥ सू० १६ ॥**

छाया—यो भिक्षुर्नावुत्तिङ्गेन उदकमास्रवन्तम् उपर्युपरि च कज्जलावमानां प्रेक्ष्य हस्तेन वा पादेन वा अश्वत्थपत्रेण वा मृत्तिकया वा चेलेन वा चेलकर्णेन वा परिपिदधाति प्रतिपिदधन्तं वा स्वदते ॥ सू० १६ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु -श्रमण. श्रमणी वा 'णावं उत्तिंगेण' नावुत्तिङ्गेन नौबिलेन नौछिद्रेणेत्यर्थ 'उदगं आसवमाणं' उदकम् आस्रवन्तम् छिद्रेण नौकायां जलं प्रविशन्तं 'उवरुवरिं च कज्जलावेमाणं' उपर्युपरीति वेगपूर्वकं कज्जलावमानां ब्रुडन्तीं प्लाव्यमानामित्यर्थः 'ब्रुड' कज्जलाव' इति वचनात् 'पेहाए' प्रेक्ष्य-दृष्ट्वा तन्निरोधार्थम् 'हत्थेण वा' हस्तेन वा 'पाएण वा' पादेन वा 'आसत्थपत्तेण वा' अश्वत्थपत्रेण वा पिप्पलपत्रेण वा 'कुसपत्तेण वा' कुशपत्रेण वा दर्भसमूहेन वा 'मट्टियाए वा' मृत्तिकया वा 'चेलेण वा' चेलेन वस्त्रेण वा 'चेलकण्णेण वा' चेलकर्णेन वा वस्त्रखण्डेन वस्त्रान्तिमभागेन वा 'पडिपिहेइ' प्रतिपिदधाति-छिद्रस्य मुखं निरुणद्धि अन्येन वा छिद्रनिरोधं कारयति 'पडिपिहेंतं वा साइज्जइ' परिपिदधतं वा छिद्रेण नौकाया प्रविशतो जलस्य हस्तादिना निरोधं कुर्वन्तं श्रमणान्तरं यः स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १६ ॥

**सूत्रम्—जे भिक्खू णावागओ णावागयस्स असणं वा पाणं वा खाइमं वा साइमं वा पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० १७॥**

छाया—यो भिक्षुर्नौगतो नौगतस्याशनं वा पानं वा खाद्यं वा स्वाद्यं वा प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० १७ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'णावागओ' स्वयं नौकास्थितः सन् 'णावागयस्स' नौगतस्य नौकायामेव स्थितस्य दातुः 'असणं वा' अशनं वा 'पाणं वा' पानं वा 'खाइमं वा' खाद्यं वा 'साइमं वा' स्वाद्यं वा' चतुर्विधमाहारजातम् 'पडिग्गाहेइ' प्रतिगृह्णाति स्वीकरोति, अयं भावः—नौकायामेव साधुर्भवेत् तथा नौकायामेवोपविष्टः श्रावकोऽपि भवेत् तत्र नौकास्थितः श्रमणः श्रमणी वा नौकामध्यस्थितदातुः सम्बन्धि अशनादिकं स्वीकरोतीति, तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं श्रमणान्तरं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १७ ॥

**सूत्रम्—एवं एएणं गमेणं णावागओ जलगयस्स० ॥ सू० १८॥ णावागओ पंकगयस्स० ॥ सू० १९ ॥ णावागओ थलगयस्स० ॥ सू० २०॥ एवं जलगएणवि चत्तारि ॥ सू० २४॥ पंकगएणवि चत्तारि ॥ सू० २८ ॥ थलगएणवि चत्तारि ॥ सू० ३२ ॥**

छाया—एवम् अनेन गमेन नौगतो जलगतस्य० ॥ सू० १८॥ नौगतः पङ्कगतस्य ॥ सू० १९ ॥ नौगतः स्थलगतस्य० ॥ सू० २० ॥ एवं जलगतेनापि चत्वारि० ॥ सू० २४॥ पङ्कगतेनापि चत्वारि० ॥ सू० २८॥ स्थलगतेनापि चत्वारि० ॥ सू० ३२ ॥

चूर्णि—'एवं एएणं गमेणं' एवम् अनेनैव प्रकारेण—अनयैव रीत्या एतेन गमेन अनेनैव आलापकप्रकारेण 'णावागओ जलगयस्स० ॥ सू० १॥ णावागओ पंकगयस्स ॥सू० २॥ णावागओ थलगयस्स० ॥ सू० ३॥ इत्यादीनि त्रीणि सूत्राणि, एकं च पूर्वोक्तम् 'णावागओ णावागयस्स' इत्यधिकम्—एवं चत्वारि सूत्राणि नौकागतसम्बन्धीनि वाच्यानि ॥सू०२०॥एवम्—अनेनैव प्रकारेण 'जलगएणवि चत्तारि' जलगतेनापि चत्वारि, चत्वारि सूत्राणि तथाहि-'जलगओ नावागयस्स' ॥सू०१॥ 'जलगओ जलगयस्स०॥सू०२॥ 'जलगओ पंकगयस्स' ॥ सू० ३॥ 'जलगओ थलगयस्स०' ॥ सू० ४ ॥ इत्यादीनि चत्वारि सूत्राणि ४ 'पंकगएण वि चत्तारि' पङ्कगतेनापि चत्वारि सूत्राणि तथाहि— 'पंकगओ नावागयस्स०' ॥ सू० १॥ 'पंकगओ जलगयस्स०' ॥ सू० २॥ 'पंकगओ पंकगयस्स०' ॥ सू० ३ ॥ 'पंकगओ थलगयस्स०' ॥ सू० ४ ॥ इत्यादीनि चत्वारि सूत्राणि ४ । 'थलगएण वि चत्तारि' स्थलगतेनापि चत्वारि सूत्राणि, तथाहि—'थलगओ नावागयस्स०' ॥ सू० १ ॥ 'थलगओ जलगयस्स०' ॥ सू० २॥ 'थलगओ पंकगयस्स०' ॥ सू० ३ ॥ 'थलगओ थलगयस्स०' इत्यादीनि चत्वारि सूत्राणि

४, एवम् 'णावगओ जलगयस्स इत्यारम्य 'थलगओ थलगयस्स इति पर्यन्तानि पञ्चदशसूत्राणि 'णावागओ णावागयस्स इतिसूत्रवद् व्याख्येयानि भेदस्तावदेतावानेव, यत् स्व-स्वस्थानविपर्ययो यथायोगं कर्त्तव्य इति ॥३२॥

॥ नौका–जल–पङ्क–स्थलेति चतुर आश्रित्यात्र
षोडश भङ्गा भवन्ति, तत्प्रदर्शककोष्ठकमिदम् ॥

| भङ्गाः श्रमण· | दाता श्रावकादि· |
|---|---|
| १–नौकास्थित· साधु· | नौकास्थितस्य दातुः |
| २–नौकास्थित· साधुः | जले स्थितस्य दातुः |
| ३–नौकास्थित· साधुः | पङ्के स्थितस्य दातुः |
| ४–नौकास्थित· साधु | स्थले स्थितस्य दातुः |
| ५–जले स्थितः साधु | नौकास्थितस्य दातुः |
| ६–जले स्थितः साधु· | जले स्थितस्य दातुः |
| ७–जले स्थितः साधुः | पङ्के स्थितस्य दातुः |
| ८–जले स्थित. साधुः | स्थले स्थितस्य दातुः |
| ९–पङ्के स्थितः साधुः | नौकास्थितस्य दातुः |
| १०–पङ्के स्थित. साधु· | जले स्थितस्य दातुः |
| ११–पङ्के स्थितः साधुः | पङ्के स्थितस्य दातुः |
| १२-पङ्के स्थितः साधु· | स्थले स्थितस्य दातुः |
| १३–स्थले स्थितः साधुः | नौकास्थितस्य दातुः |
| १४–स्थले स्थितः साधुः | जले स्थितस्य दातुः |
| १५-स्थले स्थित· साधु· | पङ्के स्थितस्य दातु· |
| १६-स्थले स्थित साधु | स्थले स्थितस्य दातु· |

अत्राह भाष्यकार.—

सोलसाणं च भंगाणं, जम्हा कम्हा य गिण्हए।
असणाई च जो भिक्खू, आणाभंगाइ पावइ ॥

छाया—षोडशानां च भङ्गानां यस्मात् कस्माच्च गृह्णीयात्।
अशनादि च यो भिक्षुः, आज्ञाभङ्गादि प्राप्नोति ॥

अवचूरिः—य कश्चिद् भिक्षु श्रमणः श्रमणी वा षोडशानां च भङ्गानां मध्ये 'जे भिक्खू णावागओ णावागयस्स असणं ४ पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ' इत्यारभ्य 'जे भिक्खू थलगओ थलगयस्स असणं ४ पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ' एतत्पर्यन्तषोडशसूत्रप्रतिपादितषोडशभङ्गमध्यात् यस्मात् कस्माच्चिदपि भङ्गात् यस्मात्कस्माच्च कारणात् अशनादिकं चतुर्विधमाहारजातं गृह्णाति गृह्णन्तं वा अनुमोदते स आज्ञाभङ्गादिकान् दोषान् आज्ञाभङ्गानवस्थामिथ्यात्वसंयमात्मविराधनादिदोषान् प्राप्नोति, तस्याज्ञाभङ्गादिका दोषा भवन्तीत्यर्थः ॥ सू० ३२ ॥

**सूत्रम्—जे भिक्खू वत्थं किणइ किणावेइ कीयमाहट्टु दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० ३३ ॥**

छाया—यो भिक्षुर्वस्त्रं क्रीणाति क्रापयति क्रीतमाहृत्य दीयमानं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० ३३ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षुः श्रमण श्रमणी वा 'वत्थं' वस्त्रम् चोलपट्टकादिकं च 'किणइ' क्रीणाति–मूल्य दत्वा दापयित्वा वा स्वबुद्ध्या विविच्याऽऽपणादित क्रयणं करोति 'किणावेइ' क्रापयति स्वयमेव मूल्यं दत्वा परेण वा मूल्य दापयित्वा परद्वारा वस्त्रस्य क्रयणं कारयति, तथा, 'कीयमाहट्टु दिज्जमाणं पडिग्गाहेइ' क्रीतमाहृत्य दीयमानं प्रतिगृह्णाति, कोऽपि दाता वस्त्रं क्रीत्वा अभिमुखमागत्य श्रमणाय श्रमण्यै वा तादृशवस्त्रं ददाति, तच्च वस्त्र साधु स्वीकरोति तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा क्रयण कुर्वन्तं क्रापयन्त क्रीतमभिमुखमागत्य दीयमानं स्वीकुर्वन्त श्रमणान्तरं यः स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याऽऽज्ञाभङ्गादिका दोषा अपि भवन्ति ॥ सू० ३३ ॥

**सूत्रम्—एवं चउद्दसमे उद्देसए पडिग्गहे जो गमो भणिओ सो चेव इहंपि वत्थेण णेयव्वो जाव जे भिक्खू वत्थनीसाए वासावासं वसइ वसंतं वा साइज्जइ, णवरं कोरणं णत्थि ॥ सू० ३४–९० ॥**

छाया एवं चतुर्दशे उद्देशके प्रतिग्रहे यो गमो भणितः स एव इहापि वस्त्रेण ज्ञातव्यः । यावद् यो भिक्षुः वस्त्रनिश्रया वर्षावासं वसति वसन्तं वा स्वदते, नवरं कोरणं नास्ति ॥ सू० ३४–९० ॥

चूर्णी—'एवं' इत्यादि । 'एवं' एवम्- अनेन प्रकारेण यथा–'चउद्दसमे उद्देसए' चतुर्दशे उद्देशके 'जो गमो भणिओ' यो गमः–प्रतिग्रहविषयको एकोनषष्टि(५९)संख्यकसूत्रात्मको भणितः–कथितः 'सो चेव' स एव–तादृश एव गमः 'इहंपि' इहापि 'वत्थेण' वस्त्रेण सह

'णेयव्वो' ज्ञातव्य'—वस्त्रविषयको गमः सर्वोऽपि प्रतिग्रहगमवदेवात्र वक्तव्य' । कियत्पर्यन्तमित्याह—'जाव' इत्यादि । 'जाव' यावत् 'जे भिक्खू वत्थनीसाए वासावास वसइ' यो भिक्षुः वस्त्रनिश्रया वर्षावासं वसति, 'वसंतं वा साइज्जइ' वसन्तं वा स्वदते—अनुमोदते स प्रायश्चित्त-भागी भवतीति । प्रतिग्रहगमापेक्षया यद्वैलक्षण्यं तदाह—'णवरं इत्यादि । 'णवरं' नवर केवलं विशेष एतावानेव यत् प्रतिग्रहगमे पात्रस्य कोरणं तीक्ष्णलोहादिशलाकया आकृतिविशेषविलिखनं तद्विषयकमेकं पञ्चपञ्चाशत्तमं सूत्रं प्रोक्तम्, वस्त्रगमे 'कोरणं नत्थि' कोरणं नास्ति एकं पञ्चपञ्चाशत्तमं कोरणसूत्र न वक्तव्यमिति भाव' वस्त्रे कोरणासंभवादिति । अत्र चतुर्दशोद्देशकप्रथमसूत्रादारभ्य एकोनषष्टिसूत्रपर्यन्तानि कोरणसूत्रमन्तरेण अष्टपञ्चाशसंख्यकानि सूत्राणि अत्राष्टादशोद्देशके पठितव्यानीति भाव' ॥ सू० ३४-९०

अत्राह भाष्यकार'—

जो उ चउद्दसोद्देसे, गमो वुत्तो पडिग्गहे ।
कोरणेण विणा सव्वो, वत्थेऽट्ठारसमे मओ ॥

छाया — यस्तु चतुर्दशोद्देशे गमः प्रोक्तः प्रतिग्रहे ।
कोरणेन विना सर्वो वस्त्रेऽष्टादशके मतः ॥

अवचूरिः— एतस्यैव निशीथसूत्रस्य चतुर्दशोद्देशके प्रतिग्रहे पात्रं दारुपात्रमधिकृत्य यो गम' कृत स एव सर्व सपूर्णोऽपि कोरणसूत्रं परित्यज्य अष्टपञ्चाशत्सूत्रात्मकोऽत्र अष्टादशोद्देशके वस्त्रे वस्त्रमधिकृत्य मतो ज्ञातव्य । अय भाव —'जे भिक्खू वत्थं किणइ किणावेइ कीयं आहट्टु दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ' इत्यारभ्य 'जे भिक्खू वत्थनीसाए वासावासं वसइ वसंतं वा साइज्जइ' इतिपर्यन्तानि अष्टादशोद्देशकसूत्राणि चतुर्दशोद्देशके यथा व्याख्यातानि तेनैव प्रकारेण अत्रापि तेषा सूत्राणां व्याख्यानं कर्त्तव्यम्, उभयत्रैतावानेव भेदो यत् चतुर्दशोद्देशके पात्रं दारुकाद्यधिकृत्य सूत्रप्रणयनं तद्व्याख्यानं च कृतम्, अत्र अष्टादशोद्देशके तु पात्रस्थाने वस्त्रं निवेशयित्वा सूत्राणां प्रणयन तथा तद्व्याख्यान च कर्त्तव्यम्, विशेषजिघृक्षुभिश्चतुर्दशोद्देशकस्यैव अवलोकन कर्त्तव्यमिति ॥ सू० ३४-९० ॥

**सूत्रम्—तं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ॥ सू० ९१ ॥**

**॥ निसीहज्झयणे अट्ठारसमो उद्देसो समत्तो ॥ १८ ॥**

छाया—तत् सेवमान आपद्यते चातुर्मासिकं परिहारस्थानमुद्घातिकम् ॥१८॥

**॥ निशीथाध्ययने अष्टादशोद्देशकः समाप्तः ॥१८॥**

**चूर्णी**—'तं सेवमाणे'' इत्यादि। 'तं सेवमाणे' तत् अष्टादशोद्देशकोक्तं प्रायश्चित्त-स्थानम् **'सेवमाणे'** सेवमानः-तादृशप्रायश्चित्तस्थानस्य प्रतिसेवनां कुर्वन् श्रमणः श्रमणी वा **'आव-ज्जइ** आपद्यते-प्राप्नोति-**'चाउम्मासियं'** चातुर्मासिकम् **'परिहारट्ठाणं'** परिहारस्थानं-प्रायश्चि-त्तम् **'उग्घाइयं'** उद्घातिक लघुकम्, नौकारोहणत आरभ्य वस्त्रनिश्रया वर्षावासनिवासपर्यन्तो-क्तेषु अकृत्यस्थानेषु मध्यात् एकं द्विकम् अनेकं सर्वं वा पापस्थानं सेवमानः श्रमणः श्रमणी वा लघुचातुर्मासिकं प्रायश्चित्तं प्राप्नोति ॥ सू० ९१॥

इति श्री-विश्वविख्यात-जगद्वल्लभ-प्रसिद्धवाचक-पञ्चदशभाषाकलितललितकलापालापक-प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक-वादिमानमर्दक-श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-"जैनशास्त्राचार्य"-पदभूषित-कोल्हापुरराजगुरु-बालब्रह्मचारि-जैनाचार्य-जैन-धर्मदिवाकर-पूज्यश्री-घासीलालव्रति-विरचितायां "निशीथसूत्रस्य" चूर्णिभाष्यावचूरिरूपायां व्याख्यायाम् अष्टादशोद्देशकः समाप्तः ॥१८॥



## ॥ एकोनविंशतितमोद्देशकः ॥

अष्टादशोद्देशकं व्याख्याय अवसरप्राप्त एकोनविंशतितमोद्देशको व्याख्यायते। तत्र एकोनविंशतितमोद्देशकादिसूत्रस्य अष्टादशोद्देशकान्तिमसूत्रेण सह कः सम्बन्धः ? इत्यत्राह भाष्यकारः—

भाष्यम्—अट्ठारसे निसिद्धं जं, तं चेवेत्थ निसिज्झइ ।
पुव्वपच्छिमसुत्ताणं, संबंधो इणमो इहं ॥१॥

छाया—अष्टादशे निषिद्धं यत् तदेवात्र निषिध्यते ।
पूर्वपश्चिमसूत्रयोः सम्बन्धोऽयमिह ॥१॥

अवचूरिः—अष्टादशे उद्देशके यद् वस्तु निषिद्धं यस्य वस्तुनो निषेधः कृतः तदेव वस्तु अत्र एकोनविंशतितमे उद्देशके निषिध्यते, अयं भावः—यः श्रमणः श्रमणी वा ऋतुबद्धे वर्षावासे वा काले वस्त्रादिलाभभावनया निवासं करोति स श्रमणः श्रमणी वा यतनायुक्तोऽपि प्रमादं लभते, एवं प्रकारेण अष्टादशोद्देशकस्यान्तिमभागे प्रमाद एव प्रदर्शितः, अत्रापि एकोनविंशतितमोद्देशकस्यादिसूत्रे प्रमाद एव प्रदर्श्यते, अयमेव—एककार्यकारित्वरूप एव सम्बन्धः पूर्वपश्चिमसूत्रयोः अष्टादशोद्देशकान्तिमसूत्रैकोनविंशतितमोद्देशकादिसूत्रयोः सम्बन्धो भवति, तदनेन सम्बन्धेन आयातस्य प्रकृतोद्देशकप्रथमसूत्रस्य व्याख्यानं प्रस्तूयते। तत्र यद्यपि क्रयक्रीतादिवस्तुनो निराकरणं पूर्वं कृतमेव तथापि बहुमूल्यवस्तु साधोरकल्पनीयं भवतीति तद्ग्रहणे महान् दोष आपद्यते इति ज्ञापनाय पुनरप्याह—

**सूत्रम्—जे भिक्खू वियडं किणइ किणावेइ कीयं आहट्टु दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० १॥**

छाया—यो भिक्षुर्विकृतं क्रीणाति क्रापयति क्रीतमाहृत्य दीयमानं प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० १॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'वियडं किणइ' विकृतं क्रीणाति, तत्र विकृतं विकृत्या संपाद्यमानं व्यपगतजीवमचित्तं प्रपाणकादिकं वस्तु यत् साधूनां साध्वीनां वा ग्रहीतुं कल्पते तादृशमचित्तमपि प्रपाणकादि वस्तु बहुमूल्यं क्रीणाति—मूल्यं दत्वा स्वयमेव क्रयणं करोति मूल्यं दत्वा स्वीकरोतीत्यर्थः 'किणावेइ' क्रापयति, अचित्तबहुमूल्यप्रपाणकादि वस्तुनः परद्वारा मूल्यं दापयित्वा क्रयणं कारयति तथा 'कीयमाहट्टु दिज्जमाणं' क्रीतमाहृत्य दीयमानम् अन्यः—कोऽपि श्रमणार्थं मूल्यं दत्त्वा प्रपाणकादि क्रीणाति तद्वस्तु अभिमुख-

मागत्य श्रमणाय समर्पयति तादृशं दीयमानं वस्तु य श्रमण. श्रमणी वा 'पडिग्गाहेइ' प्रतिगृह्णाति-स्वीकरोति तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदते-अनुमोदते स प्रायश्चित्त-भागी भवति ॥ सू० १ ॥

सूत्रम्—जे भिक्खू वियडं पामिच्चेइ पामिच्चावेइ पामिच्चं आहट्टु दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा ॥ सू० २॥

छाया– यो भिक्षु विकृत प्रामित्यति प्रामित्ययति प्रामित्यमाहृत्य दीयमानं प्रति-गृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० २ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद् भिक्षु. श्रमण. श्रमणी वा 'वियडं' विकृत-बहुमूल्यमचित्तं श्रमणाना श्रमणीना वा कल्पनीय प्रपाणकादिकं 'पामि-च्चेइ'-प्रामित्यति प्रतिप्रदानप्रतिज्ञया ग्रहणं करोति उद्धाररूपेण गृह्णातीत्यर्थ 'पामिच्चावेइ' प्रामित्ययति-उद्धाररूपेण परद्वारा ग्रहणं कारयति तथा 'पामिच्च आहट्टु दिज्जमाणं पडिग्गा-हेइ' प्रामित्यमाहृत्य दीयमान प्रतिगृह्णाति तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २ ॥

सूत्रम्—जे भिक्खू वियडं परियट्टेइ परियट्टावेइ परियट्टियं आहट्टु दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० ३ ॥

छाया—यो भिक्षु विकृत परिवर्त्तते परिवर्तयति परिवर्त्तितमाहृत्य दीयमानं प्रति गृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥ सू० ३ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षु श्रमण श्रमणी वा 'वियडं' विकृतमचित्तं व्यपगतजीवम् द्राक्षासवादिप्रपाणकं बहुमूल्यम् 'परियट्टेइ' परिवर्तते, तत्र परिवर्तनं परावर्त्तनम् स्वकीयाशनवस्त्रादेरन्यस्मै समर्पणम् अन्यस्य प्रपाणकादिकस्य स्वयं ग्रहणम्, स्वकीयमशनवस्त्रादिकमन्यस्मै ददाति अन्यस्य प्रपाणकादि द्रवद्रव्यं स्वयं गृह्णाति एवं परिवर्त्तनं करोति 'परियट्टावेइ' परिवर्त्तयति परद्वारा परावर्तन कारयति तथा 'परियट्टियं आहट्टु-दिज्जमाणं पडिग्गाहेइ' परिवर्त्तितमाहृत्य दीयमानं प्रतिगृह्णाति, अन्य कोऽपि समीचीनाशन-वस्त्रादीनां परावर्तनं कृत्वा तादृश प्रपाणकादिवस्तुजातं गृहीत्वा श्रमणाय ददाति तादृशं दीयमान तत् प्रपाणकादिकं यः श्रमणः श्रमणी वा प्रतिगृह्णाति स्वीकरोति स्वीकारयति वा तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा परावर्त्तिताचित्तबहुमूल्यद्रवपदार्थस्य ग्रहणं कुर्वन्तं श्रमणान्तरं यः स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ३ ॥

**सूत्रम्—जे भिक्खू अच्छेज्जं अणिसिट्ठं अभिहडं आहट्टु दिज्जमाणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० ४ ॥**

छाया – यो भिक्षुराच्छेद्यमनिसृष्टमभिहृतमाहृत्य दीयमानं प्रतिगृह्णाति, प्रतिगृह्णन्तं वा स्वदते ॥सू० ४ ॥

चूर्णी— 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'अच्छेज्जं' आच्छेद्यं बलात्कारपूर्वकं गृहीतम् १, 'अणिसिट्ठं' अनिसृष्टम् वस्तुस्वामिनमननुज्ञाप्य गृहीतं यत् तत् अनिसृष्टम् २, 'अभिहडं आहट्टु' अभिहृतम्–अन्यप्रदेशादानीतं संमुखमागत्य 'दिज्जमाणं' दीयमानम् 'पडिग्गाहेइ' प्रतिगृह्णाति–परेण वा प्रतिग्राहयति 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्तं वा स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥

अत्राह भाष्यकारः—

वियडं बहुमुल्लं जं, कीयाइभेयगं जई ।
गिण्हेइ मोहओ जो उ, आणाभंगाइ पावई ॥१॥

छाया — विकृतं बहुमूल्यं यत् क्रीतादिभेदकं यतिः ।
गृह्णाति मोहतो यस्तु आज्ञाभङ्गादि प्राप्नोति ॥१ ॥

अवचूरिः— यः कश्चित् यतिः श्रमणः श्रमणी वा मोहतो–मोहनीयकर्मोदयात् विकृतं बहुमूल्यं क्रीतादिभेदभिन्नम् आदिशब्देन प्रामित्यमाच्छेद्यमनिसृष्टमभिहृतमित्येवंभेदयुक्तं गृह्णाति, तादृशस्य ग्रहणं स्वयं कुर्यात् कारयेद्वा तत् क्रीतादिकमभिमुखमानीय दीयमानं स्वीकुर्यात् स्वीकुर्वन्तमनुमोदते तथा अशनवस्त्रादिना परिवर्तनं करोति कारयति वा तथा परेण दीयमानं परिवर्तितद्रव्यग्रहणं कुर्वाणं श्रमणान्तरं स्वदते–अनुमोदते स आज्ञाभङ्गादिकं मिथ्यात्वं संयमविराधनमात्मविराधनं च प्राप्नोति तस्मात् क्रीतादिभेदयुक्तस्य द्रव्यस्य ग्रहणं स्वयं न कुर्यात् न वा कारयेत् न वा कुर्वन्तं श्रमणान्तरं कमपि अनुमोदयेदिति ॥ सू० ४ ॥

**सूत्रम्—जे भिक्खू गिलाणस्स अट्ठाए परं तिण्हं वियडदत्तीणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० ५ ॥**

छाया—यो भिक्षुर्ग्लानस्यार्थाय परं तिसृणां विकृतदत्तीनां प्रतिगृह्णाति प्रतिगृह्णन्तं वा स्वदते ॥सू० ५॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा 'गिलाणस्स अट्ठाए' ग्लानस्यार्थाय, तत्र ग्लानः–सद्योघातिकुक्षिशूलादिरोगातङ्कैः परिपीडितः,

तस्य तादृशस्य ग्लानस्य अर्थाय प्रयोजनाय गाढागाढकारणमाश्रित्येत्यर्थः. यदि विकृतदत्तेर्ग्रहणावश्यकता लक्ष्येत तदा एकद्वित्रिदत्तीर्ग्रहीतुं कल्पते नाधिकमित्याह–**'परं तिण्हं'** परं तिसृणाम् **'वियडदत्तीण'** विकृतदत्तीनाम् तत्र विकृतं-द्राक्षादिविकृत्या सम्पाद्यमानं विकृतिकारकत्वाद् विकृतं तस्य विकृतस्य तिसृभ्यो दत्तिभ्योऽधिकम् , तत्र दत्तिरिति अविच्छिन्नं पतन्ती द्रवद्रव्यधारा गृह्यते, तथा च विकृतानामचित्तबहुमूल्यप्रपाणकद्राक्षासवकुमार्यासवादीनाम् अन्येषां वा तथाविध द्रवपदार्थानां दत्तित्रयादधिकम् **'पडिग्गाहेइ'** प्रतिगृह्णाति ग्लानप्रयोजनमासाद्य दत्तित्रयादधिकं विकृतं स्वीकरोति. तथा–**'पडिग्गाहेंतं वा साइज्जइ'** प्रतिगृह्णन्तं वा ग्लानप्रयोजनेनापि दत्तित्रयादधिकं गृह्णन्त श्रमणान्तरं स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति।

नात्र विकृतशब्दस्य मद्यार्थः. किन्तु विकृतस्य मद्यार्थो निशीथचूर्ण्यां लभ्यते, तद्ग्रहणविधिश्च, तथाहि–तत्र भाष्ये यदुक्तम्–**"बितियपदं गेलण्णे, विज्जुवएसे तहेव सिक्खाए। एतेहिं कारणेहिं, जयणाए कप्पती घेत्तुं** ॥६०३४। (पृ० २२० सन्मतिज्ञानपीठ आगरामुद्रित)

तच्चूर्णिर्यथा –**'वेज्जोवए सेणगिलाणट्ठा घेप्पेज्ज कस्सति कोति वाही तेणेव उपसमति त्ति ण दोसो। गिलाणट्ठा वा वेज्जो आणितो तस्सट्ठा वा घिप्पेज्जा। पकप्पं वा सिक्खंतो गहण करेज्जा** ॥६०३४॥

**छाया**–द्वितीयपदम्–ग्लाने वैद्योपदेशे तथैव शिक्षायाम्। एतैः कारणै. यतनया कल्पते ग्रहीतुम् ॥६०३४॥

वैद्योपदेशेन ग्लानार्थं गृह्णीयात् कस्यापि कोऽपि व्याधिस्तेनैव उपशाम्यति इति न दोष। ग्लानार्थं वा वैद्य आनीत तस्यार्थं वा गृह्णीयात् , प्रकल्पं वा शिक्षन् ग्रहणं कुर्यात् ॥६०३४॥ इति तन्मोहविजृम्भितम्। साधूनां तस्य सर्वथा निषिद्धत्वात्।

अत्राह भाष्यकार.—

**भाष्यम्**—जो य भिक्खू गिलाणट्ठा, तिण्हं दत्तीण जं परं।
गिण्हेज्जा गाहएज्जा वा, आणाभंगाइ पावइ ॥१॥

**छाया**—यश्च भिक्षुर्ग्लानार्थं तिसृणां दत्तीनां यत् परम्।
गृह्णीयाद् ग्राहयेद् वा आज्ञाभङ्गादि प्राप्नोति ॥

**अवचूरिः**— यश्च कश्चिद्भिक्षुः श्रमण. श्रमणी वा ग्लानार्थं कुक्षिशूलादिरोगवतः श्रमणस्य प्रयोजनाय यदि ग्रहणीयमापद्येत तदा तिसृणां विकृतदत्तीनाम् अचित्तद्रवसम्बन्धिनीनां परं त्रयादधिकं गृह्णीयात्–स्वीकुर्यात् ग्राहयेद् वाऽन्यद्वारा स श्रमणः श्रमणी वा आज्ञाभङ्गादिकं मिथ्यात्वं संयमविराधनामात्मविराधनां च प्राप्नोति, तथा दत्तित्रयादधिकग्रहणे लोकानां तदुपरि अविश्वासः

स्यात् यथाऽयं प्रव्रजितो भूत्वाऽपि शास्त्राज्ञारहितदत्तित्रयादधिकं स्वीकरोतीति, तथा साधोर्लो-भदशाऽपि प्रकटा भवति, तथा—ग्लानस्यातिमात्राग्रहणेनाऽसह्यतया शरीरेऽन्यो रोगः समुत्पद्यते तेना-ऽऽत्मविराधना, शरीरे विषयविकारोऽपि समुत्पद्यते तेन संयमविराधनाऽवश्यम्भाविनी, लोके च तद्विषये शङ्का जायते यदयमेतादृशवस्तुजातमधिकं विना कारणं शरीरपुष्टयर्थं भुङ्क्ते तेन ज्ञायतेऽयं कामी कामविषयमपि सेवते इति प्रतिभाति, तथाऽयं दरिद्रकुलोत्पन्नोऽस्ति येनाऽय पूर्वं स्वगृहे नैतादृश वस्तु दृष्टवान् अतोऽधिकाहारलोलुपोऽस्तीत्येव लोके निन्दा प्रवचनहीलना चापि भवति, इत्यादिकारणात् ग्लानार्थमपि दत्तित्रयादधिकं किमपि एतादृशद्रववस्तु न स्वयं गृह्णीयात्, वा परान् ग्राहयेत् न, वा गृह्णन्तं श्रमणान्तरमनुमोदयेदिति ॥ सू० ५ ॥

## सूत्रम्—जे भिक्खू वियडं गहाय गामाणुगामं दूइज्जइ दूइज्जंतं वा साइज्जइ ॥सू० ६॥

छाया—यो भिक्षुर्विकृतं गृहीत्वा ग्रामानुग्रामं द्रवति द्रवन्तं वा स्वदते ॥ सू० ६॥

चूर्णी— 'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चिद्भिक्षु श्रमण श्रमणी वा 'वियडं गहाय' विकृतम्—अचित्तमपि प्रपाणकादिकम् एकस्मिन् ग्रामे गृहीत्वा अग्रे पानार्थं 'गामाणुगामं दूइज्जइ' ग्रामानुग्रामं द्रवति—एकस्माद्ग्रामात् क्रोशद्वयादूर्ध्वं ग्रामान्तरं गच्छति तथा 'दूइज्ज माणं वा साइज्जइ' द्रवन्तं-गच्छन्त वा स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥

अत्राह—भाष्यकार.—

भाष्यम्—कारणाकारणेहिं जो, गहाय वियडं जइ ।
गामाणुगामं दूइज्जा, आणाभंगाइ पावइ ॥१॥

छाया—कारणाकारणाभ्यां यः गृहीत्वा विकृतं यतिः ।
ग्रामानुग्रामं व्रजेत् आज्ञाभङ्गादि प्राप्नोति ॥१॥

अवचूरिः—कारणाकारणाभ्यां-कारणतोऽकारणतो वा यो यति.-साधुः अचित्तं विकृतं द्रवजातं प्रपाणकादिकं गृहीत्वा यत्र ऋतुबद्ध वसति वर्षावास वा वसति तस्मिन् ग्रामे एवमसति ग्रामे अचित्तं प्रपाणकादिक गृहीत्वा यदि यः श्रमणः श्रमणी वा ग्रामानुग्रामं व्रजेत्—क्रोशद्वया दूर्ध्वं गच्छेत्—स श्रमणः श्रमणी वा आज्ञाभङ्गादिदोषान् प्राप्नोति ॥ सू० ६ ॥

## सूत्रम्—जे भिक्खू वियडं गालेइ गालावेइ गालियं आहट्टु दिज्ज-माणं पडिग्गाहेइ पडिग्गाहेंतं वा साइज्जइ ॥ सू० ७॥

छाया—यो भिक्षुर्विकृतं गलति गालयति गालितमाहृत्य दीयमानं प्रतिगृह्णाति प्रति-गृह्णन्तं वा स्वदते ॥ सू० ७ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'विथडं' विकृतम् अचित्त गुडशर्करादिजलम् 'गालेइ' स्वयं गलति—वस्त्रेण निस्तारयति, वस्त्रपूतं करोतीत्यर्थः । यद्वा—विकृतम् अचित्तं गुडशर्करादिकं गलति-जले निक्षिप्य द्रवीकरोति गुडादिकं जलमिश्रितं करोतीत्यर्थ 'गालावेइ' गालयति परद्वारा तथाभूतं कारयति तथा- 'गालियं आहट्टु दिज्जमाणं' गालितमाहृत्य गलितं सत् समुखमागत्य दीयमानम् 'पडिग्गाहेइ' प्रतिगृह्णाति स्वीकरोति तथा 'पडिग्गाहेंतं वा साइज्जइ' प्रतिगृह्णन्त वा श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति, तथा तस्याऽऽज्ञाभङ्गादिका दोषा अपि भवन्ति ॥ सू० ७ ॥

सूत्रम्—जे भिक्खू चउहिं संझाहिं सज्झायं करेइ करेंतं वा साइज्जइ। तं जहा-पुव्वाए संझाए, पच्छिमाए संझाए, अवरण्हे, अद्धरत्ते ॥ सू० ८ ॥

छाया—यो भिक्षुश्चतसृषु संध्यासु स्वाध्याय करोति कुर्वन्तं वा स्वदते । तद्यथा-पूर्वस्यां सन्ध्यायां, पश्चिमायाम् सन्ध्यायाम्, अपराण्हे, अर्द्धरात्रे ॥ सू० ८ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जेभिक्खू'यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'चउहिं संझाहिं' चतसृषु संध्यासु 'सज्झायं' स्वाध्यायं सूत्रार्थतदुभयानां पठन, पठिताना च परिवर्त्तनम् 'करेइ' करोति तथा 'करेंतं वा साइज्जइ' कुर्वन्तं वा श्रमणान्तरं स्वदते—अनुमोदते । अथ कास्ताश्चतस्रः सन्ध्याः ? इत्याह—'तंजहा' इत्यादि । 'तंजहा' तद्यथा—'पुव्वाए संझाए' पूर्वस्यां सन्ध्यायाम्-पूर्वकालिकसंध्यायां सूर्योदयसमये सूर्योदयात्पूर्वं मुहूर्त्तार्द्धादारभ्य सूर्योदयानन्तरं मुहूर्त्तार्द्धं यावत् अस्वाध्यायकालः तस्मिन् अस्वाध्यायकाले, तथा 'पच्छिमाए संझाए' पश्चिमायां संध्यायां सूर्यास्तकाले एव सूर्यास्तात्पूर्वं मुहूर्त्तार्द्धादारभ्य सूर्यास्तानन्तरं मुहूर्त्तार्द्धं यावत् पश्चिमसन्ध्या, स च कालः अस्वाध्यायकाल तस्मिन् मुहूर्तैककाले 'अवरण्हे' अपराण्हे-मध्याह्नस्यार्धार्द्धमुहूर्त्तपूर्वापरकाले इत्यर्थ 'अद्धरत्ते' अर्द्धरात्रे निशीथे तत्राऽपि—अर्द्धार्द्धमुहूर्त्त-पूर्वापरकाले, एताश्चतस्र. सन्ध्या अस्वाध्यायकाल, एतासु अस्वाध्यायकालरूपासु चसृषु सन्ध्यासु यः श्रमणः श्रमणी वा सूत्रार्थतदुभयाना परिवर्तनलक्षणं स्वाध्यायं करोति तथा कुर्वन्तं स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ८ ॥

सूत्रम्—जे भिक्खू कालियसुयस्स परं तिण्हं पुच्छाणं पुच्छइ पुच्छंतं वा साइज्जइ ॥ सू० ९ ॥

छाया—यो भिक्षुः कालिकश्रुतस्य परं तिसृणां पृच्छानां पृच्छति पृच्छन्तं वा स्वदते ॥ सू० ९ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'कालियसुयस्स' कालिकश्रुतस्य, यत् श्रुतं काले नियतकाले एवाधीयते तत् कालिकश्रुतम्, यस्य श्रुतस्याध्ययनम् दिवसस्य रात्रेर्वा प्रत्येकं प्रथमान्तिमप्रहरे अस्वाध्यायकालं वर्जयित्वाऽध्ययनं क्रियते तत्कालिकश्रुतम् आचाराङ्गादिकम् तस्य, कालिकश्रुतस्य 'परं तिण्हं पुच्छाणं' परं तिसृणां पृच्छानाम् पृच्छात्रयादधिकम्, तत्र एकस्यां पृच्छायां सूत्रत्रयं भवति ततः पृच्छात्रये नव सूत्राणि भवन्ति ततश्च कालिकश्रुतस्य अकाले यत्र काले सूत्रं नाधीयते सोऽकालः, तस्मिन् नवसूत्रादधिकम् 'पुच्छइ' पृच्छति-पृच्छा करोति 'पुच्छंतं वा साइज्जइ' पृच्छन्तं वा श्रमणान्तरं स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ९ ॥

## सूत्रम्—जे भिक्खू दिट्ठिवायस्स परं सत्तण्हं पुच्छाणं पुच्छइ पुच्छंतं वा साइज्जइ ॥ सू० १० ॥

छाया—यो भिक्षुर्दृष्टिवादस्य परं सप्तानां पृच्छानां पृच्छति पृच्छन्तं वा स्वदते ॥ सू० १० ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'दिट्ठिवायस्स' दृष्टिवादस्य द्वादशमङ्ग दृष्टिवादस्तस्य 'परं सत्तण्हं पुच्छाणं पुच्छइ' परम्—अधिकं सप्तानां पृच्छानाम्—सप्तपृच्छातोऽधिकम् तत्र—कालिकश्रुते एकस्या पृच्छाया सूत्रत्रयं भवति, पृच्छात्रये च नव सूत्राणि भवन्ति, दृष्टिवादेऽपि एकस्या पृच्छायाम् सूत्रत्रय भवति सप्तपृच्छायां तु एकविंशतिः सूत्राणि भवन्ति ततश्च यथोक्तपृच्छातोऽधिकं यः श्रमणः श्रमणी वा आचार्यम् 'पुच्छइ' पृच्छति तथा 'पुच्छंतं वा साइज्जइ' पृच्छन्त वा श्रमणान्तर यः स्वदते अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० १० ॥

## सूत्रम्—जे भिक्खू चउसु महामहेसु सज्झायं करेइ करेंतं वा साइज्जइ। तं जहा—इंदमहे, खंदमहे, जक्खमहे, भूयमहे ॥ सू० ११ ॥

छाया—यो भिक्षुश्चतुर्षु महामहेषु स्वाध्यायं करोति कुर्वन्त वा स्वदते । तद्यथा-इन्द्रमहे, स्कन्दमहे, यक्षमहे, भूतमहे । सू० ११ ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'चउसु-महामहेसु' चतुर्षु—चतु सङ्ख्यकेषु वक्ष्यमाणेषु महामहेषु—महामहोत्सवेषु, तत्र रन्धन—पचन—पाचन-स्वादन—पान—नृत्य—गीत—प्रमोदादिरूपेषु ये महता समारोहेण महोत्सवाः ते महामहाः, तेषु महोत्सवेषु तादृशमहोत्सवसमये तत्स्थाने यः श्रमणः श्रमणी वा 'सज्झायं' स्वाध्यायम् सूत्रार्थतदु-भयपठनरूपम् 'करेइ' करोति तथा 'करेंतं वा 'साइज्जइ' कुर्वन्तं वा श्रमणान्तरं स्वदते—अनुमोदते

स प्रायश्चित्तभागी भवति । तानेव महामहान् प्रदर्शयति—'तं जहा' इत्यादि । 'तं जहा' तद्यथा—'इंदमहे' इन्द्रनामकदेवस्य महोत्सवे चैत्रीपूर्णिमायां जायमाने 'खंदमहे' स्कन्दमहे स्कन्दः कार्तिकेयः, तस्य महोत्सवे आषाढीपूर्णिमाया जायमाने 'जक्खमहे' यक्षमहे—यक्षमहोत्सवे—आश्विनीपूर्णिमायां जायमाने 'भूयमहे' भूतमहे—व्यन्तरदेवमधिकृत्य जायमाने महोत्सवे—कार्तिकीपूर्णिमायां जायमाने, उपर्युक्तमहोत्सवचतुष्टयसमये यावत् महोत्सवस्यान्तिम समयो भवति तावदित्यर्थः तत्स्थाने च यः श्रमण श्रमणी वा स्वाध्याय समाचरति तथा समाचरन्तमनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० ११॥

## सूत्रम्—जे भिक्खू चउसु महापडिवएसु सज्झायं करेइ करेंतं वा साइज्जइ। तं जहा—सुगिम्हियपाडिवए, आसाढीपाडिवए, आसोईपाडिवए, कत्तियपाडिवए ॥सू० १२॥

छाया—यो भिक्षुश्चतसृषु महाप्रतिपत्सु स्वाध्याय करोति कुर्वन्तं वा स्वदते तद्यथा-सुग्रीष्मिकप्रतिपदि, आषाढीप्रतिपदि, आश्विनीप्रतिपदि, कार्त्तिकीप्रतिपदि ॥सू० १२

चूर्णी—'जे भिक्खू' इत्यादि । 'जेभिक्खू' य कश्चिद्भिक्षु श्रमण श्रमणी वा 'चउसु महापडिवएसु, चतसृषु महाप्रतिपत्सु पूर्वोक्तचतुर्महोत्सवानामनन्तर जायमानासु बहुलप्रतिपत्सु 'सज्झायं करेइ' स्वाध्याय—सूत्रार्थतदुभयस्य अध्ययन करोति तथा 'करेंत वा साइज्जइ' कुर्वन्तं वा श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति, तत्र काः ताः महाप्रतिपदः यासु स्वाध्यायस्य प्रतिषेध. क्रियते ? तत्राह—'तं जहा' इत्यादि । 'त जहा' तद्यथा—'सुगिम्हियपाडिवए' सुग्रीष्मिकप्रतिपदि चैत्रशुक्लपूर्णिमाया अनन्तरं जायमानाया वैशाखकृष्णप्रतिपदि, 'आसाढीपाडिवए'आषाढीप्रतिपदि आषाढसम्बन्धिप्रतिपदि आषाढशुक्लपूर्णिमाया अनन्तरं जायमानायां श्रावणकृष्णप्रतिपदि, एवम् 'आसोईपाडिवए' आश्विनीप्रतिपदि—आश्विनपूर्णिमाया अनन्तर जायमानाया कार्त्तिककृष्णप्रतिपदि 'कत्तियपाडिवए' कार्त्तिकीप्रतिपदि कार्त्तिकपूर्णिमाया अनन्तरं जायमानाया मार्गशीर्षकृष्णप्रतिपदि । एतासु पूर्वोक्तासु चतसृषु प्रतिपत्सु देवा गमनागमन कुर्वन्ति शास्त्रस्य देवाना च भाषा एकैवेति यदि एतासु तिथिषु अध्ययन करिष्यन्ति तदा यदि तत्राशुद्धमुच्चारण स्यात् तदा रुष्टास्ते देवा विघ्नं करिष्यन्तीति कृत्वा एतासु तिथिषु स्वाध्यायस्य निषेधः कृतो भवति ॥सू० १२॥

## सूत्रम्—जे भिक्खू पोरिसिं सज्झायं उवाइणावेइ उवाइणावेंतं वा साइज्जइ ॥ सू० १३ ॥

छाया—यो भिक्षुः पौरुषीं स्वाध्यायीमतिक्रामति अतिक्रामन्तं वा स्वदते ॥ सू० १३॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'पोरिसिं' पौरुषीम् अहोरात्रयोः प्रथमचरमकालभावित्वेन चतुर्विधां पौरुषीम्, कथम्भूताम् ? 'सज्झायं' स्वाध्यायीं–स्वाध्याययोग्यां, यतः कालिकश्रुतस्य अहोरात्राभ्यन्तरे चतुःपौरुषीरूपाश्चत्वारः स्वाध्यायकाला भवन्ति तादृशीः स्वाध्याययोग्याश्चतस्रः पौरुषीः चतुःसंख्यकाः पौरुषीरित्यर्थः, 'उवाइणावेइ' अतिक्रामति पौरुषीकाले स्वाध्याय न करोति, तथा 'उवाइणावेंतं वा साइज्जइ' पौरुषीकालिकस्वाध्यायमतिक्रामन्तं श्रमणान्तरं स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति । तदेव विशदयते–दिवसस्य प्रथमचरमकालभाविन्यौ द्वे पौरुष्यौ, एवं रात्रेः प्रथमचरमकालभाविन्यौ द्वे पौरुष्यौ, एवमहोरात्रमध्ये चतस्रः पौरुष्यो भवन्ति, एतासु चतसृष्वेव पौरुषीषु कालिकश्रुतस्य स्वाध्यायो गुणनं वा भवितुमर्हति, अन्यासु अहोरात्रसम्बन्धिद्वितीयतृतीयरूपासु चतसृषु पौरुषीषु एवं क्रमः–दिवसस्य द्वितीयपौरुष्यामुत्कालिकश्रुतस्य ग्रहणं ध्यानं वा कुर्यात्, अर्थं वा शृणुयात् । तृतीयपौरुष्यां भिक्षार्थहिण्डनं, तदभावे उत्कालिकश्रुतस्य पठनं पूर्वगृहीतस्य गुणनं तदर्थश्रवणं वा कुर्यात् । एवं रात्रेर्द्वितीयपौरुष्यामुत्कालिकश्रुतस्य ग्रहणं ध्यानमर्थश्रवणं वा कुर्यात्, तृतीयपौरुष्यां निद्रां तन्मोक्षं च कुर्यात्, अथवोत्कालिकस्य ग्रहणं गुणनं वा कुर्यात् ।

उक्तंच शास्त्रे—"पढमे पोरिसी सज्झायं, बीए झाणं झियायइ ।
तइयाए भिक्खायरियं, चउत्थीए पुणोवि सज्झायं ॥१॥
पढमे पोरिसी सज्झायं बीए झाणं झियायइ ।
तइयाए निद्दमोक्खं च, चउत्थीए पुणोवि सज्झायं ॥२॥" इति ।

छाया—प्रथमायां पौरुष्यां स्वाध्यायं, द्वितीयायां ध्यानं ध्यायति ।
तृतीयायां भिक्षाचर्या, चतुर्थ्यां पुनरपि स्वाध्यायम् ॥१॥ दिवसे ।
प्रथमायां पौरुष्यां स्वाध्यायं, द्वितीयायां ध्यानं ध्यायति ।
तृतीयायां निद्रां तन्मोक्षं च (कुर्यात्) चतुर्थ्यां पुनरपि स्वाध्यायम् ॥२॥ रात्रौ॥

## सूत्रम्—जे भिक्खू चउक्कालं सज्झायं न करेइ न करेंतं वा साइज्जइ ॥ सू० १४ ॥

छाया—यो भिक्षुश्चातुष्कालं स्वाध्यायं न करोति न कुर्वन्तं वा स्वदते ॥ सू० १४॥

**चूर्णी**---'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'चउक्कालं' चातुष्कालम्–कालचतुष्टयसबन्धिनं स्वाध्यायं दिवसस्य प्रथमप्रहरे चरमप्रहरे च तथा रात्रेः प्रथमप्रहरे चरमप्रहरे चेति अहोरात्रस्य कालचतुष्टये इत्यर्थः 'सज्झायं न करेइ' स्वाध्यायं न करोति तथा 'न करेंतं वा साइज्जइ' न कुर्वन्तं वा श्रमणान्तरं स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥१४॥

सूत्रम्—जे भिक्खू असज्झाइए सज्झायं करेइ करेंतं वा साइज्जइ ॥

छाया—यो भिक्षुरस्वाध्यायिके स्वाध्यायं करोति कुर्वन्तं वा स्वदते ॥सू० १५॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'असज्झाइए' अस्वाध्यायिके काले-सूर्योदयादनन्तरमर्द्धमुहूर्तसमये सूर्यास्तसमयात्पूर्वं अर्द्धमुहूर्त-समये तथा रात्रावपि सूर्यास्तसमयादनन्तरमर्द्धमुहूर्तसमये, निशावसानेऽपि सूर्योदयात्पूर्वमर्द्धमुहूर्त-समये, एवं दिवा रात्रौ च चतुर्षु अस्वाध्यायकालेषु 'सज्झाय' स्वाध्याय सूत्रार्थयोर्वाचनालक्षणम् 'करेइ' करोति तथा 'करेंतं' वा साइज्जइ' कुर्वन्तं वा श्रमणान्तर स्वदते-अनुमोदते तस्याज्ञा-भङ्गादिका दोषा भवन्ति ॥सू० १५॥

सूत्रम्—जे भिक्खू अप्पणो असज्झाइए सज्झायं करेइ करेंतं वा साइज्जइ ॥सू० १६॥

छाया—यो भिक्षुरात्मनोऽस्वाध्यायिके स्वाध्याय करोति कुर्वन्तं वा स्वदते ॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'अप्पणो असज्झाइए' आत्मन स्वकीयशरीरसबन्धिनि अस्वाध्यायिके काले, तत्र स श्रमणस्यैकविध -व्रणार्शो-भगन्दरादिरूप', श्रमण्या द्विविध व्रणादसमुत्थ १ ऋतुसमुत्थश्च २, तस्मिन् एतादृशे आत्मनः स्वशरीरस्य सम्बन्धिनि अस्वाध्यायिके काले 'सज्झायं' स्वाध्यायं करोति तथा 'करेंतं वा साइज्जइ' आत्मनोऽस्वाध्यायिके काले स्वाध्याय कुर्वन्त वा श्रमणान्तर स्वदते अनुमोदते स प्रायश्चित्त-भागी भवति ॥सू० १६॥

सूत्रम्—जे भिक्खू हेठिल्लाइं समोसरणाइं अवाएत्ता उवरिल्लाइं समोसरणाइं वाएइ वाएंतं वा साइज्जइ ॥ सू० १७॥

छाया—यो भिक्षुरधस्तनानि समवसरणानि अवाचयित्वा उपरितनानि समवसरणानि वाचयति वाचयन्त वा स्वदते ॥सू० १७॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद् भिक्षु श्रमणः श्रमणी वा 'हेठिल्लाइं समोसरणाइं' अधस्तनानि आद्यानि समवसरणानि, तत्र समवसरणमिति मेलनं सम्मि-श्रणं वा, अत्र समवसरणं सूत्रार्थयो जीवाजीवादिनवपदार्थाना वा समेलनम्, तत समवसरणानि संमिलितसूत्रार्थरूपाणि 'अवाएत्ता' अवाचयित्वा पूर्वसूत्रविषयिणीं वाचनामदत्वा पूर्वसूत्रमनधीत्येत्यर्थ 'उवरिल्लाइं समोसरणाइं' उपरितनानि-उत्तरकालिकानि समवसरणानि सूत्रार्थरूपाणि 'वाएइ' वाचयति-परेभ्यो वाचनां ददाति एवं 'वाएंतं वा साइज्जइ' वाचयन्तमन्यं वा श्रमणान्तरं स्वदते अनुमोदते स प्रायश्चित्तभागी भवति, तत्र यत् यस्यादिमं सूत्रम् तत् तस्याधस्तनमिति कथ्यते,

तथा यत् सूत्रं यस्य सूत्रस्याग्रेतनं तत् तस्य उपरितनं सूत्रं कथ्यते, यथा दशवैकालिकसूत्रस्या-वश्यकसूत्रम् अधस्तनमिति भवति, एवमुत्तराध्ययनसूत्रस्य दशवैकालिकसूत्रमधस्तनं भवति. अथवा-द्रव्यक्षेत्रकालभावा एते सर्वे यत्र समवगाढा भवन्तीत्युच्यते तत् समवसरणम्। तत् समवसरण, पुनः किंस्वरूपकम् ? तत्रोच्यते-अङ्गम्, श्रुतस्कन्धः, अध्ययनम्, उद्देशकश्च, तत्राङ्गं यथा आचाराङ्गादिकम् तथा च सूत्रकृताङ्गादाचाराङ्गमधस्तनमिति, आचाराङ्गसूत्रमवाचयित्वा यदि सूत्रकृताङ्गसूत्रं वाचयति तदा सूत्रोक्तो दोषो भवति। श्रुतस्कन्धो यथा आवश्यकसूत्रम्, तथावश्यकसूत्रमवाचयित्वा दशवै-कालिकसूत्र वाचयति तदा श्रुतस्कन्धोक्तो दोषो भवति। अध्ययनं यथा सामायिकमवाचयित्वा चतुर्विंशतिस्तव वाचयति तदा अध्ययनोक्तो दोषः, अथवा-शस्त्रपरिज्ञाध्ययनमवाचयित्वा लोक-विजयनामकमध्ययनं वाचयति तस्य तदा अध्ययनोक्तो दोषो भवति। उद्देशकेषु यथा-शस्त्रपरिज्ञा-ध्ययने प्रथमं श्रामण्योद्देशकमवाचयित्वा द्वितीय पृथिवीकायिकोद्देशकं वाचयति। एवमाचाराङ्गादि-सूत्रेष्वपि पूर्वापरातिक्रमणे दोषो ज्ञातव्य। एवं व्युत्क्रमेण सूत्रार्थवाचना न कर्त्तव्येति ॥सू०१७॥

## सूत्रम्—जे भिक्खू णवबंभचेराइं अवाएत्ता उवरिमसुयं वाएइ वाएंतं वा साइज्जइ॥सू० १८॥

छाया—यो भिक्षुर्नवब्रह्मचर्याणि अवाचयित्वा उपरिमसूत्रं वाचयति वाचयन्त वा स्वदते ॥सू० १८॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'णवबं-भचेराइ' नवब्रह्मचर्याणि-आचाराङ्गसूत्रस्य प्रथमश्रुतस्कन्धगतानि शस्त्रपरिज्ञादीनि महापरिज्ञापर्यन्तानि नवाध्ययनानि, अत्र नवब्रह्मचर्यग्रहणेन सर्वोऽपि आचारो गृहीतो भवति, अथवा सर्वोऽपि चरणा-नुयोगो गृहीतो भवति, एतादृशानि नवब्रह्मचर्याणि 'अवाएत्ता' अवाचयित्वा 'उवरिमसुयं' उप-रिमश्रुतम् छेदसूत्रम् 'वाएइ' वाचयति—अध्यापयति—अधीते वा ब्रह्मचर्याद्याचाराङ्गं प्रथमतोऽवाच-यित्वा यः श्रमणः श्रमणी वा धर्मानुयोगम् समुत्थानसूत्रादि वा वाचयति, यद्वा सूर्यप्रज्ञप्त्यादिकं गणितानुयोगं वाचयति, अथवा दृष्टिवाद द्रव्यानुयोगं वाचयति, अथवा यदा चरणानुयोगो वाचितो भवेत्तदा धर्मानुयोगमवाचयित्वा गणितानुयोगं वाचयति। एवम् 'वाएंतं वा साइज्जइ' वाचयन्तं वा श्रमणान्तरं यः स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति॥ सू० १८॥

## सूत्रम्—जे भिक्खू अपत्तं वाएइ वाएंतं वा साइज्जइ ॥सू०१९॥

छाया—यो भिक्षु अपात्रं वाचयति वाचयन्तं वा स्वदते ॥१९॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'अपत्त' अपात्रम्—अनधिकारिणम्, यो हि शास्त्रवाचनाग्रहणस्य नाधिकारी तादृशमपात्रम् श्रमणं तद्भिन्नं वा

'वाइए' वाचयति–वाचनां ददाति, तत्र कोयमपात्रको यस्मै वाचना न दद्यात् ? तत्रोच्यते–अपात्रको नाम क्रमानधीतश्रुतक यथाक्रम श्रुतं यो नाधीतवान् सोऽपात्रक अयोग्य इति, तस्मै–तादृशाय अपात्राय वाचनां ददाति, तथा 'वाएंतं वा साइज्जइ' वाचयन्तं वा श्रमणान्तरं स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति, यतो हि अपात्राय वाचनादाने स तद्दत्तां वाचनां वैपरीत्येन परिणमयति तदा तद्वाचनादाता तद्दोषभाग् भवति, उक्त चात्र –

"आमे घडे निहित्त, जहा जलं तं घडं विणासेइ ।
इय सिद्धंतरहस्सं, अप्पाहारं विणासेइ ॥१॥" इति ।

छाया—आमे (अपक्वे) घटे निहित यथा जल घट विनाशयति ।
इति सिद्धान्तरहस्यं अल्पाधार विनाशयति ॥१॥ इति ॥सू० १९॥

## जे भिक्खू पत्तं ण वाएइ ण वाएंतं वा साइज्जइ ॥सू० २०॥

छाया—यो भिक्षु पात्रं न वाचयति न वाचयन्तं वा स्वदते ।सू० २०॥

चूर्णी— 'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद्भिक्षु श्रमण श्रमणी वा 'पत्तं ण वाएइ' पात्रं न वाचयति, तत्र-अपात्रप्रतिपक्षभूतं पात्रं वाचनाग्रहणयोग्यम् अवस्थाविनयादिभिर्योग्यं क्रमाधीतश्रुतं वा श्रमणं वाचना न ददाति तथा 'ण वाएंत वा साइज्जइ' न वाचयन्तं वा, न वाचयन्तमिति–अवाचयन्त–पात्राय वाचनामददतं श्रमणान्तर य स्वदते–अनुमोदते स प्रायश्चित्तभागी भवति ॥

अथ कीदृशोऽपात्रको यस्मै वाचना न देया, तथा कीदृशश्च पात्रको यस्मै वाचनाऽदाने दोषस्तत्राह भाष्यकार —

भाष्यम्— तिंतिणिए चलचित्ते, गाणंगणिए य दुब्बलचरित्ते ।
आयरियप्पडिभासी, वामावट्टे य पिसुणे य ॥१॥
एय जो वाएई, विवरीय नो य वायए जो उ ।
आणाभंगप्पभिइ दोसे पावेइ सो नियमा ॥२॥

छाया— तिंतिणिकश्चलचित्त· गाणंगणिकश्च दुर्बलचरित्रः ।
आचार्यप्रतीभाषो वामावर्त्तश्चपिशुनश्च ॥१॥
एत यो वाचयति, विपरीत नो च वाचयेद् यस्तु ।
आज्ञाभङ्गप्रभृतीन् दोषान् प्राप्नोति स नियमात् ॥२॥

अवचूरिः–तत्र तिंतिणिकः बडबडेति भाषक रूक्षस्वभावक १, चलचित्तः–अस्थिरचित्तः २, गाणंगणिकः स यः खलु कारणं विनैव एकस्मात् गणात गणान्तरं गच्छति ३, दुर्बलचरित्रः स यः खलु मूलगुणोत्तरगुणविराधनायाः प्रतिसेवनां करोति तथा धृतिबलपरिहीन. ४, आचार्यप्रतिभाषी सः

यः खलु आचार्यं प्रति असबद्धप्रलापी, वामावर्त्तस्तु स य: खलु आचार्यस्य प्रतिकूलं कार्यं करोति, पिशुनः स यः परोक्षनिन्दक. (चुगलखोर) इति भाषाप्रसिद्धः, एते अपात्राः प्रवचनवाचनानधिकारिणः, एतेभ्यो यः प्रवचनस्य वाचनां ददाति स प्रायश्चित्तभागी भवति ।

य: खलु आचार्य. श्रमण. श्रमणी वा विपरीतम्—एतद्भिन्नं पात्रं वाचनाधिकारिणं न वाचयति स आज्ञाभङ्गादिदोषान् मिथ्यात्वं च प्राप्नोति, तस्येमे दोषा भवन्ति, तथाहि—यदि पात्रमपि न वाचयति तदा लोके महती अपकीर्त्तिर्भवति यदयं योग्यमपि न वाचयति, एवं प्रवचनस्य हानिरपि भवति एवं पात्रं यदि न वाचयति तदा क्रमशः सूत्रार्थयोरुच्छेदोऽपि स्यात्, तस्मात् पात्रं तु अवश्यमेव वाचयेत् ततश्च यः श्रमण: श्रमणी वा अपात्रं वाचयति तथा पात्रं न वाचयति स प्रायश्चित्तभागी भवति, तथा तस्याज्ञाभङ्गादिका दोषा अपि भवन्ति तस्मादपात्रं न वाचयेत्, पात्रं तु देशकालादिकमाश्रित्य अवश्यमेव वाचयेदिति ॥ सू० २०॥

## सूत्रम्—जे भिक्खू अव्वत्तं वाएइ वाएंतं वा साइज्जइ ॥ सू० २१॥

छाया—यो भिक्षुरव्यक्तं वाचयति वाचयन्तं वा स्वदते ॥२१॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'अव्वत्तं वाएइ' अव्यक्तं वाचयति, तत्र अव्यक्त यावत्पर्यन्तं कक्षादिषु रोमाणि न भवन्ति तावत् सोऽव्यक्तः, अथवा यावत्पर्यन्तं षोडशवर्षपरिमितो न भवति तावदव्यक्त., एतादृशमव्यक्तं यः श्रमणः श्रमणी वा वाचयति दृष्टिवादादिशास्त्रवाचनां ददाति. तथा 'वाएंतं वा साइज्जइ' वाचयन्तं श्रमणान्तरं स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २१॥

## सूत्रम्—जे भिक्खू वत्तं ण वाएइ ण वाएंतं वा साइज्जइ ॥ सू० २२॥

छाया—यो भिक्षुर्व्यक्तं न वाचयति न वाचयन्तं वा स्वदते ॥ सू० २२॥

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य कश्चिद्भिक्षु: श्रमणः श्रमणी वा 'वत्तं ण वाएइ' व्यक्तं न वाचयति, तत्र कक्षादिषु जातरोमा व्यक्त, अथवा परिसमाप्तषोडशवर्षो व्यक्त., एतादृशं व्यक्तं य श्रमणो वाचनां न ददाति तथा 'ण वाएंतं वा साइज्जइ' न वाचयन्तं—व्यक्ताय वाचनामददतं श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥ सू० २२॥

## सूत्रम्—जे भिक्खू दोण्हं सरिसगाणं एक्कं सिक्खावेइ एक्कं न सिक्खावेइ, एक्कं वाएइ एक्कं न वाएइ, एक्कं सिक्खावेंतं एक्कं न सिक्खावेंतं वा, एक्कं वाएंतं एक्कं ण वाएंतं वा साइज्जइ ॥ सू० २३॥

छाया—यो भिक्षु द्वयो सदृशयोरेकं शिक्षयति एकं न शिक्षयति एकं वाचयति एकं न वाचयति, एकं शिक्षयन्तं एकं न शिक्षयन्तं वा, एकं वाचयन्तं एकं न वाचयन्तं वा स्वदते ॥ सू० २३॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' य. कश्चिद्भिक्षुः श्रमणः श्रमणी वा **'दोण्हं सरिसगाणं'** द्वयोः सदृशयोः विनयबुद्धिभ्यां तुल्ययोः द्वयोः, सादृश्यं च संविग्नत्वेन समनुज्ञातत्वेन परिणामकत्वेन च, तथा च द्वयो. संविग्नयोर्मध्यात् **'एक्कं सिक्खावेइ'** एकं संविग्नं शिक्षयति—सम्यग् चरणादिसम्बन्धिनीं शिक्षा ददाति **'एक्कं न सिक्खावेइ'** एकं संविग्नं न शिक्षयति- चरणादिसंबन्धिनीं शिक्षां सम्यक् न ददाति **'एक्कं वाएइ'** एकं वाचयति—शास्त्रवाचना ददाति **'एक्कं न वाएइ'** एकं संविग्नं न वाचयति—वाचना न ददाति तथा **'एक्कं सिक्खावेंतं'** एकं शिक्षयन्तं **'एक्कं न सिक्खावेंतं वा'** द्वयोः सदृशयोः संविग्नयोर्मध्यादेकं संविग्नं न संशिक्षयन्तं श्रमणान्तरम् तथा— **'एक्कं वाएंतं'** एकं वाचयन्तं **'एक्कं न वाएंतं'** एकं द्वयोः सदृशयोः संविग्नयोर्मध्यादेकं संविग्नं न वाचयन्तं श्रमणान्तरं यः स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति । तथा तस्याऽऽज्ञाभङ्गादिका दोषा अपि भवन्ति । अथ यदि द्वयोः सदृशयोर्मध्यादेकं शिक्षयति वाचयति च, एकं न शिक्षयति तथैकं न वाचयति तदा को दोषः ? इति चेत् अत्राह—तुल्ययोर्द्वयोर्मध्यात् यदि एकं शिक्षयेत् एकं वाचयेत् तदा तदुपरि रागः प्रकटितः स्यात्, अथ यं नाध्यापयिष्यति तदुपरि द्वेषः प्रख्यापितो भवेत्, तेन स बहिर्भावं गच्छेत्, तत्प्रत्यया कर्मनिर्जरां न प्राप्नोति अन्यं प्रति स प्रद्वेषं च गच्छेत्, प्रद्विष्टश्च यत् करिष्यति तन्निमित्तं प्रायश्चित्तं प्रसज्येत । एभिः कारणैः सदृशद्वयोर्मध्यात् एकं शिक्षयेत् अपरं न शिक्षयेत्, एकं वाचयेत् अपरं न वाचयेत्, इत्येवं न कुर्यात् न वा एवं कुर्वन्तमनुमोदयेत् इति, किन्तु यदि शिक्षयेत्तदा द्वावपि शिक्षयेत् यदि न शिक्षयेत् तदा द्वावपि न शिक्षयेत् भेदबुद्धिं न कुर्यादिति भावः ॥सू० २३॥

## सूत्रम्—जे भिक्खू आयरियउवज्झाएहिं अविदिण्णं गिरं आइयइ आइयंतं वा साइज्जइ ॥सू० २४॥

**छाया**—यो भिक्षुराचार्योपाध्यायैरविदत्तां गिरमाददाति आददतं वा स्वदते ॥२४॥

**चूर्णी**—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद् भिक्षुः श्रमणः श्रमणी वा **'आयरियउवज्झाएहिं'** आचार्योपाध्यायैः आचार्येण उपाध्यायेन उपलक्षणात् रत्नाधिकैः **'अविदिण्णं गिरं'** अविदत्ता गिरम् शास्त्रवाणीम् अविदत्ताम्—अनध्यापितां गिरं—सूत्रार्थरूपाम् **'आइयइ'** आददाति—स्वीकरोति अधीते इत्यर्थः, यं सूत्रमर्थं वा आचार्य उपाध्यायो वा नाध्यापयति तमपि स्वयमेवाधीते—तदध्ययनं करोति 'अहं बहुश्रुतः सर्वरात्निकः' इति कृत्वा गर्वेण आचार्यादिकमनादृत्य स्वयमेव तदध्ययनं करोति तथा **'आइयंतं वा साइज्जइ'** आददतं वा—आचार्यानध्यापितं स्वयमेवाधीयानं श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति । आचार्यादिभिरदत्ताम्—अनध्यापितां शास्त्रवाचनां यः स्वयं वाचयति तदा तस्य अपूर्णज्ञानत्वेन तदुक्तमर्थादिकं भ्रमबुद्ध्या वैपरीत्येन परिणमते, तेन स जिनवचनाशातनां मिथ्यात्वं च प्राप्नोति ॥ सू० २४॥

**सूत्रम्—जे भिक्खू अण्णउत्थियं वा गारत्थियं वा वाएइ वाएंतं वा साइज्जइ ॥सू० २५॥**

छाया—यो भिक्षुरन्ययूथिकं वा गृहस्थं वा वाचयति वाचयन्तं वा स्वदते ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य. कश्चिद् भिक्षु श्रमण. श्रमणी वा 'अण्णउत्थियं वा' अन्ययूथिकं अन्यतीर्थिकं तापसपरिव्राजकादिकम् 'गारत्थियं, गृहस्थं वा 'वाएइ' वाचयति—सूत्रवाचनां ददाति सूत्रमध्यापयति तथा 'वाएंतं वा साइज्जइ' वाचयन्तम्-एव वाचनां ददतं श्रमणान्तरं य श्रमण· श्रमणी वा स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति ॥२५॥

**सूत्रम्—जे भिक्खू अण्णउत्थियस्स वा गारत्थियस्स वा पडिच्छइ पडिच्छंतं वा साइज्जइ॥सू० २६॥**

छाया—यो भिक्षुरन्ययूथिकस्य वा गृहस्थस्य वा प्रतीच्छति प्रतीच्छन्तं वा स्वदते ॥ सू० २६॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा 'अण्णउत्थियस्स वा' अन्ययूथिकस्य वा तापसपरिव्राजकादिकस्य 'गारत्थियस्स वा गृहस्थस्य वा सकाशात् 'पडिच्छइ' प्रतीच्छति—वाचना स्वीकरोति, तापसादितो गृहस्थाद् वा सूत्रमर्थं वा अधीते तथा 'पडिच्छंतं वा साइज्जइ' प्रतीच्छन्त वा तापसादितः सूत्रमर्थं वा अधीयानं श्रमणान्तरं स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥२६॥

**सूत्रम्—जे भिक्खू पासत्थं वाएइ वाएंतं वा सइज्जइ॥ सू० २७॥**

छाया—यो भिक्षुः पार्श्वस्थं वाचयति वाचयन्तं वा स्वदते ॥२७॥

चर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद भिक्षु श्रमणः श्रमणी वा 'पासत्थं' पार्श्वस्थम्—ज्ञानदर्शनचारित्रस्य पार्श्वे—समीपे तिष्ठति य स पार्श्वस्थः ज्ञानादिसमीपे स्थितः किन्तु न तदाराधक, स द्रव्येण श्रमणः न तु भावेन, तादृशं पार्श्वस्थं यः श्रमणः श्रमणी वा 'वाएइ' वाचयति—सूत्रार्थयोर्वाचनां ददाति तथा 'वाएतं वा साइज्जइ' वाचयन्तं—पार्श्वस्थं सूत्रार्थयो. वाचनां ददतं श्रमणान्तर स्वदते—अनुमोदते स प्रायश्चित्तभागी भवति ॥सू०२७॥

**सूत्रम्—जे भिक्खू पासत्थस्स पडिच्छइ पडिच्छंतं वा साइज्जइ॥**

छाया—यो भिक्षुः पार्श्वस्थस्य प्रतीच्छति प्रतीच्छन्तं वा स्वदते ॥ सू० २२॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद् भिक्षु श्रमण. श्रमणी वा 'पासत्थस्स' पार्श्वस्थस्य-यथोक्तलक्षणस्य सकाशात् 'पडिच्छइ' प्रतीच्छति—पार्श्वस्थात् सूत्रार्थयोरध्ययनं

करोति तथा 'पडिच्छंतं वा साइज्जइ' प्रतीच्छन्तं वा-सूत्रार्थयोरध्ययनं कुर्वन्तं श्रमणान्तरं स्वदते-अनुमोदते स प्रायश्चित्तभागी भवति तस्याऽऽज्ञाभङ्गादिका दोषा अपि भवन्ति तस्मात्कारणात् श्रमण. श्रमणी वा पार्श्वस्थसकाशात् अध्ययनं न कुर्यात् न कुर्वन्तमनुमोदयेदिति ॥सू० २८॥

एवमवसन्नादीनाम् अष्टौ सूत्राणि वाच्यानि तथाहि—

**सूत्रम्—जे भिक्खू ओसन्नं वाएइ० ॥सू० २९॥ ओसन्नस्स पडिच्छइ॥सू० ३०॥ कुसीलं वाएइ०॥ सू० ३१॥ कुसीलस्स पडिच्छइ० ॥सू० ३२॥ णितियं वाएइ०॥ सू० ३३॥ णितियस्स पडिच्छइ०॥ सू० ३४॥ संसत्तं वाएइ०॥ सू० ३५॥ जे भिक्खू संसत्तस्स पडिच्छइ पडिच्छंतं वा साइज्जइ॥सू० २९-३६॥**

छाया—यो भिक्षुरवसन्नं वाचयति० ॥सू०२९॥ अवसन्नस्य प्रतीच्छति० ॥सू०३०॥ कुशीलं वाचयति० ॥ सू० ३१॥ कुशीलस्य प्रतीच्छति० ।सू ३२॥ नैत्यिकं वाचयति० ॥ सू०३३॥ नैत्यिकस्य प्रतीच्छति० ॥ सू० ३४॥ संसक्तं वाचयति० ॥ सू० ३५॥ यो भिक्षुः संसक्तस्य प्रतीच्छति प्रतीच्छन्तं वा स्वदते ॥ सू० ३६ ॥

चूर्णी—एषा व्याख्या पार्श्वस्थसूत्रस्येव कर्त्तव्येति ॥ सू० २९-३६ ॥

**सूत्रम्—तं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ॥सू० ३७॥**

॥ निसीहज्झयणे एगूणवीसइमो उद्देसो समत्तो ॥१९॥

छाया—तत् सेवमान आपद्यते चातुर्मासिकं परिहारस्थानमुद्घातिकम् ॥सू०३७॥

॥ निशीथाध्ययने एकोनविंशतितमोद्देशकः समाप्तः ॥१९॥

चूर्णी—'तं' इत्यादि । 'तं' तत्-विकृत-क्रीणातीत्यारभ्य ससक्तस्य प्रतीच्छतीति पर्यन्तम् एकोनविंशत्युद्देशकोक्तं प्रायश्चित्तस्थानम् 'सेवमाणे' सेवमान तस्य प्रतिसेवनां कुर्वन् एकं द्विकमनेकं सर्वं वा प्रायश्चित्तस्थानं प्रतिसेवमान 'आवज्जइ' आपद्यते-प्राप्नोति 'चाउम्मासियं' चातुर्मासिकम् 'परिहारट्ठाणं' परिहारस्थानं प्रायश्चित्तम् 'उग्घाइयं' उद्घातिकं लघुकमित्यर्थः लघुचातुर्मासिकं प्रायश्चित्तं प्राप्नोतीत्यर्थः ॥सू० ३७॥

इति श्री-विश्वविख्यात-जगद्वल्लभ-प्रसिद्धवाचक-पञ्चदशभाषाकलितललितकलापालापक प्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक-वादिमानमर्दक-श्रीशाहूछत्रपतिकोल्हापुरराजप्रदत्त-"जैनशास्त्राचार्य"-पदभूषित-कोल्हापुरराजगुरु-बालब्रह्मचारि-जैनाचार्य-जैनधर्मदिवाकर-पूज्यश्री-घासीलालव्रति-विरचितायां "निशीथसूत्रस्य" चूर्णिभाष्यावचूरिरूपाया व्याख्यायाम् एकोनविंशतितमोद्देशकः समाप्तः ॥१९॥

# ॥ विंशतितमोद्देशकः

व्याख्यात एकोनविंशतितमोद्देशकः साम्प्रतमवसरप्राप्तो विंशतितमोद्देशको व्याख्यायते, अथात्र विंशतितमोद्देशकस्य पूर्वोक्तोद्देशकै सह कः सबन्धः ? इति चेदत्राह भाष्यकारः—

**भाष्यम्**—हत्थकम्मं समारब्भ, वायणंतमुदाहियं ।
एत्थ तस्स विसुद्धट्ठा, पायच्छित्तं निगज्जइ ॥१॥

**छाया**—हस्तकर्म समारभ्य, वाचनान्तमुदाहृतम् ।
अत्र तस्य विशुद्धयर्थं प्रायश्चित्तं निगद्यते ॥१॥

**अवचूरिः**—हस्तकर्म समारभ्य पार्श्वस्थादीना वाचनादान-ग्रहणपर्यन्त कुत्सितकर्मप्रकरण प्रथमोद्देशकादारभ्य एकोनविंशतितमोद्देशकपर्यन्तोद्देशकेषु बृहत्कल्पादौ च उदाहृत कथितम्, तादृशप्रायश्चित्तस्थानाना विशुद्धये विशेषतो न किमपि प्रायश्चित्तं प्रतिपादितमित्यत्र विंशतितमे उद्देशके तेषा हस्तकर्मादिवाचनादानग्रहणपर्यन्तचरणविराधकप्रायश्चित्तस्थानाना विशुद्धयर्थं प्रायश्चित्त तथा प्रायश्चित्तप्रकारश्च निगद्यते—प्रतिपाद्यते, अयमेव सम्बन्ध पूर्वोद्देशकै. सह अस्योद्देशकस्य भवति, तदनेन सम्बन्धेन आयातस्यास्य विंशतितमोद्देशकस्य प्रथम सूत्रं व्याख्यायते—

**सूत्रम्—जे भिक्खू मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स मासियं, पलिउंचियं आलोएमाणस्स दोमासियं ॥सू० १॥**

**छाया**—यो भिक्षुर्मासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अप्रतिकुञ्च्याऽऽलोचयतो मासिकं प्रतिकुञ्च्याऽऽलोचयता द्वैमासिकम् ॥सू० १॥

**चूर्णी**—'**जे भिक्खू**' इत्यादि । '**जे भिक्खू**' य कश्चिद्भिक्षु श्रमण. श्रमणी वा '**मासियं**' मासिकम्, तत्र मासेन निर्वृत्त मासिकम् '**परिहारट्ठाणं**' परिहारस्थानम्, तत्र परिहारः— वर्जनम् यद्वा परिहारो वहनं, प्रायश्चित्तस्य, यद्वा परिह्रियते—परित्यज्यते यो गुरुसान्निध्यात् स परिहारः पापम्, तथा तिष्ठन्ति प्राणिन कर्मकलुषिता अस्मिन् इति स्थानम्, परिहारश्च स्थान चेति परिहारस्थानम् '**पडिसेवित्ता**' प्रतिसेव्य—प्रकर्षेण तत्सेवनं कृत्वा '**आलोएज्जा**' आलोचयेत् गुरुसमीपे स्वकृतं पापस्थानं प्रकाशयेत् '**जह बालो जंपंतो**' इत्यादिरूपेण आलोचयेत् यथा स्वभावतो विशुद्धो बालक. स्वचरितमकपटभावेन पित्रो. पुरत प्रकाशयति तथैव गुरुसमीपे सर्वं प्रकाशयेदित्यर्थः, तत्र आलोचना नाम यथा आत्मना जानाति तथैव गुरो. समीपे प्रकाशनम् तत्र '**अपलिउंचिय आलोएमाणस्स मासियं**' अपरिकुञ्च्य आलोचयतो मासिकम्, तत्र परिकुञ्चनम्—माया कपटम्, न परिकुञ्च्य इति अपरिकुञ्च्य मायामकृत्वेत्यर्थ., तथा च मायामकृत्वा आलोचयत आलोचनां

स्वपापप्रकाशनरूपां—कुर्वतः श्रमणस्य श्रमण्या वा मासिकं गुरुकं लघुकं वा प्रतिसेवनाऽनुसारि प्रायश्चित्तं भवति, पापस्थानस्य प्रतिसेवना कृत्वा कपटरहितभावेन उपागताय शिष्याय प्रतिसेवनानुसारि लघुकं गुरुकं वा प्रायश्चित्तं गुरुर्दद्यात् इत्यर्थः । **'पलिउंचिय आलोएमाणस्स दोमासियं'** परिकुञ्च्य आलोचयतो द्वैमासिकम् परिकुञ्च्य द्वैमासकपटम् आलोचयत आलोचनां कुर्वत शिष्यस्य सिक लघुकं गुरुकं वा प्रायश्चित्तं गुरुर्दद्यादिति । यदत्र मासिकं प्रायश्चित्त कथित तत्र मास पञ्चप्रकारको भवति तद्यथा—नक्षत्रमासश्चन्द्रमास ऋतुमास आदित्यमासोऽभिवर्द्धितमासश्च, तत्र नक्षत्रमास सप्तविंशत्यहोरात्रप्रमाणः तथा एकस्याहोरात्रस्य च एकविंशति सप्तषष्ठिभागाश्च ($२७\frac{२१}{६७}$) एष लक्षणतः परिमाणतश्च नक्षत्रमास । चन्द्रमास एकोनत्रिंशदहोरात्रप्रमाण. तथा एकस्याहोरात्र दिनस्य च द्वात्रिंशद् द्वाषष्ठिभागाश्च ($२९\frac{३२}{६२}$)। ऋतुमास त्रिंशदहोरात्रप्रमाण (३०)। आदित्यमास सार्द्धत्रिंशद्दिनप्रमाण. (३०॥)। अभिवर्द्धितमासस्तु एकत्रिंशद्दिनानि, एकस्य च दिनस्य चतुर्विंशत्यधिकशतखण्डितस्य एकविंशत्यधिकं भागशतम ($३१\frac{१२१}{१२४}$)। उक्तञ्च—

**एक्कत्तीसं च दिणा, दिणभागसयं तहेक्कवीसं च ।**
**अभिवड्ढिओ उ मासो, चउवीससएण छेदेण ॥**

**छाया—एकत्रिंशच्च दिनानि दिनभागशतं तथैकविंशतिश्च ।**
**अभिवर्द्धितस्तु मासः, चतुर्विंशशतेन छेदेन ॥ इति।**

अत्र तेषा पञ्चानामपि मासाना मध्ये कर्ममासेनाऽधिकार', तत्र कर्ममासः ऋतुमास. त्रिंशद्दिनात्मक, तपश्चर्यादिक प्रायश्चित्त च ऋतुमासेनैव भवति । प्रायश्चित्तदाने ऋतुमासस्यैवाधिकारादिति । अथ यदत्र सूत्रे प्रतिसेवनमशुभकर्मणा कथित तत् प्रतिसेवनं द्विविध मूलगुणप्रतिसेवन मुत्तरगुणप्रतिसेवनं च, तत्र पुनर्मूलगुणप्रतिसेवनं पञ्चविध पञ्चमहाव्रतात्मकम्, उत्तरगुणप्रतिसेवनं दशविधम् आलोचनार्ह १-प्रतिक्रमणार्ह २-तदुभयार्ह ३-विवेकार्ह ४-व्युत्सर्गार्ह ५-तपोऽर्ह ६-छेदार्ह ७-मूलार्ह ८-नवस्थाप्यार्ह ९-पाराञ्चिक १०-भेदात् । पुनरपि एकैकं द्विविध द्रव्येण कल्पेन च, इदं प्रतिसेवन कर्मोदयेन भवति, कर्म च प्रतिसेवनया भवति बीजाङ्कुरवत् अनयो. परस्परापेक्षत्वम्, एतादृशप्रतिसेवनस्याऽऽलोचन द्विप्रकारेण भवति शुद्धभावेन कपटभावेच, तत्र शुद्धभावेन आलोचयत. शुद्धिर्भवति, कपटभावेन आलोचयतस्तु शुद्धिर्न भवति । तत्र दृष्टान्तो यथा-आसीत् कश्चित् नर्मदातटे निवसन् बुभुक्षया खिन्न. तापस फलमूलादिकमानेतुं वनं गतवान्, तत्र इस्तत परिभ्रमन् नर्मदातटे कुत्रचित् मृतमत्स्यकलेवर प्राप्तवान्, प्राप्य तमेवानीय भक्षयित्वा बुभुक्षामपनीतवान् परन्तु मत्स्य-

भक्षणेन तस्योदरे विकृतिर्जाता अजीर्णरोगश्च प्रादुरभूत्, ततः स तापसस्तं रोगमपाकर्तुं कमपि वैद्यं पृष्टवान्–हे वैद्य ! मदुदरे रोगो जातः, वैद्य प्राह–त्वया किं भक्षितम् ? तापसेन कथितम्-फलादि-भक्षणं कृतम्, ततो वैद्यः तदनुकूलमौषधं दत्तवान् परन्तु तादृशौषधेन तस्य रोगो न शान्तः । पुनरपि तापसो वैद्यान्तिकं गत्वा प्रोवाच–मदुदराद् रोगो न गतः, ततो वैद्यः प्राह–भो तापस ! सत्यं वद किं त्वया भक्षितम्, ततः स तापसः कपटरहितः सन् सत्यमेव कथितवान् यन्मया मत्स्यभक्षणं कृतमिति, ततो वैद्यो वमनविरेचनतः रोगस्य निवारणं कृतवान्, तापसः स्वस्थः सबलश्चापि अभूत् । एवमेव पापस्थानं प्रतिसेव्य यः श्रमणः श्रमणी वा सकपटमालोचयति तस्य शुद्धिर्न भवति कार्यसिद्धिरपि न भवति । अथ यदि मायारहितः आलोचयति तदा स शुध्यति; यथा वैद्यस्तं तापसं शुद्धं कृतवान् तथैव वैद्यरूप आचार्यः तापसतुल्यं श्रमणं श्रमणीं वा प्रायश्चित्तलक्षणवमन-विरेचनादिना शोधयति। अथ च शुद्धः श्रमणः श्रमणी वा जन्मजरामरणरोगरहितोऽनन्तसुखभागी भवतीति ॥१॥

## सूत्रम्—जे भिक्खू दोमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स दोमासियं, पलिउंचिय आलोएमाणस्स तेमासियं ॥ सू० २ ॥

**छाया—यो भिक्षुः द्वैमासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अपरिकुञ्च्य आलोचयतो द्वैमासिकं, परिकुञ्च्य आलोचयतस्त्रैमासिकम् ॥ सू० २ ॥**

चूर्णी—'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षुः श्रमणः श्रमणी वा '**दोमासियं**' द्वैमासिकम् द्वाभ्यां मासाभ्यां निष्पन्नं मासद्वयेन निर्वर्त्तनयोग्यम् '**परिहारट्ठाणं**' परिहारस्थानं पापं पापजनकसावद्यकर्मानुष्ठानम् '**पडिसेवित्ता**' प्रतिसेव्य- कुत्सितकर्मणः प्रतिसेवनां कृत्वेत्यर्थः '**आलोएज्जा**' आलोचयेत् आलोचनां कुर्यात् तत्र '**अपलिउंचिय आलोएमाणस्स**' अपरिकुञ्च्य आलोचयतः, तत्रापरिकुञ्च्य-मायामन्तरेणैव शुद्धान्तःकरणेन आलोचयत आलोचनां कुर्वतः गुरुसमीपे प्रायश्चित्तस्थानं प्रकाशयतः श्रमणादेः '**दोमासियं**' द्वैमासिकं–लघुकं गुरुकं वा प्रायश्चित्तं प्रतिसेवनानुसारि गुरुर्दद्यात्, '**पलिउंचिय आलोएमाणस्स**' परिकुञ्च्य आलोचयतः, तत्र परिकुञ्च्य सकपटमालोचयतः आलोचनां प्रायश्चित्तं कुर्वतः श्रमणादेः '**तेमासियं**' त्रैमासिकं प्रायश्चित्तं दद्यात् गुरुः, प्रतिकुञ्चनानिष्पन्नस्य गुरुमासस्याधिकस्य प्रक्षेपात् । अयं भावः–यदि कोऽपि श्रमणः श्रमणी वा द्वैमासिकं प्रायश्चित्तस्थानं प्रतिसेव्य शुद्धभावेन गुरुसमीपे प्रायश्चित्त-मभिलषति तदा गुरुः तादृशशिष्याय द्वैमासिकं लघुकं गुरुकं वा प्रायश्चित्तं दद्यात्, अथ यदि सकपटमालोचयति तदा त्रैमासिकं लघुकं गुरुकं वा प्रायश्चित्तं दद्यात्–मायाप्रयुक्तमासाधिक-स्याऽऽवश्यकत्वात् । उदाहरणादिकं पूर्वसूत्रवदेव बोद्धव्यमिति ॥ सू० २ ॥

**सूत्रम्—जे भिक्खू तेमासियं परिहारट्ठाणं पडिसेवित्ता आलो-एज्जा अपलिउंचिय आलोएमाणस्स तेमासियं, पलिउंचिय, आलो एमाणस्स चाउम्मासियं ॥ सू० ३ ॥**

**छाया— यो भिक्षु त्रैमासिक परिहारस्थान प्रतिसेव्य आलोचयेत् अपरिकुच्य आलोचयत त्रैमासिकम् परिकुच्य आलोचयतश्चातुर्मासिकम् ॥ सू० ३ ॥**

**चूर्णी**— **'जे भिक्खू'** इत्यादि । **'जे भिक्खू'** य कश्चिद्भिक्षु श्रमणः श्रमणी वा **'तेमासियं'** त्रैमासिकम्–मासत्रयेण निर्वर्तनयोग्यम् मासत्रयसपाद्यमित्यर्थ· **'परिहारट्ठाण'** परि-हारस्थानम्–पापं पापजनक वा सावद्यकर्मानुष्ठानम् **'पडिसेवित्ता'** प्रतिसेव्य–प्रकर्षेण सेवनां कृत्वा **'आलोएज्जा'** आलोचयेत्-स्वकृतसावद्यकर्मणो गुरुसमीपे आलोचनां दद्यात् , तत्र च **'अपलिउंचिय आलोएमाणस्स'** अपरिकुच्य-आलोचयत - मायामकृत्वा शुद्धभावेन गुरुसमीपे स्वकीयं पापं निवेदयित्वा पापस्थानमालोचयत· **'तेमासियं'** त्रैमासिक प्रायश्चित्त लघुक गुरुक वा प्रतिसेवनानुसारि गुरुर्दद्यादिति । **'पलिउंचिय'** परिकुच्य–मायापूर्वकम् **'आलोएमाणस्स'** आलो-चयतः श्रमणादे **'चाउम्मासिय'** चातुर्मासिकम्- मासचतुष्टयेन निर्वर्त्तनयोग्य लघुकं गुरुक वा प्रतिसेवनानुसारि प्रायश्चित्तं गुरुर्दद्यात्, इति । अयं भाव·–मासिकपापस्थानस्य प्रतिसेवनां कृत्वा यदि कश्चित् श्रमण· श्रमणी वा स्वकीयपापनिवारणाय गुरुसमीपे शुद्धमनोभावेन प्रायश्चित्त-मिच्छेत् तदा गुरुस्तादृशशिष्याय त्रैमासिक लघुक गुरुकं वा प्रायश्चित्तं प्रतिसेवनानुसारि दद्यात् । अथ यदि कदाचित् मायापूर्वकमालोचयितुमिच्छेत्तदा गुरु प्रतिसेवनानुसारि चातुर्मासिकं लघुकं गुरुक वा प्रायश्चित्त दद्यात्–मायादण्डरूपेण मासाधिक्य वदेत् । अत्राय दृष्टान्त·–अस्ति-कस्यचिद्राज्ञोऽतीव वल्लभ· एक सेनापति·, स च सङ्ग्रामे विविधशस्त्रेणाहत तच्छरीरे अनेकानि शल्यानि प्रविष्टानि तेन दुर्बल· स वैद्यमाहूतवान् , आहूय च स्वस्यास्वास्थ्यकारण प्रोवाच, ततो वैद्यो निर्दिष्टस्थानात् शल्योद्धरणं कृतवान् परन्तु स स्वस्थो नाभूत् प्रतिदिन दुर्बल एव भवति, शल्यनिष्कासनसमये शल्यपीडया पीडित एकं शल्यस्थानं न दर्शितवान् तेन स्वस्थो नाभूत् शल्यस्य शरीरे विद्यमानत्वात , तच्छल्य शरीरान्तर्विद्यमानं तस्य स्वस्थतायां प्रति-बन्धकम् अत एव स दुर्बल एव भवति, पुनरपि वैद्यमाहूतवान्, आहूय च अवशिष्टशल्यस्थानं दर्शितवान, ततो वैद्यः शल्य निष्कासितवान् तेन योध स्वस्थो जात । एवं वैद्यस्थानीय आचार्यः योधस्थानीयश्रमणादेः पापरूपं शल्यं प्रायश्चित्तद्वारा निष्कास्य ज्ञानदर्शनचारित्रलक्षणं बलं सपा-दयति तस्मात् शुद्धभावेनाऽऽलोचनां कुर्यात् न तु कपटपूर्वकमालोचयेत् , यदि कपटभावेनालोच-येत् तदा कपटापराधनिमित्तकं मासाधिक्यं प्रायश्चित्तं गुरुर्दद्यादिति ॥ सू० ३ ॥

**सूत्रम्—जे भिक्खू चाउम्मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स चाउम्मासियं, पलिउंचिय आलोएमाणस्स पंचमासियं ॥ सू० ४ ॥**

छाया—यो भिक्षुश्चातुर्मासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत्-अपरिकुच्यालोचयत चातुर्मासिकं परिकुच्य आलोचयतः पाञ्चमासिकम् ॥ सू० ४ ॥

चूर्णी– 'जे भिक्खू' इत्यादि । 'जे भिक्खू' यः कश्चिद्भिक्षु श्रमण' श्रमणी वा **'चाउम्मासियं'** चातुर्मासिकम्–चातुर्मासेन चतुर्भिः मासैः निर्वर्तनयोग्यम् **'परिहारट्ठाणं'** परिहारस्थानम्–पापस्थानम् **'पडिसेवित्ता'** प्रतिसेव्य–प्रतिसेवनां कृत्वा **'आलोएज्जा'** आलोचयेत्–आलोचनां-कर्त्तुमभिलषेत् **'अपलिउंचिय'** अपरिकुच्य-मायामकृत्वा **'आलोएमाणस्स'** आलोचयत –आलोचनां कुर्वतः श्रमणादेः **'चाउम्मासियं'** चातुर्मासिकम्– चतुर्भिर्मासैः संपादनयोग्यम् लघुकं गुरुकं वा प्रायश्चित्त प्रतिसेवनानुसारेण दद्यात् **'पलिउंचिय आलोएमाणस्स पंचमासियं'** परिकुच्यालोचयतः पाञ्चमासिकम्, तत्र परिकुच्य मायापूर्वकमालोचनां कुर्वत' पाञ्चमासिकम्-मासपञ्चकेन निर्वर्तनयोग्यं लघुकं गुरुकं वा प्रतिसेवनानुसारि प्रायश्चित्तं गुरुर्दद्यादिति। अयं भाव'–यत्रैवापराधे मायारहितस्य शिष्यस्य श्रमणस्यान्यस्य वा चातुर्मासिकं लघुकं गुरुकं वा प्रतिसेवनानुसारि प्रायश्चित्तं भवति तत्रैवापराधे मायासहितस्य पाञ्चमासिकं लघुकं गुरुकं वा प्रतिसेवनानुसारि प्रायश्चित्त दद्यात्, मासाधिक्यस्य मायाप्रयोज्यत्वात् । अत्र मालाकारयोर्दृष्टान्तः–एकस्मिन्नगरे द्वौ मालाकारौ निवसतः । तत्रैकेन वसन्तसमये बहूनि पुष्पाणि आनीय विधिना स्थापितानि, तानि दृष्ट्वा क्रयका उपतिष्ठन्ति । उपस्थितेषु तेषु क्रयकेषु माला निर्मिता । तैर्ज्ञात्वा मालाक्रेतृभिः तस्मै बहु मूल्यं दत्तं पुष्कलो लाभो जात. । अपरेण न पुष्पाणि आनीतानि, नैव च माला निर्मिता अतस्तत्समीपे न कोऽपि क्रेता आगत', न तेन कोऽपि लाभो लब्धः । एवं यो मूलगुणोत्तरगुणापराधान् न प्रकटयति स शुद्धिं निर्वाणलाभं च न लभते इति ॥ सू० ४ ॥

**सूत्रम्—जे भिक्खू पंचमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स पंचमासियं पलिउंचिय आलोएमाणस्स छम्मासियं ॥ सू० ५ ॥**

छाया— यो भिक्षुः पाञ्चमासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अपरिकुच्यालोचयतः पाञ्चमासिकं परिकुच्य आलोचयतः षाण्मासिकम् ॥ सू० ५ ॥

**चूर्णी**—'जे भिक्खू' इत्यादि। 'जे भिक्खू' यः कश्चिद्भिक्षुः निरवद्यभिक्षणशीलः अष्टविधकर्मक्षपको वा '**पंचमासियं**' पाञ्चमासिकम्-पञ्चभिर्मासैर्निर्वर्तनयोग्यम् '**परिहारट्ठाणं**' परिहारस्थानम्-पापस्थानम् '**पडिसेवित्ता**' प्रतिसेव्य-तत्प्रतिसेवनां कृत्वा '**आलोएज्जा**' आलोचयेत् आलोचनां कुर्यात् तत्र '**अपलिउंचिय**' अपरिकुच्य-मायामकृत्वा '**आलोएमाणस्स**' आलोचयतः '**पंचमासियं**' पाञ्चमासिकं-लघुकं गुरुकं वा प्रायश्चित्त प्रतिसेवनानुसारि गुरुर्दद्यात्। '**पलिउंचिय आलोएमाणस्स**' परिकुच्य-माया कृत्वा आलोचनां कुर्वत' श्रमणादे' '**छम्मासियं**' षाण्मासिकम्-लघुकं गुरुक वा प्रतिसेवनाऽनुसारि प्रायश्चित्तं गुरुभिर्दातव्यमिति। षाण्मासिकप्रायश्चित्तविषये परिकुञ्चके मेघदृष्टान्त.-यथा शरत्कालिको मेघो गर्जनं कृत्वा नो वर्षति, एवं हे शिष्य ! त्वमपि आलोचयामीत्येवं प्रकारेण प्रतिज्ञां कृत्वा आलोचयितुं नारब्धवानसि तत्र यदि मायां करिष्यसि तदा प्रतिज्ञाभ्रष्टो भविष्यसि अत' सम्यगालोचय इति। तत्र द्वैमासिकादिपरिहारस्थानेषु मायापूर्वकालोचके यथाक्रममिमे दृष्टान्ता' संभवन्ति तद्यथा- द्वैमासिकं परिहारस्थानं प्राप्तस्य प्रतिकुञ्चकस्य दृष्टान्त तापस' १, त्रैमासिक परिहारस्थानं प्राप्तस्य योधो दृष्टान्त' २, चातुर्मासिकं परिहारस्थानं प्राप्तस्य मालाकारो दृष्टान्त' ४, पाञ्चमासिकं परिहारस्थानं प्राप्तस्य मेघो दृष्टान्त' ५। तत्र प्रतिकुञ्चनायां कृतायाम् 'सम्यगालोचय मा प्रतिकुञ्चनां कुरु' एवमुपलब्धो यदि वदेत् भगवन ! नो कुप्यतु सम्यगालोचयामि। तत स श्रुतव्यवहारी गुरु. बारत्रयमालोचना शृणुयात्। तत्र त्रिभिर्वारैर्यदि सदृशमालोचयति तदा ज्ञातव्यं यदय सम्यक् प्रतिक्रान्त इति तदनन्तरं यद्देयं प्रायश्चित्तं तद्दातव्यमिति। अथ यदि विसदृशमालोचयति तदा यथायोग्यमधिकाधिकं प्रायश्चित्त दद्यात् यावत् षाण्मासिकमिति॥ सू० ५॥

## सूत्रम्—तेण परं पलिउंचिए वा अपलिउंचिए वा ते चेव छम्मासा ॥ सू० ६॥

छाया—तत परं परिकुञ्चिते वा अपरिकुञ्चिते वा ते एव षण्मासा ॥ सू० ६॥

**चूर्णी**— पाञ्चमासिकपरिहारस्थानसूत्राणि कथयित्वा षाण्मासिकपरिहारस्थानविषये प्राह— '**तेण परं**' इत्यादि। '**तेण परं**' तत. परम् ततोऽनन्तरम् पाञ्चमासिकात् परिहारस्थानात् परम्—आलोचनाकाले '**पलिउंचिए वा**' परिकुञ्चिते वा—मायासहिते वा '**अपलिउंचिए वा**' अपरिकुञ्चिते वा मायारहिते वा मायापूर्वकममायापूर्वकं वा आलोचिते इत्यर्थः '**ते चेव छम्मासा**' ते एव-षण्मासा., त एव-प्रतिसेवनानिष्पन्ना एव षण्मासाः षडेव मासा नाधिकं प्रतिकुञ्चनानिमित्तमारोपणं वर्तते तदधिकप्रायश्चित्तस्य अभावादिति ॥ सू० ६ ॥

**सूत्रम्—जे भिक्खू बहुसोवि मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स मासियं पलिउंचिय आलोएमाणस्स दोमासियं ॥ सू० ७॥**

छाया—यो भिक्षु बहुशोऽपि मासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् अपरिकुञ्च्य आलोचयतो मासिकं परिकुञ्च्य आलोचयतो द्वैमासिकम् ॥ सू० ७ ॥

चूर्णी—'जे भिक्खू' इत्यादि। 'जे भिक्खू' य कश्चिद्भिक्षु श्रमण श्रमणी वा 'बहुसोवि' बहुशोऽपि, अत्र बहुत्व त्रिभृतिक विज्ञेयम्। तत त्रिप्रभृति वारत्रयमपि मासिकं परिहारस्थानं सेवित्वा ऋजुभावेन आलोचयतो मासिकमेव, कपटभावेन आलोचयतस्तु द्वैमासिकमिति ॥ सू० ७॥

एवमग्रे 'बहुसोवि दोमासियं' ॥ सू०८ ॥ 'बहुसोवि तेमासियं०' ॥ सू०९ ॥ 'बहुसोवि चाउम्मासियं०' ॥सू० १०॥ 'बहुसोवि पंचमासियं' ॥ सू०११ ॥ इति चत्वारि सूत्राणि वाच्यानि। एषां चतुर्णामपि सूत्राणामनयैव रीत्या यथायोगं व्याख्याऽपि कर्त्तव्या ॥ सू०८-११॥

**सूत्रम्—तेण परं पलिउंचिए वा अपलिउंचिए वा ते चेव छम्मासा ॥**

छाया—ततः परं परिकुञ्चिते वा अपरिकुञ्चिते वा ते एव षण्मासाः ॥ सू० १२॥

चूर्णी—'तेण परं' इत्यादि। 'तेण परं' ततोऽनन्तरं षाण्मासिके परिहारस्थाने प्रतिसेविते आलोचनाकाले 'पलिउंचिए वा अपलिउंचिए वा' परिकुञ्चिते वा अपरिकुञ्चिते वा परिकुञ्चनया वा अपरिकुञ्चनया वा आलोचिते इत्यर्थः 'ते चेव' ते एव प्रतिसेवनानिष्पन्ना स्थिताः 'छम्मासा' षण्मासा नाधिकमप्रतिकुञ्चनाप्रतिकुञ्चनानिमित्तमारोपणमिति ॥ सू० १२॥

**सूत्रम्—जे भिक्खू मासियं वा दोमासियं वा तेमासियं वा चाउम्मासियं वा पंचमासियं वा एएसिं परिहारट्ठाणाणं अन्नयरं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स मासियं वा दोमासियं वा तेमासियं वा चाउम्मासियं वा पंचमासियं वा, पलिउंचिय आलोएमाणस्स दोमासियं वा तेमासियं वा चाउम्मासियं वा पंचमासियं वा छम्मासियं वा तेण परं पलिउंचिए वा अपलिचिए वा ते चेव छम्मासा**

छाया—यो भिक्षुर्मासिकं वा द्वैमासिकं वा त्रैमासिक वा चातुर्मासिकं वा पाञ्चमासिकं वा एतेषां परिहारस्थानानामन्यतम परिहारस्थान प्रतिसेव्य आलोचयेत् अपरिकुञ्च्य आलोचयतः मासिकं वा द्वैमासिक वा त्रैमासिक वा चातुर्मासिकं वा पाञ्चमासिकं वा परिकुञ्च्य आलोचयतः द्वैमासिकं वा त्रैमासिक वा चातुर्मासिक वा पाञ्चमासिकं वा षाण्मासिक वा तत परं परिकुञ्चिते वा अपरिकुञ्चिते वा ते एव षण्मासाः ॥ सू० १३ ॥

चूर्णी—'जे भिक्खू' इत्यादि । स्पष्टं पूर्वसूत्रवदेव व्याख्येयम् ॥ सू० १३ ॥

सूत्रम्—जे भिक्खू बहुसोवि मासियं वा बहुसोवि दोमासियं वा बहुसोवि तेमासियं वा बहुसोवि चाउम्मासियं वा बहुसोवि पंचमासियं वा एएसिं परिहारट्ठाणाणं अण्णयरं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स मासियं वा दोमासियं वा तेमासियं वा चाउम्मासियं वा पंचमासियं वा पलिउंचिय आलोएमाणस्स दोमासियं वा तेमासियं वा चाउम्मासियं वा पंचमासियं वा छम्मासियं वा तेण परं पलिउंचिए वा अपलिउंचिए वा ते चेव छम्मासा ॥ सू० १४ ॥

छाया—यो भिक्षुः बहुशोऽपि मासिक वा, बहुशोऽपि द्वैमासिक वा, बहुशोऽपि त्रैमासिक वा, बहुशोऽपि चातुर्मासिक वा बहुशोऽपि पाञ्चमासिक वा, एतेषां परिहारस्थानानां अन्यतरत् परिहारस्थान प्रतिसेव्य आलोचयेत् अप्रतिकुञ्च्य आलोचयतः मासिक वा द्वैमासिक वा त्रैमासिक वा चातुर्मासिक वा पाञ्चमासिक वा प्रतिकुञ्च्य आलोचयतः द्वैमासिक वा त्रैमासिक वा चातुर्मासिक वा पाञ्चमासिक वा षाण्मासिकं वा ततः पर परिकुञ्चिते वा अपरिकुञ्चिते वा ते एव षण्मासाः ॥ सू० १४ ॥

चूर्णी -'जे भिक्खू' इत्यादि । अस्याप्यर्थः पूर्ववदेव व्याख्येय ॥ सू० १४ ॥

सूत्रम्—जे भिक्खू मासियं वा साइरेगमासियं वा दोमासियं वा साइरेगदोमासियं वा तेमासियं वा साइरेगतेमासियं वा चाउम्मासियं वा साइरेगचाउम्मासियं वा पंचमासियं वा साइरेगपंचमासियं वा एएसिं परिहारट्ठाणाणं अण्णयरं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स मासियं वा साइरेगमासियं वा दोमासियं वा साइरेगदोमासियं वा तेमासियं वा साइरेगतेमासियं वा चाउम्मासियं वा साइरेगचाउम्मासियं वा पंचमासियं वा साइरेगपंचमासियं वा पलिउंचिय आलोएमाणस्स दोमसियं वा साइरेगदोमासियं वा तेमासियं वा साइरेगतेमासियं वा चाउम्मासियं वा साइरेगचाउम्मासियं वा पंचमासियं वा साइरेगपंचमासियं वा छम्मासियं वा तेण परं पलिउंचिए वा अपलिउंचिए वा ते चेव छम्मासा ॥ सू० १५॥

छाया—यो भिक्षुर्मासिकं वा सातिरेकमासिकं वा द्वैमासिकं वा सातिरेकद्वैमासिकं वा त्रैमासिकं वा सातिरेकत्रैमासिकं वा चातुर्मासिकं वा सातिरेकचातुर्मासिकं वा पाञ्चमासिकं वा सातिरेकपाञ्चमासिकं वा एतेषां परिहारस्थानानामन्यतमं परिहारस्थानं प्रतिसेव्य आलोचयेत्-अपरिकुञ्च्य आलोचयतः मासिकं वा सातिरेकमासिकं वा द्वैमासिकं वा सातिरेकद्वैमासिकं वा त्रैमासिकं वा सातिरेकत्रैमासिकं वा चातुर्मासिकं वा सातिरेकचातुर्मासिकं वा पाञ्चमासिकं वा सातिरेकपाञ्चमासिकं वा परिकुञ्च्य आलोचयतः द्वैमासिकं वा सातिरेकद्वैमासिकं वा चातुर्मासिकं वा सातिरेकचातुर्मासिकं वा पाञ्चमासिकं वा सातिरेकपाञ्चमासिकं वा षाण्मासिकं वा ततः परं परिकुञ्चिते वा अपरिकुञ्चिते वा ते एव षण्मासाः ॥ सू० १५ ॥

चूर्णी—'जे भिक्खू' इत्यादि । व्याख्या स्पष्टा, नवरम् 'सातिरेक' मिति पूर्वोक्तादधिकं व्याख्येयम् ॥ सू० १५ ॥

सूत्रम्—जे भिक्खू बहुसोवि मासियं वा बहुसो वि साइरेगमसियं वा बहुसोवि दोमासियं वा बहुसोवि साइरेगदोमासियं वा बहुसोवि तेमासियं वा बहुसोवि साइरेगतेमासियं वा बहुसोवि चाउम्मासियं वा बहुसोवि साइरेगचाउम्मासियं वा बहुसोवि पंचमासियं वा बहुसोवि साइरेगपंचमासियं वा एएसिं परिहारट्ठाणाणं अण्णयरं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स बहुसोवि मासियं वा बहुसोवि साइरेगमासियं वा बहुसोवि दोमासियं वा बहुसोवि साइरेगदोमासियं वा बहुसोवि तेमासियं वा बहुसोवि साइरेगतेमासियं वा बहुसोवि चाउम्मासियं वा बहुसोवि साइरेगचाउम्मासियं वा बहुसोवि पंचमासियं वा बहुसोवि साइरेगपंचमासियं वा पलिउंचिय आलोएमाणस्स बहुसोवि दोमासियं वा बहुसोवि साइरेगदोमासियं वा बहुसोवि तेमासियं वा बहुसोवि साइरेगतेमासियं वा बहुसोवि चाउम्मासियं वा बहुसोवि साइरेगचाउम्मासियं वा बहुसोवि पंचमासियं वा बहुसोवि साइरेगपंमासियं वा बहुसोवि छम्मासियं वा तेण परं पलिउंचिए वा अपलिउंचिए वा ते चेव छम्मासा ॥ सू० १६॥

**छाया** — यो भिक्षुर्बहुशोऽपि मासिकं वा बहुशोऽपि सातिरेकमासिकं वा बहुशोऽपि द्वैमासिकं वा बहुशोऽपि सातिरेकद्वैमासिक वा बहुशोऽपि त्रैमासिक वा बहुशोऽपि सातिरेकत्रैमासिक वा बहुशोऽपि चातुर्मासिक वा बहुशोऽपि सातिरेकचातुर्मासिक वा बहुशोऽपि पाञ्चमासिक वा बहुशोऽपि सातिरेकपाञ्चमासिक वा एतेषां परिहारस्थानानामन्यतमं परिहारस्थान प्रतिसेव्य आलोचयेत् अपरिकुञ्च्य आलोचयतः बहुशोपि मासिकं वा बहुशोपि सातिरेकमासिक वा बहुशोऽपि द्वैमासिक वा बहुशोऽपि सातिरेकद्वैमासिक वा बहुशोऽपि त्रैमासिक वा बहुशोऽपि सातिरेकत्रैमासिकं वा बहुशोऽपि चातुर्मासिकं वा बहुशोऽपि सातिरेकचातुर्मासिक वा बहुशोऽपि पाञ्चमासिक वा बहुशोऽपि सातिरेकपाञ्चमासिक वा परिकुच्य आलोचयतः बहुशोऽपि द्वैमासिकं वा बहुशोऽपि सातिरेकद्वैमासिकं वा बहुशोऽपि त्रैमासिक वा बहुशोऽपि सातिरेकत्रैमासिकं वा बहुशोवि चातुर्मासिक वा बहुशोपि सातिरेकचातुर्मासिक वा बहुशोऽपि पाञ्चमासिक वा बहुशोऽपि सातिरेकपाञ्चमासिक वा बहुशोऽपि षाण्मासिक वा ततः पर परिकुञ्चिते वा अपरिकुञ्चिते वा ते एव षण्मासाः ॥ सू०१६॥

**चूर्णी** — 'जे भिक्खु' इत्यादि । व्याख्या स्पष्टा, नवरम्—बहुश इति त्र्यादिप्रभृत्यनेकवारमिति वाच्यम् । अत्र शिष्य प्रश्नयति—सूत्रे यदुक्तम्—षाण्मासिकप्रायश्चित्तादुपरि ' ते चेव छम्मासा' ते एव षण्मासा· नाधिकमिति, तत् कुतो नाधिक प्रायश्चित्तं वर्त्तते यथा मासिकपरिहारस्थानप्रतिसेवनानिमित्तकप्रायश्चित्तावसरे सकपटस्य द्वैमासिकप्रायश्चित्तविधानं कृतम , तथा षण्मासप्रायश्चित्तावसरे सकपटस्य सप्तमासादिक वक्तव्यम् किन्तु तथा न कृत्वा षण्मासावधिकमेव प्रायश्चित्तं प्रतिकुञ्चनाया अप्रतिकुञ्चनायाश्च विहितम् । एवमेव 'बहुसोवि मासियं' इत्यादिसूत्रेष्वपि षण्मासावधिकमेव प्रायश्चित्तदान विहित तदत्र कि कारणम् ? इति चेत् अत्रोच्यते—सत्यम् , षण्मासादधिकं प्रायश्चित्तं प्रतिकुञ्चिताय वक्तव्यम् किन्तु इह जीतकल्पोऽयम् । अयं भावः—यस्य तीर्थकरस्य ऋषभादे· यावत्प्रमाणकम् उत्कृष्ट तप करणम् , तस्य तीर्थकरस्य शासनेऽन्यसाधूनामुत्कृष्टं प्रायश्चित्तदानं तावत्प्रमाणकमेव, न ततोऽधिकं कदाचिदपि दातव्यं भवेत् , ततोऽन्तिमतीर्थकरस्य भगवतो महावीरस्वामिन उत्कृष्ट तप· षाण्मासिकम , ततो महावीरस्वामिनः शासने सर्वोत्कृष्टं प्रायश्चित्तदानं षाण्मासिकमेवेति बोध्यम् ।

तीर्थकरऋषभदेवस्वामिनः शासने द्वादशमासिकं प्रायश्चित्तमासीत् भगवता आदिनाथेन द्वादशमासिकतपसः समाचरितत्वात् । मध्यमाना द्वाविंशतितीर्थकराणां शासने तु अष्टमासिकमेव प्रायश्चित्तम् , तत्र तप करणस्य तथाप्रमाणत्वात् , इति । अत्र महावीरशासने तु षाण्मासिकपरिहारस्थानप्रतिसेवनयाऽपि आलोचनां कुर्वतो नाधिकमारोपणम् , अतस्तदेव—षाण्मासिकमेव प्रायश्चित्तं नाधिकमिति, अत्राह भाष्यकारः—

भाष्यम्— एसा रीई आरिय,-गणहरमाईहिं भासिया सुत्ते ।
पंच गमा णायव्वा, बहुसोवि य सेवणाविसए ॥

छाया—एषा रीतिः आर्यगणधरादिभिर्भाषिता सूत्रे ।
पञ्च गमा ज्ञातव्याः, बहुशोऽपि च सेवनाविषये ॥

अवचूरिः —'एसा' एषा-पूर्वोक्तसूत्रप्रोक्ता 'रीई' रीतिः प्रकारः 'आरियगणहरमाईहिं' आर्यगणधरादिभिः तीर्थकरगणधरादिभिः 'सुत्ते' सूत्रे-आगमे 'भासिया' भाषिता-प्ररूपिता, कुत्र विषये? इत्याह—'बहुसोवि य सेवणाविसए' बहुशोऽपि-बहुवारानपि सेवनाविषये-सेव्यमानपापस्थानविषये 'पंच गमा' पञ्च गमाः-सूत्रप्रकाराः 'णायव्वा' ज्ञातव्या इति । अयं भावः-प्रायश्चित्तदानं च द्रव्यक्षेत्रकालभावाद्याश्रित्य सेवितुः परिणामविशेषं च विचिन्त्यैव भवति, यथा-अनेन द्रव्यक्षेत्रादिविषये कीदृशं कारणविशेषमाश्रित्य पापस्थानं सेवितमित्यादि, तथा-पापस्थानसेवनसमयेऽस्य कीदृश आत्मपरिणाम आसीदित्यादि, तथा-प्रतिसेवकस्य-ऋजुजड-वक्रजडादित्वमपि विचारणीयं भवेत्, गीतार्थागीतार्थत्वादिकम् आभोगानाभोगादिकं च भावनीयं भवेत्, इत्याद्यनेककारणानि विभाव्यैव तीर्थकरगणधरादिभिरेषा रीतिः प्ररूपितेति नात्र किमपि शङ्कास्थानं तेषामनन्तज्ञानित्वादिति ॥ सू०१६॥

सूत्रम्—जे भिक्खू मासियं वा साइरेगमासियं वा दोमासियं वा साइरेगदोमासियं वा तेमासियं वा साइरेगतेमासियं वा चाउम्मासियं वा साइरेगचाउम्मासियं वा पंचमासियं वा साइरेगपंचमासियं वा एएसिं परिहारट्ठाणाणं अन्नयरं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स ठवणिज्जं ठावइत्ता करणिज्जं वेयावडियं ठाविए वि पडिसेवित्ता से वि कसिणे तत्थेव आरुहियव्वे सिया पुव्विं पडिसेवियं पुव्विं आलोइयं १ पुव्विं पडिसेवियं पच्छा आलोइयं २ पच्छा-पडिसेवियं पुव्विं आलोइयं ३ पच्छा पडिसेवियं पच्छा आलोइयं ४, अपलिउंचिए अपलिउंचियं १, अपलिउंचिए पलिउंचियं २, पलिउंचिए अपलिउंचियं ३, पलिउंचिए पलिउंचियं ४, अपलिउचिए अपलिउंचियं आलोएमाणस्स सव्वमेयं सकयं साहणिय जं एयाए पट्ठवणाए पट्ठविए निव्विसमाणे पडिसेवेइ से वि कसिणे तत्थेव आरुहियव्वे सिया ॥१७॥

**छाया—यो भिक्षुर्मासिकं वा सातिरेकमासिकं वा द्वैमासिकं वा सातिरेकद्वैमासिकं वा त्रैमासिकं वा सातिरेकत्रैमासिकं वा चातुर्मासिकं वा सातिरेकचातुर्मासिकं वा पाञ्चमासिकं वा सातिरेकपाञ्चमासिकं वा एतेषां परिहारस्थानानामन्यतमं परिहारस्थानं प्रतिसेव्य आलोचयेत् अपरिकुञ्च्य आलोचयत· स्थापनीयं स्थापयित्वा करणीयं वैयावृत्यं स्थापितेऽपि प्रतिसेव्य तदपि कृत्स्नं तत्रैव आरोपयितव्यं स्यात्, पूर्वं प्रतिसेवितं पूर्वमालोचितम् १, पूर्वं प्रतिसेवितं पश्चादालोचितम् २, पश्चात्प्रतिसेवितं पूर्वमालोचितम् ३, पश्चात्प्रतिसेवितं पश्चादालोचितम् ४, अपरिकुञ्चिते अपरिकुञ्चितम् १, अपरिकुञ्चिते परिकुञ्चितम् २, परिकुञ्चिते अपरिकुञ्चितम् ३, परिकुञ्चिते परिकुञ्चितम् ४; अपरिकुञ्चिते अपरिकुञ्चितमालोचयतः सर्वमेतत् स्वकृत संहृत्य यत् एतया प्रस्थापनया प्रस्थापितो निर्विश्मानः सन् प्रतिसेवते तदपि कृत्स्नं तत्रैव आरोपयितव्य स्यात् ॥ सू० १७ ॥**

**चूर्णी**—य. खलु प्रायश्चित्तकरणसमये पुनरपि पापस्थानं प्रतिसेवते तमधिकृत्य सूत्रमिदं प्रवर्तते–**'जे भिक्खू'** इत्यादि । **'जे भिक्खू'** य· कश्चिद्भिक्षु श्रमण श्रमणी वा **'मासियं वा'** मासिकं वा **'साइरेगमासियं वा'** सातिरेकमासिकं वा किञ्चिदधिकैकमासेन संपादितम्, एवं द्वैमासिकं वा सातिरेकद्वैमासिकं वा, त्रैमासिकं वा सातिरेकत्रैमासिकं वा, चातुर्मासिकं वा सातिरेकचातुर्मासिकं वा अतिरेकेणाऽधिकेन पञ्चदिनाद्यधिकेन सहितं चातुर्मासिकमिति सातिरेकचातुर्मासिकम्, एवम् **'पंचमासियं वा'** पाञ्चमासिकं वा **'साइरेगपचमासियं वा'** सातिरेकपाञ्चमासिकं वा मासपञ्चकात् किञ्चिदधिकं परिहारस्थानम् **'एएसिं'** एतेषां पूर्वोक्तानाम् **'परिहारट्ठाणाणं'** परिहारस्थानानां मध्यात् **'अन्नयरं'** अन्यतम यत् किमपि अन्यतममेकं **'परिहारट्ठाणं'** परिहारस्थानम् प्रायश्चित्तस्थानम् **'पडिसेवित्ता'** प्रतिसेव्य उपर्युक्तपापस्थानमध्यात् यस्य कस्याप्येकस्य परिहारस्थानस्य प्रतिसेवनां कृत्वा **'आलोएज्जा'** आलोचयेत् तादृशपापस्थानं प्रकटीकुर्यात्, तत्र **'अपलिउंचिय आलोएमाणस्स'** अपरिकुच्य मायामकृत्वाऽऽलोचयतः आलोचना कुर्वत. श्रमणादे । इद खलु सूत्र परिहारनामकप्रायश्चित्ततपसः प्रतिपादकम् अतस्तस्य परिहारनामकतपसो विधिमाह–**'ठवणिज्जं'** इत्यादि, **'ठवणिज्जं ठावइत्ता'** स्थापनीयं स्थापयित्वा, तत्र अपरिकुच्यालोचयत परिहारतपसो दानसमये आचार्यः तस्मै तादृशं विधिमुपदर्शयति–य· खलु प्रतिसेवक· परिहारतपस प्रायश्चित्तस्थानं प्राप्तवान् स परिहारनामकतया ग्रहणाय सर्वेषां श्रमणश्रमणीजनानां परिज्ञानाय सकलगच्छसमक्ष निरुपसर्गनिमित्तकं कायोत्सर्गं पूर्वं करोति तस्य प्रतिसेवकस्य कायोत्सर्गकरणानन्तरम् आचार्य. प्रतिसेवक प्रति कथयति त्वं परिहारी, अहं कल्पस्थितोऽतो यावत्तव तपः पूर्णं भविष्यति तावदहं वाचनादिरूपं साहाय्यं करिष्यामीति, अन्यो वाऽनुपारिहारिकस्तव वाचनादिसाहाय्य करिष्यति, अन्यो वाऽनुपारिहारिकस्तव वैयावृत्यं करिष्यति, इत्येवंरूपेण **'ठवणिज्जं'** स्थापनीयम्–साहाय्याद्यर्थस्थाप-

नयोग्यम्—अनुपारिहारिकं पारिहारिकानुकूलवर्तिनं कञ्चित्साधुम् 'ठवइत्ता' स्थापयित्वा—नियतं कृत्वा अनुपारिहारिकेण वैयावृत्त्यकारेण च **'करणिज्जं वेयावडियं'** करणीयं वैयावृत्त्यम्, अस्य परिहारतपसि वर्तमानस्य यथायोग्यमनुशिष्टयुपालम्भोपग्रहलक्षणं वैयावृत्यं करणीयम्। **'ठाविए वि पडिसेवित्ता'** स्थापितेऽपि—अनुशिष्टयुपालम्भादिभिः क्रियमाणेऽपि वैयावृत्ये प्रतिसेविता कदाचित् किमपि अपराधस्थानं प्रतिसेवको भवेत् पापस्थानं सेवेत कथयेच्च हे भगवन्! अहममुकं प्रायश्चित्तस्थानमापन्न', ततस्तस्य **'सेवि'** तदपि तत्सम्बन्ध्यपि प्रायश्चित्तम् **'कसिणे'** कृत्स्नम् सर्वं पूर्वसेवित सम्प्रति सेवितं चेति द्वयमपि **'तत्थेव'** तत्रैव परिहारतपस्येव **'आरुहियव्वे सिया'** आरोपयितव्य स्यात् सर्वं समेलनीयमित्यर्थ, अत्र पापस्थानस्य पूर्वपश्चात्सेवनाविषयां चतुर्भङ्गीं दर्शयितुमाह—**'पुव्विं'** इत्यादि, **'पुव्विं पडिसेवियं पुव्विं आलोइयं'** पूर्वं प्रतिसेवितं—पूर्वमालोचितम् १, अत्र पूर्वमित्यत्र पदैकदेशे पदसमुदायोपचारात् पूर्वानुपूर्व्या इति ज्ञातव्यम्, ततश्चायमर्थ गुरुलघुपर्यालोचनया पूर्वानुपूर्व्या लघुपञ्चकादिक्रमेण यत् प्रतिसेवितम् तत् पूर्वं पूर्वानुपूर्व्या प्रतिसेवनानुक्रमेण आलोचितमिति प्रथमो भङ्ग १। द्वितीयभङ्गमाह—**'पुव्विं पडिसेवियं पच्छा आलोइयं'** पूर्वं प्रतिसेवित पश्चादालोचितम्—पूर्वं गुरुलघुपर्यालोचनया पूर्वानुपूर्व्या मासलघुकादि प्रतिसेवितम् तदनन्तर च तथाविधाल्पप्रयोजनोत्पत्तौ प्रमादादिना गुरुलघुपर्यालोचनयैव लघुपञ्चकादि प्रतिसेवितम् आलोचनासमये च पश्चात्-पश्चानुपूर्व्या आलोचितम्—यथा—पूर्वं लघुपञ्चकाद्यालोचितम् पश्चात् लघुमासिकादिकमालोचितमिति द्वितीयो भङ्गः २। अथ तृतीयभङ्ग दर्शयितुमाह—**'पच्छा पडिसेवियं'** इत्यादि **'पच्छा पडिसेवियं पुव्विं आलोइयं'** पश्चात्प्रतिसेवितं पूर्वमालोचितम्, तत्र पश्चानुपूर्व्या प्रतिसेवितं गुरुलघुपर्यालोचनामन्तरेण पूर्वं गुरुमासादिक प्रतिसेवितम् पश्चात् लघुपञ्चकादीति आलोचनासमये आनुपूर्व्या नालोचितम् पूर्वं लघुपञ्चकाद्यालोचितम् पश्चात् तदनन्तरं गुरुमासादिकमालोचितमिति तृतीयो भङ्ग ३। अथ चतुर्थं भङ्गमाह—**'पच्छा पडिसेवियं'** इत्यादि। **'पच्छा पडिसेविय पच्छा आलोइयं'** पश्चात्प्रतिसेवितं पश्चादालोचितम्, तत्र पश्चानुपूर्व्या प्रतिसेवितं गुरुलघुपर्यालोचनादिविरहित यथाकथंचन प्रतिसेवितमिति पश्चात् पश्चानुपूर्व्या आलोचितं प्रतिसेवनानुक्रमेणैव आलोचितम्, अथवा स्मृत्वा स्मृत्वा यथाकथंचनापि आलोचितमिति चतुर्थो भङ्गः ४। अत्र प्रथमचतुर्थभङ्गौ अप्रतिकुञ्चनायाम्, द्वितीयतृतीयभङ्गौ तु प्रतिकुञ्चनायामिति अप्रतिकुञ्चित-प्रतिकुञ्चिताभ्यामियं चतुर्भङ्गी कृतेति। तामेव अप्रतिकुञ्चिते अप्रतिकुञ्चितम्, इत्येतद्विषयां चतुर्भङ्गीं दर्शयितुमाह—**'अपलिउंचिए अपलिउंचियं'** इत्यादि, **'अपलिउंचिए अपलिउंचियं'** अप्रतिकुञ्चिते अप्रतिकुञ्चितम्, यदा खलु अतिचारान् प्राप्तवान् आलोचनाकाले आलोचनाभिमुखो भवेत्तदा स एवं संकल्पयति यथा ये केचन मयि अतिचाराः जातास्ते सर्वेऽपि अतिचारा मया आलोचनीयाः न कोऽपि गोप-

नीयः, एवं पूर्वसंकल्पकाले अप्रतिकुञ्चिते आलोचनासमये अप्रतिकुंचितमेव आलोचयतीति प्रथमो भङ्गः १, अथ द्वितीयभङ्गमाह–'अपलिउंचिए पलिउंचियं' इति. 'अपलिउचिए पलिउंचियं' अप्रतिकुञ्चिते प्रतिकुञ्चितम् यथा–पूर्वं संकल्पकाले आलोचनाविचारकाले अप्रतिकुञ्चितम्–निष्कपटभावेन समुपस्थित आलोचनासमये तु प्रतिकुञ्चितं कपटभावेन आलोचयतीति द्वितीयो भङ्गः २, अथ तृतीयभङ्गमाह 'पलिउंचिए अपलिउंचियं' प्रतिकुञ्चिते अप्रतिकुञ्चितम् पूर्वसंकल्पकाले प्रतिकुञ्चितम् यथा मया न सर्वे अतिचारा आलोचनीया' एवंप्रकारेण पूर्वसंकल्पकाले प्रतिकुञ्चिते आलोचनासमये अन्तःकरणस्य परावर्तनात् अप्रतिकुञ्चितम्–कपटरहित यथा स्यात् तथा आलोचयतीति तृतीयो भङ्गः ३। अथ चतुर्थभङ्गमाह–'पलिउंचिए पलिउंचियं' प्रतिकुञ्चिते प्रतिकुञ्चितम्, पूर्वसंकल्पकाले पापस्थानप्रतिसेवकेन प्रतिकुञ्चितं यथा मया न सर्वे अपराधा आलोचनीया., तत एवंप्रकारेण संकल्पकाले प्रतिकुंचिते ततः आलोचनाकरणसमयेऽपि प्रतिकुञ्चितं सकपटमेव आलोचयतीत्येष चतुर्थो भङ्गः ४। एषु चतुर्षु भङ्गेषु मध्ये यत् 'अपलिउंचिए अपलिउंचियं' अप्रतिकुञ्चिते अप्रतिकुञ्चितम् पूर्वं संकल्पकाले निष्कपटेन संकल्पितम् आलोचनाग्रहणकालेऽपि निष्कपटपूर्वकम् 'आलोएमाणस्स' आलोचयत, ततश्चायमर्थ - यावन्तोऽतिचारा. प्रतिसेविताः तान् सर्वानेव निरवशेषमालोचयत' श्रमणादे' 'सव्वमेयं' सर्वमेतत् यत् यदा यत्तदपराधजातम्, यदि वा कथमपि प्रतिकुञ्चना कृता स्यात् तत. प्रतिकुञ्चनानिष्पन्न, यच्च गुरुणा सहालोचनाकाले उच्चासनतुल्यासनोपवेशनादिजनित तथा या च आलोचनासमये असमाचारी सेविता तन्निष्पन्नं च सकलमेतत् अपराधकारिणा प्रायश्चित्त प्रतिसेवकेन श्रमणादिना 'सकयं' स्वकृतम्–स्वयमेव आत्मना प्रतिसेवितम् आत्मनैव कृतम् 'साहणिय' संहृत्य–एकत्र मीलयित्वा, तथा पुनश्च 'जं एयाए' यत् एतया अनन्तरपूर्वकथितया षाण्मासिक्या एकमासिकादिकया वा 'पट्ठवणाए' प्रस्थापनया पूर्वकाले कृतस्यातिचारस्य विषये या प्रस्थापना प्रायश्चित्तदानरूपा तया प्रस्थापनया 'पट्ठविए' प्रस्थापित –प्रायश्चित्तकरणे नियोजित 'निव्विसमाणे' निर्विशमानः तपसो निस्सरन् प्रायश्चित्तस्य चरमं तप सेवमान तप समाप्य ततो निवर्त्तयन्नित्यर्थः यत् पुनः प्रमादतो विषयकषायादिभिर्वा 'पडिसेवइ' प्रतिसेवते–पापस्थानस्य प्रतिसेवनां करोति तस्यां प्रतिसेवनायां यत् प्रायश्चित्तं प्राप्यते 'सेवि कसिणे' तदपि कृत्स्नम्–तदपि सर्वं प्राश्चित्तम् 'तत्थेव' तत्रैव–पूर्वप्रस्थापिते एव प्रायश्चित्ते 'आरुहियव्वे सिया' आरोपयितव्यं स्यात् सर्वमेकत्र संमेलनीयमित्यर्थः ॥ सू० १७॥

सूत्रम्—जे भिक्खू बहुसोवि मासियं वा, बहुसोवि साइरेगमासियं वा बहुसोवि दोमासियं वा बहुसोवि साइरेगदोमासियं वा

